॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीमद्विजयध्वजीयटीकासहितम्

## सप्तमाष्टमनवमस्कन्धाः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्

श्री राघवेन्द्र स्वामि वृन्दावन समितिः

बागालिङ्गम्पल्ली

हैदराबाद ६०००२७.

॥ श्रीः ॥

# श्रीमद्भागवतम्

श्रीमद्विजयध्वजीयटीकासहितम्

## सप्तमाष्टमनवमस्कन्धाः

परमपूज्यपेजावरमठाधीशश्रीविश्वेशतीर्थश्रीपादानां
मार्गदर्शने सम्पादितम्

प्रकाशनम्

श्री राघवेन्द्र स्वामि बृन्दावन समितिः
बागलिङ्गम्पल्ली
हैदराबाद्–५०० ०२७

# SRIMADBHAGAVATAM
With the commentary of Sri Vijayadhwaja Teertha

*Edited by*
Scholars of Poorna Prajna Vidyapeeta
under the guidance of
H.H. Sri. Vishawesha Teertha Swamiji
of Sri Pejavar Mutt, Udupi

*Published by*
Sri Raghavendraswamy Brindavana Samiti
Lingampally, Hyderabad - 500 027

*Re-Printed by*
**Suchitra Enterprises**
Chikkadpally, Hyderabad - 20
Phone :

# प्रास्ताविकम्

विदितचरमेव समेषां विदुषां यत् सर्वोत्तमबादरायणमुनिप्रणीतं पुराणोत्तमं श्रीमद्भागवतं शुक-महामुनिमुखरैरखिलैरमरवरैरपि उपगानोपासनादिनाऽऽदरनैरन्तर्येण समाद्रियत इति । निखिलनिगमसकल-सच्छास्त्रसारभूतेऽस्मिन् महापुराणेऽगणितपूर्णगुणगणगुम्फितस्य हरेः रोमाञ्चकरमहिमासहस्राणि सहस्रशः समुज्जृम्भन्ते । अपरिमितानर्घ्यार्थपरिबृंहितेऽप्यस्मिन् पुराणरत्नाकरे तद्ग्रहणपाटवविधुराणां पामर-सुजनसमुदयानामुपकर्तुकामाः परमकृपालवोऽनवरतनियततपोपदेशादिभिः सुचरित्रजीवनसत्राः श्रीमद-धोक्षजतीर्थशुभसम्प्रदायप्रवर्तकाः ज्ञानिवरेण्याः श्रीमद्विजयध्वजतीर्थाः पदरत्नावली इत्यभिधामनितर-साधारणीं व्याख्यां निरमासिषुः । अत्र टीकायां निरुक्तमहाव्याकरणाभिधानादिमानवचनैः विवक्षित-मूलार्थविशेषाणां प्रकाशनं विशेषतश्च उपनिषद्ब्राह्मणाद्यागमसंवादितया स्वाभिमतविषयाणां सुनिपुण-मुपपादनञ्च एतद्गुणविधुराणामपव्याख्यातॄणामकौशलविकृतीनां दर्पणायेते ।

अनया टीकया संवलितस्य श्रीमद्भागवतस्य पञ्चममन्तरा प्रथमादिषष्ठान्तस्कन्धाः भगवद्भक्ताना-मध्येतॄणां पुरस्तादुपस्थापितपूर्वाः । पञ्चमस्कन्धविजयध्वजीयस्य शुद्धमातृकार्थं शोधनोद्यमोऽद्याप्यसफल एव । इदानीं सप्तमादिस्कन्धत्रयमध्येतॄणां पुरस्तादुपस्थाप्यत इति महदिदं प्रमोदस्थानम् । सप्तमस्कन्धो-पनिबद्धं हिरण्यकशिपोः निरङ्कुशदुराचराणां बालकप्रह्लादेनाऽनुष्ठितं भगवद्धर्मविषयकं सत्वशालिप्रति-भटनं भावुकहृदयगह्वरेषु अप्रशाम्यद्धीरताज्योतिरुद्दीपयेदित्यभिमन्यामहे । अष्टमस्कन्धोपवर्णितमतिचित्र-सुचरित्रोपेतं गजेन्द्रमोक्षोपाख्यानं, भगवतो भागवतोत्तमानां देवादीनां मिथः निकटबान्धव्याभिव्यञ्जकं क्षीरोदधिमन्थनाख्यानं, रोमाञ्चकरवामनावतारवर्णनम्, अतिचित्रमत्स्यावतारचरितं च कस्य वा सचेतसो न समुद्रेचयेत चेतः । नवमस्कन्धे तावद् वैष्णवाग्रणीनामिक्ष्वाकुनृगशर्यातिप्रभृतीनां नाभागाम्बरीषादि-महीपालानां चोदात्तचरितानि 'चरितं वैष्णवानां च विष्णूद्रेकाय कथ्यते' इति श्रीमध्वमुन्युक्तेः निदर्शनरूपेण विभाव्यन्ते । मध्ये प्रस्तुतस्य भगवतो रामावतारवर्णनं परशुरामदिव्यचरितं च सुजन-वृजिनमहाचलानां सञ्चूर्णने शक्रवज्रादप्यतिशय्येते । ययातिनृपचरिते तस्य विरक्तिप्रकरणं तु वैषयिकविषविमूर्च्छितस्य दीनसुजनसमुदायस्य समुज्जीवनाय सञ्जीवनायते । ययातिसुतानां यदु-प्रभृतीनां वंशानुवर्णनावसरे शशबिन्द्वाद्यनेकमहायोगिभूपालानामद्भुतचरितानि सहृदयहृदयभित्तिषु सुचिरं सुतरां विराजेरन् ।

एतद्ग्रन्थसंशोधने संपादने च निरतानां विबुधानां, ग्रन्थस्यास्य समग्रं प्रकाशनव्ययभारमूढ्वाऽ-ध्येतृवृन्दानां महोपकारकरणधुरीणानां भाग्यनगरलिङ्गम्पल्लीस्थश्रीराघवेन्द्रस्वामिबृन्दावनसमितिसदस्यानां च अस्मदुपास्यश्रीरामविठ्ठलयोः श्रीकृष्णस्य चाऽनुग्रहविशेषानाशास्महे ।

इति विश्वेशतीर्थाः
पेजावरमठाधीशाः

# निवेदनम्

परमपूज्यानां परमहंसप्रवराणां श्रीमद्दशप्रमतिसुदर्शनप्रवचनाध्यापनैकदीक्षाणां श्रीफलिमारु-भण्डारकेर्युभयमठाधीशानां तथा परमपूज्यानामहर्निशं विश्वतोमुखमहत्कृतिशतैरतिचित्रसुचरित्रजीवन-सत्राणां पेजावरमठाधीशानां श्रीविश्वेशतीर्थश्रीमच्चरणानां परमानुग्रहेण वरीवर्धमानेयं श्रीराघवेन्द्रस्वामि-बृन्दावनसमितिः श्रीचरणानां प्रेरणया श्रीमद्विजयध्वजीयटीकासहितश्रीमद्भागवतप्रकाशनाख्यमहत्कर्मणि सहर्षं सोत्साहं समुद्यता ।

साम्प्रतमनया बृन्दावनसमित्या श्रीमद्भागवतसप्तमाष्टमनवमस्कन्धाः अध्येतृबृन्दानां पुरस्तादुप-स्थाप्यन्ते । अध्येतृसुजनबृन्दश्चानेन ग्रन्थप्रकटनेन समुत्कटप्रयोजनजातमभिसम्पद्यतामित्यभिकामयामहे ।

परमपूज्यानां श्रीपेजावरमठाधीशानां स्वीयसंदेशप्रास्ताविकाभ्यामनुगृहीतवतां सप्रश्रयाः साष्टाङ्गाः सहस्रशः प्रणतयो निवेद्यन्ते ।

मैसूरुनगरवासिनः श्री पि. एस्. शेषगिरिरायः, डा. सि. एच्. श्रीनिवासमूर्तिः, श्री बि. एन्. सीतारामरायः– एते विद्वांसः पूर्णप्रज्ञविद्यापीठीयाः ग्रन्थस्यास्य संशोधनादिकं महता परिश्रमेण चारुतरं परिपूरयामासुः । एतेभ्यो महोदयेभ्यः कार्तज्ञ्यपुरःसरं नतिततयो वितीर्यन्तेऽनया बृन्दावनसमित्या । विना विलम्बेन सुन्दरमुद्रणकारी चारित्रमुद्रणालयाधिकारी श्री चन्द्रशेखरमहोदयोपि वन्दनमर्हति ।

इति सुजनविधेयः

**के. सुब्बराय अडिगः**

अध्यक्षः

श्रीराघवेन्द्रस्वामिबृन्दावनसमितिः

बागलिङ्गम्पल्ली

हैदराबाद्

## सम्पादकीयम्

श्रीपेजावरमठाधीशानां परमपूज्यगुरुचरणानां श्रीविश्वेशतीर्थानां परमादेशानुसारं प्रवर्तमानै-रस्माभिः संशोधनादिकर्मणि यथाशक्ति प्रयतितम् ।

श्रीमद्राघवेन्द्रतीर्थशुभसम्प्रदायप्रवर्तकैः श्रीव्यासतत्वज्ञतीर्थार्यैः सप्तमस्कन्धमात्रं प्रति मन्द-नन्दिन्याख्या व्याख्या व्यरचि । सुललितवाक्यविन्यासैरुल्लासन्तीयं टिप्पणी मूलार्थविशेषव्यञ्जनपरा तथा मध्ये मध्ये श्रीमद्विजयध्वजतीर्थटीकाशुद्धपाठानां प्रकाशनपरा सहृदयहृदयमलप्रक्षालनक्षमा हृद्या गम्भीरा च वर्तते । श्रीयादवार्यैः पञ्चमाध्यायपर्यन्तं व्याख्या निरमायि । पश्चादवशिष्टभागं श्रीसत्य-धर्मतीर्थार्याः व्याचक्रिरे । श्रीसत्यधर्मतीर्था उत्तरस्कन्धानपि सुनिपुणं व्याचख्युः । श्रीसत्यधर्मीय-टिप्पण्यामपि निगमार्थविवरणव्याकरणकौशलादिकं समन्ततः समुज्जृम्भते । अष्टमस्कन्धं श्रीछलारि-शेषाचार्याः श्रीलिङ्गेरिश्रीनिवासाचार्याश्च व्याचक्रिरे । श्रीछलारिशेषाचार्यैः नवमस्कन्धोऽपि व्याख्यायि । श्री छलारि शेषाचार्यटिप्पण्यामनेकत्र श्रीविजयध्वजीयटीकावाक्यविन्यासा एवोपलभ्यन्ते । कुत्रचित् श्रीसत्यधर्मतीर्थटिप्पण्यामपि श्रीविजयध्वजतीर्थटीकानुकरणं दृश्यते । श्रीविजयध्वजतीर्थकृतपदरत्ना-वल्याः गूढार्थविचारिण्याख्यटिप्पण्यपि अज्ञातकर्तृका अष्टमस्कन्धमात्रस्योपलब्धा । नवमस्कन्धस्य हस्त-लिखितपुस्तकत्रयमुपालम्भि । तत्साहाय्येनैवाऽनेकत्र समीचीनपाठाः समुपलब्धा इति सामोदमावेदयामः । हन्त लिपिकृत्प्रमादप्रचुरेषु मुद्रितकोशेषु मातृकासु च तत्र तत्र दोषा दरीदृश्यन्ते । तस्मादनेकत्र शुद्धपाठालाभावसरेऽधस्तनटिप्पण्यामस्पष्टमित्येव निर्दिष्टम् । क्वचिद् दुर्घटभावदीपिकाकाराणां श्रीसत्याभिनवतीर्थानां भावोऽपि अधस्तनटिप्पण्यां प्रादर्शि । बन्नञ्जे गोविन्दाचार्याः स्वसंपादितभागवत-तात्पर्ये तत्र तत्र सुनिपुणं मूलश्लोकान् व्याचख्युः । तदपि क्वचिदधस्तनटिप्पण्यां 'गो' सङ्केतेन न्यवेशीति तेभ्यः कार्तज्ञ्यं निवेद्यते ।

स्कन्धत्रयस्यास्य संशोधने चैतानि पुस्तकान्युपयुक्तानि —

अ — सङ्केतेन सूचितम् — अहोबलनृसिंहाचार्यव्याख्या ।

ग — ,, — मैसूरुनगरे प्राच्यसंशोधनालयोपलब्धम् ।

ब — ,, — वनमालिरायबहादूरप्रकाशितम्, वङ्गदेशे मुद्रितम्, बहुव्याख्यानोपेतं च ।

ह — ,, — पूर्णप्रज्ञविद्यापीठग्रन्थालयोपलब्धम् ।

च — ,, — ,, ,,

ह्व — सङ्केतेन सूचितम् — श्रीहृषीकेशतीर्थानां तात्पर्यपाठः ।

व्या — " — श्रीव्यासतत्त्वज्ञतीर्थव्याख्या ।

तु — " — श्रीसत्याभिनवतीर्थटिप्पणी ।

या — " — श्रीयादवार्यव्याख्या ।

स — " — श्रीसत्यधर्मतीर्थव्याख्या ।

पा — " — पाङ्गी श्रीनिवासाचार्यव्याख्या ।

शे — " — छलारि श्रीशेषाचार्यव्याख्या ।

लि — " — लिङ्गेरि श्रीनिवासाचार्यव्याख्या ।

हस्तलिखितकोशान् वितीर्य भूरिसाहाय्यमाचरितवद्भ्यो महोदयेभ्यः सोत्कण्ठं कृतज्ञतां निवेदयामः ।

* * * *

# विषयानुक्रमः

## सप्तमस्कन्धे


| अध्यायः | | पृष्ठम् |
|---|---|---|
| १ | देवपक्षपातिना हरिणा दैत्यवधे कृते भगवतो वैषम्यनैर्घृण्यापत्तिरिति परीक्षितः शङ्का । शुकेन तत्तद्योग्यतानुगुणं समत्वमिति समाधानम् । तत्संवादितया राजसूययागावसरे नारदधर्मराजसंवादकथनम् । तत्र द्वेषिणः चैद्यस्य कथं सायुज्यमिति युधिष्ठिरप्रश्नः । नारदेन तस्य स्वाभाविकभक्तिं निरूप्य सनकादिशापप्रसङ्गोपपादनम् । संक्षेपतः जन्मत्रयोल्लेखः । हिरण्यकशिपोः महात्मनि प्रह्लादे कुतो विद्वेष इति युधिष्ठिरप्रश्नः । | १–१३ |
| २ | हिरण्याक्षसंहारेण खेदक्रोधाविष्टस्य हिरण्यकशिपोः प्रतिचिकीर्षा । दैत्यपतीनाहूय विष्णुवधप्रतिज्ञा । विप्रर्षिधर्माद्युन्मूलनार्थमादेशश्च । भर्तृवधपरितप्तहिरण्याक्षभार्यायाः तत्पुत्राणां च कपोताद्याख्यानेन हिरण्यकशिपुकृतं सान्त्वनम् । अनेन च हिरण्यकशिपुः स्वरूपतो विष्णुभक्तः असुरावेशात् तद्द्वेषीति प्रमेयविशेषस्याऽऽविष्करणम् । | १४–४० |
| ३ | हिरण्यकशिपोरुग्रतपसा सुमनसां सन्तापः । तैः विरिञ्चेः पुरतः परिहारप्रार्थनम् । देवानां विरिञ्चेराश्वासः । हिरण्यकशिपोरग्रे ब्रह्मण आविर्भावः । हिरण्यकशिपुकृता विरिञ्चिस्तुतिः । ब्रह्मणा वरप्रदानम् । | ४१–५० |
| ४ | लब्धवरस्य महासुरस्य दर्पः । तेन कृत्स्नशो लोकत्रयविजयः । गरुडोरगशर्वेन्द्रप्रभृतीन् सर्वसत्वपतीनपि पराजित्य तेषां स्थानानां हरणम् । वशीकृतमहेन्द्रभवनेन तेन तत्र महता वैभवेन विहारः । जितविश्वस्य तस्य क्रूरशासनैः लोकानां लोकपालानां च व्याकुलता । अन्यत्राऽलब्धशरणैस्तैः कृच्छ्रव्रताचरणादिना शरण्यस्य विष्णोः शरणप्रापणम् । हरिणाऽभयदानम् । नारदेन प्रह्लादगुणकीर्तनम् । पितुः पुत्रद्वेषे हेतुं विवरीतुं, पुत्राय प्रयोजितो द्वेषः पितुर्मरणायाऽभूदिति कुतूहलं परिहर्तुं च युधिष्ठिरविज्ञापनम् । | ५१–५७ |
| ५ | शण्डामर्काभ्यां दैत्यबालकानामध्यापनम् । तत्र प्रह्लादस्याऽनादरभावः । पित्रा पृष्टेन तेन सज्जनाश्रयणद्वारा भगवद्भजनेन श्रेयस्त्वोक्तिः । ततो राजाज्ञया | |

| | | |
|---|---|---|
| | शण्डामर्काभ्यां प्रह्लादस्य साग्रहं त्रिवर्गोपदेशः । पुनः पित्रा पृष्टेन प्रह्लादेन विष्णुभक्तिप्रशंसनम् । रोषोद्रिक्तेन पित्रा पुत्रं क्रूरसर्पादैर्घातयितुमादेशः । शण्डामर्काभ्यां हिरण्यकशिपुशमनप्रयत्नः । | ५८–७० |
| ६ | प्रह्लादेन दैत्यबालकानां विष्णुधर्मोपदेशः । तैश्च विश्वासजननोपायेन संशयं नाशयेति प्रह्लादे निवेदनम् । | ७०–८१ |
| ७ | तेषु विश्वासोत्पादनाय गर्भस्थस्य स्वस्य नारदात् तत्त्वज्ञानप्राप्तिप्रकारकथनम् । पुनस्तत्त्वोपदेशः । | ८२–९६ |
| ८ | भीतेन गुरुणा राज्ञः प्रह्लादचेष्टानिवेदनम् । तेनाऽऽत्मनैव सुतो हननीय इति हिरण्यकशिपुनिर्धारः । पुत्रभर्त्सनवचनानि । पुत्रेण सान्त्वनवचनानि । स्वभक्तभाषितमृतं कर्तुं स्तम्भान्नृसिंहप्रादुर्भावः । नृसिंहमहिमावर्णनम् । तेन लीलया दैत्यकुञ्जरसंहारः । ब्रह्मरुद्रादिभिर्भगवत्स्तवनम् । | ९७-११० |
| ९ | नृसिंहतेजःप्रकर्षेण सर्वेष्वपि देवेषु कम्पमानेषु नृसिंहकोपशान्त्यै ब्रह्मणा प्रह्लादप्रेषणम् । प्रह्लादकृता हरिस्तुतिः । तं प्रति कामं वरं वृणीष्वेति भगवदादेशः । | १११–१३७ |
| १० | प्रह्लादेन हृदि कामासंरोहणवरप्रार्थनम् । तस्यैकान्तभक्तिं संश्लाघ्य नृसिंहेण मन्वन्तरपर्यन्ताधिपत्यवरदानम् । प्रह्लादेन पितुः पूतत्वप्रार्थनम् । नृसिंहेण समाश्वासनम् । ब्रह्मणा हिरण्यकशिपोः क्रौर्यनिवेदनम् । इतः परं क्रूरनिसर्गासुराणामेवंविधो वरो न देय इत्यादिश्य हरेरन्तर्धानम् । प्रह्लादेन ब्रह्मादीनामर्हणम् । ब्रह्मणा प्रह्लादस्याभिषेचनम् । देवैः स्वधामगमनम् । नारदेन प्रह्लादप्रशंसनं ततोऽप्यतिशयेन धर्मराजादीनां शंसनम् । | १३७–१४९ |
| ११ | हरिणा हरे कृतः त्रिपुरवधोपायरूपोऽनुग्रहः । | १४१–१५३ |
| १२ | वर्णाश्रमधर्मविषये युधिष्ठिरप्रश्नः । नारदेन नृणां स्त्रीणां च साधारणानां त्रिंशतां भागवतधर्माणां निरूपणम् । ततो ब्राह्मणादिवर्णधर्मनिरूपणम् । | १५४–१६३ |
| १३ | ब्रह्मचारिवानप्रस्थयोर्धर्मप्राधान्येन चतुर्णामाश्रमाणां साधारणधर्मोपदेशः । | १६३–१७० |
| १४ | यतिधर्मनिरूपणम् । प्रह्लादेन सह्यसानुन्यवधूताजगरमुनिदर्शनं तद्वृत्तिविषये प्रश्नश्च । अवधूतेन स्ववृत्तेः सिद्धावस्थाया वर्णनम् । | १७०–१८१ |

१५ गृहस्थाश्रमधर्मविषयं विशिष्याऽवगन्तुं युधिष्ठिरप्रश्नः। सर्ववर्णाश्रमाणां गृहस्थाश्रममूलत्वाद् देशकालादिविशेषेण गृहस्थविषयकश्रेयस्करधर्माणां नारदेनोपदेशः। १८२–१९०

१६ कर्ममार्गो ज्ञानमार्गश्च कार्याणां कारणेषु प्रवेशलक्षणलयः तत्साधनं च प्रपञ्चस्वरूपं चेति प्रमेयपञ्चकनिरूपणम्। दैवोपलब्धेन द्रव्येणैव नित्यनैमित्तिकक्रियाकरणम्। धर्माधर्मविवेकनिरूपणम्। नारदेन स्वपूर्वचरित्रकथनम्। पाण्डवानभिनन्द्योपसंहारः। युधिष्ठिरेण श्रीकृष्णपूजा। दाक्षायणीनां पृथग्वंशकीर्तनमवसितमिति परीक्षितं प्रति शुकमुनिवचनम्। १९२–२१६


## अष्टमस्कन्धे


अध्यायः विषयः पृष्ठम्

१ स्वायम्भुवेतरमन्वन्तरविषये परीक्षित्प्रश्नः। शुकेन तुरीयमन्वन्तरोक्तगजेन्द्रमोक्षश्रवणाय राज्ञ औत्सुक्यम्। २१९–२२५

२ क्षीरसमुद्रसमीपे त्रिकूटपर्वतप्रान्ते ऋतुमदुद्यानवर्णनम्। गजेन्द्रेण तत्रत्यसरोवराभ्याशगमनम्। सरोवरे गजेन्द्रविहारः। तदानीं ग्राहेण तत्पादग्रहणम्। स्वेन वा अन्यैर्गजैर्वा तदुन्मोचनाशक्तिः। गत्यन्तरमपश्यता गजेन्द्रेण शरण्येषु शश्वदप्रतिहतशरण्यो हरिरेवेति विज्ञायाऽनन्यमनसा हरिशरणप्रापणम्। २२५–२३०

३ गजेन्द्रकर्तृकस्तोत्रम्। तेन तन्मन्वन्तरावतारिणा हरिणा ग्राहग्रस्तस्य गजेन्द्रस्योन्मोचनं ग्राहस्याऽपि देवलशापत उन्मोचनम्। २३०–२३९

४ हरिणा ग्राहस्य हूहूगन्धर्वाख्यनिजपदप्राप्तिः। गजेन्द्रस्य च हरिसारूप्यप्राप्तिः। भगवता गजेन्द्रमोक्षोपाख्यानकीर्तनस्य फलवर्णनम्। २३९–२४२

५ रैवतचाक्षुषमन्वन्तरवर्णनम्। चाक्षुषे क्षीराब्धिमन्थनोक्तौ राज्ञा तं विस्तरेणाऽऽश्रावयितुं विज्ञापनम्। दूर्वाससा स्वदत्तमालायां श्रीमदान्धेनेन्द्रेणाऽनादृते सति शापप्रसङ्गः। तेन देवानां युधि दितिजेभ्यः पराजयः। पराजितैश्च देवैः ब्रह्मसभामुपेत्य विरिञ्चिशरणप्राप्तिः। विरिञ्चिना तेषां सान्त्वनं, तैः साकं विष्णुलोकगमनं च। तत्र ब्रह्मादिभिर्हरिगुणगणकीर्तनम्। २४२–२५८

६ सुरगणैः संस्तुतस्य हरेराविर्भावः । पुनर्ब्रह्मकर्तृका स्तुतिः । हरिणा देवगणानां दैत्यसन्धानसम्पादनद्वारा क्षीराब्धिमन्थनार्थमुपदेशः । इन्द्रेण बलिमुपेत्य मृदुवचनैर्हरिशिक्षितं निगद्य दैत्यदानवसन्धानावसादनम् । सुधासम्पादनार्थं सर्वैः समुद्रमथनोद्यमः । मन्दराचलानयनम् । २५५–२६१

७ देवदानवैर्वासुकिं रज्जुं कृत्वा गिरिं संवेष्ट्याऽब्धिमथनारम्भः । अमरैर्हरिं पुरस्कृत्य वासुकेर्मुखग्रहणम् । तदानीममङ्गलं पुच्छाङ्गं न वयं गृह्णीम इति दैत्यानां विवादः । पश्चाद् हरिणा देवैश्च पुच्छग्रहणम् । अर्णवेऽद्रिनिमज्जने सति कूर्मरूपेण हरिणाऽद्रिधारणम् । वासुकेः करालविषनिश्वासाग्निभिः तातप्यमानानां दानवानां परिग्लानिः । भगवताऽजितेन स्वयं निर्मन्थनम् । अथोदधेर्हालाहलोत्पत्तिः । सन्त्रस्ताभिः प्रजाभिः सदाशिवस्य शरणप्राप्तिः स्तुतिश्च । देवदानवादीनां व्यसननिरसनार्थं शम्भुना विषपानम् ॥ २६२–२६९

म ८ पुनर्मथनम् । कामधेनूच्चैःश्रवऐरावतपारिजातानामुत्पत्तिः । रमादेव्याविर्भावः । तस्या अभिषेकः । स्वयंवरे तया हरिपरिग्रहः । अथ सुराभिमानिवारुण्युत्पत्तिः । असुरैः तस्या आहरणम् । अथोदध्यन्तरेऽमृतपूर्णकलशं बिभ्रतो धन्वन्तरेराविर्भावः । अमृतकुम्भे दैत्यैर्बलादपहृते भगवतो मोहिनीरूपाविर्भावः । तन्मोहितैर्दैत्यैरर्पितेऽमृतभाजने तान् वञ्चयित्वा हरिणा सुराणाममृतवितरणं, ततो निजरूपधारणं च । २६९–२८०

९ ततो दैत्यदानवैर्द्वेषेण देवैः सह युद्धारम्भः । अथाऽऽसुरीमायायुद्धेन सुरसैनिकानां दूनता दिङ्मौढ्यं च । सुरगणसंस्तवनेन हरेराविर्भावः । हरिणाऽऽसुरीमायाविनाशः । २८१–२८६

१० पुनर्युद्धम् । बलिवासवसंवादः । बलिवधः । नमुचिवधः । ब्रह्मणा प्रेषितेन नारदेन दानवसङ्क्षयाद् देवानां वारणम् । अथोशनसा स्वविद्यया सञ्जीविन्या बल्यादीनामुज्जीवनम् । २८७–२९२

११ मोहिनीरूपिणः हरेर्दानवमोहनादिकमाकर्ण्य हरस्य कौतूहलम् । अतो हरेण गौर्या भूतगणैश्च साकं हर्युपसरणम् । हरेर्नानामहिमानमुपवर्ण्याऽऽत्मनः मोहिन्यवतारदर्शनाकाङ्क्षाप्रकटनं च । हरिणा मोहिनीरूपदर्शनम् । तेन विमोहितस्य स्मरहरस्य स्थैर्यभ्रंशः । हरिणा शम्भुशंसनम् । २९३–३०१

१२ अवशिष्टानां वैवस्वतादीन्द्रसावर्ण्यन्तानां सप्तमन्वन्तराणां वर्णनम् । प्रतिमन्वन्तरस्य १) मनुः २) तत्पुत्राः ३) देवताः ४) ऋषयः ५) इन्द्रः ६) हर्यवतारः एवं षड्विधक्रमेण निरूपणम् । अष्टममन्वन्तरे हरेर्वामनावतारप्रस्तावना । २०१–२०६

१३ प्रतिमन्वन्तरं मन्वादिहर्यवतारान्तानां षण्णां पृथक्कर्मनिरूपणम् । २०६–२०८

१४ वामनावतारे विशेषतोऽवगन्तुं परीक्षित औत्सुक्यम् । शुकेन तद्विवरणम् । बलिना सर्वात्मना भृगुशुश्रूषा । सन्तुष्टेन भृगुणा बलिं महाभिषेकेणाभिषिच्य विश्वजिन्नामकयागारम्भः । अथ महारथेन बलिना भृगुदत्तं दिव्यरथमारुह्य दिग्विजयनिमित्तेन स्वर्गगमनं स्वसैन्यनिचयेन समन्ततः स्वर्गरोधनं च । तदा शुक्रमुखैः बृहस्पतिमुखतः शत्रोरुन्नतिमवगम्य तदादेशमादृत्य त्रिदिवपरित्यागः । अथ बलिना स्वर्गमाक्रम्य त्रिलोकपालनम् । २०८-२१६

१५ पुत्रविपत्तिहेतोः परितप्तयाऽदित्याऽभ्यर्थितेन कश्यपेन तस्यै पयोव्रतविधानोपदेशः । २१६–२२०

१६ अदित्या भर्त्रादिष्टव्रतानुष्ठानम् । तेन सन्तुष्टस्य हरेः प्रादुर्भावः । अदित्या हरिस्तुतिः । हरिणा वरदानम् । अदितिगर्भे भगवतः सन्निधानम् । अथ ब्रह्मकृता गर्भस्तुतिः । २२०–२२४

१७ वामनावतारः । महर्षिवृन्दैस्तस्योपनयनम् । ततो वामनेनाऽश्वमेधयजननिरतस्य बलेरुपसरणम् । बलिना वामनस्य स्वागतेनाभिनन्द्याऽर्घ्यपाद्यादिना समर्चनम् । अभीप्सितदानयाचनाय बलेर्नियोगः । २२४–२२८

१८ वामनेन बलिकुलप्रशंसनम् । पदत्रयस्य याच्ञा । स्वार्थमजानन् बालस्त्वं बालिशमतिरित्यभिधाय भूरितरमर्थमर्थयस्वेति बलेराग्रहः । पदत्रयमात्रस्वीकारे वामनस्य प्रतिवचनम् । ज्ञानिनोशनसा सर्वस्वं जिहीर्षमाणोऽयं विष्णुरेवेति बलिं बोधयित्वा दानप्रतिरोधः । २२८-२३६

१९ बलिना स्वप्रतिश्रुतदानस्याऽप्रतिहतत्ववचनम् । क्रुद्धेन भार्गवेण बलेः शापः । बलिना वामनायोदकपूर्वकं समर्च्य पदत्रयप्रदानम् । बलिना वामनपादावनिज्य विश्वपावनीनां तदपां शिरसि धारणम् । तद् बलिकर्म दिवि

गृणद्भिर्देवगणैः पुष्पवृष्टिः । वामनेन क्षणार्धमात्रेण त्रिविक्रमरूपं धृत्वा पदद्वयेनैव कृत्स्नश ऊर्ध्वाधोलोकानां क्रमणम् । ३३७-३४२

२० विष्णोः प्रोन्नमितायाऽङ्घ्रये सत्यलोके ब्रह्मणाऽर्हणादिकम् । तेन गङ्गाजन्म । जाम्बवता सर्वदिक्षु त्रिविक्रमस्य विजयघोषणम् । संक्रुद्धैर्बल्यनुचरासुरैर्वामनहननोद्यमः । बलिना सान्त्वनम् । गरुडेन वारुणपाशैर्बलिबन्धनम् । तृतीयपदादाने ते निरयप्राप्तिरिति वामनवचनम् । ३४३-३४७

२१ तृतीयं पदं मे शीर्ष्णि कुर्विति बलेर्निवेदनम् । प्रह्लादेन तत्रागत्य त्रिविक्रमस्तवनम् । बलिभार्यया हरिस्तुतिः । ब्रह्मणा हरिं संस्तुत्य बलिमनुगृहीतुं निवेदनम् । हरिणा बलिमभिनन्द्य वरं प्रदाय सुतललोकगमनायाऽऽदेशः । तथा स्वयं तत्र द्वारपो भूत्वा सपरिवारस्य बलेस्सर्वदा सर्वतो रक्षिण क्षणे आश्वासदानम् । ३४८-३५४

२२ बलिना प्रह्लादेन च हरेः कृतज्ञतार्पणम् । हर्यादेशमादाय ताभ्यां सुतलगमनम् । शुक्रेण हर्याज्ञया प्रायश्चित्ताचरणम् । इन्द्रेण स्वर्गप्राप्तिः । ब्रह्मशर्वदेवर्षिप्रभृतिभिरुपेन्द्रस्य महाभिषेकोत्सवाचरणम् । ३५४-३५९

२३ मत्स्यावतारचरितम् । ३५९-३७१


## नवमस्कन्धे


अध्यायः — विषयः — पृष्ठम्

१ राज्ञा वैवस्वतमनोः पुत्राणामिक्ष्वाक्वादीनां वंशविस्तारे प्रश्नः । शुकेन तन्निरूपणम् । वसिष्ठेन प्रजार्थे मनोः मैत्रावरुणयोरिष्टिकरणम् । इलोत्पत्तिः । तस्याः सुद्युम्नता तस्य पुनः स्त्रीत्वम् । ३७१-३७९

२ इलावर्तदेशमहिमा । इलाया बुधेन विवाहः । पुरूरवस उत्पत्तिः । वसिष्ठतेजसा इलाया व्यवस्थया पुंस्त्वप्राप्तिः । तेन सुतत्रयप्राप्तिः । पुरूरवसे राज्यं दत्वा वनगमनं च । ३७९-३८१

३ वैवस्वतमनुना पुत्रार्थं तपश्चरणम् । इक्ष्वाकुनृगशर्यातिप्रभृतिदशसुतोत्पत्तिः । वृषध्रकथा । करूशादीनां मनुपुत्राणां वंशकथनम् । दिष्टवंशे मरुत्तस्य जन्म । तस्य महिमा । ३८१-३८६

४ मनुपुत्रस्य शर्यातेः दुहिता सुकन्या । तस्याः कथा । च्यवनमहिमा । शर्यातिवंशे रेवतस्य जन्म । रेवतीकथा । ३८६–३९१

५ नाभागकथा । अङ्गिरसः सत्रे रुद्रेण तस्य भूरिवित्तदानम् । ३९१–३९५

६ नाभागसुतस्याम्बरीषस्य कथा ।

७ अम्बरीषसुतवंशः । क्षुवतो मनोरिक्ष्वाकुजन्म । तस्य पुत्रशतोत्पत्तिः । विकुक्षिकथा । तस्य वंशे ककुत्स्थजन्म । तस्य महिमा । तस्य वंशे युवनाश्वजन्म । अनपत्येन तेनैन्द्रीष्ट्यनुष्ठानम् । मन्धात्रुपत्तिः । तस्य मान्धातृत्पत्तिः। पुत्रत्रयं पञ्चाशत् कन्याश्च । ताभिः सौभरिवरणम् । मान्धातृवंशे त्रिशङ्कुजन्म । ततो हरिश्चन्द्रजन्म । रोहितकथा । ४०८–४२४

८ रोहितान्ववाये सगरजन्म । तस्य कथा । भगीरथेन गङ्गावतरणम् । तस्य वंशे खट्वाङ्गजन्म । तस्य महिमा । रघुजन्म । रामावतारः । ४२५–४४९

९ रामेण यज्ञाचरणम् । लोकापवादतः सीतापरित्यागः । वाल्मीक्याश्रमे कुश-लवोत्पत्तिः । शत्रुघ्नेन लवणासुरं निहत्य मधुरानिर्माणम् । रामस्य राज्य-शासनप्रकारः । ४४९–४५५

१० कुशमारभ्य सुमित्रान्तं मनुवंशकीर्तनम् । ४५६–४५७

११ इक्ष्वाकुतनयस्य निमेः कथा । वसिष्ठशापः । निमेः जनकजन्म । जनकवंशानुवर्णनम् । ४५८–४६१

१२ सोमवंशवर्णनप्रारम्भः । अत्रिकुले सोमजन्म । बुधोत्पत्तिः । बुधादिलायां पुरूरवस उत्पत्तिः । तस्योर्वश्याश्च कथा । ४६१–४७०

१३ पुरूरवस वंशवर्णनम् । गाधिजन्म । जमदग्न्युत्पत्तिः । परशुरामावतारः । परशुरामचरितवर्णनम् । हैहयकुलनाशः । ४७०–४७६

१४ परशुरामेण मातृभ्रातृहननम् । पुनरुज्जीवनम् । त्रिसप्तकृत्वो भूभारहरणम् । यागानुष्ठानम् । गाधेर्विश्वामित्रजन्म । तस्य पुत्रशतम् । शुनःशेपकथा । पुरूरवसः पुत्रस्य आयोर्वंशः । तत्र दीर्घतमसः ततो धन्वन्तरेश्च उत्पत्तिः । आयोः सुतस्य क्षत्रवृद्धस्य वंशवर्णनम् । ४७६–४८४

१५ आयुसुतस्य नहुषस्य वंशवर्णनम् । तत्र ययातिदेवयानीकथा । द्रुह्यादीनां जन्म । ४८४–४९१

१६ ययातिनाऽन्यापदेशेन बस्तकथानिरूपणम् । तस्य निर्वेदः । भगवतश्चरणोपसत्तिः । ४९१–४९६

१७ पूरुवंशानुवर्णनम् । तत्र दुष्यन्तजन्म । तस्य शकुन्तलया विवाहः । भरतजन्म । तस्य महत्कर्म । तस्य वितथेऽन्वये भरद्वाजजन्म । ४९६–५०३

१८ वितथान्वये बृहत्क्षेत्रस्य गर्गस्य रन्तिदेवस्य जन्म । रन्तिदेवमहिमा । गर्गवंशवर्णनम् । बृहत्क्षेत्रवंशे मुद्गलाचार्याद् दिवोदासजन्म, ततोऽहल्याजन्म । तस्याः शतानन्दजन्म । ततः शरद्वतः ततश्च कृप्याः कृपस्य च जन्म । ५०४–५०८

१९ दिवोदासस्य पुंसन्तत्यां द्रुपदस्य जन्म । ततो द्रौपद्याः धृष्टद्युम्नस्य च जन्म । बृहत्क्षेत्रपौत्रस्याजमीढस्य वंशे कुरुजन्म । कुरुवंशे बृहद्रथस्य ततो जरासन्धस्य जन्म । कुरुसुतस्य जह्नोरन्वये प्रतीपजन्म । ततो देवापिशन्तनुबाह्लीकानां जन्म । देवापेः कलापग्रामवासः । बाह्लीकात् सोमदत्तस्य ततो भूर्यादीनामुत्पत्तिः । शन्तनोः भीष्मचित्राङ्गदविचित्रवीर्योत्पत्तिः । विचित्रवीर्यस्य विवाहः । अकालमृत्युः । बादरायणाद् धृतराष्ट्रपाण्डुविदुराणामुत्पत्तिः । पाण्डवसन्ततिः । बार्हद्रथसन्ततिश्च । ५०९–५१४

२० अनुवंशवर्णनम् । तत्र दशरथसख्यू रोमपादस्य जन्म । तस्य सुतायाः शान्ताया ऋष्यशृङ्गेण विवाहः । रोमपादस्य पुंसन्ततौ कर्णस्य पोषकपितुरधिरथस्य जन्म । द्रुह्युवंशवर्णनम् । तुर्वसुवंशवर्णनम् । यदुवंशवर्णनम् । यदोर्ज्येष्ठपुत्रस्य सहस्रजितो वंशे कुन्तेः कृतवर्मणो कृतवीर्यस्य च जन्म । कृतवीर्यादर्जुनोत्पत्तिः । तस्य महिमा । तस्य मधुः । मधोर्वृष्णिजन्म । यदोर्द्वितीयपुत्रस्य क्रोष्टोः वंशवर्णनम् । तत्र पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघानां जन्म । ज्यामघस्य शैव्यायां विदर्भजन्म । ५१४–५१९

२१ विदर्भात् कुशक्रथरोमपादानां जननम् । रोमपादवंशे चेदिचैद्यादिजन्म । क्रथवंशे दशार्हजन्म । तदन्ववाये मध्वादिजन्म । तद्वंशे सात्वतजन्म । तस्यैकस्यां भार्यायां भजमानभजिदिव्यवृष्णिदेवावृधान्धकमहाभोजानां सप्तसुतानामुत्पत्तिः । अपरस्यां भार्यायां शताजित्सहस्राजिदयुताजितां जन्म

देवावृधाद् बभ्रुजन्म । तस्य महिमा । वृष्णेः सुमित्रवृधाजित्शिनिअन-
मित्रनिम्नानां जन्म । निम्नात् सत्राजितः प्रसेनस्य च जन्म । अनमित्र-
वंशे सत्यकस्य ततो युयुधानस्य जन्म । अनमित्रस्यान्यसुतवंशे श्वफल्कस्य
अक्रूरादिद्वादशानां जन्म । अक्रूरवंशे आहुकस्य जन्म । ततो देवकोग्रसेन-
योर्जन्म । देवकस्य देववदादयः चत्वारः पुत्राः धृतदेवाद्याः सप्तदुहितरः ।
उग्रसेनस्य कंसादिनवपुत्राः कंसादिचतस्रो दुहितरः । एताः वसुदेवस्य
पत्न्यः । सात्वतसुतस्य भजमानस्य वंशे शूरजन्म । तस्य वंशे शिनेः, ततो
हृदिकस्य ततः कृतवर्मणो जन्म । दैवमीढस्य शूरस्य मारिषायां वसुदेवादि-
दशपुत्रजन्म । पृथादिपञ्चकन्याजन्म च । शूरेण कुन्तेः पृथाया दानम् ।
कर्णस्योत्पत्तिः । श्रुतदेव्यां वृद्धशर्मणो दन्तवक्त्रोत्पत्तिः । जयत्सेनस्य
राजाधिदेव्यामवन्तिदेशभवौ विन्दानुविन्दौ सुतौ । दमघोषात् श्रुतश्रवसि
शिशुपालजन्म । वसुदेवभ्रातॄणां वंशवर्णनम् । वसुदेवस्य विविधभार्यासु
सन्ततिवर्णनम् । देवक्यां कीर्तिमदादिसुतोत्पत्तिः । श्रीकृष्णस्य सुभद्रायाश्च
जन्म । ५१९–५२९

* * * * *

अञ्जनासूनुसान्निध्यात् विजयेन विराजितम् ।
अजितप्रीतिजनकं भजेऽहं विजयध्वजम् ॥

॥ श्रीः ॥

# श्रीमद्भागवतम्

## सप्तमः स्कन्धः

—०—

॥ अथ प्रथमोऽध्यायः ॥

**राजोवाच —**

**समः प्रियः सुहृद् ब्रह्मन् भूतानां भगवान् स्वयम् ।**
**इन्द्रस्यार्थे कथं दैत्यानवधीद् विषमो यथा ॥ १ ॥**

---

### श्रीमद्विजयध्वजतीर्थविरचिता पदरत्नावली

षष्ठस्कन्धाभिधे तीर्थे स्नातः सप्तमनाम्न्यथ ।
श्रीमद्भागवते स्नातुं प्रयते तत्वसंविदे ॥

सेवा येषामपवर्गगतिर्जगताममलास्ते
[1]श्रीमद्विष्ण्वङ्घ्रिसरोरुहयुगले भ्रमन्तः सन्तः ।
कुर्वन्तु दयां मयि विजयध्वजतीर्थे[2] नित्यं[3]
नित्याभ्यस्तादितिजाङ्घ्रितनुनखतीर्थसुतीर्थे[4] ॥

सन्ततवेदान्तपरिनिष्ठितानामपि श्रीनारायणपरमप्रसादमन्तरेणानापादितसमीचीनज्ञानामृतकलानां

---

[1] विष्ण्वङ्घ्रि—ग    [3] नित्याम्—अ

[2] 'विः पक्षिपरमात्मनोः' इति प्रमाणात् वेः परमात्मनो जयः सर्वोत्कर्षो यस्मिन् तत् विजयं ब्रह्ममीमांसाशास्त्रम्। तदेव ध्वजः केतुर्यस्य सः विजयध्वजः श्रीमन्मध्वाचार्यः । तस्य तीर्थे दयापात्रभूते ।—अहोबलनृसिंहाचार्याः ।

[4] स्नानादिना नित्याभ्यस्तं च तत् अदितिजाङ्घ्रितनुनखतीर्थं च भागीरथीरूपं,तेन सुतीर्थेऽत्यन्तं पवित्रे । त्रिविक्रमनखोत्पन्नभागीरथीस्नानादिना निर्मलान्तःकरणे इति यावत् ।—अहोबलनृसिंहाचार्याः

अदितिजाङ्घ्रितनुनखतीर्थं गङ्गा । तत्सकाशादपि सुतीर्थं मध्वशास्त्रम् । नित्याभ्यस्तम् अदिजाङ्घ्रितनुनखतीर्थं- ति सुतीर्थं येन सः, तस्मिन् ।—पाङ्घ्री आचार्याः

नित्याभ्यस्तादितिजाङ्घ्रितनुनखतीर्थसुतीर्थे इति समस्तपदे आदितिज इति पदमन्तर्गतम् । आ अदितिज इति तत्र च्छेदः । आ अतिशयेन, महानिति यावत् , अदितिज इन्द्रः महेन्द्रः, एतन्नामकः स्वगुरुः । तस्य अङ्घ्रि- नखतीर्थेन पादप्रक्षालनोदकेन सुतीर्थेऽतिपवित्रे ।—पाङ्घ्री आचार्याः

अ न भवति विनश्यति दितिजो हिरण्यकशिपुर्यस्मात् स अदितिजो नरसिंहः । अङ्घ्र्योः तनूनि कोमलानि नखानियस्य स अङ्घ्रितनुनखः । अदितिजश्चासौ अङ्घ्रितनुतखश्च अदिजाङ्घ्रितनुनखः । .सः तीर्थम् अवतार
न ति

**न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ।**
**नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥**

---

क्वचित् क्वचिदसुरजनमोहाय प्रदर्शितशुक्रशोणितसम्पर्कादिभिरिव भगवतः प्रादुर्भावैः तत्वे संशयाल्नां सतां विसंशयार्थं श्रीनृसिंहावतारः तत्प्रसत्तये नानाविधवर्णाश्रमाचारभेदविचारः तत्पूजाप्रकारश्च निरूप्यतेऽस्मिन् स्कन्धे ।

तदर्थं परीक्षित् प्रश्नपूर्वकमुपोद्घातं रचयति—**सम इति** । यो भगवान् भूतानां योग्यतातिरेकेण पक्षपरिग्रहशून्यः, आत्मादेः प्रियश्च, 'तदेतत् प्रेयः' इति श्रुतेः । सत्त्वादिप्रदत्वात् [1]सुहृत्त्वाच्च । तैरनुष्ठितसमर्चनादिसुकृतस्य सुखलक्षणफलदातृत्वेन उपकर्तृत्वात्[2] । किमत इति तत्राह—**स्वयमिति** । विषम इव[3] इन्द्रस्यार्थे स्वप्रयोजनमन्तरेण परप्रयोजनार्थं कथं दैत्यानवधीदित्यन्वयः[4] ॥ १ ॥

ननु सुरगणैः क्रियमाणस्य स्वप्रयोजनस्य [5]संभवादवधीदिति किं न स्यादिति तत्राह—**न हीति** । हिशब्दो हेत्वर्थः । कुतो नास्तीत्यत्राह—**निःश्रेयसात्मन इति** । नित्यनिर्दुःखानन्दस्वरूपस्य । तादृशत्वं मुक्तस्याप्यस्तीति तत्राह—**साक्षादिति** । नित्यनिर्दुःखानन्दानुभवस्वरूपस्य परप्राप्यप्रयोजनाभवात् । मुक्तस्य तदभावात्[6] । असुरप्रद्वेषात् सुरहितं क्रियत इति तत्राह—**नैवेति** । विद्वेषस्य तत्तत्स्वरूपत्वद्योतनाय[7] असुरेभ्यः इति पञ्चमी । वृक्षात्, पर्णं पतति इतिवत् कादाचित्कत्वाभावात् । नित्ये द्वेषे वधानुपपत्तिः अन्यथा वधस्यापि सन्ततानुवृत्तिः स्यात् । अतो नोपपत्तिः स्यादिति भावः[8] । स्वाभिभवलक्षणभयात् तद्वध इति तत्राह—**नेति** । उद्वेगो भयलक्षणः । कुत इत्यत उक्तम्—**अगुणस्येति** ।

---

यस्य सः विष्णुः । तस्य सुतीर्थं सर्वोत्तमत्वप्रतिपादकं शास्त्रम् । नित्याभ्यस्तम् अदितिजाङ्घ्रितनुनखतीर्थसुतीर्थं येन सः, तस्मिन् ।—पाङ्ग्री आचार्याः

अदित्यां जायते प्रादुर्भवतीति अदितिजो वामनः, स एव त्रिविक्रमः, तस्याङ्घ्रितनुनखात् प्रादुर्भूतं तीर्थं गङ्गा, सुतीर्थं सच्छास्त्रम् । ध्यानादिना मननादिना च नित्याभ्यस्ते अदितिजाङ्घ्रितनुनखतीर्थसुतीर्थे येन सः, तस्मिन् ।

[1] सुहृत्—च,ङ [2] उपकर्तृत्वाच्च सुहृत्—ब [3] स स्वयं विषम इव—ग,ङ,ब

[4] अत्र समत्वादेः प्रत्येकमेव वधायोगप्रयोजकत्वं, वैशिष्ट्ये कृत्याभावात् । यद्यपि सिद्धान्त्यभिमतं समत्वं न वधविरोधि, प्रियत्वादिकं न सर्वत्रास्ति, तथाऽपि तादृशसिद्धान्ताविर्भावायैवेयमुक्तिरित्यवधेयम् ।

—व्यासतत्वज्ञतीर्थाः

[5] संभवादेव—ग,ङ [6] परप्राप्यप्रयोजनाभावाभावादिति यावत् ।

[7] विद्वेषश्च तत्तत्स्वरूप (इति) द्योतनाय—ग,ब । विद्वेषस्यापि क्रोधरूपतया क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः इति चतुर्थी—व्या. असुरेभ्य इत्यस्य चतुर्थीपञ्चमीसाधर्म्येऽपि, चतुर्थ्यास्सूपपादत्वेऽपि, पञ्चमीमाश्रित्यार्थविशेषं स्फोरयामासुः विजयध्वजतीर्थाः । [8] वधे काप्युपपत्तिर्नास्तीति यावत् ।

इति नः सुमहाभाग नारायणगुणान् प्रति ।
संशयः सुमहान् जातस्तं भवान् छेत्तुमर्हति[1] ॥ ३ ॥

श्रीशुक उवाच —

साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ।
त यद् भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥

गीयते परमं पुण्यं ऋषिभिर्नारदादिभिः ।
नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥ ५ ॥

निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ।
स्वमायागुणमाविश्य बाध्यबाधकतां गतः ॥ ६ ॥

---

प्राकृतगुणसंबद्धस्य तादृक्स्वभावत्वात् । हरेस्तदभावात् । 'निर्गुणश्च' इति श्रुतेः । अनेन निःश्रेयसात्मनोऽपि गुणसंबन्धेन[2] जीववत् तथात्वं स्यादिति शङ्काऽपि निरस्तेति ज्ञायते ॥ २ ॥

प्रामाणिकत्वद्योतनाय प्रश्नं स्तौति—साध्विति । तत्र[3] हरिचरिते भागवतानां माहात्म्यं भगवद्भक्तिवर्धनमित्यनेन तन्माहात्म्यं भगवन्माहात्म्याविनाभूतमित्यवगन्तव्यम् ॥ ४ ॥

प्रश्नप्रतिवचनं भगवदनुग्रहमन्तरेण सुवचं न स्यादिति प्रकटनाय भगवन्तं प्रसाद्य वक्तव्यार्थं प्रतिजानीते—नत्वेति ॥ ५ ॥

हरेर्हन्तृत्वधर्मो न घटत इति वदन्, लोकेष्वेकत्वात्, उत तद्विलक्षणत्वादिति वा वदसि । समत्वादिधर्मोपन्यासानुपपत्तेर्न प्रथमः । अघटितघटकशक्तिमत्त्वेन सर्वस्योपपत्तेः द्वितीयो युक्त एवेति भावेनाह— निर्गुण इति । अयं भावः—भगवान् स्वमायागुणं स्वेच्छागुणमनुसृत्य स्वाधीनप्रकृतिगुणनिर्मितदेवासुरदेहं 'वाऽऽविश्य तत्र स्थित्वा बहिश्च नृसिंहादिप्रादुर्भावरूपेणासुरादिबाधकताम् असुरादिबाध्यवस्तुषु नियामकत्वेन स्थित्वा बाध्यतां (च) गतो भवति । किमत्र मानमिति शङ्का । 'बाध्यादिस्थो हरिर्नित्यं बाध्यतादि गतेत्यपि[5] । गीयते न तु बाध्यत्वादिदोषयुतत्वतः' इति 'भविष्यत्पर्ववचनेन परिहर्तव्येति । हिशब्देन 'लोकवत्तु लीलाकैवल्यम्' इति सूत्रात् लीलां प्रयोजयति[6] । निर्गुणत्वादिकं

दृयद

---

[1] अर्हसि—ग,ङ [2] गुगसम्बन्धे–ग,ङ [3] एवं व्याख्यानात् 'तद्भागवतमहात्म्यम्' इति वि. पाठः संभाव्यते ।

[4] चाविश्य—ग [5] गत इत्यपि इति छेदः । बाध्यतानियमनाय बाध्यं गतो बाध्यतां गत इति गीयते । एवं बाधकतानियमनाय बाधकं गतो बाधकतां गत इति गीयत इत्यर्थः ।

[6] हरेर्बाध्यादिगतत्वं लीलेति हिशब्देन सूचयतीत्यर्थः ।

सत्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ।
न तेषां युगपद् राजन् ह्रास उन्नाह एव च[1] ॥ ७ ॥

जयकाले तु सत्वस्य देवर्षीन् रजसोऽसुरान् ।
तमसो यक्षरक्षांसि तत्कालानुगुणो भजन् ॥ ८ ॥

ज्योतिरादिरिवाभाति[2] सङ्घातान्न विविच्यते ।
विन्दन्त्यात्मानमात्मस्थं मथित्वा कवयोऽन्ततः ॥ ९ ॥

---

वैलक्षण्ये लिङ्गमिति ज्ञापनाय प्रयुक्तम् । पुरुषाणां गुणदोषानुसारेण रक्षाद्यभावेन समत्वादिक्रमपि न युज्यत इति प्रदर्शनाय अपिशब्दः । तर्हि कुतो विविच्य न ज्ञायत इत्यतः—**अव्यक्त इति** । 'दधिस्थ घृतवत् काष्ठे वह्निवच्च जनार्दनः । देहेन्द्रियासुजीवेभ्यो विविच्य ज्ञायते न तु ' इत्यतो विविच्याज्ञानं युक्तम् ॥ ६ ॥

स्वमायागुणमाविश्येत्युक्तं विवृणोति—**सत्वमित्यादिना** । प्रकृतेः स्वरूपभूताः । आत्मनः परमात्मनः ज्ञानादिवत् न स्वरूपभूताः, किन्त्वधीनाः । जीवस्यापि अभिमानादेव[3] । गुणानां भिन्न-स्वभावत्वात् । युगपत् प्रवृत्त्यनुपपत्तेरित्यतः[4] शक्तिप्रकटनप्रकारं दर्शयति—**न तेषामिति** । ह्रासः अनुद्भूतत्वम् । उन्नाहः उद्भूतत्वम् । क्षयवृद्धिक्रमेणेति[5] परिहारः ॥ ७ ॥

तं क्रमं विविनक्ति—**जयेति** । सत्वस्य जयकाले उन्नाहविषये देवर्षीन् भजन् **आभाती**-त्यन्वयः । रजस उन्नाहविषये असुरान् वर्धयन्, तमस उन्नाहविषये यक्षादीन् वर्धयन् । एवं गुणानां शक्तिं जृम्भयतीत्यर्थः । तत्रापीत्थंभावोऽस्तीत्याह—**तत्कालेति** । तत्तत्कालगुणमनुसृत्य वर्तमानः ॥ ८ ॥

इममर्थमानुभाविकं करोति—**ज्योतिरादिरिति** । अयमर्थः । ज्योतिरादीति उत्तरायणादि-कालादिगुणः केषाञ्चित् फलानामुन्नाहं केषाञ्चिध्द्रासं कुर्वन् यथा (भाति) सत्वादिजयादिविषये उन्नाहादिकालमनुवर्तमानो भाति तथेति । कथमव्यक्तत्वं हरेरिति तत्राह—**सङ्घातादिति** ।

---

[1] उन्नाह एव वा—ग

[2] दारुणि ज्योतीरूपेण वह्निः, आदिपदेन दध्यादौ घृतादिर्यथा विद्यमानोऽपि न भाति तथाऽऽत्मस्थोऽपि परमात्मा न भाति । अमानोनाः प्रतिषेधे इति प्रतिषेधार्थकम् अभातीत्यत्र अ इत्यव्ययम्—व्या.

[3] ज्ञानानन्दरूपस्य जीवस्यापि सत्वादयः न स्वरूपभूताः । नाप्यधीनाः । तथाप्यभिमानादेव जीवस्य तत्कार्येषु स्वीयताबुद्धिरिति यावत् ।

[4] प्रवृत्त्यनुपपत्तिरित्यत इति पेशलम् ।

[5] क्षयवृद्धी क्रमेणेति इति स्यात् ।

यदा सिसृक्षुः पुर आत्मनः परो
रजः सृजत्येष पृथक् स्वमायया ।
सत्वं विचित्रासु रिरंसुरीश्वरः
शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥

कालं चरन्तं[1] सृजतीश आश्रयः
प्रधानपुंभ्यां नरदेव सत्यकृत् ।

---

र्या
देहेन्द्रियादिकार्यकारणसंघातान्न विविच्यते पृथग्भूतो न ज्ञायते । अत्रापीदमेवोदाहरणम्—ज्योतिरादीति । ज्योतिरादि घृतादिद्रव्यं दध्यादिभ्यो मथनात् पूर्वं न विविच्यते पृथग्भूतं न ज्ञायते न प्रतीयते । तथा आत्मापीति भावः । 'तेजोऽशितं त्रेधा विधीयते' इति श्रुतेर्घृतस्य ज्योतिश्शब्दाभिधेयत्वं प्रामाणिकम् । 'दधिस्थघृतवत् काष्ठे वह्निवच्च जनार्दनः' इत्यादेश्च । ननु यदि केनचिद् देहादिव्यतिरिक्तत्वेनायं ज्ञायते तर्हि 'दधिस्थघृतवत्' इत्यादि निदर्शयितुं पार्यते । तदेव कुत इति ? आह—**विन्दन्तीति** । कवयः ब्रह्मादयः शास्त्रेण मथित्वा अन्ततो निर्णीय आत्मस्थं देहादिस्थं आत्मानं विन्दन्ति जानन्ति । किञ्च अन्ततः चरमनाशे[2] विन्दन्ति लभन्ते । 'लभ निष्पत्तौ' इति धातोः[3] । नितरां प्राप्नुवन्तीत्यर्थः । अनेन कवीनां ज्ञानमस्मिन्नर्थे प्रमाणमुक्तं भवति ॥ ९ ॥

देहादेः विविक्तत्वेन ज्ञानं कस्मात् नोत्पद्यत इत्याशङ्क्य स्वसृष्टशरीरेषु जीववत् प्रविष्टत्वात् न तद्विषयं ज्ञानमित्यभिप्रेत्याह—**यदा सिसृक्षुरिति** । यदा परमात्माऽऽत्मनोऽर्थे निवासाय पुरः शरीराणि सिसृक्षुः स्रष्टुमिच्छति तदा गुणवैषम्यन्यायेन स्वेच्छया नियतो रजोगुणमुपादाय महदहङ्कारपञ्चमहाभूतानि सृष्ट्वा तैः पृथक्[4] तत्तद्योग्यतानुसारेण शरीराणि सृजति । यदा चेश्वरः तासु विचित्रासु सुरनरतिर्यक्संज्ञितासु पूर्षु रिरंसुः जीवगतस्वादृष्ट[5]योग्यतामनुसृत्य सुखादिकमुत्पाद्य तत्साक्षित्वेन क्रीडितुमिच्छति तदा स्थितिहेतुत्वात् सत्वगुणमुपादत्ते । यदा शयिष्यमाणः योगनिद्रां चिकीर्षति तदाऽसौ तमोगुणमीरयति तच्छक्तिमुज्जृम्भयति[6] ॥ १० ॥

किञ्च चरन्तं अतीतानागतवर्तमानभेदेन वर्तमानं कालं सृजतीत्यर्थः । ईश आश्रय इत्येताभ्यां

---

[1] कालं च सन्तम्—ग. [2] चरमशरीरनाशे इत्यर्थः । [3] विद्लृ लाभे इति धातोरिति स्यात् ।
[4] पृथक् पृथक्—ग,ङ [5] जीवगतादृष्ट—ग,ङ । अदृष्टसहितां योग्यतामित्यर्थः ।
[6] सृष्टिलयकालयोः प्राधान्येन क्रमेण रजस्तमसोरुज्जृम्भणम् । स्थितिकालेऽपि ईषत्सृष्टेर्विनाशस्य च सत्वात् तदाऽपि तयोरल्पमुज्जृम्भणं ज्ञेयम् ।

स तत्र तत्रोभयसिद्धिमाप्नुयात्
लिङ्गात्मनो लिङ्गगुणाश्च सन्ति ॥ ११ ॥

पदाभ्यां (शब्दाभ्याम्) एषां सर्जनसामर्थ्यं सूचयति । अत्र प्रमाणमाह—सत्यकृदिति[1] । सत्यं मीमांसाशास्त्रम्, तस्य कर्ता । इदानीं स्वसृष्टानामन्तश्शयनप्रकारमाह—स तत्रेति । तत्र तत्र देहेषु स्थितः उभयसिद्धिं महति वस्तुनि महत्परिमाणं महासामर्थ्यप्रकटनम् अणुनि अणुपरिमाणमणुसामर्थ्यं[2] वाऽऽप्नुयात् । 'अणोरणीयान् महतो महीयान्' इति श्रुतेः । अत्रेदं लिङ्गात्मनो लिङ्गगुणाश्च सन्ति

---

[1] वेदाः सर्वाङ्गानि सत्यमायतनमिति तलवकारवाक्यव्याख्यानावसरे 'सत्यमिति मीमांसा' इत्याचार्योक्तेः ।

नन्वविद्यमानमेव मायया प्रदर्शयति न तु सृजतीत्यत उक्तम्—सत्यकृदिति । सत्यमेव सृजतीत्यर्थः । कुतस्तत्सृष्टस्य सत्यत्वमित्यत आह—स तत्रेति । स परमात्मा तत्र तत्र स्वसृष्टे सत्वादौ कालादौ चोभयसिद्धिं बाध्यबाधकतादिप्रदत्वरूपां सिद्धिं प्राप्नुयात् । तथा चार्थक्रियाकारित्वात् तस्य सत्यत्वमित्याशयः । ननूभयसिद्धिरपि मायामयी किं न स्यादित्यत आह—लिङ्गात्मन इति । शरीरस्वामिनो जीवस्य लिंगगुणाः शरीरधर्मा दुःखादयः सन्ति । अबाध्या एवानुभूयन्ते । यदि भगवत उभयसिद्धिर्मायामयी तर्हि जीवे तद्दत्तबाध्यबाधकतादिना दुःखादिकमबाध्यतया नानुभूयेतेति बाधकमनेनोक्तमिति ज्ञातव्यम्—यादवार्याः

कालादेव जरायुत्पत्त्युपपत्तेर्न भगवानपेक्षणीय इति 'कालशब्देश्वरैकत्वमतान्यप्येवमेव हि' इत्यनुव्याख्यानोक्ताः कालैकत्ववादिनः, प्रधानपुंभ्यामेवोत्पत्तिरिति सांख्याः (च) । तन्मतं निराह—कालं चरन्तमिति । कालोऽखण्डो न । क्षणलवादिभेदस्यौपाधिकत्वस्य समयपादे निरासेन स्वाभाविकत्वात् । तथा च प्रवाहतश्चरन्तं कालमपि भगवानेव सृजति । कला मुहूर्ता इत्यादि श्रुतेः । नापि प्रधानपुरुषयोः स्रष्टृत्वं, ताभ्यां सह कालस्य सृष्टत्वादित्याशयेनाह—प्रधानपुंभ्यामिति । नेयं पञ्चमी किन्तु सहयोगे तृतीया । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः । क्षोभयामास' इति वचनात् । एतदेवाभिप्रेत्योक्तं तात्पर्ये-प्रधानपुंभ्यां सहेति । इदमिदानीमिति प्रतीतिसिद्धकालाश्रयोऽपि भगवानित्यभिप्रेत्याश्रय इत्युक्तम् । आरोपितत्वाज्जगतो मायापेक्षा वक्तव्या, न तूक्तगुणत्रयापेक्षेति चोद्यं निराह—सत्यकृदिति । विश्वं सत्यमित्यादि श्रुतेः । अनीशो हि मिथ्या दर्शयति, अयं चेश इत्युक्तम्—ईश इति । एवं जगत्सर्जनादिना तत्र तत्र प्रवेशादिना च स्वप्रयोजनाभावात् कथमेतदित्यत आह—स तत्र तत्रेति । योग्यायोग्यजनेषु स्थित्वा शुभाशुभलक्षणोभयसिद्धिमाप्नुयात्, अन्तर्णीतणिच्, आपयेत् । तथा च स्वस्य विहार एवायम् । जनस्य सदसन्मोक्षलाभः प्रयोजनमिति भावः । तथाप्युपादाननिमित्ताद्यपेक्षणात् परापेक्षत्वं तच्छक्त्यभावाच्चापूर्णत्वमित्यत आह–लिङ्गात्मन इति । लिङ्गं शरीरे चिह्ने च साधने शेफभस्मनोरित्यभिधानात् लिङ्गस्य शरीरस्थानीयस्य साधनस्य वा प्रकृतिकालादेः आत्मनः स्वामिनः लिङ्गगुणाः स्वाधीनतया सन्ति । षष्ठ्यर्थः स्वत्वम् । तथा च 'साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते । तदा साधनसंपत्तिरैश्वर्यद्योतिका भवेत्' इत्युक्तेः साधनापेक्षया न स्वातन्त्र्यहानिः । नाप्यपूर्णत्वम् । यतो लिङ्गशक्तयः परमात्मनः सन्ति । सर्वसामार्थ्योपेतत्वात् । शशविषाणादिसर्जनसामर्थ्यमप्यस्ति किन्तु सत्यसंकल्पत्वान्न तथा करोतीत्येव । यद्वा पृथिव्यबादीनां जडानां या आसदत्वतदर्थैकत्वादि (?) शक्तयो याश्च देवानां (चेतनानां ?) शक्तयस्ताश्च सन्तीति न भगवतो न्यूनत्वम् । इदं च पद्यं प्राचीनैर्बहुधा योजितमिति मन्दानन्दायेत्थं योजितमिति क्षन्तव्यम्—व्या.

[2] अणुसामर्थ्यप्रकटनम्—ड

य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यजः ।
तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥१२॥

---

इति निदर्शनम् । चशब्द एवार्थे । यथा लिङ्गं शरीरस्थानीयं काष्ठं व्याप्य तिष्ठन्नग्निः लिङ्गात्मेत्युच्यते । तस्याग्नेः लिङ्गस्य काष्ठस्य गुणाः महत्त्वाणुत्वलक्षणाः सन्ति । महति काष्ठे महान्, अणुनि काष्ठे अणुरग्निरिति । 'लिङ्गं शरीरे चिह्ने च साधने शेफभस्मनि' इत्यभिधानम् । ननु सृष्टौ प्रवर्तमानेश्वरस्य निरपेक्षत्वात् स्वातन्त्र्येण किञ्चित् कारणापेक्षाऽसम्भवः, तदनपेक्षत्वे मृद्दण्डादेरिव शक्त्यभावेन कार्यसामग्र्यभाव इति तत्राह[1]—**लिङ्गात्मन इति** । लिङ्गात्मनः प्रधानादेः कारणस्य ये लिङ्गगुणाः कार्यजनकशक्तिलक्षणाः सन्ति, ते च लिङ्गात्मनः शरीरस्वामिनो हरेः सन्ति विद्यमानाः, तदधीनत्वादिति द्विरावृत्त्या योजनीयम् । 'द्रव्यं कर्म च कालश्च' इत्यादेः । यद्वा लिङ्गस्य प्रधानादेः गुणाः कार्यापादनशक्तिलक्षणाः लिङ्गात्मनः पूर्णद्वात्रिंशल्लक्षणस्वरूपस्य हरेः सन्ति । तेषां स्वरूपाभिन्नत्वद्योतनाय चशब्दः । ऊर्णनाभिः तुरीवेमादि विना स्वरूपभूतलीलयैव यथा जालं करोति तथाऽयमित्यर्थपरो वा । प्रधानसृष्टिः ब्रह्मणोऽस्तु, अवान्तरसृष्टिरवान्तरकारणात् स्यात्, कुलालादेः दृष्टत्वात् इत्यतो वाऽऽह—**स इति** । तत्र तत्र कार्यकारणेषु प्रातिस्विकेषु स्थित्वा उभयसिद्धिं जगत्कारणस्य जनकत्वलक्षणां कार्यस्य जन्यत्वफलं[2] प्रापयति । उभयोः शक्त्योः तदधीनत्वात्[3] इत्याह — **लिङ्गात्मन इति** । लिङ्गात्मनो मृदादेः लिङ्गगुणाः कार्यजननशक्तयः सन्ति । ते चानेन नियता इति शेषः । लिङ्गात्मनः कार्यस्य ये लिङ्गगुणाः पृथुबुध्नोदराकारादिलक्षणाः सन्ति ते च । 'तत्र तत्र स्थितो[4] विष्णुस्तत्तच्छक्तिप्रबोधकः' इत्यादेः । अनेन बाध्यबाधकतां गतः इत्येतत् स्पष्टीकृतम् । तथाहि—तत्र तत्र देवासुरेषु उभयसिद्धिं जयपराजयलक्षणां कार्यसिद्धिं प्राप्नोति । शिरस्त्राणवर्मादिलक्षणं[5] वहतो भटस्य ये लिङ्गगुणाः शौर्यादिलक्षणाः जयाजयौ वा ते च हर्यधीनाः । 'स वै बलं बलिनां चापरेषाम्' इत्यादेः । अत्र सर्वस्य हर्यधीनत्वदर्शनाय प्रधानपुंभ्यां कारणाभ्यां कार्यं सृजतीत्यङ्गीकारे प्रधानपुरुषावन्तरेण कालसृष्ट्यशक्तिर्हरेः प्रकटिता स्यादित्यन्यथा प्रतीतिनिरासायाचार्यैः ताभ्यां सहेति व्याख्यातम् ॥ ११ ॥

नन्वत्र साम्यगुणाधिकरणस्य हरेः वैषम्याधिकरणत्वं कथमित्यस्य प्रश्नस्य परिहारः कथं स्फुटमायात इत्याशङ्क्य स्वतो देवप्रियत्वमसुराप्रियत्वं मनुष्याणामुभयमेव समत्वं तत्तद्योग्यतावतां तेषाम् ।
त्व

---

[1] असङ्गेयमवतारिका ।
[2] जन्यत्वलक्षणाम् इति स्यात् ।
[3] एतदधीनत्वात्—ग, ङ
[4] तत्र तत्रान्वितः—ग, ङ
[5] लक्षणमित्यधिकमिति भाति ।

अन्यथा[1] त्वदभिमतवैषम्यप्राप्तिसाम्यहानी स्यातामित्याशयवानाह—य एष इति । य एष हरिः काले कालविषये ईशिता कालस्यापि प्रवर्तनसमर्थः । प्रधानपुरुषयोरीशितृत्वे किं वक्तव्यमिति अपिपदम् । त् स विष्णुः सुरानीकमिव स्थितं सत्वमेधयति[2] । सत्वस्य देहादिकारणत्वात् सत्वगुणप्रधानान् देवान् समेधयतीत्यर्थः । रजस्तमस्कान् रजस्तमस्स्वभावान् तत्प्रत्यनीकान् तेषां सुराणां शत्रुभूतान् असुरान् प्रमिणोति निहन्ति । 'मिन हिंसायाम्', इति धातुः[3] । सुरप्रिय इत्यनेन असुराणामप्रियो मनुष्याणामुभयात्मकः स्वभावत इति ध्वनितम् । तदुक्तम् —'स्वभावतः प्रियत्वात् तु सदा देवप्रियो हरिः । अप्रियश्चासुराणां स स्वभावादुभयं नृणाम्' इति । सत्वमेधयतीत्यनेन या सुखयोग्यता, रजस्तमस्कानित्यनेन या वधयोग्यता, ये च देहेन्द्रियादेः कारणभूतास्त्रयो गुणाः, यश्च गुणानामुन्नाहकरः कालः, यच्च तेषां त्रयाणां गुणानां (सकाशात्) पुण्यपापोभयलक्षणं कर्म, यच्च मूलकारणभूतं प्रकृतिपुरुष-

---

[1] अन्यथा तदतिलङ्घने ङ, अन्यथा तदतिलङ्घनेन ब,ग

प्रकृतिपुरुषाभ्यां सह सन्तं वर्तमानं कालं सर्वाधारः परमेश्वर एव सृजति । प्रकृतिपुरुषकालान् सृजतीत्येतावत् । सुप्तां प्रकृतिं सृष्ट्युन्मुखां करोति । पुरुषं च नामितः सृष्ट्वा सृष्टिकार्ये नियोजयति । कालं च क्षणलवाद्यात्मना । पुरुष इति जीवसमुदायो वा । तथाहि भाष्ये पाद्मवचनम् 'पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात् । विकार एव जननं पुरुषे तद्विशेषणम्' इति । 'जडप्रकृतेर्विकारः परिणामः । कालस्योत्पत्तिरेव । 'अहानि पूर्वोरुषसा जरन्त', 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' इति हि श्रुतिः । पुरुषे सर्वचेतनेषु विकारो विशेषणम् । विकारविशिष्टत्वं विकारिवस्त्वभिमानेन' इति पण्डिताचार्यवचनम् । यद्वा प्रधानपुरुषकालाः श्रीभूदुर्गाः । चित्प्रकृतिसृष्टिमनेनाह । एतदप्युक्तं भाष्ये 'प्रकृतिः पुरुषः कालस्त्रय एते विभागतः', इति । पण्डिताचार्योऽप्याह 'प्रकृतिः पुरुषः काल इति श्रीभूदुर्गाः' इति । तस्या जननं च 'परतन्त्रविशेषो हि विकार इति कीर्तितः' इत्युक्तम् । 'चित्प्रकृत्यादेः सिसृक्षुत्वादिः पराधीनो विशेषः' इति च तत्वदीपिका । एवं क्रमशः सृष्टेषु तेषु तेषु स्थित्वा अवान्तरकारणद्वाराऽवान्तरकार्याणि च सृजन् कार्यकारणात्मकोभयविधविश्वसृष्टिमपि साधयेत् । कारणेषु जनकत्वशक्तिं कार्येषु जन्यत्वं चाऽनुयात् प्रापयेत् । चराचरं चेतनाचेतनं वोभयम् । देवासुरयोर्बाध्यबाधकतासिद्धिर्वोभयसिद्धिः । 'द्विविधो भूतसर्गोऽत्र दैव आसुर एव च' इति स्मरणात् । एवं लिङ्गात्मनो जीवस्य लिङ्गगुणाः शरीरमूलाः सांसारिकधर्माश्च तत एव भवन्तीति न बन्धो मिथ्या । लिङ्गं शरीरम् । लिङ्गमाप्नोतीति लिङ्गात्मा जीवः । अलिङ्गो भगवान् । 'व्यापकोऽलिङ्ग एव च' इति श्रुतेः—गोविन्दाचार्याः

त्वस्य [2] सुरानीकमिवेत्यस्य एधयतीत्यनेनान्वयभ्रान्तिं निवारयितुं सादृश्यं प्रकटयितुं च प्रवृत्तं तात्पर्यम् 'देहादिकारणत्वेन सुरानीकमिव स्थितं सत्वम्' इति एवं च इवेत्यस्य स्थितमित्यध्याहृतेनान्वयः । उपोद्बलकत्वेन च सदृशमित्युक्तं भवति—व्या. ज्ञानाद्युपोद्बलकत्वेन सुरसमुदायमिव स्थितं सत्वं जयेनैधयतीत्यर्थः ।

[3] मिञ् हिंसायाम्—ब । प्रसिद्धधातुपाठेतु मीङ् मीञ् हिंसायामित्येव पठ्यते ।

स्वरूपम्, यच्च भक्त्यादिकम्, एतत् सर्वमवेक्ष्य देवानां भक्त्यादिगुणानितरेषां द्वेषादिदोषान् मनुष्याणामुभयात्मकमुत्पाद्य सुखासुखजयाजयजननमरणादिफलदातृत्वेन सम इत्युक्तम्। तदुक्तम् —'देशकालौ गुणांश्चैव भक्त्यादीनप्यवेक्ष्य तु। योग्यतां च तथा कर्म सम इत्यभिधीयते। स्वतः प्रियोऽपि देवानामुत्पाद्यैव गुणानिमान्। इतरेषां तथा दोषान् सुखदुःखे ददात्यजः। उभयं तु मनुष्याणामतः सम इतीरितः' इति। ननु सुरादिषु स्थितानां गुणदोषाणां तत्तत्कालीनत्वेनोत्तरकाले नाशसंभवेनानित्यत्वे[1] नियमो न स्यादित्याशङ्क्य शास्त्रविहितत्वात् नियमोऽस्त्येवेत्याशयवानाह—**उरुश्रवा इति**। उरु बहु श्रूयते इति उरुश्रवाः। शास्त्रं नियमप्रतिपादकं यस्य स तथा[2]। तदप्युक्तम्—'अनादिनियताश्चैव गुणदोषाः सुरादिषु। यथाक्रमं पुनश्चैव नियमाद् वर्धितास्तथा[3]॥ विष्णुनैव तथा नित्यं[4] विषमश्च जनार्दनः' इति। 'नियमाद् वर्धितास्तथा' इत्येतत् कुत्र प्रमाणीक्रियते इत्यस्य उरुश्रवा इत्यत्रेति वक्तव्यम्। उरु वर्धनलक्षणं श्रवो यस्य स तथेत्यर्थः। ननु वैषम्यं तदवस्थमेवाभूदिति चेन्न। योग्यतानिमित्तत्वात्। तदुक्तम्—'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित्' इति। हरेर्योग्यतानियत्या यदागच्छद् वैषम्यलक्षणमुरुश्रवः तदा तदस्तु विहितत्वादत उक्तम्[5]—**उरुश्रवा इति**। तदुक्तम्—'योग्यतायास्तन्नियत्या विषमत्वं भवेन्न च[6]' इति। नन्वेवं तर्हि क्वापि वैषम्यं नेत्यापन्नमिति चेदुच्यते। शुभाशुभयोर्विपर्यये शुभवतामशुभकर्म अशुभवतामसुराणां शुभकर्मानुसृत्य फलदाने सति विषमत्वं हरेर्दोषाय स्यादिति यदतः तत्तद्योग्यताबलविहितशुभाशुभोभयकर्मानुसारेण तत्तत्फलस्य 'विकर्मेन्द्रियार्थे अशुभकर्मदैत्यबललक्षणस्य दानेनेश्वरवैषम्यमित्यतः —**उरुश्रवा इति**। जयस्तम्भकल्पनाम हरेर्युक्तम्[7]। इन्द्रस्यार्थे कथं दैत्यानवधीद् विषमो यथेत्यादिप्रश्नपरिहार इति सिद्धम्। 'विषमत्वं तु दोषाय शुभाशुभविपर्यये। अतस्तादृशवैषम्यं ब्रह्मसूत्रे निराकृतम्। शुभाशुभनियन्तृत्वं न दोषो गुण एव सः। अतस्तादिष्टं कृष्णस्य ब्रह्मसूत्रकृतो विभोः' इति वचनात्[8]॥ १२॥

---

[1] अनित्यत्वेन—ग,ङ [2] श्रूयत इति श्रवः शास्त्रं नियमप्रतिपादकम्। उरु श्रवः यस्य स तथा। इति स्यात्।

[3] सदा—ह्र [4] ततोन्येषाम्—ह्र [5] अस्पष्टेयमवतारिका।

[6] भवेन्न वा–ङ; भवेत वा–ह्र; भवेदिति–व्या. [7] इत आरभ्य आन्तं वाक्यमस्पष्टम्। लेखकप्रमादः स्यात्।

[8] एवं सुरेष्वनादिगुणनियत्याऽसुरेषु दोषनियत्या विषमः स्यादेवेत्यत आह—नित्यं विषमश्च जनार्दन इति। तर्हि विषमत्वं नास्तीत्युक्तेः का गतिरित्यतस्तात्पर्ये स्कान्दवचनं प्रवृत्तम्— 'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित्। योग्यतायास्तन्नियत्या विषमत्वं भवेदिति–इति स्कन्दे' इति। योग्यतापेक्षया योग्यतातिक्रमापेक्षया तन्नियत्यासापेक्षया वा विषमत्वं नास्ति। यथास्थिततन्नियत्यपेक्षया तु स्यादेव। विषमत्वं नास्तीत्युक्तिस्तु

स वा[1] पुनः स्वसृष्टस्य स्थितिरक्षानुवृत्तये ।
सत्वं सुरगणान् विष्णुरुपबृंहयते मुहुः ॥ १३ ॥

[2]अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ।
प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥ १४ ॥

दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ।
वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १५ ॥

तत्रासीनं सुरर्षिं राजा पाण्डुसुतः क्रतौ ।
पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १६ ॥

---

'सुरप्रियः' इत्येतद् विवृणोति—स वा इति । अयमर्थः-सत्वं सत्वगुणसम्पन्नान् मुहुरनुयुगं उपबृंहयते सम्यग् वर्धयति । किं कारणम् ? अत्राह—पुनरिति । स्वेन सृष्टस्य जगतः पुनः पुनः स्थितिरक्षानुवृत्तये स्थितिपालनयोः प्रवर्तनार्थम् । वा इत्यनेन सृष्ट्याद्यष्टकमपि हरेरेवेति दर्शयति । 'यदा सिसृक्षुः' इत्यनेन यः प्रस्तुतः तं स इति तच्छब्देन परामृशति । तत्रापीश्वरशब्देन रुद्र उपक्रान्त इति भ्रान्तिनिवारणाय विष्णुरिति । यद्वा यत्र क्वापि रुद्रादुत्सर्जनादिकं प्रतीयते तदपि तत्स्थहरिणेति प्रकटनाय विष्णुरिति ॥ १३ ॥

सुरप्रिय इत्येतदितिहासेन दर्शयति—अत्रेति । सुरप्रिय एव, नासुरप्रियो हरिरित्यन्ययोगव्यवच्छेदार्थ एवशब्दः ॥ १४ ॥

---

योग्यतातिक्रमापेक्षया नास्तीत्यभिप्रायिका । नन्वेवं तर्हि यथाकथञ्चिद् विषमत्वं दोषप्राप्तय इत्यतो नेदं विषमत्वं दोषायेत्याशयेन प्रवृत्तं तात्पर्यम्—'विषमत्वं तु दोषाय शुभाशुभविपर्यये । अतस्तादृशवैषम्यं ब्रह्मसूत्रे निराकृतम् । शुभाशुभनियन्तृत्वं न दोषो गुण एव सः । अतस्तदिष्टं कृष्णस्य ब्रह्मसूत्रकृतो विभोः । इति तन्त्रनिर्णये' इति । शुभाशुभविपर्यये पुण्यपापविपर्यये योग्यताविपर्यये वा, विपर्ययेण फलदान इति यावत् । उक्तं चानुव्याख्याने—'वैषम्यं चैव नैर्घृण्यं वेदाप्रामाण्यकारणम् । नांगीकार्यमतोऽस्युत् तु न वैषम्यादिनामकम्' इति । विवृतमेतत् सुधाचन्द्रिकयोः ।—व्या.

नन्वेवं स्वभावत एव सुरप्रियत्वात् सुरानेधयति स्वभावत एवासुराप्रियत्वादसुरान् हन्तीत्युत्तरमुक्तं स्यात् । एवं चेद् विषम एव स्यान्न सम इत्यत एतादृशवैषम्यं तस्य भूषणमेव न तु दूषणमित्याशयेनाह—उरुश्रवा इति । उरु बहु श्रवः कीर्तिर्यस्येति । कीर्तिनाशकरो हि दोषो भवति । अनेन च तस्य कीर्तिरुत्कृष्टैव भवतीत्यतो न दोष इत्यर्थः । समत्वं तु तत्तद्योग्यतानुसारेणैव फलदानादुपपद्यत इति ।—या.

[1] व—ग,ङ　　[2] अत्रैव स्वभावतः सुरप्रिय इत्यत्रैव—व्या.

युधिष्ठिर उवाच —

अहो [1]ह्यत्यद्भुतं ह्येतद् दुर्लभैकान्तिनामपि ।
वासुदेवे परे तत्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १७ ॥

एतद् वेदितुमिच्छामः सर्व एव वयं मुने ।
भगवन्निन्दया वेनो द्विजैस्तमसि पातितः ॥ १८ ॥

दमघोषसुतः पाप आरभ्य[2] कलभाषणात् ।
सम्प्रत्यमर्षी गोविन्दे दन्तवक्त्रश्च दुर्मतिः ॥ १९ ॥

शपतोरसकृद् विष्णुं यद् ब्रह्म परमव्ययम् ।
श्वित्रो न जातो जिह्वायां नान्धं विविशतुस्तमः ॥ २० ॥

कथं तस्मिन् भगवति दुरवग्राह्यधामनि ।
पश्यतां सर्वलोकानां लयमीयतुरञ्जसा[3] ॥ २१ ॥

एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ।
ब्रूह्येतदद्भुततमं भगवन्नत्र कारणम् ॥ २२ ॥

श्रीशुक उवाच —

राज्ञस्तद्वच आकर्ण्य नारदो भगवान् ऋषिः ।
तुष्टः प्राह तमाभाष्य शृण्वन्त्याः सदसः कथाम्[4] ॥ २३ ॥

---

एक एवान्तो निर्णयः एषामस्तीति । भक्तिरेव पुरुषार्थसाधनं नान्यत् कर्मादिकमिति निर्णयवताम् । विष्णुरेव मुमुक्षुभिर्निषेव्य इति निश्चयवतां वा ॥ १७ ॥

भगवन्निन्दनं[5] सतां कर्णशूलायमानमप्येतत् श्रोतुं तच्चित्रमित्याशयवानाह[6]- **–भगवन्निन्दयेति** ॥ १८ ॥

दु: श्वित्रः श्वेतकुष्ठः । दुरवग्राह्यं दुर्ज्ञेयं धाम स्वरूपं यस्य स तथा तस्मिन् । लयं सायुज्य लक्षणम् । ननु 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इति वचनात् 'श्वित्रो न जातः' इत्यादि

---

[1] अत्यद्भुतम्—ग,ङ [2] प्रारभ्य—ग

[3] यद्यपि दन्तवक्त्रलयस्तदानीं न जातः । तथापि तदीयजातकप्रमाणेनैवं सिद्धवन्निर्देशः ।—या.

[4] कथाः—ग [5] श्रीहरिनिन्दनम्—ग

[6] असपष्टमिदम् । तस्य वेनवत् तमःप्राप्तिरेव युक्तेत्याशयवानाह–भगवन्निन्दयेति—या.

नारद उवाच —

निन्दनस्तवसत्कारन्यक्कारार्थं कलेवरम् ।
प्रधानपरयो राजन् अविवेकेन कल्पितम् ॥ २४ ॥

---

वाक्यं कथं सङ्गच्छते[1] ? उच्यते — भगवद्द्वेषिणोऽपि बहुविधाः । तत्र केचित् मरणानन्तरं पापफलं भुञ्जते । केचिदत्रैव । तत्कुतः ? इति चेन्न 'नियमाद् भुज्यते पुंभिः धर्माधर्मफलं मृतौ । कैश्चिदत्रापि भुज्येत तस्मान्नाधर्ममाचरेत्' इति वचनात् । अनेन धर्मिणोऽपि व्याख्याताः । 'धर्मी स्वर्गं विधर्मी निरयम्' इति च । अत्र कश्चिद् विशेषोऽप्यस्ति । जयविजययोः सात्विकत्वेन, भक्तत्वेन, द्वारपालकत्वेन हरेरतिप्रियत्वात् सनकादिशापादसुरजन्मन्यपि क्वचिद्भक्त्यलोपाद् द्वेषफलभोक्तुरन्यत्वाच्च । द्वेषस्य पापिष्ठासुरकृतत्वादनयोरुपचरितत्वाच्च । अनेन स्वापराधनाशलक्षणानुग्रहपात्रत्वेन प्रतिज्ञातशपथत्वेन च हरेः सुरप्रियत्वं च विशदमभूदिति रहस्यम् ॥ २०–२१ ॥

देहाद्यभिमानवतस्तव निन्दनादिना मनःखेदहर्षादिसंभवेन क्रोधादिकं स्यात् । हरेस्तदभावात् निन्दनादिना विशेषानुदयात् स्वतो नित्यतृप्तत्वेन परप्राप्यप्रयोजनाभावात् तत्तद्योग्यतानुसारेण तत्तत्फलदातृत्वं युक्तमित्यादिकं वक्तुमुपक्रमते —निन्दनेति । निन्दनं दोषसङ्कीर्तनम् । स्तवः स्तुतिः, गुणकथनलक्षणा) । सत्कारः कायिकपूजा । न्यक्कारः कायिकावज्ञा । तेषां निन्दनादीनां अर्थं विषयभूतं कलेवरं प्रधानपरयोः प्रधानाद् देहेन्द्रियाद्यात्मकात् परस्य जीवस्याविवेकेनाभेदेन कल्पितम् । स्वतश्चिदानन्दस्य (जीवस्य) प्रकृतेरनात्मनो भेदाग्रहादिदं जडशरीरं क्लृप्तमित्यर्थः[2] ॥ २४ ॥

---

[1] अयं प्रश्नस्तत्प्रतिवचनं चासङ्गतम् । अतः हरिनिन्दनस्यात्युत्कटपापत्वादिहैव शिशुपालेन श्वित्र्यादिना भवितव्यमासीत् । परं तथा नासीत् । मरणानन्तरं नियमेन पापफलं भुज्यत इति प्रमाणेनोच्यते । तदपि नासीत् । यतः सर्वेषां समक्षं कृष्णमेव विवेश । अतश्चित्रमिति धर्मराजाशयः । अतः 'नियमाद् भुज्यते पुंभिर्धर्माधर्मफलं मृतौ' इति वचनात् कथं 'श्वित्रो न जातो जिह्वायाम्' इति सङ्गच्छत इत्याशङ्क्य 'कैश्चिदत्रापि भुज्यते' 'अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते' इत्यादि वचनात् सङ्गच्छत इति समाधातव्यमिति भाति ।

[2] भगवन्निन्दकस्य नरकाद्यनर्थेन भवितव्यमिति वदतस्तव कोऽभिप्रायः ? किं तदीयनिन्दया भगवति दुःखमुत्पादितमिति, उत तदभावेऽपि सुरापानवन्निषिद्धाचरणरूपं भगवन्निन्दनमिति ? तत्राद्यस्य प्राकृतदेहधारिणां तदभिमानिनामेव परकृतनिन्दनादिना दुःखाद्युत्पत्तिः, भगवतस्तु न प्राकृतदेहो नापि तदभिमानः, अतो न परकृतनिन्दनादिना दुःखाद्युत्पत्तिरित्युत्तरमाह–निन्दनेति सार्धैस्त्रिभिः । निन्दनं दोषसंकीर्तनम् । स्तवो गुणकथनम् । सत्कारः पूजा न्यक्कारोऽवज्ञा । तदर्थं तन्निमित्तकदुःखाद्यनुभवार्थं कलेवरं षोडशकलात्मकं शरीरं प्रधानाद् देहेन्द्रियात्मकात् परस्य जीवस्य अविवेकेन स्फुटतरभेदाग्रहेण कल्पितं समर्थितं भवति । अत्र स्तुतिसत्कारयोः प्रसंगाद् ग्रहणम् ।—या.

युधिष्ठिरोक्तप्रश्नं प्रतिवक्तुमारभते–निन्दनेत्यादिना । अत्र निन्दनादिना भगवतः क्रोधदुःखहिंसनाद्युपद्रव-

हिंसा तदभिमानेन दण्डपारुष्ययोरपि।
वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २५ ॥

यन्निबन्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः।
तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः।
परस्येदमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥ २६ ॥

---

ततः किं फलतीति तत्राह—हिंसेति। तदभिमानेन देहाभिमानेन भूतानामविवेकज्ञानिनां ममाहमिति इह देहे। हिंसा ताडनादिलक्षणा। दण्डपारुष्ययोः निमित्तयोः (सतोः) वैषम्यं विषमावस्था फलतीत्यर्थः[1] ॥ २५ ॥

ततः किम्? तत्राह—यन्निबन्ध इति। ममाहमित्यभिमानो यन्निबन्धो यस्मिन् देहे निबद्ध-स्तद्वधात् तस्य देहस्य वधात् हिंसादिलक्षणात् प्राणिनां चेतनानां वध इत्युपचार इति यत् तस्मा-न्निन्दादिकं देहस्यैव फलति नात्मनः। तस्य निष्फलमित्याशयः। यथा जीवस्य ममाहमिति देहाभि-मानादनर्थपरम्परा तथा हरेरपि देहस्थत्वाविशेषात् साम्यात्[2] (अनर्थपरम्परा) किम्? नेत्याह—तथेति। अखिलात्मनो अखण्डस्वामिनो यस्य न तथा जीववत् देहाभिमानो नास्ति। कुतः? कैवल्याद् देहा-द्यभावादेव। ननु प्रकृत्यात्मकस्य देहस्याभावो हेतुः क्रियते? सच्चिदानन्दात्मकदेहस्य वा? इत्ये-तयोरिदमेवोत्तरम्। प्रकृत्यात्मकदेहादेरभावात् प्रकृतिप्राकृतवैकृतमिश्ररहितसच्चिदानन्दात्मकदेहसद्भावात्।

---

प्राप्त्या कथं चैद्यस्य सायुज्यमिति वा, एतज्जन्मनि साधनाभावात् कथं तदिति वा, द्विषतोऽपि सायुज्ये वेनस्यापि तत्स्यादिति वा? नाद्य इत्याह—निन्दनेति। हे राजन्, प्रधानपरयोः प्रकृतिपुरुषयोर्देहजीवयोर्वा अविवेकेन अत्यन्तभेदाज्ञानेन निमित्तेन यत् कल्पितं निष्पादितं तदेव कलेवरं देहादिकं निन्दनाद्यर्थं भवति। निन्दनस्तवौ दोषगुणसंकीर्तनरूपवाचिकव्यापारौ। सत्कारन्यक्कारौ संन्मानावमानलक्षणौ कायिकौ। एतैः कार्यं क्रोधदुःखादिकं लक्ष्यते। तथा च स्वर्गार्थं याग इतिवत् निन्दनादिजन्यक्रोधाद्युपद्रवायेदं निन्दनाद्यर्थम्। अर्थेन नित्यसमासो विशेष्यनिघ्नता च।—व्या.

[1] उक्तरूपाविवेकोऽपि कथं दुःखाद्यनुभवजनक इत्यत उपलक्षणया दुःखाद्यनुभवजनकत्वं तस्योपपादयति—हिंसेति। भूतानां प्राणिनां तदभिमानेन तस्मिन् देहे स्फुटतरजीवभेदाग्रहरूपेण दण्डस्ताडनं पारुष्यं निन्दा तयोर्निमित्त-भूतयोः सतोरिह देहे हिंसा ममाहमिति वैषम्यं च भवति। ताभ्यां च जीवो दुःखमनुभवतीति वाक्यशेषः —या.

एवं दण्डपारुष्ययोः शरीरदण्डननिष्ठुरवाचोरपि निमित्तयोः सतोः शरीराभिमानेन हिंसा भवति। चेतनस्य हिंसाभावेनाभिमन्यमानशरीरहिंसयैव हिंसितो देवदत्त इति व्यवहारात्। तदभिमानेनेत्येतत् सर्वत्रापि ग्राह्यम्। कोऽभिमानो नामेत्यतो भूतानां ममाहमिति यद् वैषम्यं तदिति। अस्वकीये ममेति स्वकीयताबुद्धिः, अनहं-भूतेऽहमिति बुद्धिश्चेत्यर्थः।—व्या.

[2] अविशेषादित्यस्य विवरणं साम्याद् इति।

**तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा ।**
**स्नेहात् कामेन वा युञ्ज्यात् कथञ्चिन्नेक्षते पृथक् ॥ २७ ॥**

'सद्देहः सुखगन्धश्च' इत्यादेः । परस्य परमात्मनः । इदमेषा हिंसा केन निमित्तेनास्तीति कल्प्यते । निमित्ताभावात्, नैमित्तिकाभावाच्चेत्यर्थः । अन्यस्मिन् हिंसादिकर्तरि सति हरेः हिंसादिकमस्तीति कल्पयितुं शक्यते । स च नास्तीत्याशयेनोक्तम्—**अकर्तुरिति** । तस्यान्यः कर्ता न विद्यते इत्यकर्ता तस्य । हिशब्देन यद्यप्यायुधादिना प्रहर्ता दृश्यते तथापि तत्फलं छेदादिकं नास्तीत्याह । 'अच्छेद्योऽयमदाह्योऽयम्' इत्यादेः । तत्सर्वं कथमित्यत उक्तम्—**परस्येति** । लोकविलक्षणस्य । तर्ह्ययं शून्यकल्प इत्यस्यापीदमुत्तरम्—**परस्य** । ब्रह्मणः । 'ब्रह्मविदाप्नोति परम्' इति श्रुतेः । 'इदं हिंसा' इति लिङ्गव्यत्ययो हिंसायाः कुत्सितत्वद्योतनाय । (एतच्च) 'व्यत्ययोऽतिशयकुत्सनभेदेषु' इति सूत्राज्ज्ञायते । हरौ हिंसाशङ्का कुत्सितेत्यर्थः । 'नास्य जरयैतज्जीर्यते न वधेनास्य हन्यते । एतत् सत्यं ब्रह्मपुरम्', 'न हन्यते हन्यमाने शरीरे' इत्यादेश्च[1] ॥ २६ ॥

अत्रैवं हरिस्वरूपे स्थिते स्वयोग्यानन्दाविर्भावलक्षणमोक्षसाधनक्षमा अक्षीणा भक्तिरेव । द्वेषादिकमर्थवादलक्षणं[2] तत्तत्स्वभावज्ञापनार्थमुच्यत इत्याशयेनाह—**तस्मादिति**[3] । यस्मात् जडशरीरेन्द्रियाद्यभावेन हरेरहंममाभिमाननिमित्तोपद्रवो दूरनिवारितः, तस्मात् वैरानुबन्धनादिना यो हरौ मनो युञ्ज्यात् प्रयुङ्क्ते स कथञ्चित् पृथक् नेक्षते । मनसः तत्राभिनिवेशेन हरेरन्यं न चिन्तयति, तमेवानुस्मरतीत्यन्वयः । अनेन वैरादीनामेकतमेनापि हरौ मनो युञ्जानो वैरादिमानेव भवतीति तत्तद्वस्तु-

---

[1] किञ्च जीवे कस्माद् दुःखानुभव इत्यतस्तत्राप्युक्तरूपाभिमान एव संबन्धरूप इत्याह—यन्निबन्ध इति । यस्मिन् देहे निबन्धोऽयमुक्तरूपोभिमानः, तस्य देहस्य वधात् प्राणिनां वधो दुःखाद्यनुभवो भवतीत्यर्थः । हरेस्तु नैवमित्याह—यथेति । यस्यास्य परस्य हरेः तथा इतरप्राणिवदभिमानः स्फुटतरविवेकाभावरूपः न (अस्ति) । कुतः ? कैवल्यात् प्राकृतदेहाद्यभावादेव । तदपि कुत इत्यत उक्तम्—अखिलात्मनः इति । प्रकृत्यादिसर्वस्वामिन इत्यर्थः । न हि शृङ्खलाद्यधिपतिः प्रेक्षावान् शृङ्खलया स्वात्मानमपि बध्नातीत्याशयः ।—या.

तथा च भगवतोऽभिमानाभावेन भिन्नदेहाभावेन स्वातन्त्र्येण च निन्दनादिना कोऽप्युपद्रवो नास्तीति आद्यः पक्षो न युक्तः । यद्यपि वेनादिकृतनिन्दनादिनाप्युपद्रवो नास्ति । अन्यथा परमात्मा केनापि निन्दनादिकं न कारयेत् । तथाऽपि वेनादिकृतनिन्दनादिना स्वाभाविककोप एवाभिव्यज्यते, तेन तस्य तमःप्राप्तिः । भक्ते तु चैद्यादौ स्वाभाविककोपो नास्ति । औपाधिकस्तु नोत्पद्यते । किन्तु स्वाभाविकी प्रीतिः । ततश्चान्यावेशकृतं निन्दनादिकं सोढ्वा कृपालुर्मुक्तिमेवाददादिति भावः ।—व्या.

[2] द्वेषाच्चैद्यादय इत्याद्यर्थवादलक्षणेन वाक्येन इति यावत् ।

[3] एवमाद्यस्योत्तरमुक्त्वा भगवति दुःखाभावेऽपि भगवन्निन्दनं निषिद्धाचरणरूपमिति द्वितीयस्योत्तरं वक्तुमाह—

स्वभावात् तथोच्यत इति ज्ञातव्यम् । तदुदितमाचार्यैः[1]—'कथञ्चिन्नेक्षते पृथक् । तत्रैव मनसोऽभिनिवेशेन तदन्यन्नेक्षते । वैरादीनामेकतमेनापि यो मनो युञ्ज्यात् स तदन्यन्नेक्षते इति स्वभावकथनम्' इति । नन्वत्र संयुञ्ज्यात्[2] इत्यस्य प्रथमप्राप्तं विध्यर्थं परित्यज्यान्यार्थकल्पनायामश्रुतकल्पना स्यादिति चेन्न—'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन', 'यमेवैष वृणुते तेन लभ्यः', 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्यादिना भक्तेरेव भगवत्प्रीतिजनकत्वोक्तेः । 'अनानुभूतीरवधून्वानः' इत्याद्यनर्थश्रुतेश्च । अतो न विध्यर्थोऽङ्गीकारयोग्यः । तदप्युक्तम्—न विधिः इति । [3]न केवलं द्वेष्टुः स्वस्यैवानर्थः । अपि तु तत्पितॄणामपि । तदुक्तम्—'कर्मणा मनसा वाचा यो द्विष्याद् विष्णुमव्ययम् । मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः' इति । नन्वेकदाकृतद्वेषप्राप्तनरकोपभोगेन क्षीणदोषस्य पुनः शुद्धान्तःकरणतया भक्तिकरणयोग्ययोनिप्राप्तिः स्यादिति तत्राह—'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' इति । कीदृशो द्वेष इति तत्राह—'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम्' इति । 'स्वर्गकामो यजेत' इत्यादेः सत्कर्मणा तेषां सद्गतिः स्यात् किम्? नेत्याह—'मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति । ननु तर्हि हिरण्यकशिप्वादेः दुरन्ताघादुत्थितिः कथमभूदिति तत्राह—'यदनिन्दत् पिता मे त्वामविद्वान् तेज ऐश्वरम् । तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात्'[4], 'हिरण्यकशिपुश्चापि भगवन्निन्दया तमः । विविक्षुरत्यगात् सूनोः प्रह्लाद-

---

तस्मादिति । .... तथा चान्ततो हरिप्रेरणया जायमानेन माहात्म्यज्ञानपूर्वकस्नेहेन तेषां निन्दाजनितपापपरिहारसंभवान्नानर्थप्रसक्तिरिति द्वितीयपक्षस्योत्तरमनेन लब्धमित्याशयः—या-

न द्वितीयः (एतज्जन्मनि साधनाभावात् कथं तदिति) इत्याह—तस्मादिति । .... तथाचान्याविषयकभगवद्विषयकमनोयोगलक्षणसाधनसद्भावादिह जन्मनि साधनाभाव इत्येतदसिद्धम् ।—व्या.

यु द्विषतां सायुज्ये वेनस्यापि तत् स्यादिति तृतीयपक्षोऽपि न । द्वेषं निमित्तीकृत्य चैद्यस्य सायुज्यादानात् ।

[1] एतदारभ्य श्लोकत्रयस्य तात्पर्यवचनानामानुपूर्वी हृषीकेशतीर्थपाठे तदितरपाठेषु च भिद्यते । हृषीकेशतीर्थपाठानुरोधेन योजनैकविधा । अन्यपाठानुरोधेन योजनाऽन्यादृशी । विस्तरस्तु बन्नञ्जे गोविन्दाचार्यसम्पादितभागवततात्पर्यनिर्णयाधस्तनटिप्पणेषु द्रष्टव्यः । गी

[2] मूले युञ्ज्यात् इत्येव वर्तते । [3] इत आरभ्य तात्पर्यवचनान्येवावतार्य व्याख्यायन्ते टीकाकृद्भिः ।

[4] एवमवतार्यैतत्पद्योदाहरणं नातीव स्वरसम् । भाष्ये तु द्वेषस्यानर्थहेतुत्वेनाविधेयत्वमिति समर्थनायैतदपि पद्यमुदाहृतम् ।

यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २८ ॥
कीटः पेशस्कृता रुद्धः कुड्ये यान्तमनुस्मरन् ।
संरम्भभययोगेन विन्दते तत्सरूपताम् ॥ २९ ॥

---

स्यानुभावतः' इति । नन्वेवं तर्हि भक्तद्वेषिणोः शापवराभ्यां विपर्ययः स्यात् किम् ? नेत्याह—'वरतोऽपि न मुच्यन्ते द्वेषिणः शापतोऽपि वा । भक्ता नैव निपात्यन्ते धर्माधर्मैस्तथेतरैः' इति । योग्यतायाः बलवत्त्वात् इति शेषः । नन्वेवं चेत् पुनश्चानर्थ आपन्न इति तत्राह—'अन्यावेशकृतं यत्तु तद्वराद्यैरपोह्यते । तद्विरुद्धस्वभावानामन्यथा न कथञ्चन' इत्यादि । हिरण्यकशिप्वाद्याविष्टासुरकृतपापं प्रह्लादादिभिः परिहृतम्[1] । न तु स्वतोऽसुरस्येत्यर्थः ॥ २७ ॥

कुतः स्वतोऽसुरस्य पापं न परिह्रियत इत्याशङ्क्य द्वेषाभिनिविष्टमनस्कत्वेन तद्योग्यत्वेन भगवत्प्रेरितत्वेनाभीष्टनिवृत्तित्वेन तदात्मकत्वादित्याशयेनाह[2] — **यथेति** । मर्त्यः तमोयोग्यो वैरानुबन्धेन निरन्तरवैरस्मरणेन तन्मयतां तत्तद्द्वेषविषयवस्तुनि यथा मनसोऽभिनिवेशम् इयात् प्राप्नोति तथा भक्तिलक्षणोपायेन भक्तिविषये वस्तुनि मनोऽभिनिवेशं न करोति । तत्र किं प्रमाणमिति तत्राह—**इतीति** । निश्चिता मतिः इत्यनेन साक्षिलक्षणा मतिर्गृह्यते । 'भक्तियोगेन इति' इत्यत्र सन्धिकार्याभावो द्वेषाभिनिवेशिनां बाहुल्यं भक्त्यभिनिवेशिनां कनीयस्त्वं च दर्शयितुम् । कुत एतदवगतमिति चेन्न । [3]'यथा वैराभिनिवेशिनः' इत्याचार्योक्तेः । वैरिणां बाहुल्यमन्येषामल्पसंख्याकत्वं कथमिति चेन्न । हरिणा भक्तानां बाहुल्याकरणात् । एतदप्युक्तम्—'[4]कथमन्यथा' इत्यादि । 'ततः कनीयांस एव देवा ज्यायांस असुराः' इति च[5] । भक्त्यभिनिवेशिष्वपि कश्चिद् विशेषोऽस्तीति ज्ञापनाय वा सन्ध्यभावः । 'ऋते ब्रह्माणमव्ययम्' इत्युक्तेः । असुराणां नित्यद्वेषाग्रहित्वप्रकटनाय—**अनुबन्धेनेति** । 'मागधाद्या यथा नित्यं द्वेषादाग्रहिणो हरौ । न तथाऽऽग्रहिणो भक्ता ऋते ब्रह्माणमव्ययम्' इत्युक्तेः ॥ २८ ॥

न त तनु 'तन्मयताम्' इत्यस्य तादात्म्यार्थः किं न स्यादिति तत्राह—**कीट इति** । द्वेषेण निन्दतश्चैद्यस्य कृष्णेन सायुज्यं कथमभूदिति प्रश्नस्य परिहारः कथमागत इत्यतो वा आह—**कीट इति** ।

---

क [1] स्वाविष्टासुरकृतपापसहकारेण यत् पापं हिरण्यकशिप्वादिशरीरस्थितजयादीनामासीत् तदेव प्रह्लादादिभिः परिहृतमित्यर्थः । [2] असपष्टेयमवतारिका । [3] एतद्वाक्यमुत्तरवाक्यं च क्वचित् कोशे नास्ति ।

त् [4] तन् कथम् ? अन्यथा भक्तानेव बहून् हरिः कुर्याद् इति तात्पर्यवचनम् ।

[5] ततः कानीयसा एव देवा ज्यायसा असुराः—छ

एवं कृष्णे भगवति मायामनुज ईश्वरे ।
वैरेण धूतपाप्मानः तमापुरनुचिन्तया ॥ ३० ॥

---

यथा पेशस्कृता भृङ्गेण कुड्ये भित्तिसुषिरे रुद्धः कीटः स्यामनामा कृमिः तस्य भृङ्गस्य सरूपतां समानाकारतां विन्दते, न तु तादात्म्यं, ततो भिन्नत्वेन दृश्यमानत्वात् । कीदृशः ? यान्तम् उपर्यागत्य गंभीरं नदन्तं भृङ्गं संरम्भभययोगेन ईषत्कोपभययुक्तस्नेहेन, अन्नं सन्ददातीति स्नेहेन, स्वात्मानमाकृष्य क्लिश्नातीति कोपयुक्तभयेन चानुस्मरन् । अत्र स्नेहस्यैव प्राधान्यम् । प्राणधारणपोषणयोः सन्ततमिष्टत्वात् । कोपभययोः तात्कालिकत्वादप्राधान्यमित्यतो योगस्य संरंभभययोर्विशेषणतयोक्तिः । योगस्य स्नेहार्थत्वं 'प्रीतिस्स्नेहस्तथा योगः प्रेम[1] बन्ध इतीर्यते' इति शब्दनिर्णये सिद्धम्[2] ॥ २९ ॥

कृष्णे भगवत्येवं वैरेण युक्तयाऽनुचिन्तया भक्तिपूर्वं स्मृत्या धूतपाप्मानश्चैद्यादयः तं कृष्णमापुरित्यन्वयः । अत्र सज्जीवानां शापादिनाऽसुराविष्टानामेव मुक्तिः । न केवलानाम् (असुराणाम्) ।

---

[1] प्रेमा—हृ, प्रेमबन्धः—या

[2] तस्माद् वैरानुबन्धेनेत्यादिश्लोकत्रयस्य हृषीकेशतीर्थीयतात्पर्यपाठक्रमानुरोधेन योजनाद्वयं वर्तते । तदेतद् विशदीकृतं गोविन्दाचार्यैः । तथाहि —

निर्वैरेण बन्धुबुध्या । भक्त्येव वैरादिनापि यो भगवति मनो युञ्ज्यात् सोऽपि भक्त इव तत्रैवाभिनिविष्टमना पृथक् भगवतोऽन्यत् किमपि नेक्षते ।

नन्वास्तां वैरानुबन्धेनापि भगवति मनोयोगः शक्यं कर्तुमिति । वैरानुबन्ध एव चाधिकोऽभिनिवेश इति च । न तावता तस्य भगवत्प्राप्तिहेतुत्वम् । तथा च चैद्यो द्विषन्नपि कथं कृष्णं विवेशेत्यस्य किमुत्तरम् । इदमुत्तरमित्याह—कीटः । पेशस्कृता भृङ्गविशेषेण कुड्ये रुद्धः कीटः, अनेनाहं रुद्ध इति संरम्भेण क्रोधेन, प्रतिकर्तुमशक्त्या भयेन, आहारदानेन मां पुष्णातीति योगेन स्नेहेन च, तमेव पेशस्कृतं कुड्यकुहरं प्रति यान्तमनुस्मरन्, कदाऽयमायातीति तदागमनमेव ध्यायन् तेन स्नेहयोगेन तत्समानरूपतां लभते । तद्यथा क्रोधभयसाङ्कर्येऽपि स्नेहप्राचुर्यादेव कीटः पेशस्कृत्सरूपतामाप तथाऽऽवेशनिमित्तद्वेषादिसहभावेऽपि सहजभक्तिबलाच्चैद्योऽपि भगवत्सारूप्यमापेति । तदेतदुत्तरपद्ये स्फुटम् ।

तस्माद्वैरानुबन्धेनेत्यादि श्लोकत्रयं स्फुटत्वायार्थविशेषलाभाय च भङ्ग्यन्तरेण व्याख्याति—यस्मादेवम् । यतः शत्रुभिर्हिंसाद्युपद्रवः नास्माकमिव भगवतः कैवल्यात् पूर्णत्वाच्चेति पूर्वश्लोक उदितं तस्मादेव हेतोर्वैरानुबन्धेन निर्वैरेण भयादिना वा भगवति मनो युञ्ज्यात् । नात्रापि विधौ लिङ्, किन्तु शक्यत्वार्थे । मनो योक्तुं प्रभवेत् । अयमर्थः—मनोयोगेऽपि न जीवः स्वतन्त्रः । भगवान् यादृशं मनोयोगं ददाति तथाऽयं प्रवर्तते । ददाति चासुराणां वैरानुबन्धम् । तेन चासुरास्तथा मनो युञ्जन्ति । यदीदं स्वस्य हिंसाकरं स्यात् तदा न प्रेरयेदेव द्वेषादिकम् । को हि प्रेक्षावानात्मनोऽहितं चिकीर्षति ? ननु माभूद् भगवतः कोऽप्युपद्रवः । किन्तु द्विषन् स्वयमेवोपद्रुतो भवति नरकाद्यनर्थं भजन् । तत् किं कृपालुर्भगवान् मा मामयं द्विषन्नुपद्रावि किन्तु भक्तिमेव करोत्विति नेच्छति ? द्विषतामुपद्रवे कस्तस्यानन्दः ? अत आह—तदेव चिन्तयति च । न हि

तस्मात् तदाविष्टासुराः वैरेण प्राप्तपाप्मानः ‘असुर्या नाम ते लोकाः’ इति श्रुतेः, तं लोकसमुदायं प्रापुः। सन्तो जयादयोऽनुचिन्तया तं कृष्णमापुरित्ययं विशेषो ‘वैरयुक्तयाप्यनुचिन्तया’ इत्याचार्योक्तापिशब्देन गर्हाभिधायिना ज्ञातव्यः। ‘अनुचिन्तेति तां प्राहुर्भक्तिपूर्वा तु या स्मृतिः’ इति वचनाद् भक्तिपूर्वैवानुचिन्ताऽत्राभिप्रेतेति ज्ञातव्यम्। अतोऽत्र चैद्यादीनां भक्तियुतत्वं प्रतिपाद्यत इत्युप-

भगवतः पक्षपातः। यस्य या योग्यता तदेव चिन्तयति। एतेन कथञ्चिन्नेक्षते पृथगिति मूलं व्याख्यातम्—यो वैरानुबन्धेन मनो युनक्ति तद्विषये भगवानपि पृथक् अन्यथा, अयं वैरमपहाय भक्तो भवत्विति नेक्षते, यदि भगवद्द्वेष एव तस्य स्वरूपयोग्यता। अतः पृथक् तत्तत्स्वरूपयोग्यताव्यतिरेकेण भगवान् कदाचिदपि नेक्षते न चिन्तयतीति।

यथा वैरानुबन्धेनेति द्वितीयं पद्यं भक्तेः सकाशादपि वैरेण मनोभिनिवेशो गाढतर इत्यर्थकतया व्याख्यातम्। इदानीमर्थान्तरमाह ‘तत्रैव हेतुः—यथा वैरानुबन्धेनेति। यथा वैराभिनिवेशिनस्तथा भक्त्यभिनिवेशिनो न सन्ति। तत् कथम्? अन्यथा भक्तानेव बहून् हरिः कुर्यादिति भावः।’ तत्तद्योग्यतानुसारेण तदेव चिन्तयतीत्यत्रैव हेतुरुत्तरश्लोक उच्यते। तथाहि योजना। वैरानुबन्धेन तन्मयः, वैराभिनिवेशीति यावत्, यथा संख्याबाहुल्येन भवति न तथा भक्तियोगी प्रचुरोऽस्ति। ‘ज्यायसा असुराः’ इति श्रुतेः। तत् कथं संभवेद् यदि भगवान् तथा न चिन्तयेत्। अन्यथा, तद्योग्यतामतिक्रम्य कृपया सर्वानुद्दिधीर्षति चेद् भक्तानेव हरिः सर्वान् कुर्यात्। अथ च तत्कथमन्यथेत्यादि समस्तमेकं वाक्यम्। अन्यथा अभक्तानिति छेदः। अन्यथा तेषां तेषां तत्तदेव न चिन्तयति चेत् किमिति बहूनभक्तान् हरिः कुर्यात्। प्रत्युत सर्वानपि भक्तानेवाकरिष्यत्।

तर्हि द्वेषिणां तम इति स्वनियममपहाय किमिति चैद्यादीनां सारूप्यं ददौ? तामेतां शङ्कामपाकर्तुं कीटः पेशस्कृतेत्यादि तृतीयं पद्यमवतारयति कीटः पेशस्कृतेत्यादीति। ‘कीटः पेशस्कृतेत्यादि चैद्यादीनां भक्तियुतत्वप्रतिपादनम्।’ तथा च द्वेषेण चैद्यगतासुरचेतनस्य तम एव। भक्त्या सच्चेतनस्य सारूप्यमिति न नियमभङ्ग इति हृदयम्। इत्यादीत्यविभक्तिको निर्देशः। इत्यादिना श्लोकेन भक्तियुतत्वप्रतिपादनं कृतमिति। इत्यादि पद्यं भक्तियुतत्वस्य प्रतिपादनं प्रतिपादकमिति वा—इति।

‘स्नेहाद्यायतननाशाद्युपद्रवोऽस्य नास्तीति निर्वैरेणेत्याद्युक्तम्’ इति ततः परं तात्पर्यवाक्यम्। अस्याप्यभिप्राय आविष्कृतो गोविन्दाचार्यैः। तद्यथा—नन्वस्ति लोके द्वेषादिसाध्युपद्रवप्रसक्तिः। अतस्तन्निषेधो भगवति युज्यते—तस्माद् वैरानुबन्धेन युञ्ज्यादिति। निर्वैरभयादेस्तु तत्र का प्रसक्तिः? नहि निर्वैरेण भयेन स्नेहेन कामेन वा लोकेऽप्युपद्रवप्रसङ्गः, येन तद् भगवति निवार्येत। आह—स्नेहादिति। लोकव्यवहारस्य हि सामान्यतस्त्रयी गतिः—द्वेष्टि, बिभेति, स्निह्यति चेति। स्नेहोऽपि त्रिमुखः—बन्धुतामूलो, मैत्रीमूलः

तायाकाममूलश्च स्त्रीपुंसयोरिति। तदेवं पञ्चतय्यामपि गतावन्ततो दुःखमयाद्युपद्रवो दुर्निवारः। अभिमानमूलत्वादेव। तत्र द्वेषे तावत् स्फुटमुक्तम्। निर्वैरे यथा—निर्वैरमिति वैरप्रतिकूलं बन्धुत्वम्। ‘संबन्धाद् वृष्णयः’ इति वक्ष्यमाणत्वात्। यो हि बन्धुबुध्या स्निह्यति तस्य नाशाद्यापदि स्नेहविषयोऽपि दुःखादिनोपद्रूयते। एवं स्निह्यति नष्टे स्नेहपात्रे दूयते। कमितरि नष्टे कामिनी दूयते। एवमेव भयेऽपि। भयं हि

कामात् स्नेहाद् भयाद् द्वेषाद् यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ ३१ ॥
गोप्यः कामाद् भयात् कंसो द्वेषाच्चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥ ३२ ॥

---

गन्तव्यम् । अन्यथा कीटोदाहरणं निरन्वितं स्यात् । तदुदाहरणस्यापि भक्त्यर्थत्वं कुत इति चेन्न, ‘स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपि च । विद्यमानेऽप्यल्पकोपे सञ्जातिस्नेहतस्तथा । पेशस्कृद्रूपतां कीटो यथा याति तथैव तु । चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि । निजस्वभावया भक्त्या नीता हरिसरूपताम् । तथाऽपि करुणो विष्णुरन्यावेशाद् यदि द्विषन् । हीयते किं ममानेन नित्यानन्दस्वरूपिणः । देहबन्धयुतानां हि द्वेषिणाऽपकृतं भवेत् । मम को ह्यपराध्येत निर्दोषसुखरूपिणः । अतो मय्यपराधस्तु स्वस्मिन्नेव न मे भवेत् । अतो यद्यसुरावेशात् कृतमेतेन दुष्कृतम् । अनादिभक्तो यस्मान्मे मोचयिष्ये ततस्त्वहम् । इति मत्वा मोचयति चैद्यादीनपि केशवः’ इति वचनात् । किञ्च निर्वैरेणेत्याद्युक्तमत्रानुसन्धेयम् । तेन स्नेहाद्यायतनस्य देहस्य नाशादिना कीटस्योपद्रवाभावात् हरेरप्युपद्रवाभावोऽनुमीयते । ‘तथापि करुणो विष्णुरन्यावेशाद् यदि द्विषन् । हीयते किं ममानेन नित्यानन्दस्वरूपिणः’ इत्यादिना च ॥ ३० ॥

इतोऽपि भक्तिगर्भकामादिनैव भगवत्प्राप्तिरित्याह—**कामादिति** । कामात् इति तृतीयार्थे पञ्चमी । कामादिभिरपि यथा यथावद् भक्त्या सहैव कृष्णे मन आवेश्य द्वेषादिना यदघमापादितं तदघं हित्वा तस्य कृष्णस्य गतिं लोकं गता इत्यन्वयः । प्रथमतः कामादियुक्तया भक्त्या हरौ मन आवेश्य पश्चाद् यथाभूतया भक्त्याऽघं हित्वेत्यर्थः[1] ॥ ३१ ॥

बहव इत्युक्तस्य विषयविभागमाह—**गोप्य इति** । कामात् कामयुक्तया भक्त्या । कंसः

---

नैकान्ततो भवति । किन्तु द्विनिष्ठम् । यो हि यस्माद् बिभेति सोऽपि तस्माद् बिभेति । इभ्यस्तस्कराद् बिभेति । तस्करोऽपीभ्याद् बिभेति । बलवतो हि दुर्बलो बिभीयात् । बलवानपि दुर्बलात् बिभीयादेव—‘यदयं मत्तो बिभाय, संभीयैव च किमप्यनिष्टं कुर्यादतो मया जागरूकेण भाव्यम्’ इति । तदेतत्सर्वं सर्वात्मना भगवति न संभवतीति यथाकथा च मनोयोगे न तस्य काऽपि क्षतिः । तदेतदुक्तम्—स्नेहाद्यायतननाशाद्युपद्रवोऽस्य नास्तीति—इति ।

[1] ननु कामस्नेहाभ्यां किमघम् ? ममैवायं पतिरिति जगत्पतिं कामेन मन्यन्ते । ममायं बन्धुः सुहृदिति च सुहृदं सर्वभूतानां मन्यन्ते स्नेहेन बन्धुतया च । तेन माहात्म्यज्ञाने किंचित् ह्रास इव जायते । यथा गोपी पुत्रबुध्या कृष्णमुलूखले बबन्ध । शकटादिपाते रक्षां चकार । यथा युधिष्ठिरः स्नेहात् कृष्णबोधितोऽपि जरासन्धवधे समशेत । तदघम् । तथा हि गीतायामर्जुनवचनम्— ‘सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वाऽपि’ इत्यादि—गो.

कतमोऽपि न वेनस्य पञ्चानां पुरुषं प्रति ।
तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३३ ॥
मातृष्वसेयो वश्चैद्यो दन्तवक्रश्च पार्थिव ।
पार्षदप्रवरौ विष्णोर्विप्रशापात् पदच्युतौ ॥ ३४ ॥

---

कंसाविष्टो भृगुः भययुक्तया भक्त्या । चैद्यादयः चैद्यादिस्था जयादयः द्वेषयुक्तया । वृष्णयः संबन्धो बन्धुता तन्निमित्तया (प्रीत्या भक्तियुक्तया) । यूयं पाण्डवाः समतुलितबहुमानयुक्तया । वयं [1]शुकादिशब्दवाच्याः केवलया भक्त्या । अत्र कश्चन विशेषः— 'गोप्यः कामयुता भक्ता कंसाविष्टः स्वयं भृगुः । ज्ञेयो भययुतो भक्तः चैद्यादिस्था जयादयः । विद्वेषसंयुता भक्ताः वृष्णयो बन्धुसंयुताः । बहुमानस्नेहसाम्याद् देवा भक्ता प्रकीर्तिताः । स्नेहोपसर्जनादेव बहुमानान्मुनीश्वराः । बहुमानोऽपि देवानां ऋषिभ्योऽप्यधिको मतः । ब्रह्मबीन्द्रेन्द्रकामादेरितरेषां यथाक्रमम्[2]' इति वचनादवगन्तव्यः[3] ॥ ३२ ॥

भक्त्यैव पुरुषार्थो न केवलद्वेषेणेत्याशयवानाह—कतम इति[4] । कामाद्युपसर्जनभक्तियोगानां पञ्चानां मध्ये कतमोऽपि भक्तियोगो वेनस्य नास्ति । असौ कश्चन द्वेषात्मक एव । यस्माद् भक्तियोगमन्तरेण पुरुषार्थो नास्ति तस्मात् केनापि प्रकारेणापादितोपायेन भक्तिलक्षणेन कृष्णे मनो निवेशयेत् । न द्वेषादिना । 'उपायो भक्तिरुद्दिष्टो द्वेषाद्या अनुपायकाः' इत्यभिधानात् । अत उपायो भक्तिरेव । अतो भक्तिमन्तरेणोपायो नास्तीत्यर्थः ॥ ३३ ॥

पेशस्कृता रुद्ध इत्यत्र चैद्यादयः स्वतो भक्ता असुरावेशाद् द्वेषिण इत्युक्तम् । तत्र हेतुमाह—**मातृष्वसेय इति** । पार्षदप्रवरत्वं स्वतो भक्तत्वे, विप्रशापादसुराविष्टत्वं द्वेषित्वे हेतुः ॥ ३४ ॥

---

[1] वयं नारदाद्या ऋषयः—या. । प्रस्तुतवाक्यन्तु लिपिकृत्प्रमादायत्तम् । [2] यथापदम्—द्व

[3] गोप्यः कामात् कामानन्तरमाविर्भूतस्वाभाविकभक्त्या, कंसः कंसाविष्टो भृगुः भयाद् भयानन्तरमाविर्भूतस्वाभाविकभक्त्या, चैद्यादयः तद्देहस्थजयादयो द्वेषाद् द्वेषानन्तरमाविर्भूतया स्वाभाविकभक्त्या, यूयं पाण्डवाः स्नेहात् माहात्म्यज्ञानेन समप्रधानात्, वयं नारदाद्या ऋषयो भक्त्या स्नेहोपसर्जनान्माहात्म्यज्ञानात् तद्गतिं गता इत्यन्वयः—या.

[4] द्वेषयुतस्यापि चैद्यस्य भगवत्प्राप्तौ वेनस्यापि स्यादिति तृतीयपक्षं निराह–कतमोऽपीति । केवलभक्तिस्तु नास्ति । कामाद्युपसर्जनानामपि पञ्चानां भक्तिलक्षणोपायानां (मध्ये) कतमोऽपि पुरुषं प्रति पुरुषविषयकभक्तिलक्षणोपायो वेनस्य नास्ति । अतो न तस्य चैद्यवद् भगवत्प्राप्तिरिति शेषः । तस्माद् भक्तिसत्वे भगवत्प्राप्तेरवश्यकत्वात् केनाप्युपायेन कामाद्युपसर्जनभक्तिलक्षणोपायेन मनः कृष्णे निवेशयेदिति योजना—व्या.

युधिष्ठिर उवाच —

कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ।
अश्रद्धेय इवाभाति हरेरेकान्तिनां भवः ॥ ३५ ॥

देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ।
देहसंबन्धसंबन्धमेतदाख्यातुमर्हसि ॥ ३६ ॥

नारद उवाच —

एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ।
सनन्दनादयो जग्मुश्चरन्तो भुवनत्रयम् ॥ ॥ ३७ ॥

---

हरिदासान् हरिभक्तान् अभिमृशति स्पृशतीति हरिदासाभिमर्शनः । हरेरेकान्तिनां नियतभक्तानां भवः उत्पत्तिः शरीरयोगलक्षणः स्वपदभ्रंशलक्षणः शापः । अश्रद्धेय इवाभाति सयुक्तिकं निरूपयितुं न क्षममिति प्रतीयते ॥ ३५ ॥

तत्र कारणमाह– देहेति[1] । देहाद्यभावश्च कुत्रत्यानामिति तत्राह—वैकुण्ठेति । तेषां प्राकृतदेहाद्यभावेन जन्मादिकं कथं घटत इति शङ्क्यत इत्यर्थः । देहसंबन्धः देहयोगः तस्य संबन्धः निमित्तभूतः शापः । एतत् शापादिनिमित्तम् । अनेन देहयोगं तन्निमित्तं शापं तन्निमित्तं च व्याख्यातुमर्हसीत्यर्थसमुदायो लक्ष्यत इत्यर्थः ॥ ३६ ॥

तदर्थजातं कुतोऽवगम्यते ? इति परिहारवचनादित्यत आदितो वक्ति—एकदेति । पञ्चषड्ढायनार्भाभाः पञ्चवर्षाः षड्वर्षा अर्भाः अर्भकाः, तद्वदाभा दीप्तिर्येषां ते तथा, तत्समाना इत्यर्थः । शिशून् मत्वा मूर्खान् प्रवेशकरणाय वेषान्तरमापन्नान् इत्याशङ्क्येत्यर्थः । द्वाःस्थौ द्वारिस्थौ जयविजयौ पुर तान् सनन्दनादीन् प्रत्यषेधतां वेत्रविधानेन न्यवारयतामित्यन्वयः । द्वाःस्थावित्यनेन जयविजययोरधिकारस्थत्वं सूचयति । तेन वैकुण्ठे अधिकारस्थिता मुक्ताश्चेति द्विविधा जनाः सन्ति । तत्राधिकारस्था देहादियोगित्वाद् वरशापयोग्याः, पश्चान्न योग्या इति ज्ञायते । तदुक्तम्–'अधिकारस्थिताश्चैव विमुक्ताश्च द्विधा जनाः । विष्णुलोकस्थितास्तेषां वरशापादियोगिनः । अधिकारस्थिता मुक्तिं नियतं प्राप्नुवन्ति च । विमुक्त्यनन्तरं तेषां वरशापादयो न तु । देहेन्द्रियासुयुक्ताश्च पूर्वं पश्चान्न तैर्युताः । अप्यभीमानिभिस्तेषां देवैः स्वात्मोत्तमैर्युताः' इति । अनेन वैकुण्ठे मुक्तामुक्तस्थानद्वयमस्तीति ज्ञायते ॥३७-३८॥

---

[1] एतत् त्रयं हेतुः । एकान्तिनां परोपद्रवाभावात् । देहादिहीनानां पुनरुत्पत्त्ययोगात् । वैकुण्ठात् पुनरावृत्तेरयोगाच्च—व्या. [2] ...... — २२ तमे पत्रे द्रष्टव्यम् ।

पञ्चषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ।
दिग्वाससः शिशून् मत्वा द्वाःस्थौ तान् प्रत्यषेधताम् ॥ ३८ ॥

अशपन् कुपिता एवं युवां वासं न चार्हथः[1] ।
रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ।
पापिष्ठामासुरीं योनिं बालिशौ यातमाश्वतः ॥ ३९ ॥

एवं शप्तौ स्वभवनात्[2] पतन्तौ तैः कृपालुभिः ।
प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥ ४० ॥

जज्ञाते तौ दितेः पुत्रौ दैत्यदानववन्दितौ ।
हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥ ४१ ॥

हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ।
हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः ॥ ४२ ॥

हिरण्यकशिपुः पुत्रं प्रह्लादं भगवत्प्रियम् ।
जिघांसुरकरोन्नाना यातना मृत्युहेतवे ॥ ४३ ॥

तं सर्वभूतात्मभूतं प्रशान्तं समदर्शनम् ।
भगवत्तेजसा स्पृष्टं नाशक्नोद्धन्तुमुद्यमैः ॥ ४४ ॥

ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवःसुतौ ।
रावणः कुम्भकर्णश्च सर्वलोकप्रतापिनौ ॥ ४५ ॥

---

नाना यातनाः बहुविधतीव्रवेदनाकारणानि ॥ ४३ ॥

सर्वभूतात्मनि चराचरान्तर्यामिणि हरावेव, भूतं स्थितम्[3] ॥ ४४ ॥

ननु 'आसुरीं योनिं यातम्' इत्ययं शाप आसुरयोनिप्राप्तिहेतुः । तत्र जयविजययोर्दित्यां जन्म तदनुगुणम् । केशिन्यादिजन्म कथं युज्यते, 'राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति भिन्नयोनित्वादितीयं मन्दाशङ्का, 'हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम् । अतो भयानको जातस्तत्र

---

[1] वासमपि नार्हथः कुतस्तत्सेवामिति चशब्दार्थः—या. [2] स्वभुवनात्—ग.

[3] भूतं मनसा स्थितम्—या.

तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ।
रामवीर्यं श्रोष्यसि त्वं मार्कण्डेयमुखात् प्रभो ॥ ४६ ॥

तावद्य क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ।
अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४७ ॥

वैरानुबन्धतीव्रेण ध्यानेनाच्युतसाम्यताम् ।
नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४८ ॥

युधिष्ठिर उवाच —

विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ।
ब्रूहि मे भगवन् येन प्रह्लादेऽप्यच्युतात्मनि ॥ ४९ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे प्रथमोऽध्यायः ।

---

राजानमेव च । मत्वा राजैव संजातः कृष्णं चक्रादिलक्षणैः । मृतिकाले हरिं चैव मत्वा भक्त्यैव केवलम् । द्वाःस्थत्वं हरिमाविश्य प्रापैव मनुजोऽपि तु ' इत्यनेन परिहर्तव्या । ' यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय ' इत्यादेः । सुरविरुद्धत्वमुभयोः सममित्यतो हरिद्वेषश्च सम इति भावः ॥ ४५ ॥

वैरानुबन्धेन वैरयुक्तभक्त्या तीव्रेण अत्युत्कटेन । अच्युतसाम्यतां श्रीकृष्णस्वरूपप्रवेशलक्षणाम् । हरेर्वैकुण्ठगमनानन्तरं पार्षदौ जयविजयाख्यमूलरूपेणैकीभूय हरेः पार्श्वं जग्मतुरित्यन्वयः । ' अनुबन्धस्तु भक्तिः स्याद् बन्धः स्नेह उदाहृतः ' इत्यभिधानात् अनुबन्धशब्दस्य नैरन्तर्यार्थताऽनुपपन्नेति[1] ॥ ४८ ॥

दयितत्वं महात्मत्वं च प्रश्नस्य कारणम् । येन केन निमित्तेन । अच्युते आत्मा मनो यस्य स तथा तस्मिन् ॥ ४९ ।

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य प्रथमोऽध्यायः

---

[1] नैरन्तर्यार्थोऽनुपपन्नः—ग, ङ

( [2] इतीत्यधिकमिति भाति । मूर्खाः वेषान्तरमापन्ना इत्याशङ्कयेति वा योज्यम् । )

॥ अथ द्वितीयोऽध्यायः ॥

नारद उवाच —

भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ।
हिरण्यकशिपू राजन् पर्यतप्यद् रुषा शुचा ॥ १ ॥

आह चेदं रुषा पूर्णः सन्दष्टदशनच्छदः ।
कोपोज्ज्वलाभ्यां चक्षुर्भ्यां निरीक्षन् धूम्रमम्बरम् ॥ २ ॥

करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ।
शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३ ॥

हिरण्यकशिपुरुवाच —

भो भो दानव दैतेय द्विमूर्धंस्त्र्यक्ष शम्बर ।
शतबाहो हयग्रीव नमुचे पाक इल्वल ॥ ४ ॥

विप्रचित्ते मम वचः पुलोमन् शकुनादयः ।
शृणुताऽनन्तरं सर्वैः क्रियतामाशु मा चिरम् ॥ ५ ॥

सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितस्सुहृद् ।
पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥

---

॥ अथ द्वितीयोऽध्यायः ॥

हिरण्यकशिपुः स्वतो विष्णुभक्तः, असुरावेशात् तद्द्वेषीत्ययं विवेकस्तद्वचनेन ज्ञातुं शक्य इत्येतदर्थमस्याध्यायस्य प्रारम्भः । तत्र प्रह्लादनाम्नि पुत्रे द्वेषः कथं पितुरभूदित्यस्य प्रश्नस्य परिहारं वक्तुमारभते—भ्रातरीति । हरिविषयरुषा । भ्रातृविषयशुचा ॥ १ ॥

दशनच्छदः ओष्ठः । चक्षुषो रोचिषा यथा धूम्रो भवति तथा पश्यन् ॥ २ ॥

भ्रुकुट्या नीलशिरया[1] युक्तमुखः ॥ ३ ॥ हे पाक ॥ ४ ॥

क्षुद्रैः अल्पैः कपटिभिर्वा । पार्ष्णिग्राहेण[2] पृष्ठावेक्षकेण बालकेन । 'देवानां दानवानां च सामान्यमधिदैवतम्' इत्यतः समेनापि उपधावनैः स्वोदर्चनैः[3] विषमेण ॥ ६ ॥

---

[1] अस्पष्टमिदम् [2] पार्ष्णिग्राहेण पक्षपातिना सता—या

[3] स्वोदर्चनैरिति क्वाचित्कः पाठः। बहुत्र स्वोदवनैरिति वर्तते । तमेतं पाठमधिकृत्य व्यासतत्त्वज्ञतीर्था एवमूचुः—'टीकायां स्वोदवनैरिति लेखकदोषः । स्वपादवनैरित्येव (पाठः) । स्वपादभजनैरित्यर्थः । एवमुत्तरत्रापि लेखकदोषा मार्जनीयाः' इति ।

तस्य त्यक्तस्वभावस्य [1]घृणेर्मायावनौकसः ।
भजन्तं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥

मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ।
युद्धप्रियं[2] तर्पयिष्ये भ्रातरं मे हतव्यथः ॥ ८ ॥

तस्मिन् कूटेऽहिते नष्टे कृन्तमूले वनस्पतौ ।
विटपा इव शुष्यन्ति विष्णुप्राणा दिवौकसः ॥ ९ ॥

तावद् यात भुवं यूयं ब्रह्मक्षत्रसमेधिताम् ।
सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानकान् ॥ १० ॥

विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान् ।
देवर्षिपितृभूतानां धर्मस्य च परायणम् ॥ ११ ॥

---

त्यक्तस्वभावस्य त्यक्तसाम्यावस्थस्य । तत एवास्माभिः घृणेः शोच्यस्य । 'घृणिर्विभावसौ सूर्ये रश्मौ शोच्ये विघर्षणे' इत्यभिधानम् । भजन्तं स्वात्मानं सेवमानं भजमानस्य प्रत्युपकारं कुर्वतः ॥ ७ ॥

अन्तर्दुष्टं दृश्यमानरमणीयं कूटम् । अस्थिरात्मनः (अस्थिरात्मत्व ?) कूटत्वादिभाववचनं मोहनार्थमासुरमतमुदीरितमिति ज्ञातव्यम् । तदुक्तम्— 'विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः । विष्णोर्गुणह्रासवाचः श्रीब्रह्मादेस्तथा क्रमात् । विष्ण्वादिद्वेषिणश्चैव सुखवाचस्तथाऽखिलाः । मोहनार्थाः समुद्दिष्टास्तथार्थद्योतकास्तथा[3] '॥ ९ ॥ इति

द्विजक्रियामूलः द्विजाश्च यज्ञादिक्रियाश्च मूलं यस्य स तथा । भक्तिज्ञानादिकमन्तरेण केवलं यागादिक्रियया प्रसन्नो भवतीत्येतदासुरं मतम् । 'विष्णुभक्तेश्च तज्ज्ञानादन्यतो मुक्तिवाचकाः' इत्येतदत्रापि प्रमाणम् । द्विजैः क्रियमाणां यागादिक्रियां मूलयति प्रतिष्ठापयति इति द्विजक्रियामूलमित्येतद् देवमतम् । 'मूल प्रतिष्ठायाम्' इति धातुः । इज्यत इति यज्ञः । धर्ममयः धर्मप्रधानः । दानादिधर्मेण प्रसीदति इत्येतदप्यासुरं मतम् । 'यथार्थद्योतकाः' इति वचनाद् धारकतम इत्यन्योऽर्थः । परायणम् उत्तमाश्रय इत्येतद् देवमतम् ॥ ११ ॥

---

[1] स्वभावस्याघृणेः—गो.

[2] युधि प्रियम्—व्या. युधि मच्छूलभिन्नग्रीवस्य तस्य भूरिणा रुधिरेण प्रियं भ्रातरं हतव्यथः सन् तर्पयिष्य इति योजना—व्या ।

द्यो था [3] तथार्थद्योतकाः तादृशार्थद्योतिका इतरा अपि मोहनार्था इत्यर्थः । तथाऽर्थद्योतकाःसदा—हृ । यथार्थद्योतकास्तथा इत्यपि वि. पाठः । तदुक्ते मोहनार्था एव वाचो योजनान्तरेण यथार्थद्योतका इत्यर्थः ।

यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ।
तं तं जनपदं यात सन्दीपयत वृश्चत ॥ १२ ॥

इति ते भर्तृनिर्देशमादाय शिरसाऽऽदृताः ।
तथा प्रजानां कदनं विदधुः कदनप्रियाः ॥ १३ ॥

पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ।
खेटखर्वटघोषांश्च ददहुः पत्तनानि च ॥ १४ ॥

केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ।
आजीव्यांश्चिच्छिदुर्वृक्षान् केचित् परशुपाणयः ।
प्रादहञ्छरणानन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥

एवं विप्रकृते लोके दैत्येन्द्रानुचरैर्मुहुः ।
दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥

हिरण्यकशिपुर्भ्रातुः सम्परेतस्य दुःखितः ।
कृत्वा कटोदकादीनि भ्रातृपुत्रानसान्त्वयत् ॥ १७ ॥

शकुनिं शम्बरं धृष्टं भूतसन्तापनं वृकम् ।
कालनेमिं महानाभं हरिश्मश्रुमथोत्कलम् ॥ १८ ॥

तन्मातरं रुशद्भानुं दितिं च जननीं गिरा ।
श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वर ॥ १९ ॥

---

सन्दीपयत दहत । वृश्चत छिन्दत ॥ १२ ॥

कदनं (हिंसाव्यापारान्) । कद हिंसायाम् ॥ १३ ॥

गवामावासस्थानं व्रजः, गोपालवसतिर्वा । आश्रमो मुनिनिवासः । आकरो रत्नाद्युत्पत्तिस्थानम् । खेटो नाट्यस्थानम् । खर्वटो वसनविक्रियस्य स्थानम् । घोषः आभीरपल्लिः । वणिग्भिरधिष्ठितं पत्तनम्[1] । ॥ १४ ॥ आजीव्यान् वृक्षान् नारिकेलक्रमुकपनसादीन् ॥ १५ ॥

विप्रकृते विपरीतमापादिते विनाशिते । कटोदकं प्रेतमुद्दिश्य दीयमानमुदकम् । तन्मातरं तेषां मातरं नाम्ना रुशद्भानुं दितिं जननीं च श्लक्ष्णया गिरा इदमाहेत्यन्वयः ॥ १६–१९ ॥

---

[1] 'कृषका जीवनं खेटो वाटी पुष्पोपजीविनाम् । ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम् । जलस्थलायति कीर्तं पत्तनं कीर्त्यते बुधैः' इति स्कान्दवचनं प्रथमस्कन्धे (६–११) तात्पर्योदाहृतम् ।

हिरण्यकशिपुरुवाच —

अम्बाम्ब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ।
रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥

भूतानामिह संवासः प्रपायामिव सुव्रते ।
दैवेनैकत्र नीतानामुन्नीतानां तथाऽध्रुवः ॥ २१ ॥

नित्य आत्माऽव्ययः शुद्धः सर्ववित् सर्वगः परः ।
धत्तेऽसावात्मनो लिङ्गं मायया विसृजन् गुणान् ॥ २२ ॥

---

हे वधूः हे सहोदरभार्ये हे पुत्राश्च । परेण वधः ऐहिकामुष्मिकजनश्लाघ्यो न भवतीति कृत्वा शोकः ? उत अत्रैव कञ्चित् कालं जीवानीत्यभीष्टहान्या, अहोस्वित् पितृमातृपुत्रभावस्य क्षणिकतेति ? तत्र प्रथमद्वितीयौ प्रत्याह—**रिपोरिति** ॥ २० ॥

इह कर्मभुवि दैवेन विधिना, अन्यत्र[1] हरिणा वा एकत्र नीतानां संमिलितानाम् उन्नीतानां पुत्रपौत्रादिसमृद्धिं प्रापितानां भूतानामेकत्र संवासः सहवासः प्रपायां पानीयशालायामिव यथा अध्रुवः तथाऽनित्यो भवतीत्यन्वयः । 'प्रपा पानीयशाला स्यान्मन्त्रशाला प्रतिश्रयः' इत्यभिधानम् ॥ २१ ॥

भूतानां सहवासोऽनित्यश्चेत् तर्हि केन सह वासो नित्य इत्याशङ्क्य सर्वगतत्वात्, जीवस्य मनआदीन्द्रियाधारत्वात् (च) हरिणा सहवासो नित्यः । 'सता सोम्य तदा सम्पन्नो भवति', 'प्राज्ञेनात्मनाऽन्वारूढः उत्सर्जद् याति' इत्यादिना सुप्तिमरणावस्थयोरपि सहस्थित्युक्तेरन्यदा किं वक्तव्यमित्याशयेन दैवं मतमाह—**नित्य इति** । असौ हरिः आत्मनो जीवस्य मनआदीन्द्रियजातं धत्ते । तस्याधारभूत इत्यर्थः । नित्यत्वादिकं स्वरूपत्वेनोच्यते । पर इति जीवव्यावर्तकम् । मायया स्वेच्छया वासनया वा । गुणान् शब्दादीन् । विसृजन् ददानः । संसारिण इव देहेन[2], मनआदीन्द्रियाणां (परमात्मना) नित्यसंबन्धो युज्यत इत्यतः[3] सर्वगत इत्युक्तम् । प्रपायां प्राणिसहवासवत् परमात्मनो देहसंबन्धोऽनित्य इत्याशयेन असुरमतमप्यनेनोच्यते[4] । गुणान् विसृजन् बुभूषुरसावात्मा

---

[1] अन्यार्थतायामित्यर्थः । दैवमतविवक्षायमिति यावत् । [2] चिदचिद्देहेन—च.

[3] इति सर्वगत इत्युक्तमिति पेशलम् ।

[4] व्यासतत्वज्ञतीर्थास्तु नित्य आत्मेत्यादिश्लोकपञ्चकमपि तत्वोपदेशपरतयैव व्याख्याय हरिस्तोतारं प्रह्लादं द्विषतो हिरण्यकशिपोः तत्वोपदेशेन या भक्तिर्व्यज्यते सा कथं घटत इत्याशङ्क्य अन्तर्हिरण्यकादीनामित्यादि तात्पर्यवचनमवतारयामासुः । तथा ह्यस्य पद्यस्य तेषां व्याख्यानम्—तत्वमुपदिशति—नित्य आत्मेत्यादिना श्लोकपञ्च-

यथाऽम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥ २३ ॥
एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ।
याति तत्साम्यतां भद्रे ह्यलिङ्गो लिङ्गवानिव ॥ २४ ॥

---

परमात्मा आत्मनो भोगायतनं लिङ्गं कर्मज्ञानेन्द्रियपञ्चवायुमनसां समुदितरूपं शरीरं धत्ते । माययेत्युक्त्या अनित्यो देहसंबन्ध इति ॥ २२ ॥

इतोऽप्यविद्याबलाद् ब्रह्मैव संसारीत्येतदासुरं मतमित्याशयेनाह— **यथेति** । एवं गुणैः भ्राम्यमाणे इतस्ततश्चञ्चलीक्रियमाणे मनसि अविकलः पुमान् पूर्णपुरुषः श्रीनारायणः तस्य जीवस्य साम्यतां दोषित्वं संसारित्वं यातीति प्रतीयते । कथमिव ? लिङ्गवानिव जीव इव । मनोदोषैराभासे ब्रह्मप्रतिबिम्बे जीवे दूषिते तद्विषयज्ञानहीने सति तन्महाभासो[1] बिम्बभूतस्य ब्रह्मणोऽपि दुष्टत्वं कल्पयतीत्यर्थः । नचैतदुपपद्यमिदित्याह— **अलिङ्ग इति** । नीरूपं (ब्रह्म)[2] । तस्मादघटिताविद्याकल्पितमित्यर्थः । अन्यत्र[3] (अलिङ्गः) प्राकृतशरीररहितः । [4]कथमिव ? प्रचलताऽम्भसा तरवोऽपि प्रचला इव दृश्यन्ते यथा,(यथा) जलसंचलनाद् जले प्रतिबिम्बितवृक्षसंचलनात् तटस्थनिश्चलवृक्षसंचलनं कल्पयत्यज्ञस्तथेति । नन्वत्र प्रतिबिम्बितवृक्षचलनेन तटस्थवृक्षचलनकल्पनमुन्मत्तकल्पनमेव । प्रत्यक्षेणान्यथा दृश्यमानत्वादित्यरुच्या दृष्टान्तान्तरमाह—**चक्षुषेति** । यथा परिभ्रमतः पुरुषस्य भ्राम्यमाणेन चक्षुषा भूर्भ्रमतीव दृश्यते । 'असमः समतामेति भ्रांतिदृष्ट्यैव केवलम् । जीवेन ब्रह्म न समं तत्वदृष्ट्या कथञ्चन । यथोदचलनाद् वृक्षप्रतिबिम्बप्रचालनात् । तटस्थवृक्षचलनं कल्पयेदबुधो जनः । तथा मनसिजैर्दोषैराभासे दूषिते नरे । आभासिनो ब्रह्मणश्च दोषमज्ञः प्रकल्पयेत् । आत्मनश्चक्षुषोः भ्रान्त्या तथा पश्येद् भ्रमं भुवः । तथैव स्वात्मनो दोषाद् दोषवद् ब्रह्म पश्यति ' इत्येतत्प्रमाणसिद्धत्वादुक्त एवार्थो न त्वितरः । विष्णुर्द्विजक्रियामूल इत्यारभ्योच्यमानं दैवमासुरं चेत्युभयमत (मिति) ज्ञापनाय 'विप्रयज्ञादि मूलं तु [5]हरिरित्यासुरं मतम् । हरिरेव हि सर्वस्य मूलं सम्यङ् मतो नृप ' इत्येतद्वाक्यमाचार्यैरुदाहृतम् । उपर्यप्यनुसन्धानाय वा ॥ २३–२४ ॥

---

केन । परः स्वतन्त्रः । असावात्मा हरिर्गुणान् पूर्वं सौक्ष्म्येण विद्यमानान् आदिसृष्टौ स्वमायया स्वेच्छया विसृजन् आत्मनो जीवस्य लिङ्गं मनआदिषोडशकलात्मकलिङ्गशरीरं धत्ते धारयति पुष्णाति चेति योजना—इति ।

[1] तन्महाभासिनः—व. [2] उपपत्त्यभावोपपादकमिदम् । [3] दैवमतविवक्षायामित्यर्थः ।

[4] इतः पूर्वं, लिङ्गवानिव प्राकृतशरीरसहित इव दृश्यत इत्युपस्कर्तव्यम् । 'मननान्मन उद्दिष्टः' इत्युक्तेः मनसि जीवे गुणैः भ्राम्यमाणे—व्या. [5] हरेः—ह

एष आत्मविपर्यासो ह्यलिङ्गे लिङ्गभावना ।
एवं प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः   ॥ २५ ॥

संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ।
अविवेकश्च चिन्ता च विवेकस्मृतिरेव च   ॥ २६ ॥

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यमस्य प्रेतबन्धूनां संवादं तं निबोधत   ॥ २७ ॥

उशीनरेष्वभूद् राजा सुयज्ञ इति विश्रुतः ।
सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत   ॥ २८ ॥

विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ।
शरनिर्भिन्नहृदयं शयानमसृगाविलम्   ॥ २९ ॥

विकीर्णकेशं स्तब्धाक्षं संरम्भाद् दष्टदच्छदम् ।
रजःकुण्ठमुखाम्भोजं छिन्नायुधभुजं मृधे   ॥ ३० ॥

---

परमात्मानमेवं[1] जानतः किं फलम् ? तत्राह—एष इति । अलिङ्गे प्राकृतदेहेन्द्रियादिरहिते, अत एव परतन्त्रत्वादिसर्वदोषरहिते परमात्मनि या लिङ्गभावना प्राकृतदेहेन्द्रियात्मत्वादिचिन्ता, एष आत्मनः स्वस्यैवायोग्यस्य जनस्य विपर्यासः तमःप्राप्तिलक्षणोऽनर्थो भवति । इहापि, यथा परत्र तमोलक्षणोऽनर्थः, एवं प्रियाप्रियादियोगवियोगादिलक्षणा पूर्वकर्मानुसारेण संसृतिर्भवति ॥ २५ ॥

(संसृतिः) कीदृशीति विशिष्याह—संभव इति । अज्ञानपूर्तिपर्यन्तं पुनः पुनः सम्भवः । तस्मिन् सति स्वरूपविनाशः[2] । विवेकस्मृतिः अविवेकिन एव विवेकभ्रान्तिः[3] ज्ञानित्वभ्रान्तिः । असुरसिद्धान्तनिष्ठितस्य हिरण्यकशिपोरेवं देवसिद्धान्तोपन्यासेन कथं स्वबन्धुबोधनमितीयमाशङ्का 'अन्तर्हिरण्यकादीनां भक्तिरस्त्येव केशवे । असुरावेशतस्त्वन्यान् हरिस्तोतॄन् द्विषन्ति च' इत्यनेन परिहरणीयेति ॥ २६ ॥

पुत्रमित्रकलत्रादिभिः सह निवासो दैवाधीन इति मत्वा शोको न कार्य इत्यस्मिन्नर्थे इतिहास लक्षणकथाऽस्तीत्याह—अत्रेति[4] । प्रेतबन्धूनां कस्यचिन्मृतस्य ज्ञातीनाम् । असृगाविलं रुधिररूषितम् । स्तब्धाक्षं निश्चलनेत्रम् । रजःकुण्ठं धूलिधूसरं मुखाम्भोजं यस्य स तथा तम् । छिन्नः आयुधयुक्तभुजो यस्य स तथा तम् ॥ २७–३० ॥

---

[1] पूर्वोक्तप्रकारेण अन्यथा जानत इत्यर्थः ।

[2] अज्ञानपूर्तौ सत्यां तमःप्राप्तिरिति यावत् ।   [3] विवेकस्मृतिः अविवेकिन एव विवेकित्वभ्रान्तिः—इ.

[4] भूतानामिह संवासोऽध्रुव इति न केवलं मयैवोक्तं, किं त्वत्रेतिहासमप्युदाहरन्तीत्याह—व्या.

उशीनरेन्द्रं विधिना तथाकृतं
　　पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ।
हताः स्म नाथेति करैरुरो भृशं
　　घ्नन्त्यो मुहुस्तत्पदयोरुपापतन्　　॥ ३१ ॥

रुदन्त्य उच्चैर्दयिताङ्घ्रिपङ्कजं
　　सिञ्चन्त्य अस्रैः कुचकुङ्कुमारुणैः ।
विस्रस्तकेशाभरणाः शुचं नृणां
　　सृजन्त्य आक्रन्दनया विलेपिरे　　॥ ३२ ॥

अहो विधात्राऽकरुणेन नः प्रभु-
　　र्भवान् प्रणीतो धिगगोचरं दशाम् ।
उशीनराणामपि वृत्तिदः पुरा
　　कृतोऽधुना येन शुचां विवर्धनः　　॥ ३३ ॥

त्वया कृतज्ञेन वयं महीपते
　　कथं विना स्याम सुहृत्तमेन ।
तत्रानुयानं तव वीर पादयोः
　　शुश्रूषतीनां दिश यत्र यास्यसि　　॥ ३४ ॥

एवं विलपतीनां वै परिगृह्य मृतं पतिम् ।
अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत　　॥ ३५ ॥

तत्र ह प्रेतबन्धूनामाश्रुत्य परिदेवनम् ।
आह तान् बालको भूत्वा यमः स्वयमुपागतः　　॥ ३६ ॥

---

कुचकुंकुमधूलिभिररुणवर्णैः । आक्रन्दनया उच्चरोदनेन नृणां शुचः शोकान् सृजन्त्यः कुर्वाणाः विलेपिरे परिदेवनं चक्रुः ॥ ३२ ॥

नो दशां चक्षुषाम् अगोचरम् अविषयं (देशं) नीतः । येन विधिना ॥ ३३ ॥

स्याम सत्तां प्राप्नुमः । तर्हि किं कर्तव्यम् ? तत्राह—तत्रेति । यत्र यास्यसि तत्र पादयोः अनुयानं दिश ॥ ३४ ॥　　निर्हारं दाहम् ॥ ३५ ॥

हेत्यनेन कथान्तरप्रसक्तिं सूचयति ॥ ३६ ॥

**अहो अमीषां वयसाऽधिकानां विपश्यतां लोकविधिं विमोहः[1] ।**
**यत्रोद्भवस्तत्र गतं मनुष्यं स्वयं सधर्मा अनुशोचन्त्यपार्थम् ॥ ३७ ॥**

**अहो वयं धन्यतमा यदत्र**
**त्यक्ताः पितृभ्यां न विचिन्तयामः ।**
**अभक्ष्यमाणा अबला वृकादिभिः**
**स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥**

**य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुम्पते यः ।**
**तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभोः ॥ ३९ ॥**

---

देरि यमो मा कुरुध्वं यूयं शोकं युष्मभ्यं सुयज्ञो दत्त इत्याहेति तत्राह[2]—**अहो इति** । लोकविधिं जन्ममरणादिप्रकारं विपश्यताम् अमीषां प्रेतबन्धूनां विमोहः अहो धिक् । स्वयं सधर्माः जन्मादिसमानधर्माः अमी बन्धवः यत्र यस्य मनुष्यदर्शनायोग्यात् स्वर्गनरकादन्यत्र उद्भवः उत्पत्तिः देहयोगलक्षणाऽभूत् तं तत्र तद् असमच्चक्षुरगोचरं स्वर्गादिकं गतं मनुष्यमनुशोचन्तीति यत् तद् अपार्थं व्यर्थम् । गतानुगतिकत्वात् । 'अदर्शनादिहायातः पुनश्चादर्शनं गतः' इति वचनात् । यत्र स्वर्गादेरुद्भवः यस्य स यत्रोद्भवः तत्र गतं स्वर्गादिगतमिति वा । अपार्थमनुशोचन्तीति वा । यद्वा यत्र उत्पन्नं तत्र पृथिव्यादि[3] गतं मनुष्यशरीरं प्रति व्यर्थमनुशोचन्तीति । सर्वस्य दैवाधीनत्वं स्वानुभवसिद्धमिति ज्ञापयति—**अहो इति** ॥ ३७ ॥

तस्मात् सर्वं दैवाधीनमिति मत्वा न शोकः कार्य इत्याशयेनाह—**अहो वयमिति** । पितृभ्यां मातापितृभ्याम् । अबलाः दुर्बलाः । कुतश्चिन्ता नास्तीति तत्राह—**स रक्षितेति** । यो गर्भे अस्मान् रक्षति स भगवान् अधुना बहिर्गतान् रक्षिता हि यस्मात्, तस्मादिति शेषः ॥ ३८ ॥

न केवलं रक्षिता अपि तु सृष्ट्यादिकर्ताऽपि । अतः संशयो न कार्य इति भवेनाह—**य इच्छयेति** । अत इच्छयेति इच्छाग्रहणेन सर्वत्र सृष्टिप्रसङ्गे मायाशब्दस्येच्छार्थो ज्ञायते । हे अबलाः सृष्ट्यादिकर्ता यतोऽतः मरणलक्षणस्य निग्रहस्य सङ्ग्रहे परिहारलक्षणे प्रभोः समर्थस्य तस्योशितुः चराचरं क्रीडनं लीलासाधनम्[4] ॥ ३९ ॥ स्ये

---

[1] विमोहम्—गो. । अहो इत्यस्य धिगर्थतया विमोहमिति द्वितीया उपपद्यते । एषो विमोहः अहो आश्चर्यकरः —व्या. [2] अस्पष्टमिदम् । तत्राह हिरण्यकशिपुरिति वा । [3] पृथिव्याम्—व.

[4] हे अबलाः य एवेदं स्वेच्छयैव सृजति य एव रक्षति, अवलुम्पते संहरति । स्वयमव्ययः । तस्य निग्रहसङ्ग्रहे सृष्ट्यादिना सङ्ग्रहे संहारादिना निग्रहे प्रभोः समर्थस्येशितुः स्वामिनश्चराचरं क्रीडनं क्रीडोपकरणमाहुर्विद्वांसः इति योजना—व्या.

पथि च्युतं तिष्ठति दिष्टरक्षितं
गृहे स्थितं तद्विहतं विनश्यति ।
जीवत्यनाथोऽपि तदीक्षितो वने
गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥ ४० ॥

भूतानि तैस्तैर्निजयोनिकर्मभिर्भवन्ति काले न भवन्ति सर्वशः ।
न तत्र ह्यात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥

इदं शरीरं पुरुषस्य मोहजं यथा पृथग् भौतिकमीयते गृहम् ।
तथोदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥

---

दैवाधीनं जगत् सर्वमित्युक्तः कथमीश्वराधीनं चराचरमित्याशङ्क्य दिष्टदैवादिशब्देन संस्तुतोऽच्युत इत्याशयेनाह—पथीति[1] । भक्तायाऽभीष्टं दिशतीति दिष्टशब्दवाच्यो मुकुन्दः । तेन रक्षितम् । तेन विहतम् । अस्य अनेन हतः । (अस्य) सकाशाद् इति वा ॥ ४० ॥

सृष्ट्यादिकं कुर्वन् आत्मा तत्तत्प्राणिकर्माण्युल्लङ्घ्य करोति उत तदनुसारेणेति तत्राह—भूतानीति । निजयोनिकर्मभिः स्वजातिविहितकर्मभिः भूतानि विहितकाले भवन्तीति, आत्मप्रेरितैरिति शेषः । 'द्रव्यं कर्म च कालश्च' इत्यादेः । कालशब्दवाच्यपरमात्माधिकरणतया सृष्ट्यादिकमाप्नुवन्तीति वा । ननु जीवात्मनोरुभयोरपि देहस्थितेः कस्य संसारबन्धाभाव इति सुहृद्भावेन पृच्छन्तमाह—न तत्रेति । तत्र तयोः जीवपरयोरन्यतमः आत्मा प्रकृतौ प्रकृतिनिर्मितशरीरे स्थितोऽपि तस्याः प्रकृतेः गुणैः सत्वादिभिः न निबध्यते ह किल । 'सत्वं सुखे संजयति रजः कर्मणि भारत । ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत' इत्यादिवाक्योक्तबन्धो नास्तीत्यर्थः । हेत्यनेन 'तुच्छेनाभ्वपिहितं यदासीत् तमस्तन्महिनाऽजायतैकम्' इति वाक्यं सूचयति । 'सुविरुद्धस्वरूपत्वाज्जीवादन्यतमो हरिः' इत्यतो हरेरन्यतमत्वं प्रामाणिकमिति वा । परमात्मा न बध्यतेऽन्यतमो बध्यत इत्येतदुत्तरश्लोकेन पुनरुक्तं स्यादिति (हेतोः) अन्यथा व्याख्यातमाचार्यैः 'अन्यतम आत्मा परमात्मा' इति[2] ॥ ४१ ॥

परमात्मनो बन्धाभाववचनेन जीवात्मनोर्यो भेद अर्थादाप्तः स केन प्रकारेणेत्याशङ्क्याह—इदं शरीरमिति । पुरुषस्य संसारिणो मोहेन अन्यथाज्ञानेन, 'मुह वैचित्त्ये' इति धातोः । विपरीतज्ञानजं

---

[1] रक्षणादिकं भगवदधीनमेव न जीवव्यापाराधीनम् । तस्यान्वयव्यतिरेकव्यभिचारादित्याशयेनाह—पथि च्युतमिति ।—व्या-

[2] निजयोनिकर्मभिः स्वयोग्यदेवादियोनिसाधनैः कर्मभिः। (काले देहारम्भककर्मफलारम्भकाले भवन्ति उत्पद्यन्ते)। काले देहारम्भकर्मसमाप्तिकाले न भवन्ति नश्यन्ति । सर्वशः देवादयोऽपि । तत्र तदा प्रकृतौ देहाकारेण

यथाऽनलो दारुषु भिन्न ईयते
यथाऽनिलो देहगतः पृथक् स्थितः ।
यथा नभः सर्वगतं न सज्जते
तथा गुणैः सर्वगुणाश्रयः परः ॥ ४३ ॥

---

यस्मात् तस्मादात्मनो भिन्नमिति ज्ञातव्यम् । तथा हि । भौतिकं भूतविकृतैर्वृक्षैर्विरचितं गृहं गृहस्थात् पृथग् भिन्नमीयते यथा विनश्यति च, तथा उदकैः पार्थिवैतैजसैः परमाणुभिः कालनाम्ना हरिणा चोदितैः, विकृतो विकारं प्राप्तो जातो जन्यते इति जनो (जातो?) देहो विनश्यति स्वकारणावस्थिति-मानोतीति यस्मात् तस्माज्जीवाद् भिन्न इति निश्चीयते । 'नित्यो नित्यानाम्' इति श्रुतेर्जीवस्य नित्यत्वात्[1] ॥ ४२ ॥

तदेव दृष्टान्तान्तरेण स्पष्टयति—यथेति । यद्वा ननु जीवस्य शरीराद् भेदोऽस्तु । तस्य नश्वरत्वात् । परमात्मना जीवस्याभेदः किं न स्यादिति मन्दाशङ्कां परिहरति—यथेति । दारुषु स्थितो वह्निः दारुभ्यो भिन्नस्तद्गुणैस्तेषु न सज्जते यथा, देहिनां देहगतो वायुर्देहात् पृथक् स्थित-तद्गुणैश्च न लिप्यते यथा, सर्वगतं नभः सर्वस्माद् भिन्नं ज्ञायते सर्ववस्तुगुणैश्च न लिप्यते यथा, तथा-ज्ञानानन्दादिसर्वगुणाश्रयः परः परमात्मा, सर्वेषां जन्तूनां गुणभूतं भोगायतनं शरीरं आश्रयो यस्य सः सर्वगुणाश्रयः सर्वजीवदेहगतः, परो विलक्षणो भिन्न इति यावत्, जीवादिति शेषः । प्रकृतत्वात् । जीवगुणैर्न लिप्यत इति । देहाद् भेदस्य प्रकृतत्वात् स[2] एवात्रोच्यत इति किं न स्यादितीयं शङ्का 'देहदारुगतौ प्राणवह्नी सर्वगतं नभः । देहादिभ्यो यथा भिन्ना न लिप्यन्ते च तद्गुणैः । तथा जीवगतो विष्णुर्जीवाद् भिन्नो न तद्गुणैः[3]' इति वाक्येन परिहर्तव्या । अत्रायं फलितार्थः । भगवन्माहात्म्यकथनेन सर्वस्य तद्वशत्वात् स एव भजनीयो न शोकेन प्रयोजनमिति ॥ ४३ ॥

---

परिणतायां स्थितोऽप्यात्मा परमात्मा तस्याः प्रकृतेर्गुणैः सत्वादिभिर्जीववन्न निबध्यते । कुतः? यतोऽन्यतमः जीवात् सुविरुद्धस्वभावत्वेनातिशयेनान्योऽत्यन्तविलक्षणः—या.

[1] देहे स्थितः परमात्मा न निबध्यत इत्यनेन जीवो बध्यत इत्यायातम् । तत् कथम्? तस्यापि देहात् पृथक्त्वादित्यतो जीवमिथ्याज्ञानमूलत्वाद्युक्तस्तस्य बन्ध इत्याशयेनाह—इदं शरीरमिति । यथा भौतिकं पञ्चभूतकार्यं गृहं गृहाभिमानिना पृथगीयते । तथोदकैः पार्थिवैतैजसैः, उपलक्षणया पंचभूतैरुपादानैः कालेन मुख्यनिमित्तेन भगवता जातमिदं पृथग् अभिमानिनो भिन्नं यद्यपि । तथापि पुरुषस्य जीवस्य मोहजं स्वातन्त्र्यादिमिथ्याज्ञाननिमित्तकं यतोऽतो जनो देहस्थो जीवो जातो विकृतो विनश्यति । जननजरादिविकारमरणप्रयुक्तदुःखलक्षणबन्धवान् भवतीति योजना—व्या. [2] जीव एवेत्यर्थः ।

[3] न तद्गुणी—ह । तद्गुणी तस्य जीवस्य देहस्य वा गुणलेपवान् नेत्यर्थः । न तद्गुणैरिति पाठे लिप्यत इत्युपस्कर्तव्यम्—व्या.

सुयज्ञो नन्वयं शेते मूढा यमनुशोचथ ।
यः श्रोता योऽनुवक्तेह न स दृश्येत कर्हिचित् ॥ ४४ ॥

न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ।
यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः ॥ ४५ ॥

---

किञ्च भवच्छोकायोग्यस्य सुयज्ञस्य दृश्यमानत्वात् तं प्रति शोको न कार्य इति गूढाक्षेपं करोति —सुयज्ञ इति । हे मूढाः यमनुशोचथ अयं सुयज्ञः शेते निद्रां करोति । ननु न मृतः । 'ननु च स्याद् विरोधादौ' इत्यभिधानात् । शेत एव लोकान्तरं न गत इति वा । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यभिधानात्, अवधारणार्थो ननुशब्दः । श्रोत्रादीन्द्रियव्यापारादर्शनादिना मरणानुमानात् कथं न मृत इत्याक्षिप्यत इति तत्राह —यः श्रोतेति । इह सुयज्ञशरीरे यः श्रोता यश्चानुवक्ता स परमात्मा कर्हिचित् कदाचिदपि न दृश्येत । तस्य सूक्ष्मस्वभावत्वात् । 'तदव्यक्तमाह हि' इति सूत्राच्च । तस्यैव श्रोतृत्वादिकं कुत इति चेन्न । 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता' इत्यादेः[1] ॥ ४४ ॥

ननु सुयज्ञशरीरस्थस्य मुख्यप्राणस्य श्रोतृत्वादिसंभवात् कथं तदन्ययोगव्यवच्छेदः क्रियत इति तत्राह—न श्रोतेति । अत्र सुयज्ञदेहे श्वासोच्छ्वासादिलक्षणेन मुखे व्यज्यमानत्वान्मुख्यो यो महानसुः मुख्यप्राणः सोऽपि स्वतो न श्रोता नानुवक्ता च । 'तस्य वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति श्रुतेरन्ययोगव्यवच्छेदो युक्त इति । ननु तर्हि सुयज्ञनाम्नो जीवस्य श्रोतृत्वादिकमासीत् प्राक् । तदिदानीं न । तस्मान्मृत इति प्राचीनशङ्काशेषं कैमुत्यन्यायेन परिहरति —यस्त्विति । तुशब्देन नेत्याकृष्यते । इह सुयज्ञे इत्युपलक्षणम् । जीवराशिदेहे य इन्द्रियवान् यश्च प्राणदेहयोरन्यः स जीवात्मा श्रोतुं वक्तुं च न शक्त इति किं वक्तव्यम्? 'एतद् बाणमवष्टभ्य विधारयामि' इति श्रुतेः सर्वशक्तिमतोऽपि प्राणस्य स्वतः श्रोतृत्वाद्ययुक्तेरुक्तत्वात् । तस्मात् सुयज्ञं प्रति शोकेन किं प्रयोजनम्? [2]तस्माज्जीवतामपि श्रोतृत्वाद्यनुपपत्तेः प्रामाणिकत्वेन मृतोऽयमित्यस्य लक्षणान्तरं वक्ति- -अन्य इति । अनेन हरेर्माहात्म्यातिशयः प्रकटित इति सूचितम्? न केवलं प्राण-

---

[1] इतश्च शोको न कार्य इत्याह—सुयज्ञ इति । हे मूढाः यमनुशोचथात्र यः शेते देहोऽसौ सुयज्ञोऽयं ननु किमित्याक्षेपः । तथा चानुशोच्यः सुयज्ञो देहो नेत्यर्थः । देहस्याश्रोतृत्वेन जडत्वात् । तर्हि श्रोतारमनुशोचाम इत्युक्ते किं मुख्यं श्रोतारमुतामुख्यम्? आद्य आह—य इति । यो मुख्यतः श्रोताऽनुवक्ता च हरिः स इह लोके कर्हिचिन्न दृश्येत अव्यक्तत्वात्—व्या. [2] इतोऽग्रम् आसमाप्ति ।

भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः ।
भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥ ४६ ॥

---

देहयोरन्यः । किन्तु पूर्णश्रोतृत्वादिगुणयुक्ताद्धरेश्चान्यः (जीवः) इति चशब्दार्थः[1] ॥ ४५ ॥

हरेर्देहस्थितिसद्भावेन तस्मादप्यन्य इति च वक्तुं युक्तम् । तत्कुत इति तत्राह—**भूतेन्द्रियेति** । भूतेन्द्रियमनांसि लिङ्गं रूपं येषां ते तथा तानुच्चावचान् सुरनरतिर्यगात्मनोत्तममध्यमाधमान् देहान् भजति । पश्चाद् उत्सृजति हि यस्मात् तस्मादन्य इति वक्तुं युक्तम् । स्पष्टं चाह—**अन्य इति** । देहयोगवियोगभाजो जीवादिति शेषः । 'लिङ्गं स्वरूपमुद्दिष्टं लिङ्गं ज्ञापकमेव च' इति वचनात्, लिङ्गशब्दस्य स्वरूपार्थो युक्तः । यदि देहभजनोत्सर्जने हरेः, तर्हि जीवात् को विशेष इति तत्राह—**तच्चेति** । परिच्छिन्नविषये भजनोत्सर्जने व्याप्तस्य विष्णोः कथं घटेते इत्यतो वाह—**तच्चेति** । (तत्) ततः । चशब्देन जीवस्य पारतन्त्र्येणेति विशेषमाह । अपिशब्देन रूपान्तरेणेत्युपपत्तिमाह । अत्र जीवपरमात्मनोर्भेदस्य तयोरुभयोर्देहादेर्भेदस्य च हरेरेव मुख्यश्रोतृत्वादेश्च प्रकरणावान्तरभेदस्य च ज्ञापनाय आचार्यैः पूर्वापरभावेन 'इन्द्रियवान् जीवः' इत्यादि व्याख्यातम् । ननु जीवस्य प्राणदेहयोरन्यत्वे मरणे देहनाशान्मुक्तौ तदभावाद् विषयभोगाभाव इत्याशङ्कापरिहारायोक्तमाचार्यैः 'अन्यो जीवः' इत्यादि । जडदेहादन्यत्वं, न स्वरूपभूतादुच्यत इत्यर्थः । अचितो जडात् । इन्द्रियवत्त्वं चामुख्यं तेषाम् । अवशत्वात् । अभिमानादेव तद् द्वयम्[2] । 'पश्यामीत्यभिमानोऽस्य' इत्यादेः । तर्हि चक्षुरादीनि कस्याधीनानीत्यतः प्राणाधीनानीति द्योतयितुं 'चक्षुराद्या मनो जीवः' इत्यादेः प्राणोऽपि न पर्याप्तमित्युक्तम् । 'तस्यापि ज्ञातृमन्तृत्वं न स्वतः शक्यते क्वचित्' इति । 'यस्तस्य ज्ञातृत्वमन्तृत्वदाता स भगवान्' इत्याद्यपि सूचितम् । यः श्रोता इत्यत्र प्रमाणं 'ज्ञाता च मन्ता च' इत्यादि । 'ज्ञानादिदो न तस्यान्यः' इत्येतत् 'अनु' इति सूचितम् । 'सर्वस्य ज्ञानदो हरिः' इत्येतत् 'न स दृश्येत' इत्यनेन सूचितम् । स्वविषयज्ञानदातेति चेद् दृश्य इत्यर्थः । 'भूतेन्द्रियमन' इत्यादिना विष्णुरुच्यते न जीवः इत्यत्र मानं 'स देहान् भजते' इत्यादिना[3] ॥ ४६ ॥

---

[1] सुयज्ञो जीवो मुख्यश्रोता किं न स्यादित्यतः कैमुत्येन नेत्याह—न श्रोतेति । अत्र लोके देहे चेतरापेक्षया महान् मुख्योऽसुरपि मुख्यप्राणोऽपि न स्वतः श्रोताऽनुवक्ता चेति यदा तदा देहप्राणयोः सकाशात्, चशब्दात् स्वतः श्रोतुर्वक्तुर्भगवतश्चान्यः, अभिमानत इन्द्रियवानात्मा जीवो यः, स तु न स्वतः श्रोताऽनुवक्ता चेति किमु वक्तव्यमिति योजना—व्या. [2] तद्वत्त्वम्—ग । देहवत्त्वमिन्द्रियवत्त्वं चेत्यर्थः ।

[3] तात्पर्यवचनानां गतिप्रदर्शनमिदं प्रायेण गहनम् । 'यः श्रोता योऽनुवक्तेत्यत्र मुख्यत. श्रोता यः स न दृश्येतेत्युक्तम् । स क इत्याशङ्कायामाह—भूतेति । यो जीवादन्यः परमात्मा विभुः समर्थः जीवस्य संसारमोक्षार्थं

यावल्लिङ्गान्वितो ह्यात्मा तावत् कर्मनिबन्धनः ।
ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ४७ ॥

---

नन्वयं जीवः कियन्तं कालं देहान्वितो भवतीति चोद्यं परिहरति—यावदिति । यावन्तं कालं अन्नमयप्राणमयमनोमयलक्षणेषु लिङ्गेषु अन्वितो भवति आत्मा परमात्मा तावन्तं कालं कर्मभिः नितरां बन्धनं यस्य स तथा जीवः एषु देहेषु अन्वितो भवति । हिशब्दात् हरिर्यदा [1]त्रिविधदेहानुत्सृजति तदा स्वयमप्युत्सृजतीति ग्राह्यम् । अत्रायं विशेषः । यदा परमात्मा देहं सर्वात्मनोत्सृजति तदाऽयमपि सर्वात्मना तदनुग्रहेणोत्सृज्य संसारान्मुक्तो भवति, न चेदनेन सह देहान्तरं भजतीति । तस्मादद्य अनेन (हरिणा) रूपान्तरेण कृतदेहोत्सर्जनत्वादनेनापि सुयज्ञेन तदाचरितमिति देहोत्सर्जनलक्षणमरणस्य पराधीनत्वेनापरिहार्यत्वात् , न शोकेन प्रयोजनमिति भावः । 'यावद् देहान्वितो विष्णुस्तावज्जीवः' इत्येतदत्र मानम् । 'यदोत्सृजति देहं स हरिः सर्वात्मना विभुः' इति च । ननु परमात्मा जीवाभिन्नः सन् देहान् भजत्युत्सृजतीत्युच्यत इति किं न स्यात् कल्पनालाघवात् ? एकमेव ब्रह्माज्ञानात् संसरति मुच्यते (च) इत्यङ्गीकाराच्चेति तत्राह— तत इति । तस्माद् हरेः जीवो विपर्ययो विरुद्धः पर्ययो निश्चयो यस्य स तथा, विरुद्धलक्षण इत्यर्थः । 'अतिभिन्नस्वरूपौ तौ जीवेशावेकदेहगौ' इत्यादेः । अतो ब्रह्मणोऽज्ञानकल्पनमप्रामाणिकमिति भावः । 'देहाभिमानी त्वेकोऽत्र न मानी मानदः परः' इत्येतद् भेदोपपादकम् । इतोऽपि भिन्न इत्याह—क्लेश इति । नानाक्लेशाधिकरणत्वाद् भिन्न इत्यर्थः । 'विपर्ययः । तावद् क्लेशादयश्चास्य' इत्यादेः । क्लेशफलमाह—मायेति[2] ॥ ४७ ॥

---

भूतेन्द्रियमनोलिङ्गान् भूतेन्द्रियमनांसि लिङ्गं स्वरूपं येषां तान् उच्चावचान् सुरनरतिर्यगादीन् देहान् जीवनियामकतया स्थातुं स्वयमपि भजते । लोकान्तरं च जीवं गमयितुमुत्सृजति । स एव स्वतः श्रोताऽनुवक्ता चेत्यध्याहृत्य योजना । जीवस्य देहभजनोत्सर्जनादिकं स्वान्याधीनमिव स्वस्यापि देहभजनादिकं किमन्याधीनमित्याशङ्कापरिहाराय तदपि स्वेन तेजसा स्वसामर्थ्येनैवेति चतुर्थः पादो योजनीयः । एतावदभिप्रेत्यैव तात्पर्यं प्रकृतम्–भजत्युत्सृजति ह्यन्यः परमात्मा । स एव श्रोताऽनुवक्ता च । नान्योऽतोऽस्ति श्रोता, स योऽतोऽश्रुत इत्यादेरिति '—व्या.

[1] लिङ्गदेहः सूक्ष्मदेहः स्थूलदेहश्चेति त्रैविध्यम् ।

[2] 'एवं जीवस्य पुनःपुनर्देहप्राप्तौ कदा मोक्ष इत्यतो मूलं प्रकृतम्—यावल्लिङ्गेति । अत्र तात्पर्यम्—आत्मा परमात्मा, कर्मनिबन्धनो जीवः, ततःपरमात्मनो विपरीत इति । तथा च यावल्लिङ्गान्वितः लिङ्गशरीरादिजडदेहान्वितः आत्मा परमात्मा, कर्म निबन्धनं संसृतौ यस्य तादृशो जीवः परमात्मन एव विपर्ययः विपरीतमतिमान् वर्तते । क्लेशः संसारक्लेशः, माययोगः अविद्यायोगः, तन्निमित्ताभिमानोऽपि तावदनुवर्तत इति योजना '—व्या.

**वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ।**
**यथा मनोरथः स्वप्नः सर्वमैन्द्रियकं मृषा ॥ ४८ ॥**
**अथ नित्यमनित्यं वा नेह शोचन्ति तद्विदः ।**
**नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ४९ ॥**

---

कोऽयं मायायोगो नाम येनासौ क्लेशफलः स्यादिति तत्राह—**वितथेति** । गुणेषु शब्दादिषु अर्थदृग्वचः प्रयोजनदर्शनं तद्वाचकं वचनं च 'स्वर्गे लोके न भयं किञ्चनास्ति' इत्यादिलक्षणं यद् अयं वितथाभिनिवेशः मिथ्याग्रहः भ्रान्तिज्ञानमित्यर्थः । क्लेशपरिजिहीर्षया शब्दादिष्विन्द्रियप्रवर्तनं तत्फलमित्युपचारः । वचनाद्धि वितथाभिनिवेशो भवति । गुणेष्वर्थदर्शनस्यापि तथाभिनिवेशित्वं[1] सदृष्टान्तमाह—**यथेति** । 'सप्तमु प्रथमा' इति सूत्रात् मनोरथे कल्पितं राज्यं स्वप्ने दृष्टं रत्नं यथा मृषा वृथा तथा सर्वमिन्द्रियप्रवर्तनम् । मृषा सदसद्विलक्षणमित्यर्थ 'वृथा चेन्द्रियवृत्तयः' इत्येतद् विरुणद्धि । 'इन्द्रियाद्यभिमानेन तद्वान् जीव उदीर्यते । अतन्मानी हरिः प्रोक्तस्त्वदेहोऽनिन्द्रियस्तथा । जीवानभिमते देहे न विष्णुर्जीववत् स्थितः[2] । अतस्त्वदेह उद्दिष्टः परमात्मा सनातनः' इत्येतद् जीवपरयोर्भेदस्य जीवस्येन्द्रियवत्त्वमौपचारिकमित्यस्य चोपपादने प्रमाणम् । जीवस्येन्द्रियवत्त्वमुपचरितं चेत् कस्य तन्मुख्यमित्याशङ्का—'लेपाभिमानी जीवस्तु स्वरूपानुभवी न च । मुक्तेः प्राक् तेन मान्युक्तो न मानी विष्णुरुच्यते । सर्वं ममेति पश्यन्नप्यलेपाभिमतिर्यतः । सम्यक्स्वरूपानुभवात् स्वतन्त्रत्वाददोषतः' इत्यनेन परिहर्तव्या । स्वानधीने वस्तुनि स्वाधीनताबुद्धिः लेपाभिमानः । सोऽस्यास्तीत्येतादृशश्चेदोषो वितथाभिनिवेश इत्युच्यते । हरेर्जीवदेहेन्द्रियादिषु स्वाधीनेषु स्वाधीनताबुद्धिः (न) लेपाभिमानः । स गुणो यथार्थज्ञानलक्षणः । तस्माद्धरेर्देहेन्द्रियादौ स्वामित्वेन तद्वत्त्वं मुख्यम् । तत्राविवेकग्रहणं कर्मनिबन्धनम् । ततो विपर्यय इत्यादिलक्षणैः (णः ?) जीवोऽनीदृशः श्रीनारायण इति स्मर्तव्यम्[3] ॥४८॥

यस्मात् सर्वस्येश्वराधीनत्वेन जन्तूनां मरणादिकमपरिहार्यं तस्मात् सर्वथा देहेन्द्रियादियादेरनित्यत्वं नित्यत्वं वाऽस्तु । तथापि शोककरणं न पण्डितमतम् । 'गतासूनगतासूंश्च नानुशोचन्ति

---

[1] तथाऽभिनिवेशत्वमिति स्यात् । [2] न विष्णुर्जीवति स्थितः—ह,या,व्या.

[3] अस्पष्टमिदं वाक्यद्वयम् । 'एवं तर्हि संसारेषु पुरुषार्थो नास्तीत्युक्तम् । कथं तर्हि स्वर्गे लोके न भयं किंचनास्तीत्यादिवचनबलात् स्वर्गादौ पुरुषार्थत्वज्ञानं जीवस्येत्यत आह—वितथेति । गुणेषु गुणकार्येषु स्वर्गादिष्वर्थदृक् पुरुषार्थ इति ज्ञानमयं वितथाभिनिवेशोऽयथार्थाभिमानः । वस्तुतः स्वर्गादेः परमपुरुषार्थत्वाभावात् । वचोऽपि वितथं न प्रतीतार्थम् । तत्रत्यस्वर्गपदस्य मोक्षपरत्वात् । अत्र दृष्टान्तमाह—यथेति । सप्तमु प्रथमेत्युक्तेः । मनोरथे स्वप्ने वा ऐन्द्रियकम् इन्द्रियेण प्रतीयमानवित्तादिकं मृषा वृथा । इदं वित्तादिकं मम पुत्राद्युपयोगी भवतीत्यभिनिवेशो यथा तथेति योजना'—व्या.

लुब्धको विपिने कश्चित् पक्षिणां निर्मितोऽन्तकः ।
वितत्य जालं विदधे तत्र तत्र प्रलोभनम् ॥ ५० ॥

कुलिङ्गमिथुनं तत्र विचरन् समदृश्यत ।
तयोः कुलिङ्गी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥

साऽसज्जत सिचा तन्त्या महिषी कालयन्त्रिता ।
कुलिङ्गस्तां तथाऽऽपन्नां निरीक्ष्य भृशदुःखितः ॥ ५२ ॥

स्नेहादकल्पः कृपणां पर्यदेवयदातुरः ।
अहो अकरुणो देवः स्त्रिया कृपणया विभुः ॥ ५३ ॥

कृपणं माऽनुशोचन्त्या दीनया किं करिष्यति ।
कामं नयतु मां देवः किमर्द्धेनात्मनो हि मे ॥ ५४ ॥

दीनेन जीवता दुःखं मन्देन विधुरायुषा ।
कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ।
मन्दभाग्या प्रतीक्षन्ते नीडे मे मातरं प्रजाः ॥ ५५ ॥

---

पण्डिताः' इत्यादेरित्याह—अथेति । अतस्तन्मूर्खमतमिति सन्तोष्टव्यम् । स्वभावत्वादित्याह—नान्यथेति[1] ॥ ४९ ॥

अस्मिन्नेवार्थे कञ्चनेतिहासमाह-लुब्धक इति । लुब्धको मृगयुः । निर्मितः, विपिनेति शेषः । वितत्य विस्तृत्य । प्रलोभनं वञ्चनम् ॥ ५०—५१ ॥

सिचा जालेन सह यन्त्रितया तन्त्या सूत्रेण । महिषी कुलिङ्गभार्या । कालयन्त्रिता कालाधीना ॥ ५२ ॥

अकल्पोऽसमर्थः, मोचयितुमिति शेषः । पर्यदेवयत् विलपितवान् । दुःखं जीवता दीनेन क्षीणेन आत्मनोऽर्द्धेन मे मम किं प्रयोजनम् ? न किमपि । कुतः ? विधुरायुषा आयूरहितेन । आत्मनोऽर्द्धस्य नष्टत्वात् । मे प्रजाः पुत्राः ॥ ५३—५५ ॥

---

[1] शोको न कार्य इत्येतदुपसंहरति—अथेति । स्वभावो नित्यानित्यस्वभावः शोचतां शोचद्भिरन्यथाकर्तुं न शक्यत इति ज्ञात्वा अथ तस्मादन्यथाकर्तुमशक्यत्वात्, तद्विदो नित्यानित्यविदो नित्यमनित्यं चोद्दिश्य नानुशोचन्तीति योजना—व्या.

एवं कुलिङ्गं विलपन्तमारात् प्रियावियोगातुरमश्रुकण्ठम् ।
तदैव तं शाकुनिकः शरेण विव्याध कालप्रहितो निलीनः ॥ ५६ ॥

एवं यूयमपश्यन्त्य आत्मापायमबुद्धयः ।
नैनं प्राप्स्यथ शोचन्त्यः पतिं वर्षशतैरपि ॥ ५७ ॥

हिरण्यकशिपुरुवाच —

बाल एवं प्रवदति सर्वे विस्मितचेतसः ।
ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥

यम एतदुपाख्याय तत्रैवान्तरधीयत ।
ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत् सांपरायिकम् ।
ततः शोचत मा यूयं परं चात्मानमेव च ॥ ५९ ॥

---

शाकुनिकः पक्षिमारकः । कालेन अन्तकेन प्रहितः प्रेरितः । निलीनः वृक्षमूले छन्नः । **कुलिङ्गं** दीर्घतुण्डम् । 'दार्वाघाटो दारुकुट्टः कुलिङ्गो दीर्घतुण्डकः' इत्यभिधानम् ॥ ५६ ॥

अनेन प्रकृते किमभूत् ? तत्राह — **एवमिति** । आत्मापायं युष्मन्नाशं देहनाशं वा ॥ ५७ ॥

किं ज्ञातयो बालभाषितमित्युपेक्षां चक्रुरिति तत्राह— **बाल इति** । यद् देहादिकं तत् सर्वमनित्यं मेनिरे । यद् देहात्मत्वं तद् अयथोत्थितं स्वप्नजाग्रत्त्ववत् भ्रान्तिं मेनिरे । 'अहं ममाभिमानादित्वयथोत्थमनित्यकम्' इति स्मृतेः । नन्वेवं तर्हि महदादिजगतश्चित्प्रकृतेश्च भ्रान्तिकल्पितत्वमायातम् । तयोरपि सर्वान्तर्गतत्वादित्याशङ्का वाऽनेन परिहर्तव्या । तथा हि यन्महदादि तत्सर्वम् अकारवाच्यस्य हरेरनुग्रहान्नित्यम्[1] आत् परमात्मनो यथार्थत्वेन सत्यत्वेन उत्थितं सृष्टम् । चित्प्रधानस्यापि नित्यत्वं भगवन्तमन्तरेण[2] यथाऽस्वातन्त्र्येण स्थितत्वं च । तदुक्तं च — 'महदादि यथोत्थं च नित्या चापि यथोत्थिता । अस्वतन्त्रैव प्रकृतिः स्वतन्त्रो नित्य एव च । यथार्थभूतश्च पर एक एव जनार्दनः' इति । अनेन महदादेरप्यनित्यत्वादिकं नास्तीति किमु हरेरिति कैमुत्यन्यायो दर्शितः[3] ॥ ५८ ॥

सांपरायिकं मृतविषयम् ॥ ५९ ॥

---

[1] महदादीनां प्रवाहतो नित्यत्वं ज्ञेयम् । हरेस्तु स्वरूपत एव नित्यत्वम् । [2] अस्यान्वयो न ज्ञायते ।

[3] विस्मितचेतसः वृद्धानामस्माकमविद्यमानमेतादृशज्ञानं बालस्यास्तीत्याश्चर्ययुक्तचेतसः ज्ञातयो बान्धवाः सर्वं देहगेहादि अनित्यं तत्र प्रतीयमानसत्वं स्वकीयत्वादिकम् अयथोत्थितम् असत्यं मेनिर इति योजना—व्या.

क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव च ।
स्वपराभिनिवेशेन विनाऽज्ञानेन देहिनः ॥ ६० ॥

नारद उवाच —

इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ।
पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे[1] चित्तमधारयत् ॥ ६१ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे द्वितीयोऽध्यायः।

---

आत्मपराबुद्धिस्य किमिति शोको न कार्य इति तत्राह—क आत्मेति । देहादिकमपेक्ष्यात्मपरौ आक्षिप्येते । तथा हि—आत्मपरयोश्चेतनत्वेन नित्यत्वाद् देहादेः भौतिकत्वेन नश्वरत्वात् किंशब्दस्याक्षेपत्वमेव नत्वनिर्वचनीयः[2] । तर्हि 'अहं' 'परः' इति व्यवहारस्य किं मूलमिति तत्राह—स्वपरेति । स्वः परः इति दुराग्रहलक्षणमज्ञानमन्तरेण न किमपि कारणम् । तस्मादात्मनो वृद्धिः[3] । श्रीवासुदेवे दृढा मनोरतिरज्ञाननामशत्रुनाशश्चापादनीयौ पुरुषेणेति निश्चेतव्यम् । 'न हि देहादिरात्मा स्यान्न च शत्रुरुदाहृतः । अतो दैहिकवृद्धौ वा क्षये वा किं प्रयोजनम् । यस्तु देहगतो जीवः स हि नाशं न गच्छति । अतः शत्रुविवृद्धौ वा स्वनाशे शोचनं कुतः । देहादिव्यतिरिक्तौ तु जीवेशौ प्रतिजानताम् । अत आत्मविवृद्धिस्तु वासुदेवे रतिः स्थिरा । शत्रुनाशः तथाऽज्ञाननाशो नान्यः कथञ्चन' इत्यनेन तात्पर्यमवगन्तव्यमिति सिद्धम् ॥ ६० ॥

प्रकरणसमाप्ताविति शब्दः ॥ ६१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य द्वितीयोऽध्यायः

---

[1] तत्त्वे परमात्मनि—या,

[2] किंशब्दस्याक्षेपार्थत्वं न तु निरुक्त्यनर्हत्वार्थत्वमित्यर्थः । नात्र मायिमतसम्मतानिर्वचनीयत्वप्रसक्तेरवकाशः ।

[3] आत्मनो वृद्धिभूता वासुदेवे रतिः—ड

॥ अथ तृतीयोऽध्यायः ॥

नारद उवाच —

हिरण्यकशिपू राजन्नजेयमजरामरम् ।
आत्मानमप्रतिद्वन्द्वमेकराजं व्यधित्सत ॥ १ ॥

स तेपे मन्दरद्रोण्यां तपः परमदारुणम् ।
ऊर्ध्वबाहुर्नभोदृष्टिः पादाङ्गुष्ठाश्रितावनिः ॥ २ ॥

जटादीधितिभी रेजे संवर्तार्क इवांशुभिः ।
तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥

तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ।
तिर्यगूर्ध्वमधोलोकानतपद् विष्वगीरितः ॥ ४ ॥

चुक्षुभुर्नद्युदन्वन्तः सद्वीपाद्रिश्चचाल भूः
निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥ ५ ॥

तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ।
धात्रे विज्ञापयामासुर्देवदेव जगत्पते ॥ ६ ॥

दैत्येन्द्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ।
तस्य चोपशमं ब्रह्मन् विधेहि यदि मन्यसे ॥ ७ ॥

लोका न यावन्नङ्क्ष्यन्ति बलिहारास्तव प्रभो ।
तस्यायं किल सङ्कल्पश्चरतो दुश्चरं तपः ॥ ८ ॥

---

॥ अथ तृतीयोऽध्यायः ॥

बहुकोटिसंख्यातकालेनानेकसम्भारैरार्जितैरयोग्यं दुष्प्रापम्, योग्यं चानेकविषसाधनैः सुसाध्यं तूष्णींभावेनेत्यादिकं[1] हिरण्यकशिपुतपश्चरणव्याजेनाभिप्रेयतेऽस्मिन्नध्याये ।

व्यधित्सत कर्तुमैच्छत् ॥ १ ॥

संवर्तार्कः प्रलयसूर्यः । स्थानानि गमनवर्जनानि इतस्ततो यात्रां मुक्त्वा स्वस्थानानि भेजुः ॥३॥

उपशमं परिहारम् ॥ ७ ॥ बलिहाराः उपहारार्थकाः[2] ॥ ८ ॥

---

[1] यदयोग्यं तत् साधनशतैरपि दुष्प्रापं यद् योग्यं तद् विहितसाधनैः सुसाध्यमित्यभिप्रायः । तूष्णींभावेनेत्यस्यान्वयो न स्पष्टः । [2] उपहारार्पका इति स्यात् । बलिहाराः पूजाकारिणः—या.

श्रूयतां किन्त्वविदितं तथापि सन्निवेद्यते ।
सृष्ट्वा चराचरमिदं तपोयोगसमाधिना[1] ॥ ९ ॥
अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ।
तदहं वर्धमानेन तपोयज्ञसमाधिना ॥ १० ॥
कालात्मनोश्च नित्यत्वात् साधयिष्ये तथाऽऽत्मनः ॥ ११ ॥

---

किं तद् विज्ञापनम् ? अत्राह—सृष्ट्वेति । ब्रह्मा तपोज्ञानादिनेदं चराचरं सृष्ट्वा सर्वधिष्ण्येभ्यो रुद्रादिपदेभ्यः परं यन्निजासनमध्यास्ते । 'अधिशीङ्स्थासां कर्म' इति सप्तम्यर्थे द्वितीया । अहं तत् आत्मनः साधयिष्ये इत्यन्वयः । स्वनाशे दुर्घटम् ? अत्राह—कालात्मनोरिति । कालस्यात्मनश्चेतनस्य च नित्यत्वात् अविनाशात् । अन्यथा तस्यासाध्यत्वे[2] । हिरण्यकशिपोरीदृशं कर्म नाद्भुतम् । यतो ब्रह्माणमेकमन्तरेण आत्मायोग्याज्ञानेन रागादिना वा मोहिता जानन्तोऽपि स्वासदृशं कर्म चरन्तो दृश्यन्ते । तदुदितम्—'जानतामपि कर्तव्यं कर्मात्मसदृशं सदा । तत्रात्मसदृशाज्ञानाद् रागाद्यैर्वा विमोहिताः । जानन्तोऽपि ह्यसदृशं कर्म कुर्युर्ऋते विभुम् । चतुरास्यं स नायोग्यं कर्म कुर्यात् कथञ्चन[3]' इति । न चैतत् तपआदिसाध्यम् । अयोग्यत्वात् । 'तपसा विद्यया वाऽपि ज्ञानध्यानादिना तथा । व्यस्तैः समस्तैरथवा कुर्वता यत्नमुत्तमम् । संभारविक्षेपशतैर्बहुकोटिभिरेव च । न शक्यन्ते समारोढुं स्वात्मायोग्यपदं त्विति' । तस्माद् योग्यमेवानुष्ठेयं नायोग्यमिति सिद्धम् । एवं तत्त्वं चेत् तर्हि किमर्थं तपआदेर्विघ्नं कुर्वन्तीति चेन्न । तपआदीनां निष्फलत्वपरिहारार्थत्वात् । 'तथाप्याचरतां कुर्युर्दैत्यानां सुरनायकाः । विघ्नं तु तपआदीनां वैयर्थ्यस्यापनुत्तये' इति वचनात् ॥ ९–११ ॥

---

[1] तपोयज्ञसमाधिना—ग [2] अन्यस्य त्वसाध्यत्वे—च । अस्पष्टमिदम् ।

[3] जानतामिति षष्ठी तृतीयार्थे । ज्ञानवद्भिरपि आत्मसदृशमेव कर्म मया कर्तव्यमिति स्थितिः । केचन इदं योग्यमिदं नेत्यात्मयोग्यायोग्यज्ञानाभावादसदृशं कर्म कुर्वन्ति । केचन हिरण्यकादय आत्मायोग्यमिति जानन्तोऽपि रागादिना विमोहितास्तद्विस्मृत्यात्मासदृशं कर्म कुर्वन्तीति फलितार्थः ।

व्यासतत्वज्ञतीर्थास्तु, जानन्तोऽपीत्यस्य ब्रह्मज्ञानिनोऽपीत्यर्थः । आत्मसदृशकर्मज्ञानिन इत्यर्थकरणे तत्रात्मसदृशाज्ञानादित्यनेन व्याघातात् । ततश्च ज्ञानिनोऽपि केचनायोग्यस्यापि योग्यताभ्रमादसदृशं कर्म कुर्वन्ति । केचन रागाद्यैर्विमोहिता ज्ञातामप्ययोग्यतां विस्मृत्य रागजनितयोग्यताभ्रान्तिमन्तः कर्म कुर्युरिति योजयामासुः । यदा ज्ञानिनोऽप्यसदृशं कुर्वन्ति तदा किं वाच्यमज्ञानिनो हिरण्यकादय इत्यभिप्रायः ।

[4] संभारा यज्ञसाधनद्रव्याणि विक्षेपोऽग्नौ प्रक्षेपः । तथा च यागशतैरित्यर्थः—व्या.

अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ।
किमन्यैः कालनिर्धूतैः कल्पान्तैर्वैष्णवादिभिः ॥ १२ ॥

इति शुश्रुम निर्बन्धं तपः परममास्थितः ।
विधत्स्वानन्तरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १३ ॥

तवासनं हि जगतां पारमेष्ठ्यं जगत्पते ।
भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १४ ॥

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ।
परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १५ ॥

---

वैष्णवो ब्रह्मा आदिः कर्ता येषां ते तथा तैः । ब्रह्मनिर्मितैरित्यर्थः । 'ब्रह्मा स्वयम्भूर्द्रुहिणो वैष्णवो शतधृत् तथा' इति शब्दनिर्णये । तथाऽपि विष्णोः पदमत्रोच्यत इति किं न स्यात् ? अत्राह —**कालनिर्धूतैरिति** । तर्हि कियन्तं कालं स्थितैरिति तत्राह—**कल्पान्तैरिति** । मन्वन्तरादिकल्पावसानकैः । 'न यत्र माया न रजस्तमश्च' इत्यादिना विष्णोः पदस्य वैलक्षण्योक्तेः ॥ १२ ॥

निर्बन्धं असदाग्रहम् ॥ १३ ॥

तवासनं सर्वदुःखानि निरस्य स्थातुं योग्यं पदं पारमेष्ठ्यं अत्यन्तसुखकारणं यस्मात् तस्माज्जगतां भवाय ज्ञानादिगुणसमृध्द्यै, भूत्यै समृद्धस्य पुनर्ह्रासादिराहित्याय, श्रेयसे संसारान्मुक्त्ये, क्षेमाय रक्षणाय, विजयाय इन्द्रियजयाय च भवति । तस्मादत्युत्तमपदत्वाद्धिरण्यकशिपुरचीक्लृपत् । तदुक्तम्—'[1]न कश्चित्तदपेक्षते । मधुकैटभयोश्चैव हिरण्यादेस्तथैव च । नान्यो ब्रह्मपदं वाञ्छत्यृजून् योग्यान् विना क्वचित् । ततः श्रेयांसि वाञ्छन्ति न तु तत्पदमाप्तये' इति । 'भवो वृद्धिः समुद्दिष्टा श्रेयो मोक्ष उदाहृतः । वृद्धस्य नपुनर्ह्रासो भूतिरित्येव कथ्यते' इति शब्दनिर्णये । 'दिवि स्थातुं न शक्नुमः' इत्यतो हिरण्यकशिपुना ब्रह्मपदावाप्त्यै सकामं तपसि स्थितमिति ज्ञायते । यः सकामं तप आचरति तस्य तपसा तप्ते लोके स्थितिर्न घटते सन्तप्तकटाहान्तःस्थितिवत् । यस्तु निष्कामं तपः करोति तेन सुखावाप्तिः स्यात् । तदुक्तम्—'सकामं तु तपः क्रूरं लोकानां क्षोभकृद् भवेत् । इतरच्छान्तये सर्वलोकानां भवति ध्रुवम्' इति । 'ब्रह्माणमभजद् ब्रह्मपदार्थे स हिरण्यकः' इति च ॥ १४–१५ ॥

---

[1] न कश्चित्तदपेक्षत इत्याचार्यवचनम् । मधुकैटभयोरित्यारभ्य ब्रह्माण्डवचनम् ।

तं ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ।
पिपीलिकाभिराकीर्णं मेदस्त्वङ्मांसशोणितम् ॥ १६ ॥
तपन्तं तपसा लोकान् यथा भाविततं रविम् ।
विलक्ष्य विस्मितः प्राह हसंस्तं हंसवाहनः ॥ १७ ॥

ब्रह्मोवाच —

उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप ।
वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १८ ॥
अद्राक्षमहमेतत् ते हृत्सारं महदद्भुतम् ।
दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १९ ॥
नैतत् पूर्वर्षयश्चक्रुर्न करिष्यन्ति चापरे ।
निरम्बुर्धारयेत् प्राणान् को वै दिव्यसमाः शतम् ॥ २० ॥
व्यवसायेन तेऽनेन दुष्करेणामनस्विभिः ।
तपोनिष्ठेन भवता जितोऽहं दितिनन्दन ॥ २१ ॥

---

कीचकैरनिलोद्धूतत्वेन स्वनद्वेणुभिः । पिपीलिकाभिर्व्याप्तत्वात् क्वचित् शरीरावयवैर्मेदसा क्वचित् त्वचा क्वचित् शोणितेन च युक्तम् ॥ १६ ॥

तपन्तमित्यनेनापि तपसः क्रूरत्वमाह । भासा विततम् । अहो दैत्यानामयोग्ये वस्तुनि प्रयत्नातिशय इत्यालोच्य हसन् मन्दस्मितं कुर्वन् । हंसवाहनो ब्रह्मा । 'विष्णुपद्मासनावुक्तौ पण्डितैर्हंसवाहनौ' इत्यभिधानम् ॥ १८ ॥

हृदो हृदयस्य सारं दार्ढ्यम् । दंशाः सूचीमुखाः शूकाः । हि अस्थिष्वेव[1] शेरते इति यस्मात् तस्मादद्भुतम् ॥ १९ ॥

इतोऽप्यद्भुतमित्याह—नैतदिति । निरम्बुः जलपानरहितः । 'निर्निश्चयनिषेधयोः' इत्यमरः । 'स्युरेवंतु[2] पुनर्वैवेत्यवधारणवाचकाः' इत्यभिधानाद् वा इत्यनेन दिव्यशतसमास्वेकापि किञ्चिदूना न भवतीत्याह ॥ २० ॥

इनः समर्थः[3] । तेन व्यवसायेन अमनस्विभिः मनोबलरहितैः दुष्करेण दुःसाधनेन जितो वशीकृतः । 'पराभूतं वशस्थं च जितमित्युच्यते बुधैः' इति शब्दनिर्णये ॥ २१ ॥

---

[1] ते तव अस्थिष्वेव—ब. [2] स्युरेव तु—ब.

[3] व्यवसायेनेत्येतदावर्त्यते । हे व्यवसायेन व्यवसाये समर्थ । तेऽनेन व्यवसायेनाहं जितो वशीकृत इति विजयध्वजयोजना । ते तवानेन व्यवसायेन करणेन भवता कर्त्रा जितः—या.

ततस्त आशिषः सर्वा ददाम्यसुरपुङ्गव ।
मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं न च निष्फलम् ॥ २२ ॥

नारद उवाच —

इत्युक्त्वाऽऽदिभवो देवो भक्षिताङ्गं पिपीलिकैः ।
कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा ॥ २३ ॥

स तत्कीचकवल्मीकात् सह ओजोबलान्वितः ।
सर्वावयवसम्पन्नो वज्रसंहननो युवा ।
उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ २४ ॥

स निरीक्ष्याम्बरे देवं हंसवाहनमास्थितम् ।
ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ २५ ॥

उत्थाय प्राञ्जलिः प्रह्व ईक्षमाणो दृशा विभुम् ।
हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणत् ॥ २६ ॥

हिरण्यकशिपुरुवाच —

कल्पान्ते कालसृष्टेन योऽन्धेन तमसाऽऽवृतम् ।
अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ २७ ॥

---

ददामि दास्यामीतीच्छामि । मर्त्यस्य मरणशीलमनुष्यशरीरं प्राप्तस्य ते तव अमर्त्यस्य जरामरणशून्यस्य देवस्य मम दर्शनमभूद् हि (यस्मात् तस्मात्) निष्फलं नैव ॥ २२ ॥

आदेर्हरेर्भवो जन्म यस्य स तथा, विष्णुभूरित्यर्थः । सर्वस्यादौ भवतीति वा । औक्षत् प्रोक्षितवान् । दिव्यत्वमाह —**अमोघेति** ॥ २३ ॥

एधसः इन्धनात् ॥ २४ ॥ प्रह्वः प्रवणः ॥ २६ ॥

मिश्रामिश्रभेदेन द्विविधा स्तुतिर्वर्तते । तत्र हिरण्यकशिपुर्मिश्रया परोक्षात्मगतया स्तुत्या देवतातृप्तिर्भवतीति तादृश्या स्तौति[1]—**कल्पान्ता इत्यादिना** । अत्र ये चतुर्मुखस्यासंभाविता गुणाः ते तदन्तर्यामिण्येककार्यत्वेनैकस्थानस्थिते सर्वोत्तमे हरौ योज्याः । तद्योग्यास्तत्र योज्याः । न चैतावता

---

[1] यद्यपि हिरण्यकशिपुर्ब्रह्माणमेवोद्दिश्य तपस्तेपे । तथापि यदा ब्रह्मा प्रादुरभूत् तदा ब्रह्माणं तदन्तर्यामिणं हरिं च स्तौति । सर्ज्जीवस्य जयस्य तत्र विद्यमानतयोपपन्नमिदम् । उक्तं ह्याचार्यैः—'ब्रह्मणोऽप्यधिकं विष्णुं जानन्नपि हिरण्यकः । ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुव्यपेक्षया'—इति ।

आत्मना त्रिवृता चेदं सृजत्यवति लुम्पति ।
रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २८ ॥

नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ।
प्राणेन्द्रियमनोबुद्धिविकारैर्व्यक्तिमीयुषे ॥ २९ ॥

त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ।
चित्तस्य चित्तिर्मनइन्द्रियाणां पतिर्महाभूतगुणाशयेशः ॥ ३० ॥

---

स्तुतेर्भिन्नाधिकरणत्वमापन्नम् । तस्य तदधीनत्वेन नित्योपसंह्रियमाणगुणान्तर्भूतत्वेन तच्छ्रवणस्मरणाभ्यामन्तःकरणस्योल्लाससम्भवात् । तदुक्तम् —'प्रायस्तु स्तुतिशब्देषु मिश्रा वाचो हरिं विना । केचिज्जीवगुणास्तत्र तन्नियन्तुर्हरेः परे । एकस्थानैककार्यत्वाद् विष्णोः प्राधान्यतस्तथा । जीवस्य तदधीनत्वान्न भिन्नाधिकृतं वचः ' इति । प्रलयकालप्रवर्तकेण हरिणा सृष्टेनान्धेन तमसा दुर्गाभिमन्यमानेन आवृतमिदं जगत् अभिव्यनक् अभिव्यक्तं कृतवान् । स्वरोचिषा स्वसामर्थ्येन ॥ २७ ॥

आत्मना क्षोभितया त्रिवृता त्रिगुणात्मिकया तेजोबन्नात्मिकया वा प्रकृत्या चेदं जगत् सर्जनादिक्रियाविशिष्टं करोति तस्मै नम इत्यन्वयः। रजःसत्वतमोधाम्न इत्यनेन सृष्ट्यादौ रजआदिगुणानां प्राधान्यं सूचयति। पराय महत इत्यनेन 'अणोरणीयान् महतो महीयान्' इति श्रुतिसिद्धोभयविधानं संस्मारयति[1] । दृश्यविषयया ऽनया स्तुत्या किं स्यादिति नाश्रद्धेयम् । तथा हि आत्मना परमात्मना प्रेरितो वा उपादानभूतया प्रकृत्या रजःप्रधानयेदं सृजति। सत्वप्रधानतया जातैर्मन्वादिभिरिदमवति। तमःप्रधान(त)या जातेन रुद्रेण संहरति । तस्मै महते महत्त्वाभिमानिने पराय रुद्राच्छ्रेष्ठाय भगवते नमः ॥ २८ ॥

आद्याय पुरुषरूपेण जगदादौ व्यक्ताय । अन्यत्र आदिकर्ता श्रीनारायणः, तस्मात् जाताय । बीजाय व्यञ्जकाय, फलरूपायेति वा, जगदुत्पत्तौ बीजशक्तियुक्ताय वा । ज्ञानविज्ञाने एव मूर्तिः विग्रहो यस्य स तथा तस्मै । अन्यत्र ज्ञानविज्ञानयोरुपदेष्टृविग्रहाय। प्राणेन्द्रियमनोबुद्धिलक्षणैर्विकारैः सप्तदशकैर्व्यक्तिमीयुषे । ब्रह्माण्डान्तर्विराट्पुरुषतयेति शेषः । उभयत्र समम् ॥ २९ ॥

मुख्येन प्राणेन सह त्वं स्थावरजङ्गमात्मकस्य ईशिषे प्रवर्तकोऽसि। चित्तस्य चित्तिः स्मरणशक्तिप्रदः, साक्षी वा । महाभूतानां गुणानां शब्दादीनां आशयस्य अन्तःकरणस्य प्रवर्तकः । पुनर्वचनं दैनन्दिनप्रवृत्त्यर्थम् ॥ ३० ॥

---

[1] उभयविधानन्त्यं स्मारयतीति स्यात् ।

त्वं सप्ततन्तून् वितनोषि तन्वा त्रय्या चतुर्होत्रकविद्यया च ।
त्वमेक आत्माऽऽत्मवतामनादिरनन्तपारः कविरव्ययात्मा ॥ ३१ ॥
त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ।
कूटस्थ आत्मा परमेष्ठ्यजो महान् त्वं जीवलोकस्य च जीव आत्मा ॥

---

त्रय्या तन्वा[1] प्रतिमास्थानीयेन वेदत्रयेण । चतुर्होत्राख्यमन्त्रप्रकाश्यं चतुर्होत्रकं तद्विषयया विद्यया च सप्ततन्तून् सप्तक्रतून् वितनोषि विस्तृत्य करोषि । द्रव्यमन्त्रक्रियादेवतास्थत्वेन बहिरुपदेष्टृत्वेन कर्तृत्वेन कारयितृत्वेन शस्त्रेज्यास्तुतिप्रायश्चित्तादिरूपया च । 'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम्' इत्यादिश्रुतेः 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः' इति[2] । आत्मवतां आत्मज्ञानिनां प्रेष्ठः । 'आत्मा प्रेष्ठे स्वरूपे च जीवे ज्ञातरि केशवे । वायौ देहे स्वयं स्वान्ते नवसु प्रोच्यते बुधैः' इति । अनादिः कारणशून्यः । पुरातनो वा । अनन्तपारः अप्रमेयः । अव्यये हरौ आत्मा मनो यस्य स तथा । 'न भारती मेऽङ्ग मृषोपलक्ष्यते' इत्यादेः[3] । अन्यत्र अव्ययानां मुक्तानाम् आत्मा स्वामी । 'असंसार्यव्ययो मुक्त अचिरानन्द उच्यते'[4] इति च ॥ ३१ ॥

अनिमिषः इत्यनेन नित्यं जाग्रत्स्वभाव उच्यते । कूटस्थो निर्विकारः । आत्मा व्याप्तः । परमेष्ठी सर्वोत्तमः । महानजः ब्रह्मणोप्यधिक इत्यनेन सर्वोत्तमत्त्वं निर्णयति । अन्यत्र आत् जातोऽत एव महान् अव्यवधानेन तत्पुत्रत्वात् । जीवः जीवराशेः प्राणधारकः । 'जीव प्राणधारण' इति धातोः । कथं धत्त इत्यत उक्तम्—आत्मेति । इष्टादानादिकर्ता । 'अव सन्तर्पण' इति धातोः । अवतिरूपोऽयं शब्दः सामान्यविशेषाभ्यां योजनीयः ॥ ३२ ॥

---

[1] तन्वा तन्वाश्रितया त्रय्या वेदत्रयेण—या.

[2] इदं कोशोदाहरणं नातीव सङ्गतम् । यतस्तन्तुशब्दस्यैव क्रत्वर्थत्वमुपेत्य 'सप्ततन्तून् सप्तक्रतून्' इति तात्पर्यं प्रवृत्तम् । व्यासतत्वज्ञतीर्थास्तु सप्ततन्तून् क्रतूनिति तात्पर्यपाठं स्वीकृत्य व्याचक्रुरिति तन्मते सङ्गच्छेत ।

[3] न व्येति विरुद्धतया गच्छति आत्मा मनो यस्य स तथा । 'न कर्हिचिन्मे मनसो मृषा गतिः' इत्यादेरिति श्लिष्टतरं भवति ।

[4] तन्वा भगवतः प्रतिमास्थानीयया त्रय्या वेदत्रयेण । स त्रिभिर्विधीयत इति श्रुतेः । चतुर्होत्रकविद्यया च ब्रह्म-होत्रध्वर्याग्नीध्रलक्षणर्त्विक्चतुष्टयव्यापारप्रतिपादकया कल्पसूत्रादिविद्यया च सप्ततन्तून् क्रतून् वितनोषि । आत्म-वतां ब्रह्मज्ञानिनामात्मा प्रेष्ठः । अनादिरादिशून्यः । अनन्तपारः अनन्तान् संसारान् पारयतीत्यनन्तपारः । अव्यये हरावात्मा यस्य सः—व्या.

त्वत्तः परं नापरमप्यनेजदेजच्च किञ्चिद् व्यतिरिक्तमस्ति ।
विद्याकलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत् त्रिपृष्ठः ॥ ३३ ॥

---

इदानीं भगवत्येव सम्भाव्यमानैर्विशेषणैर्विशिष्टं तदन्तर्यामिणमभिष्टौति—त्वत्त इति । परम् अतीतम् अपरम् एष्यत् अपि वर्तमानं यत् किंचित् अनेजत् स्थावरम् । एजत् जङ्गमं च वस्तु तत् सर्वं त्वत्तो व्यतिरिक्तं नास्ति । त्वय्येवान्तर्बहिश्च व्याप्तत्वात् । त्वामन्तरेण स्वातन्त्र्येण स्थितं नास्तीत्यर्थः । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेः । 'सर्वं खल्विदं ब्रह्म' इति च। 'परावरेषु यस्मात् त्वं व्याप्तो विष्णुः सनातनः । तस्मान्न व्यतिरिक्तस्त्वमित्याहुर्वेदवादिनः[1]' इत्यतः, त्वत्तो भिन्नं नास्ति किन्तु त्वमेवेत्यर्थो न घटत इति । अत उक्त एवार्थः । ज्ञानं वेदादिविद्ययैव, तदवाप्तिरपि तस्यास्त्वच्छ्रनावाश्रितत्वात् त्वदनुग्रहमन्तरेण सुशका न स्यादित्यभिप्रेत्याह—विद्येति । विद्याश्च कलाश्च विद्याकलाः परविद्याऽपरविद्येति ते तनवः ते वपुषि स्थितत्वात् तथोच्यन्ते । कलाः चतुःषष्टिलक्षणा वा । विद्याकला वेदाङ्गानीत्यन्यथाप्रतीतिनिरासायाचार्यैः 'विद्याश्च कलाश्च' इति विगृहीतम् । एतस्मिन्नर्थे 'महाविद्याः कलाश्चैव त्वत्तनावाश्रिता यतः । विद्यातनुरिति प्राहुरतस्त्वां तत्त्ववेदिनः' इति मानं चोदाहरन्ति । तस्मादयमेवार्थः । इदं च माहात्म्यं हरेरेव युक्तमित्याह—हिरण्यगर्भेति । हिरण्यमण्डं गर्भे यस्य स तथा । गर्भीकृतानन्तब्रह्माण्डत्वात् तन्नाम तवैव युक्तम् । 'हिरण्यकोशं रजसा परीवृतम्' इति श्रुतेः । हिरण्मयब्रह्माण्डोदराभिव्यक्तत्वाद्वा तन्नामाऽसि । निर्गुणस्य हरेरेते गुणाः कथं संभवेयुः ? अत्राह—बृहदिति । गुणपूर्तित्वाद् बृहद् ब्रह्म । 'अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः । ननु तर्हीदं शबलं किं न स्यात् ? अत्राह—त्रिपृष्ठ इति । जाग्रदाद्यवस्था अतिक्रम्य स्थितत्वात् त्रिपृष्ठ इत्युच्यते । त्रयाणां लोकानां पृष्ठे वर्तमानः इत्यपव्याख्याननिरासाय तुरीय इत्याचख्युराचार्या इति । चतुर्मुखादप्यधिकं विष्णुं जुनता हिरण्यकशिपुना तदन्तर्यामियोग्यगुणैरयं ब्रह्मा न स्तूयते किन्त्वन्तर्यामी स्तूयते इति ज्ञापनाय[2] । तदुक्तम् —'ब्रह्मणोप्यधिकं विष्णुं जानन्नपि हिरण्यकः । ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुविवक्षया' इति। अत्र बृहच्चासि महत्तत्त्वात्मकं चासि इत्येकदेशीयैर्व्याख्यातम् । तत् संप्रदायज्ञैः हरेर्महत्तत्त्वात्मकगुणत्वेन सङ्गच्छत इति निरूप्य 'ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुविवक्षया' इत्युक्तत्वात् न च तद्व्यापित्वेन तदात्मकत्वमुच्यत इति वाच्यम्, तर्ह्ययं व्याख्याता चतुर्मुखस्य तदभिमानित्वेन घटतां

---

[1] परावरेषु यस्मात् त्वं व्याप्तो विष्णो सनातन । तस्मान्न व्यतिरिक्तं त्वदित्याहुर्वेदवादिनः—ह

[2] ज्ञापनाय च त्रिपृष्ठः तुरीय इत्युदितमाचार्यैरित्यभिप्रायः ।

**व्यक्तं विभो स्थूलमिदं शरीरं येनेन्द्रियप्राणमनोगुणांस्त्वम् ।**
**भुङ्क्ते स्थितो धामनि पारमेष्ठ्ये अव्यक्त आत्मा पुरुषः पुराणः ॥**
**अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ।**
**चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३५ ॥**

---

तस्याप्युक्तदोषानिस्तारादिति[1] ॥ ३३ ॥

ज्ञानानन्दादिलक्षणगुणमूर्तिं निरूप्याधुनाऽव्यक्तमूर्तिं निरूपयति—**व्यक्तमिति** । हिरण्यगर्भ इत्यनेन ब्रह्माण्डस्य शरीरस्थानीयत्वं सूचितम् । तत्र तिष्ठन् हरिः सुखलक्षणान् गुणान् भुङ्क्ते न तु देवदत्तवद् दुःखलक्षणानित्यतो वाह—**व्यक्तमिति** । पारमेष्ठ्ये धामनि वैकुण्ठादिस्थाने, सत्यलोके वा, स्वरूपभूते महिम्नि वा, स्थितः पुराणः पुरुषः त्वं येन शरीरेणेन्द्रियप्राणमनसां गुणान् (शुभ) विषयानेव भुङ्क्ते न तु दुःखलक्षणान् ? कुत एतत् ? अत्राह—**आत्मेति** । 'एष ह्यानन्दमादत्तेऽत आत्मा' इति श्रुतेः आनन्दस्वभावत्वात् । तर्ह्येतद्विषयज्ञानं कथं नोत्पद्यत इति तत्राह—**अव्यक्त इति** । 'तदव्यक्तमाह हि' इति सूत्रात् । हे विभो तदिदं व्यक्तं ब्रह्माण्डलक्षणं तव स्थूलशरीरम्, आचक्षत इति शेषः । यद्वाऽनेन ब्रह्माणमेव तद्योग्यैर्विशेषणैः स्तौति । तथा हि—पुरं शरीरमणतीति पुराणः । आत्मेत्यभिधानादात्मा चतुर्मुखः । अवतारेण व्यक्तिर्नास्तीत्यव्यक्तः । जगत्सृष्ट्याद्यैश्वर्यलक्षणान् गुणान् । इतरत् स्पष्टम् ॥ ३४ ॥

स्थावरजङ्गमात्मकं जगत् त्वद्व्यतिरिक्तं नास्ति । त्वया व्याप्तत्वादित्यर्थतो व्याप्तिरुक्ता । तदिदं कीदृशेन रूपेण व्याप्तमिति मन्दाशङ्कापरिहाराय स्पष्टमाह—**अनन्तेति** । अनेन परिच्छिन्नस्य सर्व-

---

[1] असपष्टमिदं वाक्यजातम् । अत्रैवमभिप्रायो भाति–अत्र बृहच्चासि महत्तत्त्वात्मकं चासि इत्येकदेशीयैर्व्याख्यातम् । तत् संप्रदायज्ञैर्हरेर्महत्तत्त्वात्मकत्वं गुणत्वेन न सङ्गच्छत इति निरूप्य, 'ब्रह्माणं तद्गुणैः स्तौति तद्गविष्णुविवक्षया' इत्युक्तत्वाच्च, परित्यज्य गुणपूर्त्यर्थकतया व्याख्यातम् । न च तद्व्यापित्वेन तदात्मकत्वमुच्यते, स च गुण एवेति वाच्यम् । तर्हीयं व्याख्या चतुर्मुखविषयत्वेन घटेत । तथाप्युक्तदोषानिस्तार एव । न हि हरेः परिच्छिन्नमहत्तत्त्वव्यापित्वं गुणाय भवति । अनन्तो हि सः । तथा च भगवत्पादसम्मतं विष्णुस्तुतिपरत्वं व्याहन्येत । अतो बृहद् गुणपूर्णमित्येवार्थो वाच्य इति ।

अत्रेदं विभावनीयम् । अनेन वाक्यजातेन श्रीभागवतस्य माध्वानि व्याख्यानान्तराण्यासन् । तत्रत्यगुणदोषान् विमृश्य तत्पश्चात्तनैर्व्याख्यानान्तराणि कृतानि । एतानि सर्वाणि श्रीविजयध्वजतीर्थापेक्षया प्राक्कालानीति । एषु व्याख्यानेषु श्रीयादवेन्द्रतीर्थीयं श्रीमदनन्ततीर्थीयं च खण्डश उपलभ्येते । श्रीविजयध्वजतीर्थैः कण्ठत उक्तं श्रीमहेशतीर्थव्याख्यानं नाधुनाप्युपलब्धम् । अन्येषां व्याख्यातॄणाम् माध्वानां नामापि न ज्ञायत इति महदिदं विषादस्थानम् ।

यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ।
भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥ ३६ ॥
नान्तर्बहिर्दिवानक्तमन्यस्मादपि चायुधैः ।
न भूमौ नाम्बरे मृत्युर्न नरैर्न मृगैरपि ॥ ३७ ॥
व्यसुभिर्वासुमद्भिर्वा सुरासुरमहोरगैः ।
अप्रतिद्वन्द्वता युद्धे ऐकपत्यं च देहिनाम् ॥ ३८ ॥
सर्वेषां लोकपालानां महिमानं तथाऽऽत्मनः ।
तपोयोगप्रभावेन यो न रिष्यति कर्हिचित् ॥ ३९ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे तृतीयोऽध्यायः ।

---

स्यापरिच्छिन्नाद्धरेर्बहिष्ट्वं युक्तिविरुद्धमित्युक्तं भवति । 'तम आसीत्तमसा गूढमग्रे' इति श्रुतेः प्रकृत्या व्याप्तत्वप्रतीतेः कथं हरेरेव विशिष्योक्तिर्घटत इति तत्राह—**चिदचिदिति** । शक्तिपदस्य द्विरावृत्तिः कर्तव्या । 'शक्यत्वात् शक्तयो भार्याः' इति वचनात् । उभयविधा या शक्तिः प्रकृतिः तस्या या कार्येषु शक्तिः तस्या अपि भगवच्छक्त्यविनाभूतत्वात् तद्व्याप्तिस्तन्नियतेत्यत एव युक्तायेत्युक्तम् । न चानेन गुणभूतत्वं हरेरिति वाच्यम् ? शिष्येणोपाध्याय आगत इत्यत्रोपाध्यायप्राधान्यवदुपपत्तेः । ननु लोके प्रतिवस्त्वेकनियतत्वादर्शनात् चिदचिदात्मकप्रपञ्चे कस्यचित् तदनियतत्वसंभवेन स्वातन्त्र्येण सर्वव्याप्तत्वं हरेः कथं युज्यत इत्यतो वाह—**चिदचिदिति** । 'द्रव्यं कर्म च कालश्च' इत्यादेः परमाणुमात्रवस्तुनोऽपि भगवदनियतत्वासंभवात् । एतादृशशक्तिरस्यास्तीति कुत इत्यत उक्तम्— **भगवत इति** । उक्तार्थं पदम् । 'भूयिष्ठां ते नमउक्तिं विधेम' इति वाक्यार्थं स्मरता हिरण्यकेन नम इत्युक्तम् । तदुक्तेः फलाधिकत्वात् ॥ ३५ ॥

किं बहुनोक्तेन त्वदभीष्टं वदेत्याशङ्कित आह—**यदीति** । विविधत्वेन सृष्टेभ्यः । अन्यस्मादपि कालाद् अथवा भावाद् अवयवविशिष्टात्[1] । भूतेभ्य इत्युक्तेप्यन्येभ्यः किमित्यतो विशिनष्टि[2] —**न नरैरिति** । व्यसुभिः विगतप्राणैः पाषाणादिभिः । असुमद्भिः ग्रहादिभिः । ऐकपत्यं ऐकाधिपत्यम् ॥ ३६–३८ ॥

(ग्रहादिभिः corrected by hand: ग्रा)

महिमानम्, वृण इति शेषः । आत्मनः तव यो महिमा स यथा न रिष्यति न नश्यति तथा

---

[1] अन्यस्माद् देहावयवभिन्नैरायुधैः खड्गादिभिः—व्या.

[2] असष्टमिदम् । त्वद्विसृष्टेभ्य इत्युक्तमेव प्रपञ्चयति-न नरैरिति—या.

॥ अथ चतुर्थोऽध्यायः ॥

नारद उवाच —

एवं वृतः शतधृतिः हिरण्यकशिपोरथ ।
प्रादात् तत्तपसा प्रीतो वरान् तस्य सुदुर्लभान् ॥ १ ॥

ब्रह्मोवाच —

तातेमे दुर्लभाः पुंसो यान् वृणीषे वरान् मम ।
तथाऽपि वितराम्यङ्ग वरान् यदपि दुर्लभान् ॥ २ ॥

ततो जगाम भगवानमोघानुग्रहो विभुः ।
पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥

---

मम महिमा अस्तु । यो महिमा यथा कर्हिचित् न रिष्यति तथाऽऽत्मनो मम महिमा न नश्यत्विति च ॥ ३९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

वरदानादिसंभूतं लवणाब्धिजलवृद्धिह्रासवत् क्षणिकं भगवदभक्तैश्वर्यम्, श्रीनारायणप्रसादाविर्भूतमनन्तकालीनं शाश्वतं स्यात्, तदेवापाद्यं बुभूषुभिरित्यादितात्पर्यं निरूप्यते कतिपयेष्वध्यायेषु ।

तत्र हिरण्यकशिपवे ब्रह्मवरदानप्रकारं तेनास्य सर्वस्य त्रिजयप्रकारं च निरूपयति—**एवं वृत इति** । अथशब्देन न केवलं ब्रह्मणो वरदानमेवोच्यते । अपि तु हिरण्यकशिपुविषया कथा साकल्येन कथ्यत इति सूचयति ॥ १ ॥

मम सकाशात् । यदपि यद्यपि । दुर्लभान् अन्ततो दुःखप्रापकत्वात् । 'दुरशोभनदुःखयोः' इति यादवः ॥ २ ॥

भगवान् पूज्यः । अत्र प्रतिक्षणं दृष्टश्रुतविस्मरणशीलानां मन्दानां स्फुरणार्थं कृतव्याख्यानां पदानां पुनरपि तथावचनं न दोषाय । तदर्थं हीदं प्रवृत्तमिति[1] । अमोघानुग्रहः, योग्यानामिति शेषः ॥ ३ ॥

---

[1] भगवच्छब्दस्य पूज्यार्थत्वं प्रागुक्तमपि पुनरुच्यते मन्दबोधायेति यादवः ।

एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ।
भगवत्यकरोद् द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥
स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ।
देवासुरमनुष्येन्द्रान् गन्धर्वगरुडोरगान्[1] ॥ ५ ॥
सिद्धचारणविद्याध्रान् ऋषीन् पितृपतीन् मनून् ।
यक्षरक्षःपिशाचेशान् प्रेतभूतपतीनपि ॥ ६ ॥
सर्वसत्वपतीन् जित्वा वशमानीय विश्वजित् ।
जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥
देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ।
महेन्द्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ ८ ॥
त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ।
यत्र विद्रुमसोपाना महामारकता भुवः ॥ ९ ॥
यत्र स्फटिककुड्यानि वैदूर्यस्तम्भपङ्क्तयः ।
यत्र चित्रवितानानि पद्मरागासनानि च ॥ १० ॥

---

समग्रैश्वर्यादिगुणरत्नाकरे परे द्वेषमकरोदसुरावेशात्, जयांशत्वेन स्वतो भक्तोऽपीति तात्पर्यम् । तदुक्तम्—'स्वतो भक्ता हिरण्याद्याः परावेशाद्धरौ द्विषः' इति । 'परोऽरिपरमात्मनोः' इत्यभिधानादत्र[2] परः शत्रुरसुरः तदावेशादित्यर्थः । सर्वसत्वपतीन् सिंहादीन् बलश्रेष्ठान् वा । किं बहुना ? विश्वं चराचरं विजितवानिति । तेजसा प्रभावेण सह जहार ॥ ४–७ ॥

त्रिविष्टपं स्वर्गम् । स्वर्गे त्रीणि स्थानानि सन्ति । ततोऽपि श्रेष्ठं महेन्द्रभवनम् अमरावती नाम, तत्स्थानापेक्षया साक्षात् तुरीयमित्युच्यते । 'साक्षात् प्रत्यक्षतुर्ययोः' इत्यभिधानात् । अत एवाखिलर्द्धिमदित्युक्तम् । साक्षात् प्रत्यक्षम् अध्युवास इत्यनेन वा सङ्गमयितव्यम् । त्रीणि विष्टपानि स्थानानि सकलसमृद्धिमन्ति अस्मिन्निति त्रिविष्टपशब्दार्थपर्यालोचनयाऽयमर्थः सम्पद्यते । त्रिदिवपदस्याप्ययमेवार्थः । अन्यथा त्रिशब्दस्य गतिर्वक्तव्येति ॥ ८ ॥ सोपानं आरोहावरोहलक्षणं कुट्टिमम् ॥ ९ ॥

वितानं उपरि पिधानवस्त्रम् ॥ १० ॥

---

[1] गन्धर्वगरुडाः गन्धर्वश्रेष्ठाः । यद्वा गरुडजातीयाः पक्षिणः—व्या. [2] तात्पर्यवचने परावेशादित्यत्रेत्यर्थः ।

पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ।
कूजद्भिर्नूपुरैर्देव्यः शब्दयन्त्य इतस्ततः ।
रत्नस्थलीषु पश्यन्ति सुदतीः सुन्दरं मुखम् ॥ ११ ॥

तस्मिन् महेन्द्रभवने महासुरो महाबलो निर्जितलोक एकराट् ।
रेमेऽभिवन्द्याङ्घ्रियुगः सुरादिभिः प्रतापितैरूर्जितचण्डशासनः ॥१२॥

तमङ्ग मत्तं मधुनोरुगन्धिना विवृत्तताम्राक्षमशेषधिष्ण्यपाः ।
उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥

जगुर्महेन्द्रासनमोजसाऽऽस्थितं विश्वावसुस्तुम्बुरुरस्मदादयः ।
गन्धर्वसिद्धा ऋषयोऽस्तुवन् मुहुर्विद्याधरा अप्सरसश्च पाण्डव ॥ १४ ॥

स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ।
इज्यमानो हविर्भागानग्रहीत् स्वेन तेजसा ॥ १५ ॥

---

सुदतीः प्रशस्तदन्तपङ्क्तयः स्त्रियः ॥ ११ ॥

त्रिभिः आदित्यवसुरुद्रैः मरुदादिदेवानामेष्वन्तर्भावविवक्षया त्रिधा भिन्नैः । तदुक्तम्— 'आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च साध्याश्चैव च तद्गताः[1] । अतस्त्रय इति प्रोक्ताश्चत्वारो[2] मानुषाः स्मृताः ' इति । 'उपायनं ददुः सर्वे विना देवान् हिरण्यके ' इति । वचनात् न ब्रह्मविष्णुमहेश्वरैः इत्यर्थो ग्राह्यः । किञ्चात्रेदं तात्पर्यम्—तथा हि द्विविधा देवाः । यज्ञभागभुजस्तदभुज इति । तत्र प्रथमे त्रिधा भिन्नाः, जातिभिन्नत्वात् मन्त्रेणाह्वानेन समूहेनागमनाच्च । चरमेषु सुरशब्दमात्रं वर्तते । तदन्तेवासिवद् वर्तमानाः । 'अयज्ञभागेष्वपि तु सुरशब्दः प्रयुज्यते । यज्ञभागभुजस्त्वेव त्रय इत्यभिशब्दिताः ' इति वचनादयं विशेषः कल्प्यत इति । इतोऽप्यत्र त्रित्वसंख्ययाऽऽदित्यादय उच्यन्त इत्यङ्गीकर्तव्यम् । दैत्यस्य देवोपास्यत्वे सदा सद्यशोभाजामयशः स्यात् । तदनुपपन्नम् । प्रमाणविरोधात् । तदितरेषामुभयभाक्त्वमितीश्वरक्लृप्तमिदमिति । 'यत्र क्व च यशःस्थानमन्येषामिति केशवः । सर्वत्रापि तु देवानामित्यन्यान् पूजयेत् क्वचित्[3] ' इत्युक्तेश्च । 'योगः सन्नहनः ' इत्यभिधानादणिमादिनानोपायस्थानीभूतः ॥ १३ ॥

---

[1] साध्यायाश्चैव तद्गताः—ह

[2] मानुषाः ब्रह्मक्षत्रियवैश्यशूद्रभेदेन चत्वारो यतोऽतः क्वचिच्चतस्रशब्दोक्ता इत्यर्थः—या.

[3] इदं च तात्पर्यवचनं 'निर्वैराय प्रशान्ताय .... .... ' इत्यदिपद्य (२९) सङ्गततया यादवार्यव्यासतत्वज्ञतीर्थैश्च व्याख्यातम् ।

अकृष्टपच्या तस्यासीत् सप्तद्वीपवती मही ।
तथा कामदुघा द्यौश्च नानाश्चर्यपदं नभः ॥ १६ ॥

रत्नाकराश्च रत्नानि तत्पत्न्यश्चोहुरूर्मिभिः ।
क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥ १७ ॥

शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान् द्रुमाः ।
दधार लोकपालानामेक एव पृथग् गुणान्[1] ॥ १८ ॥

स इत्थं निर्जितककुबेकराड् विषयान् प्रियान् ।
यथोपजोषं भुञ्जानो नातृप्यदजितेन्द्रियः ॥ १९ ॥

एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ।
कालो महान् व्यतीयाय ब्रह्मशापमुपेयुषः[2] ॥ २० ॥

तस्योग्रदण्डसंविग्नाः सर्वे लोकाः सपालकाः ।
अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥

तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ।
यद् गत्वा न निवर्तन्ते शान्ताः संन्यासिनोऽमलाः । ॥ २२ ॥

इति ते संयतात्मानः समाहितधियोऽमलाः ।
उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥ २३ ॥

ओं नमो भगवते महापुरुषाय महात्मने ।
विशुद्धानुभवानन्दसन्दोहाय यतोऽभयम् ॥ २४ ॥

तेषामाविरभूद् वाणी अरूपा मेघनिस्वना ।
सन्नादयन्ती ककुभः साधूनामभयङ्करी ॥ २५ ॥

---

अकृष्टपच्या उल्लेखनमन्तरेण सस्यादिपरिपाकोपेता ॥ १६ ॥
तत्पत्न्यः तेषां समुद्राणां पत्न्यो नद्यः । क्षारं लवणम् ॥ १७-१८ ॥
यथोपजोषं यथासुखम्[3] ॥ १९ ॥ यतो यस्माद् हरेरभयं भवति तस्मा इति ॥ २४ ॥
अरूपा अशरीरिणी ॥ २५ ॥

---

[1] गुणान् वर्षणतापनशोषणादीन्—व्या. [2] ब्रह्मशापं सनकादिशापम्—व्या.
[3] यथोपजोषं यथाप्रीति—या. यथाकामम्—व्या.

मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ।
मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २६ ॥

ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य यत् ।
तस्य शान्तिं करिष्यामि कालस्तावत् प्रतीक्ष्यताम्[1] ॥ २७ ॥

वे दे यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ।
धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २८ ॥

निर्वैराय प्रशान्ताय स्वसुताय महात्मने ।
प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २९ ॥

नारद उवाच —

इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ।
न्यवर्तन्त गतोद्वेगा मेनिरे चासुरं हतम् ॥ ३० ॥

तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः
प्रह्लादोऽभून्महान् तेषां गुणैर्महदुपासकः ।
ब्रह्मण्यः शीलसम्पन्नः सत्यसन्धो जितेन्द्रियः ॥ ३१ ॥

आत्मवत् सर्वभूतानामेकः प्रियसुहृत्तमः ।
दासवत् सन्नतार्यांघ्रिः पितृवद् दीनवत्सलः ॥ ३२ ॥

भ्रातृवत् सदृशे स्निग्धो गुरुष्वीश्वरभावनः ।
विद्यार्थरूपजन्माढ्यैर्मानस्तम्भविवर्जितः ॥ ३३ ॥

---

मद्दर्शनं मद्विषयज्ञानम् ॥ २६ ॥

यस्य वेदादिषु विद्वेषः स आशु साधनसामग्र्याम् (सत्यां विनश्यति) ॥ २८ ॥

आत्मवत् परमात्मवत् । 'अन्येषां हरिसाम्यं तु किञ्चित् साम्यमुदीरितम् । सम्यक्साम्यं तु मत्स्यादेरिति शास्त्रस्य निश्चयः[2] ' इति वचनादत्र हरिसाम्यकथनं तात्पर्यादवगन्तव्यम् ॥ ३२ ॥

मानस्तम्भविवर्जितः अभिमाननिमित्तस्तम्भदोषरहितः ॥ ३३ ॥

---

[1] प्रतीक्षताम्—ग [2] इदं च तात्पर्यवचनं 'यस्मिन् महागुणा राजन् ........' इत्यादिश्लोक(३५)सङ्गततया यादवार्यैर्व्यासतत्वज्ञतीर्थैश्च व्याख्यातम् ।

नोद्विग्नचित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ।
दान्तेन्द्रियप्राणशरीरधीः सदा प्रशान्तकामो रहितासुरोऽसुरः ॥ ३४ ॥

यस्मिन् महागुणा राजन् गृह्यन्ते कविभिर्मुहुः ।
न तेऽधुनाऽभिधीयन्ते यथा भगवतीश्वरे ॥ ३५ ॥

यं साधुगाथासदसि[1] रिपवोऽपि सुरा नृप ।
प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः ॥ ३६ ॥

गुणैरलमसङ्ख्येयैर्माहात्म्यं तस्य सूच्यते ।
वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३७ ॥

न्यस्तक्रीडनको बालो जडवत् तन्मनाः सदा ।
कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३८ ॥

आसीनः पर्यटन्नश्नन् शयानः प्रपिबन् ब्रुवन् ।
नानुसन्दध एतानि गोविन्दपरिरम्भितः ॥ ३९ ॥

क्वचिद् रोदिति गोविन्दचिन्ताचञ्चलचेतनः ।
क्वचिद्धसति तच्चिन्ताह्लाद उद्गायति क्वचित् ॥ ४० ॥

नदति क्वचिदुत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित् तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४१ ॥

क्वचिदुत्पुलकस्तूष्णीमशेषस्पर्शनिःस्पृहः ।
अस्पन्दप्राण आनन्दसलिलामीलितेक्षणः ॥ ४२ ॥

---

गुणेषु शब्दादिषु । शरीरस्य दान्तत्वमुपवासादिना । रहितासुरः असुरस्वभावकर्मरहितः । जात्या असुरः ॥ ३४ ॥

'यथा भगवतीश्वरे' इत्यत्रापि 'अन्येषां हरिसाम्यं तु किञ्चित् साम्यमुदीरितम्' इत्यादिप्रमाणमित्यत्रापि ज्ञातव्यमिति[2] ॥ ३५ ॥ प्रतिमानं दृष्टान्तम् ॥ ३६ ॥ कृष्णाख्यो ग्रहः, तेन वशीकृतमनाः ॥ ३८ ॥ अनुसन्दधे सस्मार ॥ ३९ ॥ तद्भावनायुक्तः तस्य श्रीनारायणस्य ध्यानोपेतः । तन्मयस्तत्प्रधानः ॥ ४१ ॥ स्पर्शेषु विषयेषु स्पृहारहितः । अस्पन्दप्राणः प्राणचेष्टारहितः । आनन्दसलिलेन सन्तोषाश्रुजलेन निमित्तेन किञ्चिन्निमीलितनेत्रः ॥ ४२ ॥

---

[1] साधुकथायुक्तायां सभायामित्यर्थः—या.    [2] प्रमाणमिति ज्ञातव्यमिति पेशलम् ।

स उत्तमश्लोकपदारविन्दयोर्निषेवयाऽकिञ्चनसङ्गलब्धया ।
तन्वन् परां निर्वृतिमात्मनो मुहुर्दुःसङ्गहीनः स्वमनःशमं व्यधात् ॥

तस्मिन् महाभागवते महाभागे महात्मनि ।
हिरण्यकशिपू राजन् अकरोदघमात्मजे ॥ ४४ ॥

युधिष्ठिर उवाच —

देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ।
यदात्मजाय शुद्धाय पिताऽधात् साधवे अघम् ॥ ४५ ॥

पुत्रान् विप्रतिकूलांश्च पितरः पुत्रवत्सलाः ।
उपालभन्ते शिक्षार्थं नैवाघमपरे यथा ॥ ४६ ॥

किमुतानुवशान् साधून् तादृशान् गुरुदेवतान् ।
एतत् कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ।
पितुः पुत्राय यद् द्वेषो मरणाय प्रयोजितः ॥ ४७ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्थोऽध्यायः ।

---

अकिञ्चनानां महतां सतां सेवालक्षणसङ्गेन प्राप्तया ॥ ४३ ॥

अघं मरणलक्षणं व्यसनम्[1] ॥ ४४ ॥

'विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि' इति स्वपृष्टं कथान्तरासक्त्या नारदेनापरिहृतं जानन् युधिष्ठिरः पुनरपि '.... राजन् अकरोदघमात्मजे' इति प्रसक्तं श्रुत्वा तदेव पृच्छति — **देवर्ष इति** । पुत्रस्य मरणकारणमसुरकर्म, न तु शास्त्रीयमिति ज्ञापनाय साधवे अघम् इति संहिताकार्यं न कृतम् ॥ ४५ ॥ अपरे शत्रवः ॥ ४६ ॥

मा

विधम परिहर । पुत्राय प्रयोजितो विद्वेषः पितुर्मरणायाभूदिति यत् तस्मात् कौतूहलम् ॥ ४७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य चतुर्थोऽध्यायः

---

[1] अघं मरणान्तिकं द्रोहम्—या । अघमपराधम्—व्या.

॥ अथ पञ्चमोऽध्यायः ॥

नारद उवाच —

पौरोहित्याय भगवान् वृतः काव्यः किलासुरैः ।
शण्डामर्कौ सुतौ तस्य दैत्यराजगृहान्तिके ॥ १ ॥

तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ।
पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥

यत् तत्र गुरुणा प्रोक्तं शुश्रुवे न पपाठ ह[1]
न साधु मेने मनसा स्वरूपासद्ग्रहाश्रयम् ॥ ३ ॥

एकदाऽसुरराट् पुत्रमङ्कमारोप्य पाण्डव ।
पप्रच्छ कथ्यतां वत्स मन्यते साधु यद् भवान् ॥ ४ ॥

---

॥ अथ पञ्चमोऽध्यायः ॥

हिरण्यकशिपुप्रह्लादसंवादच्छलेन भक्तिस्वरूपं हरेर्निरतिशयस्वातन्त्र्यं च निरूपयत्यस्मिन्नध्याये । काव्यः शुक्रः । शण्डश्च मर्कश्च शण्डामर्कौ । तस्य शुक्रस्य । दैत्यराजगृहान्तिके स्थित्वा ॥१॥ राज्ञा हिरण्यकशिपुना ॥ २ ॥

अपाठस्य विशेषणभूतेन हेत्यनेन सूचितं हेतुमाह—**नेति** । असाधुत्वे किं कारणम् ? अत्राह —**स्वरूपेति** । 'स्वातन्त्र्यात् स्व इति प्रोक्तः' इत्यतः स्वस्य स्वतन्त्रस्य हरेः रूपस्य असत्त्वं शून्यत्वं गृह्णातीति, 'निराकारो हरिः' इति यः पक्षः स आश्रयो यस्य तत् तथा । निराकारपक्षविषयत्वादित्यर्थः । प्रपञ्चस्वरूपस्यासद्ग्रहः शून्यत्वप्रतिपादकः शून्यवादः । स आश्रयो यस्य तत् तथा । अद्वैतविषयत्वादित्यर्थ इति वा[2] । जीवपरस्वरूपयोः असत् पृथगभावं गृह्णातीति स्वरूपासद्ग्रहः जीवपरमात्मानावभिन्नौ इति यः सिद्धान्तः, स आश्रयो यस्य तत् तथा । अद्वैतविषयत्वादित्यर्थः, इति वा । स्वरूपासद्ग्रहः औत्पत्तिकदुराग्रहः अवैष्णवपक्षपातः स आश्रयो यस्य तत् तथा । वैष्णवसिद्धान्तविरुद्धत्वादित्यर्थ इति वा । विन्यासभेद एवायम् । तात्पर्यतस्त्वेक एवेति ॥ ३ ॥

---

[1] न पपाठ तु–या । तथा हि तद्व्याख्या—अपाठे हेतुः न साध्विति । तुशब्दो हि यस्मादित्यर्थे । कुतो न साधु मेने इत्यत उक्तं स्वरूपेति । स्वरूपतो वस्तुनोऽसद् यत् स्वातन्त्र्येण कर्तृत्वं आत्मनस्तद्विषये ग्रहो दुराग्रहः स एवाश्रयो यस्य—इति । [2] शून्यवादविषयत्वादिति स्यात् ।

प्रह्लाद उवाच —

तत् साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ।
हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

नारद उवाच —

श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमीहिताः ।
जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः ॥ ६ ॥

सम्यग् विधार्यतां बालो गुरुगेहे द्विजातिभिः ।
विष्णुपक्षप्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥ ७ ॥

गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः ।
प्रशस्य श्लक्ष्णया वाचा समपृच्छन्त सामभिः ॥ ८ ॥

वत्स प्रह्लाद भद्रं ते सत्यं कथय मा मृषा ।
बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥

---

हे असुरवर्य असद्ग्रहात् विषयाभिनिवेशात् समुद्विग्नधियां परवशीकृतबुद्धीनां देहिनां तत् साधु संसारनिर्मूलसाधनं मन्य इत्यन्वयः । किं तदिति तत्राह —हित्वेति । आत्मपातं स्वस्य निरयपातम् अन्धमज्ञानं यत् तस्य कूपं निधानस्थानं गृहं हित्वा वनं सज्जनसङ्गमलक्षणं गतः ॥ ५ ॥

सज्जनशिक्षार्थं प्रह्लादेन तत्वमुक्तं, न तु तं ग्राहयितुम् । तस्यासुरावेशेन दुराग्रहगृहीतत्वात् । तत्फलमाह—श्रुत्वेति । परिहासफलम्[1] । परबुद्धिभिः प्रतिपक्षबुद्धिभिः । परपक्षसमीहिताः[2] पूर्वपक्षविषयत्वेन प्रवृत्ताः ॥ ६ ॥

पुत्रस्नेहेनाभिमतोऽयं न हासः । किं त्वनभिमत एवेत्यभिप्रेत्याह—सम्यगिति । विधार्यतां अवधार्यताम् । विष्णुपक्षः प्रतिच्छन्नो येषां ते तथा तैः । विष्णुसिद्धान्तमभिगृह्य स्थितैरित्यर्थः ॥ ७ ॥

अवशवशीकरणाय चत्वार उपाया विहिताः । तत्र द्विजातीनां सामोपाय एव श्रेयानिति दर्शयितुं परकृतबुद्धिभेदं च ज्ञातुं, तत्रापि योग्यानां भगवत्तत्वज्ञाननिश्चयाय च, दैत्यभयाच्च दैत्ययाजकाः प्रह्लादमपृच्छन्नित्याह—गृहमिति । सामभिः वचनैः ॥ ८ ॥

तुभ्यं तव यो बुद्धिविपर्ययः एष बालान् वयस्यान् अतिक्रम्य कुतः, अभूत् इति शेषः । बालानां बुद्धिमतिक्रम्यैष बुद्धिभेदः कुतः कस्मात् तुभ्यं रोचित इति वा ॥ ९ ॥

---

[1] परिहासः फलमिति स्यात् । [2] परपक्षो विष्णुः समीहितः प्रतिपाद्यतयेष्टो यासां ताः—या । शत्रुपक्षनिष्ठा गिरः—व्या.

बुद्धिभेदः परकृत उताहो ते स्वतो भवेत् ।
भण्यतां श्रोतुकामानां गुरूणां कुलनन्दन　　॥ १० ॥

प्रह्लाद उवाच —

परः स्वश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ।
विमोहितधियां दृष्टः तस्मै भगवते नमः　　॥ ११ ॥

स यदाऽनुगतः पुंसां पशुबुद्धिर्विभिद्यते ।
अन्य एष तथाऽन्योऽहमिति देहगताऽसती　　॥ १२ ॥

---

एतदेव विवृण्वन्ति—**बुद्धिभेद इति** । अस्माकं तत्वमेव वक्तव्यं त्वयेत्यतो गुरूणामिति ॥१०॥

उत्तरं वक्ति—**पर इति** । पुंसां योऽयं 'परः' 'स्वात्मा' इत्यसद्ग्राहः । 'एकमेवाद्वितीयम्' इति श्रुतेः परमार्थवस्तुन एकत्वे प्रामाणिके सिद्धे तत्र श्रीनारायणमन्तरेण परविषयकर्तृत्वं स्वविषयकर्तृत्वमिति भेदः स्वातन्त्र्यकल्पनालक्षणमन्यथाज्ञानं एष यस्येश्वरस्येच्छया कृतः कल्पितः सर्वकर्तृत्वात् तस्य । तस्मै भगवते महामहिम्ने नम इत्यन्वयः । तत् प्रत्यक्षमित्याह— **विमोहितधियामिति** । दृष्टः प्रत्यक्षः । तस्मात् तादृशी बुद्धिः भवादृशैर्न कार्येति शेषः । विमोहितेत्यनेनापीश्वराकर्तृत्वं ज्ञायते[1] ॥ ११ ॥

यन्माययेत्युक्तं स्पष्टं दर्शयति—**स यदेति** । स भगवान् यदा पुंसां स्वात्मपरबुद्धिजनकत्वेनानुगतः अनुकूलो भवति तदा पशुबुद्धिः अज्ञबुद्धिः विभिद्यते । तत् कथमित्यत उक्तम्—**अन्य इति** । एष देवदत्तोऽन्यः स्वतन्त्रः, अहमन्यः स्वतन्त्र इति । किमस्याधिकरणमिति तत्राह— **देहगतेति** । अत एवासती वृत्तिज्ञानत्वेन मोक्षानुपयोगित्वात् । 'अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति श्रुतिप्रतीकेनानेन श्लोकेन[2] 'जीवपरयोर्भेदं निषिध्य चिदैक्यं विधीयते' इतीममर्थं विहायार्थान्तरकल्पनायां किं प्रमाणमितीयमाशङ्का 'स्वातन्त्र्येणान्यसद्भावनिषेधाय श्रुतिस्त्वियम् । अन्योऽसावन्योऽहमिति पश्यन्नज्ञ इति स्म ह । आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः । आह तद् ब्रह्मणोऽधीना भिन्ना

---

[1] अहो भगवतः सामर्थ्यं यस्य मायया मोहिता भवन्तो मामित्थं पृच्छन्तीत्याशयेनाह—परः स्वश्चेति । परः स्वातन्त्र्येण कर्ता स्वः स्वयं स्वातन्त्र्येण कर्तेत्यसद्ग्राहः जीवेष्वविद्यमानस्वातन्त्र्यविषयो दुराग्रहः, परमात्मन एव कर्तृत्वाज्जीवानां तद्वशत्वादित्याशयः । यस्य भगवतो मायया इच्छया कृतः, विमोहितधियां येषां दृष्टश्च तस्मै इत्थं जगन्मोहकाय ।ममैतादृशमोहो न दत्तोऽतो न मया प्रतिकर्तुं शक्यमित्याशयेन नम इत्युक्तम्—या.

[2] श्रुतिप्रतीकस्यास्य श्लोकस्येति विन्यासे अन्वयः सुलभः ।

**स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरन्वयानुक्रमणो निरुच्यते ।**
**मुह्यन्ति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥**

---

जीवाः सदैव तु । स्वरूपसत्ता कर्तृत्वं भोगो मोक्षस्तथैव च । मुक्तस्यावस्थितिश्चैव सर्वं विष्णोर्वशे सदा ' इत्यनेन परिहृतेति ज्ञातव्यम् ॥ १२ ॥

ननु यदि जीवपरौ मिथो भिन्नौ तर्हि किमिति घटपटभेदज्ञानवत् तद्विषयज्ञानं नोत्पद्यत इत्याशङ्क्य प्रतियोगिज्ञानस्य दुःसाध्यत्वादित्यभिप्रेत्याह—**स एष इति** । यः स्वस्वकर्मानुसारेण स्वस्वयोग्यज्ञानमुत्पादयति स एष आत्मा परमात्मा स्वपरेत्यबुद्धिभिः यथार्थज्ञानविरोधिज्ञानवद्भिः पुरुषैर्दुरन्वयानुक्रमणः दुरन्वयं दुर्ज्ञानम् अनुक्रमणं तत्तद्योग्यतानुसारेण प्रवर्तनं यस्य स तथा, दुर्ज्ञेयचेष्ट इति, निरुच्यते निश्चीयते । ननु ' वेदाहमेतं पुरुषं महान्तमादित्यवर्णम् ' इति श्रुतेः ब्रह्मादेः तद्विषयज्ञानश्रवणात् कथं प्रतियोगिज्ञानस्य दुःसाध्यत्वमित्यत आह—**मुह्यन्तीति** । ब्रह्मादीनां भगवद्विषयज्ञानं दुःसाध्यं किम्वितरेषामित्यतो वाऽह – **मुह्यन्तीति** । हिशब्दः अप्यर्थे हेतौ वा । वेदवादे कोविदा ब्रह्मादयोऽपि यद्वर्त्मनि यत्र स्वरूपविषये मुह्यन्ति यस्मात् तस्मात् स एष दुरन्वयानुक्रमण इति निरुच्यते । अनेन हरेरनुग्रहमन्तरेण तद्विषयज्ञानं नोत्पद्यते । तस्मिन् सति तत् स्यात् । ' यमेवैष वृणुते तेन लभ्यः ' इति श्रुतेरन्वयव्यतिरेकौ दर्शितावित्युक्तं भवति । ननु त्वदुक्त्यैव त्वद्बुद्धिभेदजनकः कश्चित् स्यात् (इति ज्ञायते) । स क इति विचार्यत इति तत्राह—**एष इति** । मुह्यन्ति इत्येतदत्राप्यनुकूल्यते । यद्वर्त्मनि मुह्यन्ति एष हरिर्मम मतिं भिनत्ति विषयीकरोति । ' सर्वस्य स्ववशत्वं, स्वस्यानन्याधीनत्वं, स्वप्रसादात् मोक्षादिसकलपुरुषार्थप्राप्तिः ' इत्यादिबुद्धिं जनयतीति भावः[1] । तदुक्तम्—' आह तद्ब्रह्मणोऽधीना भिन्ना जीवाः सदैव तु ' इत्यादि[2] ॥ १३ ॥

---

[1] ननु स्यादेवं यदि परमात्मन एव स्वातन्त्र्येण कर्तृत्वं प्रामाणिकं स्यात् , तदेव कुत इत्यत आह—स एष इति । स एष एक एव स्वातन्त्र्येण कर्ता आत्मा परमात्मा निरुच्यते ' नान्योतोऽस्ति कर्ता ' ' द्रव्यं कर्म च कालश्च ' इत्यादौ प्रतिपाद्यत इत्यर्थः । नन्वेवमस्मदादिभिः कुतो न ज्ञायत इत्यत उक्तम्—स्वपरेति । स्वयं स्वातन्त्र्येण कर्ता परोऽपि स्वातन्त्र्येण कर्तेत्यबुद्धिभिः यथार्थज्ञानविरोधिज्ञानवद्भिः पुरुषैः दुरन्वयानुक्रमणः दुरन्वयं दुर्ज्ञानमनुक्रमणं प्रवर्तनं यस्य स तथा । मिथ्याज्ञानित्वाद्युष्मदादीनां नैतादृशं सम्यग्ज्ञानमित्याशयः । नन्वेवमेतादृशं मिथ्याज्ञानमस्मदादीनां कुत इत्यतोऽत्र कैमुत्यमाह—ब्रह्मादय इति । ब्रह्मा आदिः कारणं येषां मरीच्यादीनां त इत्यर्थः । अतद्गुणसंविज्ञानो वा बहुव्रीहिः । हिशब्दोऽप्यर्थे । इदानीं तैः पृष्टस्योत्तरमाह—एष इति । स्वातन्त्र्येण कर्ता हरिरित्यर्थः । भिनत्ति युष्मदादिमतिभ्यो भिन्नां करोति । स्वस्यैव स्वातन्त्र्येण कर्तृत्वादिविषयां करोतीत्यर्थः—या.

[2] पूर्वश्लोकोदाहृतमिदं तात्पर्यवचनमत्राप्याकृष्य योजनीयमिति भावः ।

यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणौ यदृच्छया ॥ १४ ॥

नारद उवाच —

एतावद् ब्राह्मणायोक्त्वा विरराम महामतिः ।
तं निर्भर्त्स्याथ कुपितः सुदीनो राजसेवकः ॥ १५ ॥

आनीयतामरे वेत्रमस्माकमयशस्करः ।
कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥

दैतेयचन्दनवने जातोऽयं कण्टकद्रुमः ।
तन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥

---

एतदर्थं सदृष्टान्तमाह-यथेति ।

यथा आकर्षस्यायस्कान्तस्य सन्निधौ सति अयः स्वयं भ्राम्यति स्वात्मानमुद्दिश्य गमनशक्तिं करोति, तदिति शेषः[1] । तथा मे चेतो यदृच्छया तदिच्छया चक्रपाणौ भिद्यते तद्विषयीकरणशक्तीक्रियते । अयोगमनशक्तिवत् (मम) चेतनस्यापि (चक्रपाणिविषयीकरणशक्तिः) नैसर्गिकीति भावः । एतेन सर्वं हर्यधीनमित्युक्तं भवति । 'एतस्य वाऽक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' 'य आत्मानमन्तर्यमयेदिति भेदं स्वरूपतः । आह' इत्यादिश्रुतिस्मृतिभ्यां विशेषेण चराचरस्य सर्वस्य श्रीहर्यधीनप्रवृत्त्यवगमात् । 'पश्यन्नज्ञः[2]' इत्यनेन पशुबुद्धिरबुद्धिभिरित्येतत्पदद्वयाभिप्रायो दर्शितः ॥ १४ ॥

सुदीनः वाचा शिक्षायां क्षीणोऽशक्त इत्यर्थः । राजसेवक इत्यनेन भेदज्ञानासामर्थ्यं च सूचितम्, उभयोरपि वित्तसाध्यत्वात्[3] ॥ १५ ॥

अयशस्करो दुष्कीर्तिकरस्यास्य चतुर्थो दमो दण्डसंज्ञक उदित इत्यर्थः ॥ १६ ॥

उन्मूलयतीत्युन्मूलः । स चासौ परशुश्च उन्मूलपरशुः । तस्य दैतेयचन्दनवनस्य मूलम् । तन्मूलोन्मूलपरशुः (हरिः) तस्य नालायितः मण्डपवत् तन्वानः[4] ॥ १७ ॥

---

[1] शेषस्य कृत्यं न स्पष्टम् । [2] तात्पर्यवचनस्थमिदं पदम् । [3] अस्पष्टमिदम् ।

[4] तस्य दैतेयचन्दनवनस्य यन्मूलं तस्योन्मूले उन्मूलने, छेदन इति यावत्, यः परशुस्थानीयो विष्णुस्तस्य नालायितो नालवदाचरन् । यथा परशोरुच्छेदकत्वे काष्ठविशेषनिर्मितो दण्डः सहकारी तं विना छेदनासंभवात् । तथायं विष्णोर्दैत्यमूलोच्छेदने सहकारी जात इत्यर्थः—या.

इति तं त्रिविधोपायैर्भीषयन् तर्जनादिभिः ।
प्रह्लादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ।
दैत्येन्द्रं दर्शयामास मातृमृष्टमलंकृतम् ॥ १९ ॥

पादयोः पतितं बालं प्रतिनन्द्याऽऽशिषाऽसुरः ।
परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥

आरोप्याङ्कमवघ्राय मूर्धन्यश्रुकलाम्बुभिः ।
आसिञ्चन् विकसद्वक्त्रमिदमाह युधिष्ठिर ॥ २१ ॥

प्रह्लादानूच्यतां तात स्वधीतं किञ्चिदुत्तमम् ।
कालेनैतावताऽऽयुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥

प्रह्लाद उवाच —

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥

इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥

---

त्रिवर्गस्योपपादनं शास्त्रम् ॥ १८ ॥

ज्ञातं ज्ञेयानां धर्मादिपुरुषार्थानां चतुष्टयं येन स तथा तम्[1] । ज्ञातसाधनचतुष्टयं वा । मातृमृष्टं शरीरमलत्यागेन स्नानं कारितम् ॥ १९ ॥

सुष्ठु अधीतं पठितम् ॥ २२ ॥

नियन्तृत्वेनात्मनि मयि स्थितो भगवानिति नितरां वेदनं ज्ञानं आत्मनिवेदनम् । 'मुक्तस्यापि ममान्तःस्थो नियन्तैव हरिः सदा । इति ज्ञानं समुद्दिष्टं सम्यगात्मनिवेदनम्' इति (वचनात्) आत्मसमर्पणं नार्थः । किन्तूक्त एवार्थः । इति उक्तप्रकारेण श्रवणादिभिः नवभिः लक्ष्यते असम्भवव्यभिचारपरिहारेण ज्ञायत इति नवलक्षणा विष्णौ भक्तिः यस्मिन् शास्त्रेऽर्पिता प्रतिपादिता । चेद् यदि पुंसा सा भगवत्युत्तमश्लोके अद्धा निर्व्याजेन क्रियते

---

[1] ज्ञेयचतुष्टयं पुरुषार्थचतुष्टयम् । यद्यपि त्रिवर्गस्येत्युक्तम् । तथापि ज्ञात्वा शिवं शान्तिमत्यन्तमेतीत्यादेरापातार्थप्रतीतिमालम्ब्य मोक्षस्योपपादनं चोपलक्षणीयम् । यद्वा ज्ञेयचतुष्टयं सामाद्युपायचतुष्टयम्—व्या.

नारद उवाच —

निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा ।
गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥

हिरण्यकशिपुरुवाच —

ब्रह्मबन्धो किमेतत् ते विपक्षं श्रयताऽसता ।
असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥

सन्ति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ।
तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥

गुरुपुत्र उवाच —

न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेन्द्रशत्रो ।
नैसर्गिकीयं मतिरस्य राजन् नियच्छ मन्युं क्व तदात्ममानः ॥ २८ ॥

---

तर्हि तदधीतं शास्त्रं उत्तमं मन्ये नान्यदित्यन्वयः । नव श्रवणादीनि लक्षणानि चिह्नानि यस्यां सा तथा[1] ॥ २३–२४ ॥ ते त्वया ॥ २६ ॥

साधुत्वे वृतस्य गुरोः 'दुर्मते' इति संबोध्य निन्दनं कथं घटत इति तत्राह—सन्तीति । 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम्' इति वाक्यं हिशब्देन स्मारयति । पातकिनां पापफलत्वेन रोग उदेति यथा तथा तेषामघं अपराधलक्षणव्यसनं प्रकाशत इत्यन्वयः ॥ २७ ॥

ननु लोके सन्त्वसाधवः । नाहं तादृशः । यतस्त्वत्पुत्रो न मया चरितं नापि परेण (चरितं) पठति । अत इत्याह—न मदिति । तर्हि कस्मादियं मतिरभूदिति तत्राह—नैसर्गिकीति । तदा तस्मिन् पक्षे मम आत्मनः स्वरूपाभिमानो मया ग्राहितेयं मतिरिति क्व ? तस्मात् कोपं संहरेति[2] ॥ २८ ॥

---

[1] येनाधीतेन नवलक्षणा भक्तिर्विष्णुविषयिका भवति तदधीतं साधु इति मूलार्थः । येनाधीतेन निमित्तेन पुंसा (विष्णौ भक्तिः) अर्पिता क्रियते तदधीतमुत्तमं मन्य इति वा योजना—व्या.

[2] हे राजन् । अस्य प्रह्लादस्येयं विष्णुविषयिणी मतिर्नैसर्गिकी स्वाभाविकी । अतो मयि मन्युं नियच्छ । मामनादृत्येत्युक्तम् । तदा तत्र मतेर्नैसर्गिकत्वे त्वदनादरणनिमित्तभूतोऽहंकारलक्षणो मानः आत्मनः मम क्व ? तथा च नासंगतिः । अत एवोक्तं तात्पर्ये—क्व तदात्ममानो ममेति—व्या.

नारद उवाच —

गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम् ।
न चेद् गुरुमुखीयं ते कुतोऽभद्रासती मतिः ॥ २९ ॥

प्रह्लाद उवाच —

मतिर्न कृष्णे परतः स्वतोऽपि वा मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं पुनः पुनश्चर्वितचर्वणानाम् ॥ ३० ॥

न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थभावाः ।
अन्धा यथान्धैरुपनीयमाना वाचीशतन्त्यामुरुदाम्नि बद्धाः ॥ ३१ ॥

---

पुत्राय क्रुद्धयन्नाह[1]—**गुरुणेति** । गुरुमुखी गुरुमुखादुत्पन्ना । इयं मतिः ॥ २९ ॥

सत्येव मन्मतिस्त्वन्मतिरेवासतीति पितरं कटाक्षीकृत्य परिहरति - - **मतिरिति** । परतो गुर्वादिबोधनप्रयत्नेन । स्वतः स्वप्रयत्नेन । तत्र निमित्तमाह—**गृहेति** । वनादिनिवासमन्तरेण गृह एव अवस्थानलक्षणं व्रतं येषां ते तथा तेषाम् । ननु 'कुटुम्बी शुचौ देशे स्वाध्यायमधीयानः' इति श्रुतेर्गृहस्थानामपि श्रेयःप्राप्त्युपपत्तिरिति । तत्राह—**अदान्तेति** । अदान्तानामिन्द्रियनिग्रहरहितानां पुरुषाणां गोभिः वाग्भिः तमिस्रं नरककल्पं विषयसुखं विशतां भुञ्जानानाम् । तत्रापि नूतनापूर्वभोगो नास्तीत्यभिप्रेत्याह—**पुनरिति** । पुनः पुनः भुक्तविषयानेव भुञ्जानानामित्यर्थः । अदान्तगोभिः अशिक्षिताभिर्वाग्भिः वेदगताभिः तमिस्रं अतत्वार्थविषयमज्ञानं अन्यथाज्ञानं च विशतां गाहमानानाम् । न तत्रापि यत्नोऽस्तीत्याह—**पुनरिति** वा ॥ ३० ॥

एतदेव स्पष्टयति —**न त इति** । दुष्टेषु प्रतीतिसुन्दरेषु परिणामविषयेषु आशयो येषां ते तथा । तत्र हेतुमाह — **बहिरिति** । बहिरर्थेषु मुखतः प्रतीयमानार्थेष्वेव भावः तात्पर्यनिर्णयो येषां ते तथा । श्रुतितात्पर्यार्थानभिज्ञा इत्यर्थः । एते स्वार्थगतिं पुरुषार्थस्वरूपं स्वभक्तप्रयोजनसाधकं वा कृष्णं[2] न विदुरित्यन्वयः । अत्र कारणमाह—**वाचीति** । ईशतन्त्याम् ईशस्य वेदवाग्लक्षणतन्त्यां ब्राह्मणादि-बहुनामाख्यलक्षणदाम्नि बद्धाः । अत्रोदाहरणमाह — **अन्धा इति** । अन्धैः अज्ञैः उपनीयमानाः उप-दिश्यमानकर्ममार्गाः अन्धा अज्ञाः उपदिष्टान्यमार्गं यथा न विदुस्तथेति । अनेन 'अन्धेनैव नीयमाना यथाऽन्धाः' इति श्रुतिं स्मारयति ॥ ३१ ॥

---

[1] पुत्राय क्रुध्यन् आहेत्याह नारद इति स्यात् । [2] विष्णुमित्यत्र कृष्णमिति वि पाठः स्यात् ?

नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः ।
महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत यावत् ॥ ३२ ॥

नारद उवाच —

इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ।
अन्धीकृतात्मा स्वोत्सङ्गान्निरस्यत महीतले ।
आहामर्षरुषाऽऽविष्टः कषायीकृतलोचनः ॥ ३३ ॥

हिरण्यकशिपुरुवाच —

वध्यतामाश्वयं वध्यो निस्सारयत नैर्ऋताः ।
अयं मे भ्रातृहा शोच्यो हित्वा स्वान् सुहृदोऽधमः ॥ ३४ ॥
पितृव्यहन्तुः पादौ यो विष्णोर्दासवदर्चति ।
विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमञ्जसः ॥ ३५ ॥
सौहृदं दुस्त्यजं पित्रोरत्यजत् पञ्चहायनः ॥ ३६ ॥

परोऽप्यपत्यं[1] हितकृद् यथौषधं स्वदेहजोऽप्यामयवत् सुतोऽहितः ।
छिन्द्यात् तदङ्गं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विसर्जनात् ॥

---

नन्वेवं तर्हि गृहव्रतानां मुक्त्युपायः क इति । आह—नैषामिति । यावदेषां गृहव्रतानां मतिः महीयसां निष्किञ्चनानां संन्यासिनां पादरजोऽभिषेकं न वृणीत तावन्तं कालं उरुक्रमस्याङ्घ्रिं न स्पृशति न विषयीकरोति । उरुक्रमस्याङ्घ्रिस्पर्शस्य किं फलम् ? अत्राह—अनर्थेति । यस्य हरेरङ्घ्रिस्पर्शोऽर्थः फलम् अनर्थापगमः संसारनिवृत्तिः[2] । अथवा अनर्थापगमो यस्मात् पादरजोऽभिषेकात् उत्थितः प्रकाशितो भवति तम्[3] ॥ ३२ ॥

कषायीकृतलोचनः रक्तनेत्रः ॥ ३३ ॥ पितृव्यस्य हिरण्याक्षस्य हन्तुः । असौ असमञ्जसः प्रह्लादः विष्णोः किं वा साधु करिष्यति ? ॥ ३५ ॥

कथमसमञ्जसोऽभूत् ? तत्राह—सौहृदमिति ॥ ३६ ॥

परः शत्रुरप्यवश्यं द्वेषेणापि हितकृच्चेत् स एव सुतः । औषधं तिक्तत्वेन (अपि हितकृत्) । 'हरीतकीं मनुष्याणां मातेव हितकारिणी' इति वचनात् । स्वदेहजोऽपि सुतोऽपि अहितोऽपकारी

---

[1] परोऽप्यवश्यमित्यपि क्वचित् पाठः । [2] अनर्थापगमः संसारनिवृत्तिर्यस्य हरेरङ्घ्रिस्पर्शस्यार्थः प्रयोजनम्-या.
[3] एतद्वाक्यपर्यालोचनया यदुत्थः इत्यपि वि पाठः संभाव्यते ।

सर्वैरुपायैर्हन्तव्यः सम्भोगशयनासनैः ।
सुहृल्लिङ्गधरः शत्रुर्मुनेर्दुष्टमिवेन्द्रियम् ॥ ३८ ॥

नैर्ऋतास्ते समुद्दिष्टा[1] भर्त्रा वै शूलपाणयः ।
तिग्मदंष्ट्राः करालास्याः ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥

नदन्तो भैरवं नादं छिन्धि भिन्धीति वादिनः ।
आसीनं चाहनन् शूलैः प्रह्लादं सर्वमर्मसु ॥ ४० ॥

परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ।
युक्तात्मन्यफला आसन्नपुण्यस्येव तत्क्रियाः ॥ ४१ ॥

प्रयासेऽपहते तस्मिन् दैत्येन्द्रः परिशङ्कितः ।
चकार तद्वधोपायान् निर्बन्धेन युधिष्ठिर ॥ ४२ ॥

दिग्गजैर्दन्दशूकेन्द्रैरभिचारावपातनैः ।
मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥ ४३ ॥

हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ।
न शशाक यदा हन्तुमपापमसुरः सुतम् ॥ ४४ ॥

---

चेत् तं छिन्द्यादामयवत् यथा सर्पदष्टाङ्गम् । किञ्च आत्मनः स्वस्य यदहितमङ्गं सर्पदष्टं तत् छिन्द्यात् । तदेव विशिनष्टि—यद्विवर्जनादिति[2] । शेषमङ्गं सुखं जीवतीत्यन्वयः ॥ ३७ ॥

सम्भोगो भोजनम्[3] ॥ ३८ ॥ भैरवं नादमुद्दिश्य[4] ॥ ४० ॥

अनिर्देश्यत्वादिगुणशालिनि हरौ युक्तात्मनि प्रयोजितमनस्के प्रह्लादे अपुण्यस्येव पापिन इव तत्क्रियाः तेषां नैर्ऋतानां ताडनादिक्रियाः[5] ॥ ४१–४२ ॥

वधोपायानाह—दिग्गजैरित्यादिना । अवपातनं गिरिशृङ्गादधःपातनम् । सन्निरोधैः अनिर्गमगर्तगृहे निक्षिप्य पीडनैः । पर्वताक्रमणैः पर्वतारोहणैः, उपरि पर्वतपातनैर्वा ॥ ४३–४४ ॥

---

[1] समुद्दिष्टा आज्ञप्ताः—व्या. [2] एतदनुरोधेन यद्विवर्जनादिति वि पाठः संभाव्यते ।

[3] संभोगो भोजनं, शयनं तप्तशिलादौ, आसनं शूलादाविति ज्ञेयम्—व्या.

[4] भैरवं नादं भयङ्करं नादम्—व्या.

[5] अपुण्यस्य पुण्यहीनस्य क्रियाः महोद्यमा यथाऽफला भवन्ति तथा—या. अपुण्यस्य पापिनः सम्पदुपाया इवाफला आसन्निति योजना—व्या.

चिन्तां दीर्घतमां प्राप्तः तत् कर्तुं नाभ्यपद्यत ।
एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ।
तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥

वर्तमानोऽविदूरे वै बालोऽप्यजडधीरयम् ।
न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ॥ ४६ ॥

अप्रमेयानुभावोऽयमकुतश्चिद्भयोऽमरः ।
नूनमेतद्विरोधेन मृत्युर्मे भविता न वा[1] ॥ ४७ ॥

इति तच्चिन्तया किञ्चिन्म्लानश्रियमधोमुखम् ।
शण्डामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥

जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृम्भणत्रस्तसमस्तधिष्ण्यपम् ।
न तस्य चिन्त्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥

---

तत् कर्तुं हननं कर्तुम्[2] ॥ ४५ ॥

असद्धर्मैः असतां योग्यैः । अविदूरे समीपे विदूरे वा वर्तमानः । अजडधीः पटुतरबुद्धिः । अनार्यं मूर्खकर्म । अन्याय्यमिति पाठे नयशास्त्रविरुद्धम् । 'मह्यमपरं शतं दत्त । अहमेनं विशसिष्यामि' इत्याद्याजीगर्तकृतकर्म शुनःशेपेन यथाऽसोढुं[3] तथेति ॥ ४६ ॥

इति वक्ष्यमाणप्रकारम् । हेति उच्यमानेऽर्थे तात्पर्यातिशयं वक्ति ॥ ४८ ॥

धिष्ण्यपाः चन्द्रादित्यादयः, लोकपाला वा । चक्ष्महे पश्यामः । शिशूनां प्रेङ्खायां शयनशीलानां बुद्धिविकासरहितानां वा तत्कारणं गुणदोषयोः पदम् आस्पदं न वै हि गुणदोषग्रहणबुद्धिविकासाभावादित्यर्थः । शिशूनां गुणदोषयोः पदं नास्तीति वा[4] ॥ ४९ ॥

---

[1] भविता ध्रुवम्—स. भविता न वा—या. मे मृत्युर्भविता न वा भविता ब्रह्मवरस्यामोघत्वात्—या.

[2] नाभ्यपद्यत, हननसाधनमिति शेषः—या.

[3] सोढमिति स्यात् । शुनःशेप इवाजीगर्तकृतं विक्रयणं भाविनं वा अवयवद्वारा यागं न विस्मरति नालोचयति—व्या.

[4] शिशूनां व्रतं गुणदोषयोः पदमासदं नैवेत्यर्थः—या. तस्य (तव) चिन्त्यं चिन्तनीयं कार्यं न चक्ष्महे न च पश्यामः । न च प्रह्लादहननं चिन्त्यम् । अतः शिशूनामन्तःकरणं गुणदोषयोः पदं नित्यस्थानं न वै इति योजना । एषा बुद्धिर्गच्छेदिति भावः—व्या.

इमं तु पाशैर्वरुणस्य बध्द्वा निधेहि भीतो न पलायते यथा ।
बुद्धिश्च पुंसो वयसाऽऽर्यसेवया यावद् गुरुर्भार्गव आगमिष्यति ॥

तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ।
धर्मो ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ५१ ॥

धर्ममर्थं च कामं च नितरां चानुपूर्वशः ।
प्रह्लादायोचतू राजन् प्रश्रितावनताय च ॥ ५२ ॥

यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ।
न साधु मेने तच्छिक्षां द्वन्द्वारामोपवर्णिताम् ॥ ५३ ॥

यदाऽऽचार्यः परावृत्तो गृहमेधीयकर्मसु ।
वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥

अथ तान् श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ।
उवाच विद्वान् तन्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥

ते तु तद्गौरवाः सर्वे त्यक्तक्रीडापरिच्छदाः ।
बाला नदूषितधियो द्वन्द्वारामेरितेहितैः ॥ ५६ ॥

---

तर्हि काऽपरबुद्धिरत्रोच्यते । (आह)—**इममिति** । तुनाऽधुनेयमेव बुद्धिरिति विशिनष्टि । कियन्तं कालमेवमिति तत्राह—**यावदिति** । तावदिति शेषः । ततश्च किम् ? तत्राह—**बुद्धिश्चेति** । पापजननी च वयसा कालविशेषविशिष्टेनायुर्लक्षणेन आर्याणां सेवया, स्यादिति शेषः ॥ ५० ॥

यथा द्वन्द्वारामोपवर्णितां रागद्वेषादिव्यापृतबुद्धिभिर्व्याख्याताम् ॥ ५३ ॥

यदा आचार्योऽध्यापनात् परावृत्तः उपरतः । गृहमेधीयकर्मसु अग्निहोत्रादिलक्षणेषु व्यापृतो वा तत्र तदा कृतक्षणैः कृतावसरैः वयस्यैर्बालकैः स उपाहूतः, क्रीडार्थमिति शेषः । 'सोक्षिन्नुभद्राक्षुमता' 'सोचिन्नु सर्वा' 'सैष दाशरथी रामः' इत्यादिषु द्रष्टव्योऽयं प्रयोगः ॥ ५४ ॥

अथ आगतः सन् । तस्यां क्रियायां निष्ठाम् इच्छां विद्वान् । तेषां वयस्यानां निष्ठां स्वस्मिन् स्नेहविशेषं वा ॥ ५५ ॥

द्वन्द्वारामेरितैर्वचनैः ईहितैः प्रवृत्तिभिश्च नदूषितधियः ॥ ५६ ॥

पर्युपासत राजेन्द्र तन्न्यस्तहृदयेक्षणाः ।
तानाह करुणो मैत्रो महाभागवतोऽसुरः　　　　॥ ५७ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चमोऽध्यायः ।

॥ अथ षष्ठोऽध्यायः ॥

प्रह्लाद उवाच —

हन्तार्भका मे शृणुत वचो वः सर्वतः शिवम् ।
वयस्यान् पश्यत मृतान् क्रीडान्धा मा प्रमाद्यथ　　　　॥ १ ॥
न पुरा विवशं[1] बाला आत्मनोऽर्थे प्रियैषिणः ।
गुरूक्तमपि न ग्राह्यं यदनर्थेऽर्थकल्पनम्　　　　॥ २ ॥

---

'स एषोऽसुः स एष प्राणः' इति श्रुतेः मुख्यप्राणे रमत इत्यसुरः ॥ ५७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजभिक्षुकृतायां
सप्तमस्कन्धस्य पञ्चमोऽध्यायः ।

॥ अथ षष्ठोऽध्यायः ॥

मुकुन्दचरणारविन्दनिरन्तरसेवैवेहामुत्रानश्वरानन्दनिदानं नान्यत् । अतः सैव बुभूषुभिरनुदिनं कर्तव्येति विधीयतेऽस्मिन्नध्याये ।

तत्र प्रह्लादो बालकान् किमाहेत्याशङ्क्याह- **हन्तेति** । हन्तेति बालानुकम्पायां वाक्यारम्भे वा । त्वद्वचःश्रवणात् किं फलं स्यादिति तत्राह—**व इति** । वः सर्वतः सर्वस्मात् शिवं सुखं स्यादिति शेषः । कीदृशं वच इत्यतो वाह — **व इति** । शिवं शुभं मङ्गलम् । ननु कस्मात् (हेतोः) मङ्गलमिति तत्राह— **वयस्यानिति** । संसारविरक्तिजनकत्वेन पुरुषार्थहेतुत्वात् मङ्गलमित्यर्थः । अनेन 'अधुनाऽस्माकं बाल्यम्, उत्तरत्र श्रेयस्सम्पादनाय प्रयतामहे' इत्याशा निरस्तेति ज्ञायते । यतोऽस्मदायुः कृतान्तविलुलितं तस्मात् क्रीडासक्तत्वेन युष्मद्धितविमर्शप्रमादो न कार्य इत्याह — **क्रीडान्धा इति** ॥ १ ॥

ननु बालानां लीलान्धत्वं स्वभाव इति तत्राह—**नेति** । इतः[2] पुरातना बाला अन्तःकरणं क्रीडायां विवशं न, कुर्वन्तीति शेषः । तर्हि किंकारं वर्तन्त इति तत्राह—**आत्मन इति** । आत्मनोऽर्थे

---

[1] विवशाः—या. । पुरा इतः पुरातना बालाः विवशा मोक्षसाधनविषये प्रमादयुक्ता नेत्यर्थः—या.

[2] पुरातना बाला मार्कण्डेयप्रभृतय आत्मनोऽर्थे स्वश्रेयसे प्रियैषिणः तत्साधनविचारपरा न क्रीडान्धा इति योजना—व्या.

यदुक्त्या न प्रबुध्येत सुप्तस्त्वज्ञाननिद्रया ।
न श्रद्दध्यान्मतं तस्य यथाऽन्धो ह्यन्धनायकः ॥ ३ ॥

कः शत्रुः क उदासीनः किं मित्रं चेह आत्मनः ।
भवत्स्वपि नयैः किं स्याद् दैवं संपद्विपत्पदम् ॥ ४ ॥

---

जन्मप्रभृति आत्मनोऽर्थे आत्मनः प्रियैषिणः परमात्मनः ज्ञानेच्छवः[1] । मोक्षलक्षणप्रियेच्छवो वा । आत्मनः प्रियैषिणः स्वप्रयोजनमाकाङ्क्षमाणा आबाल्यात् प्रयतन्त इति वा । नन्वस्माभिरपि शण्डामर्काभ्यां गुरुभ्यामुपदिष्टत्रिवर्गविषयशास्त्रश्रवणश्रेयसि प्रवर्त्यते । तत्र गुर्ववसरप्रतीक्षणायेयं क्रीडेति तत्राह —**गुरूक्तमिति** । कुतो न ग्राह्यमिति तत्राह —**यदनर्थ इति** । संसारहेतुत्वादनर्थे त्रिवर्गलक्षणेऽश्रेयसि अर्थकल्पनं यत्, तस्मादिति शेषः । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इत्यादेः । 'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः' इत्यादेश्च ॥ २ ॥

ननु गुरूक्तेर्यथार्थत्वेन ज्ञानहेतुत्वोपपत्तेः कथं तदनर्थेऽर्थकल्पनमिति तत्राह—**यदुक्त्येति** । अज्ञानलक्षणनिद्रया सुप्तः । त्रिवर्गविषयलक्षणाग्रहलक्षणे[2] यथार्थज्ञानविरोधित्वात् अज्ञानं नाम । न तु ज्ञानमात्राभावः । सुप्तस्यापि गुरूक्त्या प्रबोधो हि प्रयोजनम् । स नोत्पद्यते चेत् तदुपदेशेन किं प्रयोजनम् ? प्रत्युत तदनुष्ठानेनानर्थ एव स्यादिति भावः । अतः फलितमाह—**नेति** । अत्रोदाहरणमाह- **यथेति** । अन्धो नायको नेता यस्य स तथा । हिशब्देनोभयोरप्यन्धत्वान्मार्गज्ञानं नोत्पद्यते यथा तथाऽत्रापीति (आह) । अस्मात् (तस्मात् ?) श्रद्धा न कार्या ॥ ३ ॥

ननु 'समूलघातमघ्नन्तः परान् नोद्यन्ति भूभृतः', 'निक्षिप्योदर्चिषं कक्षे शेरते तेऽभिमारुतम्', 'आपत्सु मित्रं जानीयात् पुत्रमुत्तरजन्मनि', 'य उदास्ते स्वकार्येषु स निन्द्यो यत्नतो नरः' इत्यादिनीतिशास्त्रं शत्रुमित्रोदासलक्षणज्ञापकं हितकारित्वादिति आभ्यां नो बोध्यते । तन्मतं कथं न श्रद्दध्यादित्युच्यत इति तत्राह—**क इति** । यः शत्रुः सः आत्मनो मम पक्षे कः ? न कोऽपीत्यादि योज्यम् । त्वत्पक्षे शत्र्वाद्यभावेऽप्यस्मत्पक्षे स्युरिति तत्राह—**भवत्स्विति** । भवत्पक्षेऽपि के शत्र्वादयः स्युः ? न केऽपि । अतो नयैः नीतिशास्त्रश्रवणजनितैर्नीतिभिः किं फलं स्यात् ? न किमपीत्यर्थः । नीतिभिरापत्परिहारः सम्पत्प्राप्तिश्च स्यातामिति तत्राह—**दैवमिति** । सर्वोत्कृष्टत्वात् श्रीनारायण एव सम्पद्विपदाश्रयः । न नीतिमान् तस्यान्वयव्यतिरेकाभावात् । अस्मत्पित्रादौ दर्शनात् । आत्मनो देहस्य

---

[1] आत्मन इत्यावृत्त्य योजितम् । आत्मनः स्वस्यार्थे आत्मनः परमात्मनो ज्ञानेच्छव इति ।

[2] असाधुमिदम् । त्रिवर्गविषये दुराग्रह एव अज्ञानम् इत्यभिप्रायः स्यात् ।

**यो न हिंस्याद् धर्मकाममात्मानं स्वजनेऽवशः ।**
**पुनः श्रीलोकयोर्हेतुः स मुक्तान्ध्योऽतिदुर्लभः ॥ ५ ॥**

---

यः शत्र्वादिस्तस्य भवत्सु स्थितैर्नयैः किं स्यात् ? अपरिहार्यत्वान्मरणादिकं प्राप्यत एव । कामादिक-मज्ञानसंभवं ज्ञानमन्तरेण न नयमात्रेण परिह्रियत इति । शेषं पूर्ववत् ॥ ४ ॥

ननु तर्हि मा भूत् श्राव्यं नीतिशास्त्रं प्रवृत्तिलक्षणधर्मशास्त्रमभ्यसनीयम्, श्रेयोहेतुत्वात् ? अत्राह— **य इति** । य आत्मानं परमात्मानमुद्दिश्य धर्मकामं धर्मेच्छां न हिंस्यात् न हिनस्ति न त्यजति किञ्चानु-तिष्ठति सोऽतिदुर्लभः । प्रशान्तात्मा कोटिष्वपि महान् मतः इति स्वोक्तेः[1] । अवशीकृतेन्द्रियग्रामस्य भगवद्विषयनिवृत्तिलक्षणधर्मेच्छा कथं स्यादिति तत्राह— **स्वजन इति** । स्वेन सह जन्यत इति स्वजनः इन्द्रियग्रामः । तस्मिन् विषये वशो न भवति, वशीकृतेन्द्रियग्राम इत्यर्थः । यद्वा पुत्रमित्रादिलक्षणे स्वजने वशो न, स्वानुष्ठानानुकूलपुत्रादिक इत्यर्थः । अत एव मुक्तान्ध्यः - उज्झितान्धस्वभावः । [2]नन्वैहिकामुष्मिकफलाकाङ्क्षायां निवृत्तिधर्ममनुतिष्ठतः कथं तत्फलावाप्तिः स्यात् ? अत्राह— **पुनरिति** । पुनः चार्थे । निवृत्तधर्ममनुतिष्ठन् श्रीलोकयोः इहलोकपरलोकयोः हेतुश्च भवति । पुनः निवृत्तधर्मानु-ष्ठानानन्तरं वा । प्रवृत्तिनिवृत्तिधर्मयोरनुष्ठानयोः पुनर्भेदोऽस्ति । पूर्वस्य ततः पातोऽस्ति । 'इमं लोकं हीनतरं वा विशन्ति', 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादेः । अन्यस्य ज्ञानसामग्रीं सम्पाद्य ततः पुनरन्ते वैकुण्ठलोकप्राप्तिश्च स्यात् । 'स एवास्मात्[3] जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते', 'यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामां-स्तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः' इत्यादेः । 'पुनरप्रथमे भेदे' इत्यमरः । यद्वा आत्मानं धर्मयुक्तः कामो यस्य स तथा तं वा नरं (यः) न हिंस्यात् न पीडयति । स्वात्मानं प्रवृत्तधर्मकांक्ष्येण[4] पीडितं न करोति सोऽपि दुर्लभः । धर्मे धारके हरौ कामो यस्य स तथा निवृत्तिधर्मरत इत्यर्थः । तं नाधः पातयति इति वा । सज्जनसेवानिरतत्वेन तद्वशश्च । श्रियः ऐहिक्याः सम्पदः स्वतः सम्पन्नायाः, लोकस्य ज्ञानस्य अपरोक्षलक्षणस्य च पात्रं वा । अत्र प्रवृत्तिनिवृत्तिलक्षणौ धर्मावनुष्ठाय तत्फलानिच्छुत्वेन भगवद्-भक्तिमनिशं कुर्वाणः पुरुषः उत्तम इति तात्पर्यम् ॥ ५ ॥

---

[1] सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते (भाग ६-१४-५) इति प्रचलितः पाठः । महान् मत इति त्रि पाठः स्यात् । [2] अस्पष्टमिदं वाक्यजातम् । [3] एतस्मादिति प्रसिद्धपाठः ।

[4] प्रवृत्तधर्माकांक्षयेति स्यात् ।

कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ ६ ॥

यदा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ।
यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ ७ ॥

सुखमैन्द्रियकं दैत्या देहयोगेन देहिनाम् ।
सर्वत्र लभ्यते दैवाद् यथा दुःखमयत्नतः ॥ ८ ॥

---

नन्वस्तु निवृत्तिधर्मानुष्ठानस्य श्रेयःसाधनत्वम् । तस्य नेदानीमवसरः । वार्धके कर्तव्यत्वा-विनाभूतत्वात् । 'बाल्ये विद्यां निषेवेत यौवने दारसङ्ग्रहम् । स्थाविर्ये मोक्षमातिष्ठेत् सर्वदा धर्म-माचरेत्' इति स्मृतेरिति तत्राह—**कौमार इति** । सर्वदेति विशेषणाद् विद्याभ्यासकालेऽपि मोक्ष-धर्मानुष्ठानं कर्तव्यमिति न तस्य स्मृतिविरोधः[1] । नानायोनिषु का योनिः श्रेयःसाधनमिति तत्राह—**दुर्लभमिति** । यन्मानुषं जन्म तदपि तदेव अर्थदं ज्ञानादिप्रयोजनप्रदम् । अत एव बहुपुण्यसाधन-त्वाद् दुर्लभम् । तर्हि चिरकालस्थायि किम्? नेत्याह—**अध्रुवमिति** । 'सस्यमिव मर्त्यः पच्यते सस्यमिव जायते पुनः', 'अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्तगीतम्' इत्यादिश्रुतेः । अध्रुवमपि मानुषं जन्म सुदुर्लभं तत्राप्यर्थदं दुर्लभतरम् । 'एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्' इति स्मृतेः ॥ ६ ॥

ननु कथङ्कारं पुरुषार्थप्रदं तत्? अन्यथा तद्वतां सर्वेषामपि पुरुषार्थः स्यात् । न चासौ संभवति अदर्शनादश्रवणाच्चेत्याशङ्क्य चिकित्सामाह—**यदा हीति** । इह मानुषे यदा यदि बुभूषोः पुरुषस्य विष्णोः पादोपसर्पणं संभवति तर्ह्यर्थदम् । 'यावत्सेवा परे तत्वे तावत्सुखविशेषता' इत्येतद् हिशब्देन सूचयति । अतो मानुषी योनिरेव निःश्रेयसः कारणं नान्या । असज्ञत्वाद् वेदानर्हत्वेनान्यासाम्[2] । अतः कौमारक्य आरभ्य भगवत्सेवा कर्तव्येति भावः । ननु श्रीहरिसेवामन्तरेणान्यसेवा अर्थदा किं न स्यादिति तत्राह—**यदेष इति** । सर्वभूतप्रियत्वादिगुणयुक्त एष इति यत् तस्मात् एतत्सेवैव पुरुषार्थदा नान्यसेवा । 'तदेतत् प्रेयः' इति श्रुतेः । 'एष सर्वेश्वरः' इति च[3] ॥ ७ ॥

इतोऽपि भगवत्सेवालक्षणनिवृत्तिधर्मानुष्ठानमेव कर्तव्यम् । न प्रवृत्तिधर्मसेवनम् । विषयसुख-

---

[1] स्मृतिस्त्वस्ततः स्थाविर्ये कर्तव्यत्वार्था न तु बाल्ये निषेधार्था । एतद्वै मुखतोऽन्नं राद्धं मुखतोऽस्मान्नं राध्यते, यदहरेव विरजेत् तदहरेव प्रव्रजेदिति श्रुतेरिति भावः—व्या. [2] अस्पष्टमिदम् ।

[2] प्रीतेरन्योन्यनिष्ठत्वेन भगवतोऽपि सेवाकर्तरि प्रीतियुक्ततया सर्वेश्वरत्वेन च भक्तस्य पुरुषार्थप्रदत्वोपपत्तिरिति तात्पर्यम् ।

**तत् प्रयासो न कर्तव्यो आयासायुर्व्ययः परम् ।**
**न तथा विन्दते क्षेमं मुकुन्दचरणाम्बुजम् ॥ ९ ॥**

**ततो यतेत कुशलः क्षेमाय च [1]तमाश्रितः ।**
**शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ १० ॥**

**पुंसो वर्षशतं ह्यायुः तदर्धं चाजितात्मनः ।**
**निष्फलं यदसौ रात्र्यां शेतेऽन्धं प्रापितस्तमः ॥ ११ ॥**

---

सौलभ्याय तदनुष्ठानमिति नोच्यते तदन्तरेणापि तल्लभ्यते यथा दुःखमित्याह[2]—**सुखमिति** । सर्वत्र नरकादावपि । 'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्' इति स्मृतेः । दैवाद् प्रारब्धकर्म-प्रेरकात् ॥ ८ ॥

अतश्च किमिति तत्राह—**तदिति** । तस्माद् प्रयासः ऐन्द्रियसुखप्राप्तये प्रवृत्तिधर्मकरणबहुक्लेशो न विधेयः । कुतो न विधेय इति तत्राह—**आयासेति** । परं केवलम् आयासेनायुषो व्ययः क्षय एवावशिष्यत इति शेषः । प्रवृत्तिधर्मानुष्ठानस्य दुःखासंभिन्नप्रदेशोद्देशत्वाद् तत् कथं दुःखकल्पत्वेन निन्द्यत इति तत्राह—**न तथेति**[3] । मुकुन्दचरणाम्बुजं भजन् यथा क्षेमं विन्दते प्रवृत्तिधर्मानुष्ठायी न तथा अनश्वरं सुखं लभत इत्यर्थः[4] । 'प्लवा ह्येते अदृढा यज्ञरूपाः' इति श्रुतेः ॥ ९ ॥

तस्मादिदमेव कर्तव्यमिति तत्राह—**तत इति** । चशब्दो यद्यदभीष्टं तत्प्राप्तय इत्याह । इतोऽपि बाल्य एव मुक्त्यै प्रयतेतेत्याह—**शरीरमिति** । पौरुषं पुरुषस्य विद्यमानं पुष्कलं पुष्टं अन्धपङ्गुत्वाद्यवयववैकल्यविधुरमित्यर्थः । विपद्येत मरणलक्षणविपत्तिं प्राप्नोति । ततः प्रागेव यतेतेति शेषः ॥ १० ॥

'शतायुर्वै पुरुषः' इति वचनात् शतायुः शरीरस्थितेर्निश्चितत्वात् तदन्तरालकालेऽनेकश्रेयः-समर्जनोपपत्तेर्बाल्य एव निवृत्तिलक्षणश्रेयसे यतनीयमिति नियमो नापेक्षित इत्याशङ्क्य गर्भवासमारभ्य शतायुःपर्यन्तं स्वतः परतो वा शरीरस्य नाशदर्शनान्न तत्स्थितिनिश्चयः । शाश्वतोऽस्तु वा कस्यचित् ।

---

[1] च यमाश्रितः इति सत्याभिनवतीर्थाः पेठुः । चोऽवधारणे । यं विष्णुम् । अकयप्रविसंभूमसखहा विष्णु-वाचका इत्युक्तेरिति तेषां व्याख्या ।

[2] विषयसुखलाभार्थं न तदनुष्ठानं कर्तव्यं तदन्तरेणापि दुःखवत् तल्लाभादित्यर्थः ।

[3] तथा च प्रवृत्तिधर्मानुष्ठातुस्तादृशप्रदेशप्राप्त्युद्देशो विफल इत्यर्थः ।

[4] तथा तथाविधः पुरुषः क्षेमं मुकुन्दचरणाम्बुजं न विन्दत इति योजना—व्या.

मुग्धस्य बाल्यकौमारैः क्रीडतो याति विंशतिः ।
जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥ १२ ॥

दुरापूरेण कामेन मोहेन च बलीयसा ।
शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि[1] ॥ १३ ॥

पश्यध्वं मतिवैषम्यं ज्ञातीनां नः कुटुम्बिनाम् ।
श्रेयोविघातादायासादीहतामनुसंसृति[2] ॥ १४ ॥

को गृहेषु पुमान् सक्त आत्मानमजितेन्द्रियः ।
स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥ १५ ॥

को न्वर्थतृष्णां विसृजेत् प्राणेभ्योऽपि गरीयसीम् ।
यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १६ ॥

---

तथाऽपि न श्रेयोयत्नो दरीदृश्यते । अन्यव्यापारायासग्रस्तत्वेन दिनमेलनलक्षितवत्सराणां क्षयात् । एवं न लक्षवर्षायुषेणापि[3] मुकुन्दचरणारविन्दसेवालक्षणश्रेयःसम्पादनं सुशकमित्याह—पुंस इति ॥ ११ ॥

दुरापूरेण नशक्यपूरणेन । हिशब्दो हेतौ ॥ १३ ॥

निद्रादिकमन्तरेणावशिष्टकालान्तरालेऽपि श्रेयोविघ्नहेतुरस्तीत्याह—पश्यध्वमिति । कलहलक्षणं मतिवैषम्यम् । अनुसंसृतीत्यनेन एकोऽपि क्षणो नावशिष्यत इति सूचयति ॥ १४ ॥

नन्वस्माकं श्रेयइच्छा नास्ति चेदनन्तेषु चेतनेषु कस्यचित् सा स्यात् । अवसरमापद्येतेति तत्राह—क इति[4] । ॥ २५ ॥

ननु प्रवृत्तिधर्मेण मा भूच्छ्रेयः । अर्थेन तत् स्यात् । अतो मुकुन्दपादसेवा कुतो नियुज्यत इति तत्राह—को न्विति । [5]योऽर्थः तदर्थतृष्णाम् । अर्थान्वेषणवैतृष्ण्यैवार्जितस्य व्यये लिप्सा ।

---

[1] सप्तमस्कन्धस्य श्रीयादवार्यकृतं व्याख्यानमस्मिन् पद्ये समाप्तम् । इत आरभ्य आद्वादशस्कन्धान्तं श्रीसत्यधर्मतीर्था व्याचक्रुः । षष्ठस्कन्धस्य समग्रस्यापि श्रीयादवार्यव्याख्यानं नास्ति । अतस्तत्रापि श्रीसत्यधर्मतीर्था व्याचख्युरिति प्रागावेदितम् ।

[2] अनुसंसृतिमिति बहुषु कोशेषु । सत्यधर्मतीर्थपाठः व्या पाठोऽपि तथैव । तथा हि । अनु संसृतिमिति द्वे पदे, संसृतिमन्वित्यन्वयः (प्रतिसंसारमित्यर्थः)—सत्यधर्मतीर्थाः । संसृतिमनुसृत्येहमानानां चेष्टमानानामित्यर्थः—व्या.

[3] अकारान्त आयुष्शब्दोऽपि संभाव्यते रेतशब्दवत् एधशब्दवच्च ।

[4] अनेन (आत्ममोचने) उत्साहस्यापि यदा न संभवस्तदा दूरे तच्छेदनमिति तस्यात्यशक्यतां सूचयति—स.

[5] असष्टं समग्रमिदम् ।

कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् ।
सुहृत्सुतस्नेहवशः[1] शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ १७ ॥

प्रत्ताः स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन् स्वसॄर्वा पितरौ च दीनौ[2] ।
गृहान् मनोज्ञान् रुचिरच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥

त्यजेत कोशस्थ इवेहमानः कर्माणि लोभादवितृप्तकामः ।
औपस्थ्यजैह्व्यं बहुमन्यमानः कथं विरज्येत दुरन्तमोहः ॥ १९ ॥

कुटुम्बपोषाय च यन्निजायुर्न बुध्यतेऽर्थं विहितं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥ २० ॥

---

'अर्थेन सुकृतं साधय' इति बोधिते साधयिष्यामीति कण्ठोपरि गद्गदनिगदेनैव कालो यातीति पुरुषायुषेणापि वित्तेन सुकृतार्जनं दवीय इति वित्तव्ययमन्तरेण कायक्लेशेनैव श्रीहरिचरणनिषेवणं जन्मसफलं करोतीति भावः । तत्र दर्शनं प्रमाणयति । 'तस्करादयो मृता अप्यर्थतृष्णां न मुञ्चन्ति' इत्येतदुपलक्षणम् । परितः प्रत्येकमलम् । नानाजीवानां वर्तते[3] ॥ १६ ॥

ननु मा भूदर्थाच्छ्रेयः कामादस्तु इत्याशङ्क्य कीदृशोऽसौ ? भगवद्भक्तिकामो विषयकामो वा । न द्वितीयः । 'अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत' इत्यादिशास्त्रनिन्दितत्वात् । नाद्यः । विषयविरक्त्या तत्त्यागेन भाव्यम् । तस्य दुःसाधनत्वादित्याह— **कथमिति** । रहस्यं रहसि भवं सङ्गं मैथुनलक्षणम् । कथं त्यजेत इत्युत्तरेणान्वयः । मन्त्रादिगृहीतानां, संलापानां रसेनेति शेषः ॥ १७ ॥ सल्ला

प्रत्ताः दत्ताः । हृदय्याः हृदयप्रियाः । रुचिरच्छदान् रुचिरपरिकरान् । कुल्याः कुलपरम्परया समागताः । वृत्तीः जीवनकरीः ॥ १८ ॥

कोशस्थः कोशकारी कीटः । एतदेव स्पष्टयति—**औपस्थ्यमिति** । यद् इतिक्लृप्तं निज-

---

[1] सुहृत्सुतस्नेहसितः इति क्वचित्पाठः । स्नेहसितः स्नेहबद्धः—स.

[2] स्त्रीपुत्राद्यासक्तिरूपदैन्यसम्पादकौ पितरौ स्मरन्नित्यर्थः । अन्यथा सतिपत्रोरपि त्यागापत्तेरिति सत्याभिनवतीर्था व्याचक्रुः ।

[3] वित्तवितरणेन पुमर्थः साधयितुं शक्यः, किं भगवत्सेवयेत्यत आह—को न्विति । अर्थतृष्णां द्रव्यस्पृहां को नु विसृजेत् ? दौर्घस्थ्यमेव तस्याह—प्राणेभ्य इति । य इत्यर्थपरामर्शः । यमर्थं प्रेष्ठैः प्रीतिपात्रैरसुभिः प्राणैः तस्करः सेवको वणिक् च क्रीणाति । तस्करस्योपलम्भे देहनाशः, सेवकस्य युद्धादिगमने, वणिजस्तु मध्येऽध्वाध्वनीनचोरादिति इति प्राणविक्रयो ज्ञेयः—स.

विचेषु नित्याभिनिविष्टचेता विद्वांश्च दोषान्[1] परवित्तहर्तुः । २
प्रेत्येह वाऽथाप्यजितेन्द्रियस्तदशान्तकामो हरते कुटुम्बी ॥ २१ ॥

विद्वानपीत्थं दनुजाः कुटुम्बं पुष्णन् स्वलोकाय न कल्पते वै ।
यत्[2] स्वीयपारक्यविभिन्नभावः तमः प्रपद्येत यथा विमूढः ॥ २२ ॥

यतो न कश्चित् क्वच कुत्र विद्वान् दीनं स्वमात्मानमलं समर्थः ।
विमोचितुं वामदृशां विहारक्रीडामृगोऽयं निगडोऽक्षिसर्गः ॥ २३ ॥

ततो विदूरात् परिहृत्य दैत्या दैत्येषु सङ्गं विषयात्मकेषु ।
उपेत नारायणमादिदेवं स मुक्तसङ्गैरिषितोऽपवर्गः ॥ २४ ॥

---

मात्मीयम् आयुः यस्य स तथा[3] । शास्त्रविहितमर्थं श्रेयोलक्षणं न बुध्यते । स्वकुटुम्बे भार्यादौ रामः क्रीडा यस्य स तथा । न निर्विद्यते विरक्तो न भवति ॥ २० ॥

२ परिवित्तहर्तुः चोरादेः । इह देहात् प्रेत्य । यत् पूर्वमर्जितम् अथापि अनन्तरमपि तच्च तदेव दुष्कर्म हरते नयतीत्यन्वयः । परलोकेष्वपि विषयेष्वलंबुद्धिर्नास्तीति भावः[4] ॥ २१ ॥

अनुक्तविशेषप्रदर्शनाय कथितमेवार्थं विशिनष्टि—**विद्वानिति** । स्वलोकाय स्वकल्पसमोक्षाय स्वयोग्यज्ञानाय वा । तत्र हेतुमाह—**यदिति** । न केवलं मोक्षाय (न) कल्पत इति । प्रत्युतानर्थं चाप्नोतीत्याह—**तम इति** । विमूढो विपरीतज्ञानी यथा तमः प्रतिपद्यते तथाऽयमित्यन्वयः[5] ॥२२॥

श्रीनारायणानुग्रहमन्तरेण विद्वत्ताऽप्यकिञ्चित्करीत्याह—**यत इति** । शास्त्रगुरूपदेशेन विद्वान्, संसारस्यानित्यतामिति शेषः । दीनं स्वात्मनं विमोचितुमलं समर्थो नेति यतः, अत इति शेषः । यदि त्मा जीवराशौ कश्चिदस्तीत्यभिमानस्तर्हि कुत्र कस्मिन् देशे ? क्व कस्मिन् काले ? न कस्मिंश्चिदित्यर्थः । कुतः ? अत्राह—**वामदृशामिति** । अयं पुरुषो वामदृशां विहारार्थे निर्मितक्रीडामृग इति यत् । मृ कथमयं तथाऽभूदिति तत्राह—**निगड इति** । आसामक्षिसर्गः कटाक्षमोक्षो यस्य निगडः शृङ्खलायितः, तस्मात् । स इति शेषः[6] ॥ २३ ॥

एतावन्तं दैत्यान् कटाक्षीकृत्योक्तं प्रकटयन् मथितार्थमाह—**तत इति** । नन्वेवं तर्हि संसार-

---

[1] दोषम्—व्या,स. [2] यः स्वीयपारक्यविभिन्नभावः—व्या,स. [3] कुटुम्बपोषाय तदर्थमेव यत् गच्छत् निजायुः स्वकमायुष्यं न बुध्यते । विहितं शास्त्रविहितम् अर्थं परमप्रमेयं च न बुध्यते—स.

२ [4] परिवित्तहर्तुः परवित्तं हर्ता तस्य दोषमागच्छन्तं विद्वान् जानन् । इह देहताडनादिकं तथा प्रेतनाथदण्डादिकं प्रेत्याप्यागमिष्यन्तं विद्वान् । अथापि अजितेन्द्रियः अशान्तकामः अनुपरतविषयतृष्णः कुटुम्बी निन्दितैवंविध-कुटुम्बवान् हरते परवित्तादिकम्—स.

[5] विमूढो विपरीतज्ञानी यथा तमः प्रतिपद्यते तथाऽयं ग्लानिं प्रतिपद्यत इत्यर्थः । [6] अस्यान्वयो न व्यक्तः ।

न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ।
आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ २५ ॥

परावरेषु भूतेषु ब्रह्मान्तस्थावरादिषु ।
भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २६ ॥

गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ।
एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २७ ॥

प्रत्यगात्मस्वरूपेण कालरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्यो विकल्पितः ॥ २८ ॥

---

मोक्षस्य दौर्घट्यमापादितमिति शङ्का मा भूत् । यद्यर्थिताऽस्ति तर्ह्युपायं वदामीत्यतो वाह[1]–तत इति । यतो धर्मार्थकामैर्ब्रह्मार्पणबुद्धिचिकित्सारहितैः संसारमोक्षो न सेत्स्यति ततो दैत्येषु सङ्गं दूरात् परिहृत्य नारायणं शरणमुपेत यात इत्यन्वयः । सः अपवर्गः मुक्तसङ्गैः पुरुषैः इषितः आप्तो भवति । 'इषु गतौ' इति धातोः[2] ॥ २४ ॥

नेदं दुस्साध्यमित्याह—न हीति । सर्वभूतानामात्मत्वात् तत्प्रेष्ठत्वात् । सर्वत्र व्याप्तत्वेन सुलभत्वाद् वा[3] ॥ २५ ॥

नारायणस्य सेव्यत्वे हेतुगर्भविशेषणमाह— परावरेष्विति । गुणसाम्ये प्रलये । गुणव्यतिकरे सृष्टौ ॥ २६-२७ ॥

व्याप्तिप्रकारमाह—प्रत्यगात्मेति । सर्वपदार्थानामन्तः प्रत्यगात्मस्वरूपेण अन्तर्यामिरूपेण बहिः कालरूपेण व्याप्तेन ब्रह्मापरपर्यायेण । एवमेक एव व्याप्यव्यापकनिर्देश्यो विकल्पितो विविधक्लृप्तः[4] । 'अन्तर्यामी प्रत्यगात्मा व्याप्तः कालो हरिः स्मृतः' इति वाक्यसिद्धोऽयमर्थः । घट इव

---

[1] वदामीत्याहेति पेशलम् । [2] विषयात्मकेषु विषयेष्वात्मा मनो येषां ते तथा तेषु दैत्येषु सङ्गं तन्मतावलम्बनरूपं विदूरादतिदूरतः परिहृत्यादिदेवं नारायणमुपेत—स.
विषयसङ्गस्योक्तरीत्या दुष्टत्वाद् विषयात्मकेषु दैत्येषु रिपुषु विदूरात् सङ्गं परिहृत्यादिदेवं नारायणमुपेत शरणं गच्छत । अपवर्गहेतुः स नारायणो मुक्तसङ्गैः शरणं गत इति योजना—व्या.

[3] सर्वभूतानामात्मीयाः स्त्रीपुत्रादयोऽच्युतप्रतिमाः । तेषां पोषणं सर्वप्रकारेण सर्वदा क्रियते । तदेव पोषणं तदन्तर्याम्यच्युतपूजाबुद्ध्या कृतं चेदच्युतप्रीतिर्भवति । अतोऽच्युतं प्रीणयतो बह्वायासो नास्ति—सत्याभिनवतीर्थाः [4] विकल्पितो विविधतया स्थितः—व्या.

केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययान्तर्हितैश्वर्य ईड्यते[1] गुणसर्गया ॥ २९ ॥

तस्मात् सर्वेषु भूतेषु दयां कुरुत सौहृदम् ।
भावमासुरमुन्मुच्य तया तुष्यत्यधोक्षजः ॥ ३० ॥

तुष्टे च तत्र किमलभ्यमनन्त आद्ये
किं तैर्गुणव्यतिकरैरिह येऽनुसिद्धाः ।
धर्मादिभिः किमगुणेन च काङ्क्षितेन
सारं जुषां चरणयोरुपगायतां नः ॥ ३१ ॥

---

निर्देश्यो नेत्यतिर्देश्यरूपः ॥ २८ ॥

'अचिन्त्यमव्यपदेश्यमैकात्म्यप्रत्ययसारम्' इति श्रुतिनिरूपित इत्याह—**केवलेति** । सर्वत्र सिद्धश्चेत् किमिति न दृश्यत इति तत्राह—**माययेति** । मायया प्रकृत्या । 'तमसा गूढ्ळमग्रे' इति श्रुतेः । सत्वादिगुणैः सर्गः सृष्टिः यस्याः स तथा तया[2] ॥ २९ ॥

यतः सर्वभूतानि भगवन्निवासस्थानानि तस्मात् । तया भूतदयया । आसुरं भावं द्वेषम् । 'विष्णोर्गृहत्वाद् भूतेषु दया कार्या विजानता' इति स्मृतेः । 'प्रद्विषन्तोऽभ्यसूयकाः' इति (च) ॥ ३० ॥

भगवत्तुष्ट्या किं प्रयोजनमिति तत्राह—**तुष्ट इति** । ये अनुसिद्धाः जन्मप्रभृतिप्राप्ताः तैर्गुणव्यतिकरैः विषयसुखैः हरेः चरणयोः सारं जुषां गुणलक्षणमकरन्दं सेवमानानां तद्गुणान् चोपगायतां गायमानानां नः अस्माकं काङ्क्षितेनागुणेन अन्यैर्वाञ्छितेन मोक्षेण किम् ? अपक्वभक्तिलभ्यमुक्तेर्भक्तेः परमानन्दस्वरूपत्वात्, तत्रापि सुखाधिक्यहेतुत्वात् । सुतरां धर्मादिभिः सुतमां गुणव्यतिकरैः फलं नास्तीति किमु वक्तव्यम् ? मोक्षे सुखमनाकाङ्क्षमाणस्य यथा सुखाधिक्यं भवति तथा मोक्षगतं सुखं काङ्क्षमाणस्य सुखं पूर्णं न लभ्यत[3] इत्यभिप्रायेण काङ्क्षितेनेति विशेषणम् । 'काङ्क्षतो मोक्षगमपि सुखं नाकाङ्क्षतो यथा' इति वचनात् ॥ ३१ ॥

---

[1] ईयते—स. [2] केवलानुभवानन्दस्वरूपः केवलो जडामिश्रितो ज्ञानमानन्दश्च स्वरूपभूतो यस्य सः । गुणसर्गया गुणानां सर्गो यया सा तया मायया प्रकृत्या भावरूपाज्ञानेन जीवजातगतेन अन्तर्हितमज्ञातमैश्वर्यं यस्य सः (तादृशः सन्) ईयते—स. [3] तावत् सुखं न लभ्यत इति यावत् ।

धर्मार्थकाम इति यो विहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥ ३२ ॥

ज्ञानं तदेतदखिलं दुरवापमाह
नारायणो नरसखः किल नारदाय
एकान्तिनां भगवतस्तदकिञ्चनानां
पादारविन्दरजसाऽऽप्लुतदेहिनां स्यात् ॥ ३३ ॥

---

ननु शास्त्रविहितानां धर्मादीनां कथङ्कारं साफल्यं भवतीत्याशङ्कां परिहरन्नाह- धर्मार्थ इति । धर्मार्थकाम इति नामभिन्नो यः त्रिवर्गः शास्त्रे विहितः तस्य ईक्षा ज्ञानमनुष्ठानं च, या त्रयी त्रयो वेदाः तेषां शब्दतोऽर्थतश्च ज्ञानम्, यौ नयदमौ नीतिदण्डशास्त्रे, तयोरीक्षा तात्पर्यज्ञानं, या च विविधा वार्ता कृषिवाणिज्यादिलक्षणा तदीक्षा प्रयोगज्ञानम् । 'नाम वा ऋग्वेदो यजुर्वेदः सामवेद अथर्वणश्चतुर्थः' इत्यारभ्य सर्वदेवजनविद्यामित्यन्तेन यदुक्तं तस्य सर्वस्यानुकर्षणार्थश्चकारः । यदेतदुक्तं तदेतदखिलं परमपुरुषस्य स्वात्मपूर्वकसमर्पणं अर्पितुमुद्दिष्टं भवति (चेत् ?) तर्हि निगमस्य ऋग्वेदादिसकलशास्त्रपठितस्य सत्यं यथार्थफलमिति मन्य इत्यन्वयः[1] ॥ ३२ ॥

नेदं स्वमनीषोत्थं, किन्तु सम्प्रदायतः प्राप्तत्वात् श्रद्धेयमित्याह—ज्ञानमिति । नरसखः अनन्तसखः । अनेन विशेषणेन (अनन्तेन च) सनकादिभ्य उपदिष्टमिदमिति ज्ञापितम् । किलशब्देन पुरातनत्वेन प्राबल्यं दर्शयति । ज्ञानाधिकारिण आह—एकान्तिनामिति[2] ॥ ३३ ॥

---

[1] असष्टमिदं वाक्यम् ।

यदेतदुक्तमखिलं निगमस्यार्थजातं स्वसुहृदः अस्मत्कृत्याभावेऽपि स्वयमेवानुकम्पामुपाप्नोतीति सुहृत्तमस्य परमस्य पुंसः परमपुरुषस्य स्वात्मार्पणं तत्साधनं चेद् सत्यं सफलं मन्ये । अखिलं बलवच्च मन्ये । सकलस्यानुष्ठितस्य ज्ञानस्य च भगवत्समर्पणं चेत् सार्थक्यमन्यथा नैरर्थक्यमिति । किं धर्मादिभिरिति प्रागुक्तमसमर्पितधर्मपरमिति मम भाव इति वित्तेति प्रोचे प्रह्लाद इति ध्येयम्—स.

तदेतदखिलं निगमस्य निगमेनोक्तत्वात् सत्यमबाध्यं तदुक्तफलसाधनं च मन्ये । अन्यथा वेदस्याप्रामाण्यानुपादेयत्वयोरापत्तेः । परं त्वेतदपेक्षया स्वसुहृदो निर्निमित्तोपकारकस्यास्य पुंसो भगवतः स्वात्मार्पणं नवविधभक्त्या स्वात्मसमर्पणं परमत्युत्तमसाधनमिति योजना । मोक्षफलकत्वात् । इतरस्य संसारफलकत्वादिति भावः—व्या.

[2] एकान्तिनां भगवतः पादारविन्दरजसा आप्लुतदेहिनामकिञ्चनानां तद् ज्ञानं स्यादिति योजना—व्या.

श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ।
धर्मं भागवतं शुद्धं नारदाद् देवदर्शनात् ॥ ३४ ॥

दैत्यपुत्रा ऊचुः —

प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ।
एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरः ॥ ३५ ॥

बालस्यान्तःपुरस्थस्य महत्सङ्गो दुरन्वयः ।
छिन्धि नः संशयं सौम्य स्याच्चेद् विश्रम्भकारणम्[1] ॥ ३६ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे षष्ठोऽध्यायः ।

---

तव कुतः प्राप्तमेतत् ? अत्राह—**श्रुतमिति** । ॥ ३४ ॥

एतस्मिन्नवसरे दैत्यपुत्राः प्रह्लादकथितार्थशङ्कया तं पृच्छन्तीत्याह—**प्रह्लादेति** । एताभ्यां गुरुपुत्राभ्यां शण्डामर्काभ्यां ऋते नान्यं गुरुं विद्महे यस्मात् । किञ्च विज्ञानं चेश्वरविषयं विवक्षितम् । तदुपाधिनापि बालानामक्षराभ्यासनिरतानामस्माकं ईश्वरः न काञ्चित् इति यस्मात् । अन्यगुर्वभावेऽपीश्वर उपदेष्टा स्यादतो वाह—**बालानामिति** । बालानामीश्वरोऽस्ति किम् ? नास्ति । प्रतिपत्त्यभावात्[2] ॥ ३५ ॥

कस्मिंश्चिदवसरे देशान्तरेऽन्यगुरुसङ्गतिः किं न स्यादिति तत्राह—**बालस्येति** । तस्मादुत्पन्नं नः संशयं जहीत्यन्वयः । तत्र कृत्यमाहुरित्याह—**स्यादिति**[3] ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य षष्ठोऽध्यायः

---

[1] विस्रम्भकारणम्—स.

[2] इतस्ततश्चाततो जनस्य मुखतः श्रुतमिति वक्तुमुत्कण्ठां कुण्ठयति—हीति । हि यस्माद् बालानां शिशूनां नोऽस्माकमीश्वरो नियन्ता हिरण्यकशिपुरूपोऽप्यस्ति । अतो नान्यत्र गमनयोग इति भावः—स.
ईश्वरोऽपि बालानां नो साक्षादुपदेष्टा—व्या.

[3] विश्वासजननोपायोऽस्ति चेत् तमुक्त्वा संशयं छिन्धीत्याशयेनाह—व्या

॥ अथ सप्तमोऽध्यायः ॥

नारद उवाच —

एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ।
उवाच स्मयमानस्तान् स्मरन् मदनुशासनम्[1] ॥ १ ॥

प्रह्लाद उवाच —

पितरि प्रस्थितेऽस्माकं तपसे मन्दराचलम् ।
युद्धोद्योगं परं चक्रुर्विबुधा दानवान् प्रति ॥ २ ॥

पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ।
पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥

तेषामतिबलोद्योगं निशम्यासुरयूथपाः ।
वध्यमानाः सुरैर्भीताः दुद्रुवुः सर्वतोदिशम् ॥ ४ ॥

कलत्रपुत्रवित्ताप्तान् गृहान् पशुपरिच्छदान् ।
नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥

व्यलुम्पन् राजशिबिरममरा जयकाशिनः ।
इन्द्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६ ॥

---

॥ अथ सप्तमोऽध्यायः ॥

श्रुतेषु सत्सु साधकानां भक्तेरेव प्राधान्यम्[2] । हरेर्मुख्यप्रसादजनकत्वाद् भक्तिरेव पुरुषेणापाद्येत्यादिकं निरूप्यतेऽस्मिन्नध्याये । भक्तिप्रतिपादनात्मकत्वादस्य शास्त्रस्य पुनःपुनस्तत्प्रतिपादनान्न पुनरुक्तिशङ्का कार्या ।

तत्र दैत्यपुत्रैः पृष्टः प्रह्लादः किं चकारेति युधिष्ठिरशङ्कान्वितः[3] तां परिहरन् नारद आह— **नारद इति**[4] । नारदस्य ममानुशासनम् ॥ १ ॥

अहिः सर्पः पिपीलिकैर्यथा भक्ष्यते तथा लोकोपतापनः पापो हिरण्यकशिपुः स्वपापेन अभक्षि नष्टप्रायोऽभूत्, दिष्ट्या सुखमस्तु लोकायेति ब्रुवाणाः । 'दिष्ट्याशमुपतोषं च' इत्यमरः ॥ २–५ ॥

व्यलुम्पन् । जयकाशिनः जितयुद्धाः, असुरजयेन प्रकाशमाना वा ॥ ६ ॥

---

[1] मदनुभाषितम्—व्या. मदनुभाषितं नारदानुभाषितम्—व्या.

[2] असष्टमिदं वाक्यम् । [3] युधिष्ठिरः शङ्कान्वित इति स्यात् ।

[4] एवमितीति प्रतीकधारणं पेशलम् । नारद आहेत्याह (शुकः) इति अवतारिका वा संस्कार्या ।

नीयमानां भयोद्विग्नां रुदन्तीं कुररीमिव ।
यदृच्छयाऽऽगतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥

प्राह मैनां सुरपते नेतुमर्हस्यनागसीम् ।
मुञ्च मुञ्च महाभाग सतीं परपरिग्रहम् ॥ ८ ॥

इन्द्र उवाच —

आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ।
आस्यतां यावत् प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥

नारद उवाच —

अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ।
त्वया न प्राप्यते संस्थामनन्तानुचरो बली ॥ १० ॥

इत्युक्तस्तां विहायेन्द्रो देवर्षेर्मानयन् वचः ।
अनन्तप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥

ततो नो मातरमृषिः समानीय निजाश्रमम् ।
आश्वास्याहोष्यतां वत्से यावत् ते भर्तुरागमः ॥ १२ ॥

तथेत्यवात्सीद् देवर्षेरन्ति साऽप्यकुतोभया ।
यावद् दैत्यपतिर्घोरात् तपसो न न्यवर्तत ॥ १३ ॥

---

तवोपभोक्तुं योग्या न भवतीत्याह—**परपरिग्रहमिति** ॥ ८ ॥

सुरद्विषः हिरण्यकशिपोः, वीर्यं रेतोलक्षणम् । अस्या यावत् प्रसवस्तावन्मम वशे आस्यताम् । पश्चादहं मोक्ष्ये । ततः पूर्वं कस्मान्न मुञ्चसीति तत्राह—**अर्थपदवीमिति** ॥ ९ ॥

अनया प्रसूतः पुत्रो हन्तुं त्वया न शक्यत इत्याह—**त्वयेति** । संस्थां मरणम् । कुतः ? अत्राह—**अनन्तेति** ॥ १० ॥

अनन्तप्रियः श्रीनारायणः अस्य भक्त्या । अनन्तस्य हरेः प्रिया बहुमानलक्षणा भक्तिः अनन्तप्रियभक्तिः, तया वा[1] ॥ ११ ॥

तावदत्रोष्यतामित्याह—**यावादिति** ॥ १२ ॥ अन्ति अन्तिके ॥ १३ ॥

---

[1] अनन्तस्य प्रियं यया । भक्तिस्तया—स. अनन्तप्रिये प्रह्लादे भक्त्या बहुमानेन वा—व्या.

ऋषिं पर्यचरत् तत्र भक्त्या परमया सती ।
अन्तर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥

ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ।
धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम् ॥ १५ ॥

तत् तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे ।
ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात् स्मृतिः ॥ १६ ॥

भवतामपि भूयान्मे यदि श्रद्दधते वचः ।
वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥

जन्माद्या षडिमे भावा दृष्टा देहस्य नात्मनः ।
फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥

---

अन्तर्वत्नी गर्भिणी ॥ १४ ॥

गर्भक्षेमम् इच्छाप्रसवं चेत्युभयम् । ईश्वरो वरप्रधानसमर्थः । नारदाच्छ्रुतमित्यनेन नारदस्य यद् गुरुत्वमभिप्रेतं (तद्) एवंविधमित्याह— धर्मस्येति । 'अणुरेष धर्मः' इति श्रुतेः धर्मस्य हरेः भागवतसंज्ञस्य वा, तत्त्वं तदुभयविधज्ञानं[1] च यद् गर्भस्थं मामुद्दिश्य मात्रे उपदिष्टम् , तद्विधमित्यर्थः ॥ १५ ॥

तद् उभयं तयोः कालस्यातिक्रान्तत्वात् स्त्रीत्वात् शब्दादिविषयलौल्याच्च मातुस्तिरोहितमभूदित्यन्वयः । ततस्तव किमभूदिति तत्राह— ऋषिणेति ॥ १६ ॥

ततोऽस्माकं किं प्रयोजनमिति तत्राह— भवतामपीति । यथा मे वैशारदी धीः भगवद्विषयज्ञानमभूत् तत् तथा तर्हि भवतामपि भूयादित्यन्वयः । न केवलं युष्माकमेव स्त्रीणां बालानां च श्रद्धातः तत् स्यादित्याह— श्रद्धात इति । यदि स्त्रीबालानां श्रद्धा स्यात्, अतः तर्हि तेषामिति ॥ १७ ॥

प्रह्लादस्तेषां स्ववचसि श्रद्धामुत्पाद्य नारदोक्तं ज्ञानमुपदिशति— जन्माद्या इति । 'जातः कंसवधार्थाय भूभारहरणाय च' 'जनितोत विष्णोः' इत्यादिषु हरेर्जन्मादिकं प्रतीयते । तत्र

---

[1] धर्मस्य भगवतः भागवतस्य वा । श्रेयसस्तत्त्वं स्वरूपम् । ज्ञानं भगवद्भागवतज्ञानसाधनं चेत्युभयविधम्—स.
धर्मस्य निवृत्तिधर्मस्य तत्त्वं स्वरूपं ज्ञानं ज्ञेयं भगवन्तं मामुपदिदेशेत्यर्थः—व्या.

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग् वश्यो व्यापकोऽसङ्ग्यनावृतः ॥ १९ ॥
एतैर्द्वादशभिर्विद्वान् आत्मनो लक्षणैः परैः ।
अहं ममेत्यतद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥

---

जन्मादिमतो हरेरितरवद् दुर्भगशरीरस्थस्य तच्छरीरयोग्यभोगप्राप्त्या व्याकुलचित्तस्य सर्वसमर्पणानुगुणफलदानं कथं घटत इत्यादिशङ्कां दैत्यपुत्रचित्तस्थां परिहरन्नित्यतो वाह[1]—जन्माद्या इति । इमे षड्भावाः जन्मास्तिवृद्धिपरिणामापक्षयविनाशाख्यविकारा देहस्य दृष्टाः प्रत्यक्षेण प्रमिताः, आत्मनो परमात्मनो न सन्तीत्यन्वयः । 'षड्विकाराः शरीरस्य न विष्णोस्तद्गतस्य तु' इत्यनेन निरस्तत्वात् । दृष्टा इत्युक्तं स्पष्टयति—फलानामिति । वसन्ताद्यवयवविशेषेण कालेन वृक्षस्य चूतादिफलानां जन्मादिकं दृश्यते । यथा वृक्षस्य कालाधीनत्वं तथा देहस्येश्वराधीनत्वमिति ज्ञापनाय ईश्वरमूर्तिनेत्युक्तम् । देवदत्तस्य सर्वमिदं मदधीनमिति मिथ्याज्ञाननिरासायोक्तमिदं तात्पर्यमिति[2] ज्ञातव्यम् । तदुक्तम्—'तदधीनं शरीरं च ज्ञात्वा तन्ममतां त्यजेत्' इति ॥ १८ ॥

ष 'क्षेत्रज्ञः पुरुषो आत्मा (ह्यात्मा ?) संसारी चेतनो मतः' इत्युक्तेः आत्मा जीवः किं न स्यादित्यतस्तन्निवर्तकलक्षणमाह—आत्मेति । परैः अव्याप्त्यादिदोषरहितैरेतैर्द्वादशभिः आत्मनो हरेः लक्षणैः स्वरूपभूतैः (हरिः) उपेत इति विद्वान् अहं ममेत्यतद्भावम् अतत्त्वं मोहजम् अज्ञानजं देहादौ त्यजेदित्यन्वयः । नित्यः स्वरूपतो विनाशरहितः । अवयवादिव्ययो नास्तीत्यव्ययः । प्रकृतिनिर्मितशरीरासत्वेनाविद्यारागादिदोषविधुरत्वात् शुद्धः । एको मुख्यः । मुख्यत्वं हरेरेव । स्वरूपज्ञानेन क्षेत्राख्यशरीरज्ञातृत्वात् स क्षेत्रज्ञः । उपजीव्यः आश्रयः । अविक्रियः स्वतः परतो वा परिणामरहितः । स्वम् आत्मानं स्वयमेव द्रक्ष्यति[3] पश्यतीति स्वदृक् । 'तत् ब्रह्म वेदाहं ब्रह्मास्मि' इति श्रुतिः । वश्यः अपराधीनः । स्वतन्त्र इति यावत् । वशं यापयति सर्वमिति वा । व्यापकः, अन्तर्बहिरिति शेषः । 'आकाशो नीलिमोदेति' इति श्रुतेः भूताकाशस्य परिच्छिन्नत्वात्, अव्याकृतस्य चित्प्रकृत्यात्मकत्वेन भगवदनुगृहीतत्वेन तस्य व्यापकत्वमुपचरितमनेनेति भवत्येव व्यापकः । अप्राकृतत्वात् असङ्गी । 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः । अनावृतः अज्ञानाद्यावरणरहितः एवंविधलक्षणोपेतस्य विष्णोः सर्वहेतुत्वात्, शरीरस्य तदधीनत्वेन तस्मिन् देहे ममतां त्यजेदित्यर्थः ॥ १९–२० ॥

---

[1] परिहरन्नाहेति स्वरसम् । [2] इति तात्पर्यं ज्ञातव्यमिति सरलम् । [3] ::यतीत्यधिकमिति भाति ।

हेमं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ।
क्षेत्रेषु देहेषु तथाऽऽत्मयोगैरध्यात्मविद् ब्रह्मगतिं लभेत ॥ २१ ॥

अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ।
विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥

---

हरेर्देहादिभ्यो विविक्तत्वेन ज्ञानोत्पत्तिप्रकारं वक्ति — **हेममिति** । यथा हेमकारो ग्रावसु क्षेत्रेषु निकषाश्मसु स्थानेषु हेमवत्सु पाषाणेषु वा, योगैः हेमावाप्त्युपायैः कषणाध्मानादिपरीक्षालक्षणैः हेमं प्राप्नुयादित्यन्वयः । न सर्वस्य सुशकमित्यत उक्तम् — **तदभिज्ञ इति** । तथा मुमुक्षुः पुरुषः आत्मयोगैः औत्पत्तिकभक्त्याद्युपायैः देहेषु क्षेत्रेषु सम्यगालोक्य विविच्य ब्रह्मगतिं लभेत देहादिभ्यो वैलक्षण्येन ब्रह्मविषयज्ञानमाप्नोतीत्यन्वयः । कोऽसावधिकारीत्यत उक्तम्—**अध्यात्मविदिति** । 'तरति शोकमात्मवित्' इति श्रुतेः, आत्मानम् अधिकृत्य वर्तमानं वेदान्तशास्त्रमध्यात्मं, तद् वेत्ति सम्यग् जानातीति । सात्विकादिस्वभावः अध्यात्मं तद् वेत्तीति वा । महाभूतादि वा अध्यात्मम् । तद् वेत्तीति (वा) अध्यात्मवित् ॥ २१ ॥

कानि महाभूतादीनीति तत्राह — **अष्टाविति** । मूलप्रकृतिर्महदादयः सप्त । एवमष्टौ प्रकृतयः सत्वादिगुणानां प्रकृतावन्तर्भावसम्भवेनाष्टत्वं युक्तमिति भावेनाह — **त्रय एवेति** । तस्याः प्रकृतेर्गुणास्तद्गुणाः । प्रकृतिजत्वाद् विकाराश्च तद्ग्रहणेन गृहीता इति नाष्टत्वासम्भव इत्याशयेनाह—**विकारा इति** । मनसा सहैकादशेन्द्रियाणि शब्दादिविषयाश्चेति विकाराः षोडशेति पूर्वाचार्यैः संख्याता इति शेषः । हरेरेष्वनुगतत्वेन विकारसम्भवादेतैः सह किं न पठित इति तत्राह— **पुमानिति** । समन्वयादिति ल्यब्लोपे पञ्चमी । समन्वयमनुगतं प्राप्यैकः पुमान् नारायण एव केवलं शुद्ध इत्यतो विकारेषु न पठित इत्यर्थः । अत्रेदं तात्पर्यमवगन्तव्यम् । तथाहि- अभिमन्यमानजडापेक्षया पुमान् जीवः पञ्चविंशोऽभिमानिचेतनविवक्षया[1] विष्णुः षड्विंश इति । सम्यगन्वयात् नियन्तृत्वेनानुगतिज्ञानात् ज्ञेय इति । तदुक्तम् – 'अमान्यपेक्षया[2] विष्णुः पञ्चविंश इति स्मृतः । जडव्यपेक्षया जीवः सम्यग्ज्ञेयो हरिः स्मृतः' इति । यद्वा आकाशादिपञ्चभूतानि सत्वादित्रयो गुणा इत्यष्टौ प्रकृतयः । तत्र मूलप्रकृतिमहदहङ्काराणामाकाशादिष्वनुगतत्वेन पृथग् ग्रहणं न क्रियते । गुणानां तदात्मकत्वेन गुणग्रहणेन तद्ग्रहणोपपत्तेः । शेषं पूर्ववत् ॥ २२ ॥

---

[1] अभिमानिचेतनस्याभिमन्यमानजडात् पृथक् पञ्चविंशत्त्वेन संख्यान इत्यर्थः ।

[2] अभिमान्यपेक्षया—ह.

देहस्तु सर्वसङ्घातो जगत् तस्थु[illegible] द्विधा ।
अत्रैव मृग्यः पुरुषो नेति ने[illegible]त् त्यजन् ॥ २३ ॥
अन्वयव्यतिरेकेण विवेकेनागतात्मना ।
सर्गस्थानसमाम्नायैर्विमृशद्भिर[illegible] ॥ २४ ॥

---

तत्त्वसंख्याकथनेन प्रकृते किमायातमिति तत्राह—**देहस्त्विति** । सर्वेषां प्रकृतितत्कार्याणां सङ्घातः समूहः तन्निर्मित इत्यर्थः । तत्त्वेभ्योऽथ तदभिमानिभ्यो विविच्य परमात्मा ज्ञातव्य इत्यभिप्रायेण तत्त्वसंख्यानं कृतमितीममर्थं दर्शयति तुशब्देन । देहशब्देन प्रपञ्चो विवक्षित इति कृत्वा तं देहं विभजति—**जगदिति** । जगच्छब्दो द्विरावृत्त्या व्याख्येयः । तथाहि—जगत् समस्तं जगत् जङ्गमं तस्थुः स्थावरमिति द्विधा विभक्तम् । किञ्चात इत्यत आह—**अत्रेति** । ततत्वात् ब्रह्म तत् । तत् न भवतीत्यतत् प्रकृत्यादिकं त्यजन् हित्वा स्वतः सर्वदा भिन्न इत्यर्थः । पुरुषः पूर्णषड्गुणोऽत्रैव देहलक्षणे प्रपञ्चे मृग्यः अन्वेषणीयः विचार्यः, ज्ञातव्य इति यावत् । शतृप्रत्ययेन सदा प्रकृत्यादित्यागो न कादाचित्क इति सूचयति । तत्र किं प्रमाणमिति तत्राह—**नेति** । 'स एष नेति नेत्यात्मा' इति श्रुतिः प्रमाणमित्यर्थः । यो तत् त्यजन् तत् वपुः त्यजन् तेनेति वा[2] । अतत् त्यजतीति अतत्त्यक् तेन अतत्त्यजा इति वा पाठः[1] ॥ २३ ॥

कया युक्त्या मृग्यत इति तत्राह—**अन्वयेति** । अन्वययुक्तव्यतिरेकेण । 'यत्र यत्र जगत् तत्र तत्र ब्रह्म' इत्यन्वयः । 'यत्र यत्र ब्रह्म, न तत्र तत्र जगत् परिच्छिन्नत्वात्' इति व्यतिरेकलक्षणयुक्त्या । आकाशवज्जगदन्वितत्वेन यदेतदसङ्गलक्षणपृथक्त्वेन वेति युक्त्या निश्चितेन विवेकेनागतेन युक्तेन आत्मना मनसा[3] । ननु व्याप्तिग्राहकप्रमाणाभावेनाभासत्वाद् अन्वयात् निर्णयो न स्यादिति तत्राह—**सर्गेति** । अत्र सर्गस्थानाभ्यां संहारादिकमुपलक्ष्यते । न सहिता त्वरा[4] येस्ते असत्वराः तैः । 'सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिहिता वक्तव्या मृत्योरात्मानं परिहराणीति' इति श्रुतेः । विमृशद्भिः विचारं कुर्वद्भिः । 'को न आत्मा किं ब्रह्म'

---

[1] अतत्त्यजा—इत्यपि वि.स. पाठः । [2] अस्पष्टमिदं वाक्यम् ।

[3] अस्पष्टमिदम् । जगदन्वितत्वेऽप्याकाशवदसङ्गत्वं परमात्मन इत्यभिप्रायः स्यात् ।

[4] उच्चारणविषये त्वरेत्यर्थः ।

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ।
ता येनैवानुभूयन्ते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥
एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ।
सरूपमात्मनो धत्ते गन्धैर्वायुरिवान्वयात् ॥ २६ ॥

---

इत्यादिश्रुतेः । सर्गस्थानादिविषयैः समाम्नायैः निर्दोषगुणोपेतैर्वेदैः, 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्यादिलक्षणैः । 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इत्यादिकैश्चानुगृहीतया[1] ॥ २४ ॥ व्या

विमृश्य निर्णयप्रकारं दर्शयति—बुद्धेरिति । 'सत्वबुद्ध्यादिशब्दैस्तु जीवोऽपि क्वचिदीर्यते' इति वचनाद् बुद्धेर्जीवस्य जागरणाद्या वृत्तयः अवस्थाः ता येन परमात्मना प्रेरितेन जीवेनानुभूयन्ते । 'जाग्रदाद्या कर्म चैव सुखदुःखे च तस्य हि' इति वचनात् । सः परः पुरुषः अध्यक्षः जाग्रदादेर्द्रष्टा । 'जाग्रदादेः परोद्रष्टा सुखनित्यो हरिः स्मृतः' इति वचनात् । सोऽध्यक्षः जाग्रदादिनाऽधिगतेन्द्रियसुखदुःखपरो[2] जीवः परः विश्वादिविग्रहाद् हरेरन्यः इत्युत्तरार्धस्यार्थभेदो ज्ञातव्यः । एवंशब्देन कालादिकं व्यावर्तयति । ॥ २५ ॥

'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु' इति वचनाद् विश्वादिविग्रहात् नारायणादन्यत्वं जीवस्य कथं जीवधर्माक्रान्तत्वात् तस्येति तत्राह—एभिरिति[3] । बुद्धीनां जीवानां भेदः तारतम्यलक्षणो यैर्ज्ञाप्यते तैर्जीवतारतम्यज्ञापकैः[4], अत एव पर्यस्तैः एकत्र समस्तैः[5] एभिः त्रिभिर्वर्णैः त्रिधावर्णो वर्णनं येषां ते तथा तैर्जाग्रदादिभिः, त्रयो वर्णाः शुक्लकृष्णपीतलक्षणा येषां ते तैः सत्वादिगुणैर्वा । सः परमात्मा अज्ञजनदृष्ट्याऽऽत्मनो जीवस्य सरूपं रूपेण समानं रूपं कार्यादिबद्धं

---

[1] असष्टमिदं वाक्यम् । इत्यादिभिरनुगृहीतैरिति वा स्यात् । व्यासतत्वज्ञतीर्थास्तु श्लोकमिमं रीत्यन्तरेण व्याचक्रुः। तथा हि—केनोपायेन मृग्य इत्यत आह—अन्वयेति । भगवति तिष्ठति देहो जीवति, गच्छति तु पततीत्यन्वय-युक्तव्यतिरेकेण, विवेकेन सार्वज्ञाल्पज्ञतादिलक्षणविरुद्धगुणेन, आगतात्मन् मुक्तमनसाऽनुभवेन सर्गस्थिति-समाम्नायैः सृष्टिस्थितिसंहारबोधकैर्वेदैः, असत्वरैः आपातप्रतीतिरहितैस्त्वरितोच्चारणादिदोषरहितैर्वा, सावधान-मनस्कैर्वा, विमृशद्भिरधिकारिभिर्विमृग्यत इति योजना—इति ।

[2] जाग्रदादिनाऽधिगतेन्द्रियसुखदुःखो जीव इत्येव पेशलम् ।

[3] पूर्वश्लोके जीवस्यावस्थात्रयलक्षणसंसारानुभवो भगवता भवतीत्युक्तम् । तत् कथम् ? न हि भगवान् किञ्चि-दनिमित्तीकृत्य संसारमनुभावयतीत्यतः संसारकारणान्याह श्लोकत्रयेण एभिस्त्रिवर्णैरित्यादिना—व्या.

[4] स्वस्वाधिक्येन नीचमध्योत्तमत्वलक्षणतारतम्यज्ञापकैः, पर्यस्तैः परिक्षिप्तैः अनादितः सम्बद्धैरिति यावत्, (सत्वादिगुणैः)—व्या. [5] समानाधिकरणैरित्यर्थः ।

एतद्द्वारो हि संसारो गुणकर्मनिबन्धनः ।
अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवाप्यते ॥ २७ ॥

स्व

धत्त इति दृश्यते । न तु प्राज्ञजनदृष्ट्या, तद्दृष्ट्या ज्ञानानन्दादिसमानं रूपं धृत्वा तत्सरूपं धत्त इति । 'स जीवेन सह स्थानात् तत्स्वरूपः[1] प्रदृश्यते' इति स्मृतेः । अन्वयात् दक्षिणाक्ष्यादिष्वनुगतत्वात् । कीदृशैः ? क्रियोद्भवैः । क्रियया उद्भवो येषां ते तथा तैः कर्मजनितैः । यद्वा क्रियाया उद्भवो येभ्यो गुणेभ्यस्ते तथा तैः (कर्मजनकैः)। शुक्लसत्वजन्यं जागरणम् । पीतरजोजन्यं स्वप्नं कृष्णतमोजन्या सुप्तिः । कर्माण्येवंविधानि । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतेः । कुत्रायं व्यवहारो दृष्ट इति तत्राह—गन्धैरिति । यथा गन्धैरन्वयात् सौरभ्यादिगन्धसम्पर्कात् सुगन्धो दुर्गन्धो मिश्रगन्धो वायुरिति व्यवह्रियते न तावता (गन्ध)तादात्म्यं वायोः । तथात्वे सर्वदा तथा स्यात् । न चैवम् । तस्मात् भिन्न एव वायुः । तथा हरिरपि । 'यथा गन्धयुतोऽनिलः' इति च । 'तत् सृष्ट्वा तदेवानुप्राविशत् । तदनुप्रविश्य सच्च त्यच्चाभवत्' इति श्रुतेर्देहाख्यप्रपञ्चसम्पर्कोऽस्त्येव हरेरिति भावः ॥ २६ ॥

पुंसः अभेददर्शने[2] बाधकमाह—एतद्द्वार इति । इदम् अभेददर्शनं द्वारं यस्य संसारस्य स तथा । पुंसः संसारः प्राप्यते हि यस्मात् । 'अदृष्टेर्जीवपरयोः भेदस्याप्नोति संसृतिम्' इति वचनात् । अभेददर्शने कारणमाह—गुणेति । अभेददर्शनजनकत्वेन गुणकर्मणोः संसारनिमित्तत्वमाह—गुणेति । तस्येति शेषः । कर्मणः कारणमज्ञानं तद्द्वारा संसार इत्याशयेनाह—अज्ञानेति । अज्ञाननिमित्तकर्मपरम्परया मुग्धमनसः पुंसोऽभेदनिश्चयादन्ततः तम एव शरणमित्याशयेनाह—अपार्थ इति । अपगतनिवृत्तिः, तमस इति शेषः । 'अर्थः स्याद् विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु' इत्यभिधानात् । मशकार्थे धूम इति प्रयोगाच्च । 'अभेदनिश्चयाद् याति तमो नास्त्यत्र संशयः' इति स्मृतेः । अपिशब्देन नित्यदुःखभूयिष्ठतमःप्राप्तिं सूचयति । 'दुःखरूपोऽपि संसारो बुद्धिपूर्वमवाप्यते' इति संसारः तमः । इन्द्रियार्थसन्निकर्षात् अर्थोपलब्धिर्जाग्रत् । जाग्रदनुभवसंस्कारोपस्थापितविषयाभासोपलब्धिः स्वप्नः । उपरतस्वस्ववृत्तीन्द्रियविषयज्ञानं सुप्तिः । अत्र जाग्रद्दृष्टश्रुतपदार्थसंस्कारकृतः स्वप्नः स्वशिरश्छेदनादिलक्षणो दुःखादिहेतुर्यथा तथा जाग्रदपि राजाऽहं (इति) वदतोऽनर्थपरम्परादृष्टिवत् जीवपरयोरभेदं जानतः पुंसः इहामुत्र दुःखबाहुल्यहेतुरित्यर्थः । 'यथा स्वप्ने शिरश्छेदं स्वयं कृत्वाऽऽत्मनोऽवशः । ततो दुःखमवाप्येत तथा जागरितेऽपि तु । जानन्नप्यात्मनो

[1] तत्सरूपः—ग [2] भेदादर्शने इतीह चोत्तरत्र च चारु । तात्पर्यानुरोधात् ।

मनोमयत्वात् सर्वार्थाः स्वप्नजागरयोः समाः ।
दृष्टानर्थानपि ध्यातुः शोकमोहभयप्रदाः[1] ॥ २८ ॥

तस्माद् भवद्भिः कर्तव्यः कर्मणां त्रिगुणात्मनाम् ।
बीजनिर्हरणे योगः प्रवाहोपरमो धियः ॥ २९ ॥

---

दुःखमवशस्तु प्रवर्तते ' इति स्मृतौ दर्शनात् ॥ २७ ॥

अर्थक्रियाकारित्वान्न स्वप्नादेर्मिथ्यात्वमित्याह—मनोमयत्वादिति । मनसा निर्मितकर्मनिमित्तत्वादनित्यत्वाभिप्रायेण स्वप्नजाग्रत्साम्यम् । अन्यथा शोकमोहभयप्रदा इत्येतदसंबद्धं स्यात् । न च शुक्तिरजतादिकं वलयकरणादियोग्यम् ॥ २८ ॥

विपक्षे बाधकमुक्त्वा विपर्यये पर्यवसानच्छलेन संसारबीजनिर्हरणोपायमाह—तस्मादिति । यस्मात् पुंसो गुणकर्मनिर्मिताभेददर्शनद्वारः[2] संसारः तस्माद् भेदनिमित्तत्रिगुणमयकर्मबीजभर्जनोपायो भवद्भिः कर्तव्य इत्यन्वयः । नन्वग्निष्टोमादिकमन्तरेण कर्मणां बीजभूतस्य लिङ्गशरीरस्य हननोपायः कोऽसौ ? यमनियमादिलक्षणश्चेत् तस्योभयत्र साधारणत्वेनानन्तरङ्गत्वात् । अत आपाकनिक्षिप्तामघटदहनयोग इवाहत्य तत्साधनं वक्तव्यमिति तत्राह—प्रवाह इति । धियः प्रवाहस्य सजातीयविजातीयप्रत्ययानन्तरिततया विषयीकरणनिपुणोपासनालक्षणस्य । उं रुद्रं पाति रक्षतीति उपः, 'उपोऽधिके च' इति सूत्रात् उपः सर्वाधिको वा, परमेश्वरः, तस्मिन् रमणं निरन्तरं श्रीनारायणचरणसरसिजसंचिन्तनलक्षणोपासनात्[4] । स एवेत्यभिप्रायः[5] ॥ २९ ॥

---

[1] एतत्पद्यानन्तरं ' परस्य निर्गुणस्यापि गुणसङ्गाज्जनिर्मृतिः । व्यक्तं जन्माप्ययप्रोक्तं शयानस्यैव न स्वतः । हरिसंचिन्तया सर्वे प्रयान्ति परमं पदम् ' इति कश्चन श्लोकः कोशेषु दृश्यते । परं स्फुटं प्रक्षिप्तोऽयम् । दुर्घमार्थस्याप्यस्य विजयध्वजतीर्थैर्व्याख्यानात् । सत्यधर्मतीर्थैर्व्यासतत्त्वज्ञतीर्थैर्व्याख्यानाद्गणनाच्च । तयोर्व्याख्याने मनोमयत्वादिति २८ तममिति तस्मादित्यादि २९ तममिति च दृश्यते, तथा च न मध्येऽनेन श्लोकेन व्यवधानसंभवः । गोविन्दाचार्यास्तु मनोमयत्वादिति श्लोकमपि प्रक्षिप्तं मन्यन्ते । श्रीधराद्योऽपि तथैव । परं विजयध्वजतीर्थप्रभृतिभिस्त्रिभिरपि व्याख्यातः सः ।

[2] प्रायेणास्पष्टमिदम् ।

तदेवमात्मपरमात्माविवेकनिबन्धनोऽयं संसार इत्याह—एतद्द्वारो हि संसारः । नन्वविवेकस्यापि किं कारणम् ? गुणकर्मनिबन्धनः । सात्विकादिस्वभावैस्तदनुगुणैः कर्मभिश्चायमविवेकभ्रान्तिरनुवर्तते । अपार्थः अपुरुषार्थभूतः । नन्वेवमपुरुषार्थमपि संसारं किमिति पुरुषा भजन्ते ? स्वप्न इवेष्यते । यथा स्वशिरश्छेदादिरूपः स्वप्नो दुःखहेतुरप्यवशतया आप्यते एवं जागरणेऽप्यवशः सुखदुःखे अनुभवति । अभिलाषेऽनभिलाषे च न स्वतन्त्रो जीवः स्वप्नवत् । एतेन पारवश्यमेव स्वप्नसाम्यं जागरणस्येत्युक्तं भवति—गो.

[3] भेदादर्शनद्वार इति स्वरसम् । तस्मादभेदेत्यत्रापि तथा ।

[4] लिङ्गशरीरनाशो भवतीति शेषः ।　[5] स एवोपाय इत्यभिप्राय इति स्यात् ।

तत्रोपायसहस्राणामयं भगवतोदितः ।
यदीश्वरे भगवति भक्तिः स्यान्नान्यथा रतिः ॥ ३० ॥

गुरुशुश्रूषया भक्त्या सर्वलाभार्पणेन च ।
सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥ ३१ ॥

श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ।
तत्पदाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः ॥ ३२ ॥

हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ।
इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३३ ॥

एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया[1] संलभते रतिम् ॥ ३४ ॥

---

धियः प्रवाहस्य[2] अन्तरङ्गसाधनमाह—तत्रेति । भगवतेत्यनेन प्राह्यत्वे आप्तमूलत्वं दर्शयति । अन्यथा बाधकमाह—नेति । भक्त्या गुरुशुश्रूषया, 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति श्रुतेः । सर्वलाभार्पणेन, हराविति शेषः । 'ब्रह्मार्पणं ब्रह्महविः' इत्यादेः । साधुभक्तानाम्, 'नावैष्णवाय दातव्यं नोदबिन्दुं न तण्डुलम्' इत्यादेः, नियतभगवद्भक्तानां सेवालक्षणप्रसङ्गेन । 'महत्सेवां द्वारमाहुर्विमुक्तेः' इत्यादेः । ईश्वराराधनेन पञ्चरात्रोक्तेन पञ्चकालीनभगवत्पूजया । 'पञ्चकालपरायणम् । पञ्चकालैकमनसाम्' इत्यादेः । तत्कथायां श्रद्धया । 'पानेन ते देव कथासुधायाः' इत्यादेः । गुणकर्मणां कीर्तनैः । 'कलौ संकीर्त्य केशवम्' इत्यादेः । विभयविखण्डध्यानविधानार्थं तत्पदाम्बुरुहध्यानादिति । 'सञ्चिन्तयेद् भगवतश्चरणारविन्दम्' इत्यादेः । तस्य हरेर्लिङ्गं प्रतिमा तस्येक्षा दर्शनम् । अर्हणं पूजनम् । आदिशब्देन प्रदक्षिणादि गृह्यते । 'बर्हायिते ते नयने नराणाम्' इत्यादेः ॥ ३०–३२ ॥

हरिः सर्वेषु भूतेषु इत्यादिना हरिरेव पूज्यः न तु भूतानि योग्यतातिरेकेण इतीदमेव कथ्यते । 'ईश्वरो जीवकलया प्रविष्टः' इत्यादेर्वा ॥ ३३ ॥

यया भक्त्या हरौ रतिमुपासनां लभते तथा स्वरूपानन्दानुभवलक्षणां रतिं लभत इति परम्परया योजना ॥ ३४ ॥

---

[1] यथा—व्या. । तैः साधनैरीश्वरे वासुदेवे स भक्तो यथा रतिं लभते तथा भक्तिः क्रियते उत्पद्यत इति योजना । रतिम् उपासनापरोक्षस्वानन्दानुभवलक्षणम्—व्या. [2] प्रवाहोपरमस्येति स्यात् ।

निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि ।
यदाऽऽतिहर्षोत्पुलकाश्रुगद्गदः प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥

यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्मगतिर्गतत्रपः ॥

तदा पुमान् मुक्तसमस्तबन्धनस्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३७ ॥

अधोक्षजालापमिहाशुभात्मनः[1] शरीरिणः संसृतिचक्रशातनम् ।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३८ ॥

---

सृष्ट्यादीनि कर्माणि । कंसवधादीनि वीर्याणि । उद्गानादिकं न सर्वभक्तसाधारणम् । तदुक्तम् —'केचिद् भक्ताः प्रनृत्यन्ति गायन्ति च यथेप्सितम् । केचित् तूष्णीं भजन्त्येव केचिच्चोभयकारिणः' इति ॥ ३५-३६ ॥

एतदेवाह—तद्भावेति । तस्य भावे यथास्वरूपे भावो भक्तिः तस्यानुकृते अनुकूलत्वेन प्रकटिते आशयाकृती अन्तःकरणाकारौ यस्य स तथा । कश्चिदुद्गानेनान्तरां भक्तिं प्रकटयति । कश्चिद् रोदनाश्रुपातकरणेन । कश्चित् नर्तनेन । कश्चित् तूष्णीं भजनेनेति । तस्य ब्रह्मणो भावा लीलाः । तत्र यो भावो भक्तिः तया रञ्जिताभिप्रायाकार इति वा ।'स्थानाभिप्राय आशयः इति वा[2] । निर्दग्धं कर्मबीजं यस्य स तथा स चानुशयः अन्तःकरणं यस्य स तथा[3] । अनुशयः संसारो वा ॥ ३७ ॥

निर्वाण भक्त्यनन्तरं भगवत्कथा सुखजननीत्याह—अधोक्षजेति । अधोक्षजालापं संसृतिचक्रशातनं नाशनम् । तद् हरिविषयकथाकथनं ब्रह्मनिर्वाणसुखं ब्रह्मणोऽनुग्रहात् प्राप्यमुक्तिसुखं विदुरिति यत् ततो देहहृदयस्थितजीवहृदिस्थितमीश्वरं भजध्वमित्यन्वयः । 'योऽयं बहिर्वा पुरुषादाकाशो यो वै यं वाव सयोऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशो यं वाव सयोयमन्तर्हृदय आकाशः' इति श्रुतेः । हृदीश्वरं मनःप्रेरकत्वेन तत्स्वामिनम् । 'स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः' इति वाक्याद्वा ॥ ३८ ॥

---

[1] पूर्वमशुभात्मन इत्यर्थः । विषयध्यानान्मनसोऽशुभत्वम् । [2] इति चाभिधानमिति स्यात् ।
[3] निर्दग्धं (कर्म)बीजं अनुशयोऽन्तःकरणं संसारो वा यस्य स तथेत्यर्थः ।

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः ।
अस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥

रायः कलत्रं पशवः सुतादयो गृहा मही कुञ्जरकोशभूतयः ।
सर्वार्थकामाः क्षणभङ्गुरायुषः कुर्वन्ति मर्त्यस्य कियत् प्रियं चलाः ॥

एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ।
तस्माददृष्टश्रुतदूषणं परं भक्त्यैकया सम्भजतात्मलब्धये ॥ ४१ ॥

यदर्थमिह कर्माणि विध्यङ्गान्यसकृन्नरः ।
करोत्यतो विपर्यासममोघं विन्दते फलम् ॥ ४२ ॥

---

भगवदुपासनं दवीयस्त्वेन बहुपाथेयसाध्यत्वेन भागीरथीयात्रावद् दुःसाधनं किम् ? नेत्याह—**कोऽतिप्रयास इति** । अस्यात्मनो जीवस्य स्वे स्वाधीने हृदि छिद्रवत् आकाशवत् सतः स्थितस्य हरेः उपासने कोऽतिप्रयासः ? न कोऽपि । सर्वगतत्वेन समीपस्थत्वात् । 'तद् दूरे तद्वन्तिके' इति श्रुतेः । अशेषदेहिनां सामान्यतः साधारणत्वेन हृदि स्थितत्वेन सख्युः । तस्मात् विषयोपपादनैः किम् ? शास्त्रैरिति शेषः ॥ ३९ ॥

भक्तेरन्तरङ्गसाधनं वैराग्यमेवेत्याशयेनाह—**राय इति** । विहितयज्ञसाध्यत्वेन स्वर्गादेर्नित्यत्वं संभाव्यमिति नेत्याह—**एवमिति** । एवं मर्त्यलोकवत् न निर्मलाः प्राकृतत्वात् । न दृष्टं श्रुतं दूषणं यस्य स तथा तम् । सहचरीभूतवैराग्येण एकया मुख्यया । आत्मलब्धये स्वरूपानन्दानुभवलक्षणमुक्तिप्राप्त्यर्थम् । आत्मनो देहादेः विविच्य स्वरूपज्ञानलक्षणलाभाय वा ॥ ४० ॥ ॥ ४१ ॥

भगवदनर्पणबुद्ध्याऽनुष्ठितयज्ञादिकर्म अनर्थहेतुरित्याशयेनाह — **यदर्थमिति** । यजेतेत्यादिविध्यङ्गानि । विपर्यासं दुःखम् अमोघं सदातनत्वेनावर्ध्यम्[1] ॥ ४२ ॥

---

[1] तर्हि विहितानि कर्माणि किमकार्याणीत्यत आह—यदर्थमिति । इह लोके विध्यङ्गानि कर्माणि नरो यदर्थं यत्प्रीत्यर्थमसकृत् करोति अतः प्रसङ्गाद् भगवतोऽविपर्यासं नाशरहितममोघं फलं विन्दत इति योजना । भगवत्प्रीत्यर्थं कर्माणि कर्तव्यानीति भावः—व्या.

तदपि कर्म हरिसमर्पितं चेदनश्वरफलोपलब्धये भवति, न भवत्यसमर्पितं ततो व्यर्थं तदित्याह—यदर्थमिति । विध्यङ्गानि यजेतेत्यादिविधिविहितानि यानि कर्माणि यदर्थं यत्फलमुद्दिश्य नरोऽधिकारी असकृदनेकवारं करोति । अतोऽसर्वोत्तमसमर्पितत्वादेतत्कर्मणो विपर्यासं सङ्कल्पितादन्यदमोघं दुःखसम्पादकत्वेनावन्ध्यं फलं क्लेशादिरूपं विशरणं वा लभते—स.

सुखाय दुःखमोक्षाय संकल्प इह कर्मणः।
सदाऽऽप्नोतीहया दुःखमनीहायां सुखोन्नतिम् ॥ ४३ ॥

कामान् कामयते काम्यान् यदर्थ इह पूरुषः।
स वै देहस्तु पारक्यो भङ्गुरो यात्युपैति च ॥ ४४ ॥

किमु व्यवहितापत्यदारागारधनादयः।
राज्यकोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४५ ॥

[1]किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः।
अनर्थैरर्थसंकाशैर्नित्यानन्दमहोदधेः ॥ ४६ ॥

निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः।
निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४७ ॥

---

एतदेव विवृणोति—**सुखायेति**। ब्रह्मार्पणलक्षणेन (अभिप्रायेण) करणम् अनीहा तदुक्तम्—'अप्रयत्नेन करणमनीहा प्रोच्यते बुधैः[2]' इति[3] ॥ ४३ ॥

शाश्वतसुखानुभवकामं विहाय शरीरे सुखकामं (शरीरसुखार्थं ?) प्रयतमानो विमूढत्वेनातिहास्यो बुधैरित्याशयेनाह—**कामानिति**। काम्यान् कामान् विषयान्। यदर्थे यस्य शरीरस्यार्थे। पारक्यस्तु श्वशृगालादेर्विद्यमानो न स्वकीयः। व्यवहिताः शरीरमपेक्ष्य दूरस्थाः ॥ ४४-४५ ॥

ननु विषयोपभोगार्थं श्रीनारायणोऽपि विग्रहं गृह्णातीति केचित्। तत्राह—**किमेतैरिति**। आत्मनो हरेः। तस्मात् स्वतः चिदानन्दस्वरूपस्य जीवात्मनो भौतिकादिना किम्? न किमपि कृत्यमित्यतो वाऽऽह[4]—**किमेतैरिति** ॥ ४६ ॥

विचारासहत्वात् न देहादिना प्रयोजनमित्याह—**निरूप्यतामिति**। निषेकादिषु गर्भाधानादिषु अवस्थासु कर्मभिः क्लिश्यमानस्य देहभृतः कियान् स्वार्थ इति निरूप्यतामित्यन्वयः ॥ ४७ ॥

---

[1] किम्वेतैः—व्या. स. [2] एतत् तात्पर्यवचनं तस्मादर्थाश्च कामाश्चेति श्लोक (४९) सङ्गततया व्याकुर्वते व्यासतत्वज्ञतीर्था सत्यधर्मतीर्थाश्च।

[3] ईहा फलेच्छा तया सदा दुःखमेवाप्नोति। अनीहायाम् अकामने सुखोन्नतिं सदा आप्नोति—स.

[4] न किमपि कृत्यमित्याहेति स्वरसम्।

कर्माण्यारभते देही देहेनात्मानुवर्तिना ।
कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४८ ॥
तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ।
भजतानीहयाऽऽत्मानमनीहं हरिमीश्वरम् ॥ ४९ ॥
सर्वेषामपि भूतानां हरिरात्मेश्वरः परः ।
भूतैर्महद्भिः स्वकृतैः कृतानां बीजसंज्ञितः ॥ ५० ॥
देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव च ।
भजन् मुकुन्दचरणं स्वस्तिमान् स्याद् यथा वयम् ॥ ५१ ॥
नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥ ५२ ॥

---

संसारस्य प्रवाहरूपेण नित्यत्वान्न हरेर्ज्ञानमन्तरेण निवृत्तिः स्यादित्याशयेनाह—**कर्माणीति** । आत्मानुवर्तिना परमात्माधीनेन । कर्म देहश्चेत्युभयम् अविवेकतोऽज्ञानात् ॥ ४८ ॥

नन्वीश्वरसेवायां भक्तिरेव प्रयोजिका चेन्नार्थादिना प्रयोजनमित्याशङ्कां परिहरन्नुपसंहरति—**तस्मादिति** । अर्थादेर्हरिविषयत्वेन साफल्यं भवतीत्यर्थः । ननु प्रतीतं चेष्टाराहित्यमनीहशब्दार्थं परित्यज्यान्यार्थकल्पने किं प्रमाणम् ? उक्तं हि प्रमाणमिति चेन्न[1] । तस्य[2] बह्वर्थवाचित्वेन स्वाभिप्रेतार्थसंदेहात् । 'करणं कारणे कार्ये साधनेऽनुव्रतादिषु[3]' इत्युक्तेरिति तत्राह- **अनीहमिति** । श्रमसाध्यक्रियाराहित्यादनीहमित्यस्योक्त एवार्थः । अप्रयत्नेनेति विशेषणाच्च श्रमसाध्यक्रियाराहित्यमेवोच्यते[4] । 'स्पष्टाद्युच्चारणाभेदे ध्यानपद्मासनादिषु । व्रतबन्धे नाट्यभेदे गीतके कर्मणीन्द्रिये' इत्युत्तरवाक्ये कर्मण्यपि प्रयोगाश्च ॥ ४९ ॥

हरेरेव भजने कारणमाह—**सर्वेषामपि** । व्यञ्जकत्वात् बीजं, गत इति शेषः[5] । 'व्यञ्जनाज्जगतो विष्णुर्बीजं न परिणामतः' इति वचनान्न बीजशब्दस्य विकारोऽर्थः । 'अप्रयत्नेनेति', 'अविक्रियः स्वदृग् वश्यः' इति श्लोक्तेः ॥ ५०–५१ ॥

भूतानामुत्पत्त्यादिना भक्त्यभावे जातिविशेषो वृत्तादिविशेषोऽप्यकिञ्चित्कर इत्याह—**नाल-**

---

[1] अप्रयत्नेन करणमनीहा प्रोच्यते बुधैरिति । [2] ईहाशब्दस्येत्यर्थः । [3] ईहाशब्दार्थविषय अभिधानोदाहरणमेतत्
[4] अप्रयत्नेन कर्तारं हरिम् अनीहया अप्रयत्नेन, स्वाभाविकतया, न तु विधिनिषेधचकिततयेति यावत्, भजतेत्यन्वयः । [5] शेषस्यान्वयो न स्पष्टः ।

न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद् विडम्बनम् ॥ ५३ ॥

ततो हरौ भगवति भक्तिं कुरुत दानवाः ।
आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५४ ॥

दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ।
खगा मृगाः पापजीवाः सन्ति ह्यच्युततां गताः ॥ ५५ ॥

एतावानेव लोकेऽस्मिन् पुंसां स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत् सर्वत्र तदीक्षणम् ॥ ५६ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे सप्तमोऽध्यायः ।

---

**मिति**[1] । वृत्तमाचारः । 'वृत्तं स्वरूपे चरिते' इति यादवः ॥ ५२ ॥

आत्मौपम्येन आत्मस्नेहवत् (अनुपाधिक)स्नेहेन[2] ॥ ५४ ॥

वेदान्तादिशास्त्रानधिकारित्वेन पापजीवत्वम्, न तु पापकरणात् । अच्युततां च्युतिवर्जनं मोक्षं गताः सन्ति । हि यस्मात् तस्मात् मुकुन्दभक्तिरेव सम्पाद्या ॥ ५५ ॥

.त्पर्यात् पुनरेतदेव हि करणं श्रेय इत्याह— **एतावानिति** । तस्य हरेः सर्वसत्ताप्रदत्वेनावस्थितेरीक्षणं दर्शनं ज्ञानमिति यद् (सा)इयं भक्तिरिति ॥ ५६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य सप्तमोऽध्यायः ।

---

[1] भक्तिरेव भगवत्प्रीतिसाधनं नान्यदित्याह–नालमितिश्लोकद्वयेन — व्या.

[2] हे दानवाः यूयं हरौ मूलरूपहरौ भक्तिं कुरुत । न केवलं तत्र किन्तु सर्वत्र अवताररूपमत्स्यादिसर्वेषु, सर्वभूतात्मनि ब्रह्मादिसर्वभूतान्तर्यामिणि हरौ च आत्मौपम्येन मूलरूपनारायणसादृश्येन भक्तिं कुरुत– [illegible]मिनवतीर्थाः ।

॥ अथ अष्टमोऽध्यायः ॥

नारद उवाच—

अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ।
जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥

अथाचार्यसुतस्तेषां बुद्धिमेकान्तसंस्थिताम् ।
आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद् यथा ॥ २ ॥

श्रुत्वा तदप्रियं दैत्यो दुस्सहं तनयानयम् ।
कोपावेशचलद्गात्रः पुत्रं हन्तुं मनो दधे ॥ ३ ॥

क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ।
आहेक्षमाणः पापेन तिरश्चीनेन[1] चक्षुषा ॥ ४ ॥

प्रश्रयावनतं दान्तं बद्धाञ्जलिमवस्थितम् ।
सर्पः पदाऽऽहत इव श्वसन् प्रकृतिदारुणः ॥ ५ ॥

हे दुर्विनीत मन्दात्मन् कुलभेदकराधम ।
स्तब्धं मच्छासनोद्भूतं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥

क्रुद्धस्य यस्य कम्पन्ते त्रयो लोकाः सहेश्वराः ।
तस्य मेऽभिहितं मूढ शासनं किंबलोऽत्यगाः ॥ ७ ॥

---

॥ अथ अष्टमोऽध्यायः ॥

उया वैराग्यद्याङ्गोपाङ्गरुचिरभक्तिसुन्दरीसुन्दरावयवसन्निवेशलक्षणपरमपुरुषार्थकरणं [2]यदुत्तरचरितमित्ये-तन्निदर्शयितुं नरसिंहावतारो निरूप्यतेऽस्मिन्नध्याये ।

तत्र दैत्यसुतैः प्रह्लादवर्णितं श्रुत्वा किं कृतमिति युधिष्ठिरस्य मानसीं शङ्कां परिहरति—**अथेति** । निरवद्यत्वात् निर्दोषत्वात् । एकान्ते हरौ सम्यक् स्थिताम् । ऐक्ये स्थितामभिन्नविषयामिति वा । यथा यथावत् साकल्येन । यथा तैस्तेनोक्तं गृहीतं तथेति वा ॥ १–२ ॥

तनयस्य अनयं स्वसिद्धान्तविरुद्धसिद्धान्तम् ॥ ३ ॥ पापेन पापसाधनेन ॥ ४ ॥
यमक्षयं यमगृहम् ॥ ६ ॥
कस्य बलं यस्य सः किंबलः । मद्बलमनादृत्य तव बलभूतः क इत्यर्थः ॥ ७ ॥

---

[1] तिरश्चीनेन वक्रेण—व्या. [2] 'यद्' इत्यधिकमिति भाति ।

प्रह्लाद उवाच—

न केवलं मे भवतश्च राजन् स वै बलं बलिनां चापरेषाम् ।
परावरेऽमी स्थिरजङ्गमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ॥ ८ ॥

स ईश्वरः काल उरुक्रमोऽसावोजःसहःसत्त्वबलेन्द्रियात्मा ।
स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९ ॥

जह्यासुरं भावमिमं स्वभावतः समं मनो धत्स्व न सन्ति विद्विषः ।
ऋतेऽजितादात्मन उत्पथस्थितात् तद्धि ह्यनन्तस्य महत् समर्हणम् ॥

दस्यून् पुरं षण्णविजित्य लुम्पतो मन्यन्त एके स्वजिता दिशो दश ।
जितात्मनो ज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥

---

किंबल इत्यस्योत्तरमाह—**न केवलमिति** । वै इत्यनेन 'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम्[1]' इति श्रुतिं सूचयति । पराश्च अवराश्च परावरे । एतदेव विशदयति—**स्थिरजङ्गमा इत्यादिना** ॥ ८ ॥

ननु 'स्थाणुमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' इति श्रुतेः शिवं बलं वदन्ति केचित् । 'कालाद्भवन्ति भूतानि', 'मन्यन्ते कालचिन्तकाः' इत्यतः कालम् । अथ कथमयं निर्णयः परमात्मा बलमिति तत्राह—**स इति** ॥ ९ ॥

कुतो न सन्ति विद्विष इति तत्राह—**ऋते इति** । उत्पथस्थितात् तत्वमार्गविरुद्धमार्गनिरताद् । त् अजितात् अवशीकृतात् । आत्मनः मनआदीन्द्रियग्रामात् ऋते[2] । शुद्धमनआदिना विचार्यमाणे सति शत्रवो न सन्तीत्यर्थः । ननु तर्हीदं 'युद्धोद्यमं परं चक्रुर्विबुधा दानवान् प्रति' इत्यादि कथं सङ्गच्छत इत्याशङ्क्य यथायोग्यतादर्शनलक्षणं समत्वं कर्तव्यम् । अन्यथा शास्त्रविरोध इति भावेनोक्तसमत्वफलमाह—**तद्धिह्वीति** । तत्तद्योग्यतानुसारेण तन्मनोधारणं हरेः समर्हणं विद्धीत्यन्वयः[3] । नैतदल्पं किन्तु महदित्याह—**महदिति** ॥ १० ॥

एतदेव विशदयति—**दस्यूनिति** । एके भवादृशाः पुरं शरीरं लुम्पतः षड् दस्यून् षडिन्द्रियाख्य-

---

[1] यद्यपीयं श्रुतिर्जीवस्वरूपं प्रतिपादयितुं प्रवृत्ता । 'स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद्द् विभोः' इति वाक्यशेषात् । तथापि बलादेः प्रतिबिम्बस्वरूपत्वे सुतरां बिम्बस्वरूपत्वमिति ज्ञापयितुमुदाहृतमिदम् ।

[2] ऋते इत्यावर्त्यार्थ उक्तः । मनआदीन्द्रियग्रामात् ऋते, ऋते ज्ञाते विचार्यमाणे सतीति । ऋ गताविति धातुः ।

[3] समत्वेनाभिमतानां देवानां युद्धोद्यमेन शत्रुसत्वं ज्ञायते । तत् कथमिति शङ्का । तत्तद्योग्यतानुसारेण तत्र तत्र मनोधारणमेव समत्वम् । दैत्यानां दुष्टतया देवानां द्वेषेण तत्र मनोधारणमेव समत्वम् । अतो युद्धोद्यमो युज्यत इति समाधानम् । प्रकृते गुणिनि प्रह्लादे मयि द्वेषकारणाभावाद् द्वेषं त्यक्त्वा प्रीत्या मनो धत्स्वेति भावः ।

हिरण्यकशिपुरुवाच —

व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ।
मुमूर्षूणां हि मन्दात्मन् ननु स्युर्विप्लवा गिरः ॥ १२ ॥

यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासौ यदि स सर्वत्र कस्मात् स्तम्भे न दृश्यते ॥ १३ ॥

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ।
गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितः ॥ १४ ॥

नारद उवाच —

एवं दुरुक्तैर्मुहुरर्दयन् रुषा सुतं महाभागवतं महासुरः ।
खड्गं प्रगृह्योत्पतितो वरासनात् स्तम्भं तताडातिबलः स्वमुष्टिना ॥

---

चोरान् अविजित्य दश दिशः स्वेन जिता इति मन्यन्त इत्यन्वयः । आन्तरशत्रुजयं विना कुतो बाह्यशत्रुजय इति भावेनाह-जितेति । परे बाह्यशत्रवः[1] । यद्वा एके मादृशाः । षडिन्द्रियजयो नास्ति चेद् बाह्यशत्रुविषयाः दश दिशः सुष्ठुविजिता मन्यन्ते । शेषं पूर्ववत् ॥ ११ ॥ इति

असुरावेशोदधिमग्नत्वात् पुत्रोक्तं तत्वं न तस्य श्रोत्रविवरगतमभूत् । प्रत्युतार्चिष्मत्याज्यहोमवदभूदिति भावेनोत्तरमवतारयति-व्यक्तमिति । अतिमात्रं वक्तव्यांशादधिकं विकत्थसे असंबद्धं भाषसे । विप्लवाः मण्डूकप्लुतिवदसङ्गताः ॥ १२ ॥

यदि त्वदुक्तं युक्तं स्यात् तर्हि तथा प्रतीयेत (न च प्रतीयते) तस्मादसम्बद्धमिति भावेनाह — यस्त्वयेति । ॥ १३ ॥ अस्येदं फलितमित्याह[2] — सोऽहमिति । गोपायेत रक्षेत ॥ १४ ॥

त् यदिन्द्रियं जयस्वेति वचः (तद्) न हार्दम् असम्भावितत्वात् तत्राह — एवमिति[3] ॥ १५ ॥

---

[1] जितात्मनो जितमनस्कस्य देहिनां समस्य साधारणस्य साधोर्ज्ञस्य सज्जनस्य स्वमोहप्रभवाः परे शत्रवः कुत इति योजना—व्या.

[2] कुतो समालापस्य विप्लुततेत्यत: प्लुतस्वरेणेत इति कुमारमीरयति–य इति । हे मन्दभाग्य दरिद्र वा दुर्दैव वा मदन्यो मदितरो जगदीश्वरो यस्त्वयोक्तोऽसौ सः क, क वर्तत इति पृष्टः पित्रा पुत्रः प्राह–स सर्वत्रेति । यदि सर्वत्र तर्हि कस्मात् कारणात् स्तम्भे न, नास्तीति पिता । तं सुतः प्रोवाच–दृश्यत इति । एवमन्वये श्लोक उत्तानितो भवति । किञ्चोत्तरत्र गोपायेतेत्यादिकं सुलग्नम् अन्यथाऽलग्नमित्यनुत्तानदृग्भिरालोचनीयम्—स.

[3] सत्यधर्मतीर्थास्तु स्वमुष्टिनाऽतिबलः स्तम्भं तताडेत्यन्वयं प्रदर्श्य ननु 'पदा स्तम्भं तताडाशु' इति पुराणान्तरे स्पष्टमुक्तेः कथमेतदित्याशङ्क्य समादधुः । अयं समाधानप्रकारः । कूर्मपुराणे हिरण्यकशिपोः पुरः

तदैव तस्मिन् निनदोऽतिभीषणो बभूव येनाण्डकटाहमस्फुटत् ।
यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमङ्ग मेनिरे ॥ १६ ॥

अभिक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ।
अन्तः सभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥ १७ ॥

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां नमृगं नमानुषम् ॥ १८ ॥

---

स्तम्भभङ्गेनाधेयपातेन सभ्यानां शरीरचूर्णनादिव्यथा सम्भाविता इत्याशङ्क्य भगवत्सन्निधानबलाद्[1] वज्रनिष्ठुरस्तम्भोत्थनिनदवत् स्तम्भनिर्ह्रादोऽभूदित्याह[2]—तदैवेति । अस्फुटत् अभिनत् । स्वधिष्ण्योपगतं स्वकीयत्वेनाभिमतं सत्यलोकं प्राप्तम् । स्वधामाप्ययं स्वलोकनाशम्[3] ॥ १६ ॥

तदा हिरण्यकशिपुः किं कृतवानिति तदवस्थामाह—अभिक्रमन्निति । पुत्रमभिक्रमन् पदविक्षेपं कुर्वन् । तस्य निर्ह्रादस्य पदं विषयं कर्तृभूतं न ददर्शेत्यन्वयः । येन नादेन । अनेन हिरण्यकशिपोर्हृदयसारातिशयो दर्शित इति ज्ञायते ॥ १७ ॥

आकाशविशेषगुणस्य शब्दस्य चेतनाश्रयत्वेन दर्शनात् किमिदमिति मीमांसमानेषु सत्सु तदाश्रयोऽप्यदर्शीत्याह—सत्यं विधातुमिति । रूपं विशिनष्टि—नमृगमिति । 'नाभावान्यविरोधेषु[4]'

---

नरसिंहस्याविर्भाव एवोच्यते, ताडनं नोक्तम् । नरसिंहपुराणे, हरिवंशे, मत्स्यपुराणादौ च नृसिंहरूपं धृत्वा मुनिगणैः सह हिरण्यकशिपोः सभां जगामेत्युच्यते । तत्र स्तम्भताडनादेस्तदुद्भूतेश्चोक्तिर्नास्ति । असौ विरोधो यथा कल्पभेदेन परिह्रियते तद्वद्द्वयमपि विरोधः परिह्रियताम् । अथवा पादेनेति शेषं कृत्वा स्वमुष्टिना खड्गं प्रगृह्य पादेन तताडेत्यन्वेतुं शक्यम् । 'यदा नृसिंहाकृतिराविरासीत् पदाहतात् स्तम्भवराद्धि पूर्वम्' इति श्रीवादिराजतीर्थोक्तेश्चेति ।

[1] भगवत्सन्निधानबलात् स्तम्भो न भग्नः अपि तु निनद एव समजनीति भावः ।

[2] वज्रनिष्ठुरस्तम्भोत्थनिर्ह्रादोऽभूदित्याह—व.

[3] 'अत्र येन ब्रह्माण्डकटाहमस्फुटदित्युक्तम् । ब्रह्माण्डकटाहभेदे बाह्योदागमनप्रसङ्गः स्यात् । तथा ब्रह्मादिभिः स्वधामाप्ययमानने प्रत्यहं दशावतारदर्शनात् तदसंभवेन च विरोधद्वयप्राप्तिरित्यत उच्यते । अस्फुटदित्यस्य प्रत्यगर्जदित्यर्थः नाभिद्यतेत्यर्थः । 'आस्फोट्य गाढरशनो न्यपतद्' (भाग १०-१४-६) इत्यत्र स्फोटशब्दस्य शब्दार्थकत्वस्य दृष्टत्वात् । अन्यथा तत्र भेदार्थकत्वे अनुपयोगात् । तथैवाजादय इत्यत्र समासस्यातद्गुणसंविज्ञानबहुव्रीहित्वस्वीकारात् । ब्रह्मेतरैः स्वधामाप्ययमाननेऽपि ब्रह्माज्ञानासंभवाच्च न विरोधद्वयमिति—[illegible]ोद्धारे पाङ्क्तीश्रीनिवासाचार्यकृते ।

[4] अभावार्थे अन्यार्थे विरोधार्थे च नञ् भवतीत्यर्थः ।

स सत्त्वमेवं परितो विपश्यन् स्तम्भस्य मध्यादनु निर्जिहानम् ।
नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेन्द्ररूपम् ॥ १९ ॥
मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् ।
प्रतप्तचामीकरचण्डलोचनं स्फुरत्सटाकेसरजृम्भिताननम् ॥ २० ॥

---

इति वचनात् नमृगं केवलं मृगस्य विद्यमानं न भवति नमानुषं मानुषस्य विद्यमानं न । किन्तु तयोस्समाहारलक्षणम्[1] ॥ १८ ॥

एवं विधं सत्त्वं प्राणविशिष्टं रूपमुद्वहन् तस्याग्रतः अग्रे समुत्थितोऽदृश्यत इत्यन्वयः । किं विशिष्टस्य (तस्य)? स्तम्भस्य मध्यात् निर्जिहानं उत्तिष्ठमानम् एतत् नृमृगेन्द्ररूपं किम् इति मीमांसमानस्य विचारं कुर्वतो हिरण्यकशिपोः । तद्रूपं विशिनष्टि—तदलमित्यादिना । चामीकरं सुवर्णम् । सटाकेसरैः कर्णगतरोमविशेषलक्षणान्तर्दलैः जृंभितं विकसितम् आननं यस्य स तथा ॥ १९-२० ॥

---

[1] निनादेन हननं हिरण्यकशिपोः सुशकं कर्तुं तथापि स्वभृत्यवर्गगिरम् ऋतीकर्तुं विलक्षणलक्षणं स्वस्वरूपमाविश्चकारेत्याह—सत्यमिति । निजभृत्यभाषितं निजो भृत्यः एकान्तभक्तः प्रह्लादस्तेन भाषितं स सर्वत्रेत्यादिरूपम् । निजेन स्वेनैव भृत्यौ जयविजयौ प्रति भाषितं मयैव वध्यौ भवतं त्रिजन्मस्वित्यादिकं वा । प्रह्लादोऽप्यैहिककामुक इति कुतस्तद्वचनं सत्यं कार्यमित्यतो न तथा स इत्यप्याह—निजभृत्येति । निजभृत्यै स्वपोषाय अभाषितं न भाषितम् । निरुपधीति यावत् निजभृत्याः सनकादयस्तैर्भाषितं दुर्जन्मत्रिकसम्पत्त्यनन्तरं मुक्तौ भवतमिति संहारं विहाय यत् संपत्तिर्न भवतीति(उक्तम्)तद् ऋतं कर्तुमिति वा । निजस्य स्वकीयस्य ब्रह्मणो भृत्यो हिरण्यकस्तद्भाषितं भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो, नान्तर्बहिः, न नरैर्मृगैरित्यादिकं वा । तद्विषये तथाऽस्त्वितिनिजभृत्येन ब्रह्मणा भाषितमिति वा । नूनमेतद्विरोधेन मृत्युर्मे भविता ध्रुवमिति स्वविषये, तथा पुत्रविषये गोपायेतेति निजभृत्यभाषितमिति वा । भृत्यानां विषये भाषितं निजेन स्वेनैव यत् तत् तथा न मे भक्तः प्रणश्यति, प्रियो हि ज्ञानिनोऽत्यर्थम् , योगक्षेमं वहाम्यहमित्यादिकं वा । अयमकुतश्चिद्भयोऽमर इति निजभृत्यप्रह्लादविषये निजभृत्येन नारदेन भाषितमिति वा । निजेन स्वेन भृत्यैर्दासैश्च भाषितम् , तेषामहं समुद्धर्ता मृत्युसंसारसागरात् मां रक्षतु विभुर्नित्यमित्यादिकं वा । निजे स्वविषये भृत्यैर्भाषितं न शुक्ररक्तप्रभवोऽस्य देह इत्यादिकं वा । सत्यं यथार्थं विधातुं कर्तुम् । अखिलेष्वसंकुचितेषु चराचरेष्वात्मन आततत्वेनात्मशब्दवाच्यस्य स्वस्य व्याप्तिं सत्यामिति विपरिणतं सदन्वेति, विधातुं च अत्यद्भुतरूपं धातुर्वरऋतीकरणकारणत्वादत्याश्चर्यावहम् । उद्वहन्नित्यनेन लीलामूलतां कलेवरस्य द्योतयति । कीदृगित्यत ईदृगित्याह—नमृगं नमानुषमिति । न विद्यते मृगस्तदाकार एव यस्य तत् नमृगम् । सर्वं वाक्यं सावधारणमितीरणात् । नमानुषमिति तद्वत् । कुत्रादृश्यतेत्यत आह—सभायामिति । तत्रापि स्तम्भे तत् समाहृतमिति भावः—स.

करालदंष्ट्रं करवालचञ्चलं क्षुरान्तजिह्वं भ्रुकुटीमुखोल्बणम् ।
स्तब्धोर्ध्वकर्णं गिरिकन्दराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥

दिवि स्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यमम् ।
चन्द्रांशुगौरैश्छुरितं तनूरुहैर्विश्वग्भुजानीकशतैर्नखायुधम् ॥ २२ ॥

दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ।
प्रायेण मेऽयं हरिणौरसारिणा वधः स्मृतोऽनेन समुद्यतस्य किम् ॥

एवं ब्रुवंस्त्वभ्यपतद् गदायुधो नदन् नृसिंहंप्रति दैत्यकुञ्जरः ।
अलक्षितोऽग्नौ पतितः पतङ्गमो यथा नृसिंहौजसि सोऽसुरस्तथा ॥

न तद् विचित्रं खलु सत्वधामनि स्वतेजसा यो नु पुराऽपिबत् तमः ।
ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥

---

करालाः क्रूराः दंष्ट्रा यस्य स तथा । करवालवत् चन्द्रहासवत् चञ्चलम् । क्षुरान्तः क्षुरधारा तद्वत् स्थिता जिह्वा यस्य तत् तथा तत् । हनुभेदेन विदीर्णकपोलेन भीषणं भयजनकम् ॥ २१ ॥

ग्रीवा चोरू च वक्षःस्थलं च तानि तथा, अदीर्घाणि पीवराणि ग्रीवोरुवक्षःस्थलानि यस्य तत् तथा तत् । 'चन्द्रो हेम्नि हिमांशौ वा चन्द्रकं रोचिषेऽपि च' इत्यभिधानात् चन्द्रांशुवर्णवद् गौरैरुणैस्तनूरुहैश्छुरितं व्याप्तम् । 'पीतेऽरुणे सिते गौरः' इत्यभिधानम् । विष्वग्व्याप्तैः भुजानीकशतैर्युक्तम् । बहुत्वापेक्षया अनीक इत्युक्तम् ॥ २२ ॥

'निजमात्मीयनित्ययोः' इत्यमरः । निजानि आत्मीयानि नखापेक्षयेतराणि च चक्रादीनि यानि तैरायुधप्रवेकैरायुधमुख्यैर्विद्राविता दैत्यदानवा येन तत् तथोक्तं तत् । यद्वा निजं सहजं नखलक्षणमायुधं इतराणि पृथक् स्थितानि चक्रादीनीति । मे औरसारिणा निसर्गशत्रुणा हरिणाऽनेन रूपेण प्रायेण ममायं वधः स्मृतः निरूपितः किम् ? स्मृतो वधोऽयं किमिति वा । कीदृशस्य मे ? पुत्रवधे समुद्यतस्य पुत्रहन्तुर्यो वधः शास्त्रेषु स्मृतो विहितः सोऽयमद्य प्राप्तः किम् चे(वे ?)ति ॥ २३ ॥

एवं विमृश्य वधान्निवृत्तः किम् ? नेत्याह—**एवमिति** । कमभ्यपतदित्यत उक्तं नृसिंहं प्रतीति । दैत्यकुञ्जरः दैत्येन्द्रः । निदर्शनमाह—**अलक्षित इति** । अलक्षितः साहसिकः । पतङ्गमः शलभः ॥ २४ ॥

द्विसप्तलोकैकारेः केवलं तुच्छीकरणं भगवद्भक्तिवैशद्यात्, न तत्वत इति नेत्याह—**न तदिति** । सत्वधामनि बलज्ञानसमाहारमूर्तौ पराक्रममूर्तौ वा । जगदादौ तमःपानं पुरुषरूपेण । अनेन

तं विक्रमन्तं सगदं गदाधरो महोरगं तार्क्ष्यसुतो यथाऽग्रहीत् ।
स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडितो यद्वदहिर्गरुत्मतः ॥

असाध्वमन्यन्त [1]हृतौजसोऽमरा घनच्छदा भारत सर्वधिष्ण्यपाः ।
तं मन्यमानो निजवीर्यशङ्कितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ २७ ॥

पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन गतश्रमो मृधे ।
[2]तं श्येनवेगं शतचन्द्रवर्मभिश्चरन्तमच्छिद्रमुपर्यधो हरिः ॥ २८ ॥

---

जगदावरकं तमः पिबतो हरेरसुरभसीकरणं किमिति दर्शितम् । अथो लोकं विडम्बयतो हरेरसुरेण सह समरप्रकारं वर्णयति—तत इति ॥ २५ ॥

तस्य गदाशिक्षालाघवं वक्ति—स तस्येति । हस्तोत्कलितः हस्तात् गलितः, उत्प्लुतो वा ॥ २६ ॥

तस्य हरेर्विडम्बनमजानताममराणां निरूपणप्रकारं वक्ति—असाध्विति । हृतौजसः भ्रष्टावष्टम्भा इव । घनेन छदा छादनं येषां ते तथा । मेघच्छायायां विलीना इव । लुप्तोपमेयम् । सर्वधिष्ण्यपाः सर्वनक्षत्रपतयः चन्द्रादयोऽमराः तदसाध्वमन्यन्तेत्यन्वयः । तत्र हेतुः—तं मन्यमान इति । नृहरेर्हस्तमुक्तोऽसुरः तं नृहरिं निजवीर्ये आत्मपराक्रमे शङ्कितं मन्यमानोऽभूदिति यत् तदिति[3] ॥ २७ ॥

हरेर्हस्तमुक्तोऽसुरः परादवदुताभ्यपतदिति संशयो मा भूदित्याह—पुनस्तमिति । आसज्जत सक्तोऽभूत् । युद्धाय सन्नद्धोऽभूदित्यर्थः । शतचन्द्रवर्मभिः शतचन्द्रवर्मभ्याम् । खड्गचर्मणी इति प्रकृतत्वात् । 'भद्रं कर्णेभिः शृणुयाम देवाः' इत्यादि श्रुतेः छान्दसाभिप्रायेणायं प्रयोगः सम्भाव्यते च । परिभ्रमणे शिक्षाप्रकर्षद्रष्टॄणां द्वे एव बहूनीव दृश्यन्ते इत्यतो वा बहुवचनं युज्यते । अच्छिद्रं निरवकाशमिति क्रियाविशेषणेनैतदेव सूचयति । असुरवीर्यमाशङ्कमानो हरिः किमकरोदिति तत्राह—हरिरिति[4] ॥ २८ ॥

---

[1] हृतौकसोऽमराः—इत्यपि स.

[2] इत आरभ्य सप्तत्रिंशश्लोकपर्यन्तमुत्तरार्धमुत्तरश्लोकान्वयि । श्रीविजयध्वजतीर्थादिपूर्वव्याख्यातृभिस्तथैव श्लोकसंख्यापरिगणनात् ।

[3] यद् यस्माद् हस्तमुक्तो महासुरः, अतस्तं नृहरिं निजवीर्यशङ्कितं स्वसामर्थ्येन भीतं मन्यमानोऽभूत् । असुरस्य नृसिंहे स्वनिग्रहासामर्थ्यभ्रान्तिरभूदिति भावः—व्या.

[4] हरिः जगृहे इति वक्ष्यमाणेनान्वयः—व्या.

कृत्वाऽट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ।
विष्वक् स्फुरन्तं ग्रहणातुरं हरिर्व्यालो यथाऽऽखुं कुलिशाक्षतत्वचम्[1] ॥

द्वार्यूरवापात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ।
संरम्भदुष्प्रेक्ष्यकराललोचनो व्यात्ताननान्तं विलिहन् स्वजिह्वया ॥

[2]असृग्वसाक्तारुणकेसराननो यथाऽऽन्त्रमाली द्विपहत्यया हरिः ।
नखाङ्कुरोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान्[3] ॥ ३१ ॥

अहन् समन्तान्नखशस्त्रपाणिभिर्दोर्दण्डयूथानुपथान् सहस्रशः ।
सटावधूता जलदाः परापतन् ग्रहाश्च तद्दृष्टिविनष्टरोचिषः ॥ ३२ ॥

---

विश्वक् परितः स्फुरन्तं भ्रमन्तमित्यनेनापि शिक्षोत्कर्षं ध्वनयति । हरिः पुनर्ग्रहणेनातुरमकरोदिति शेषः । अनेनातुरत्वं लक्षयति । तत्र दृष्टान्तमाह—**व्याल इति** । व्यालः सर्पः । खननशीलत्वादाखुः ॥ २९ ॥

ब्रह्मवररक्षणार्थमाह—**द्वारीति** । द्वारि अधस्तिरश्चीनदारुणि स्थित्वा ऊरौ अङ्के उत्तानतयाऽऽपात्य । अत्रापि ह्रस्वत्वं छान्दसम्[4] । संरम्भेण द्वेषादात्यन्तिककोपेन दुष्प्रेक्ष्ये कराले लोचने यस्य । व्यात्ताननान्तं विवृतवदनस्याधरोष्ठम्[5] ॥ ३० ॥

असृग्वसया रुधिरबिन्दुना[6] आक्ते रूषिते अत एवारुणकेसरानने यस्य स तथोक्तः । स हरिः सिंहः न केवलमेनमेव हतवान् । किन्तु तदनुचरानसुरानित्याह—**नखाङ्कुरेति** ॥ ३१ ॥

अहन् हतवान् । नखशस्त्रपाणिभिः नखैः शस्त्रैः पाणिभिश्च । हरेर्दोर्दण्डानां यूथानुपथान् निकराकृष्टान्[7] । तदवसरविक्रमं वक्ति—**सटावधूता इति** ॥ ३२ ॥

---

[1] कुलिशेन प्रागिन्द्रसमरे वज्रेणाप्यक्षता त्वक् चर्म यस्य तम्—स.      [2] असृग्लवाक्तेति, स पाठः ।

[3] द्वितीयान्तानामेषामहन्नित्यनेनोत्तरश्लोकस्थेनान्वयः ।      [4] ऊरावापात्येति भाव्ये ऊरवापात्येति वचनम् ।

[5] ब्रह्मवररक्षणासुरवरशिक्षणचातुर्यमाह–द्वारीति । द्वारीति रेफान्तम् । अनेन नान्तर्बहिरिति, ऊरावित्यनेन न भूमौ नाम्बर इति, नखैरित्यनेन नायुधैरिति, वरो रक्षितः । सन्ध्यायामिति च वक्तव्यम् । तेन न दिवा न नक्तमिति वरः । नृसिंहो हरिरित्यनुवृत्त्य न नरैर्न मृगैरपीति, न त्वद्विसृष्टेभ्य इति, न व्यसुभिरसुमद्भिर्वेति, वराः संरक्षिता इति ज्ञेयम् । नृसिंहस्य केवलं नरत्वाद्यभावात् । ब्रह्मसृष्टत्वाभावाच्च । शिलावद् व्यसुत्वाभावात् प्राणिवद्वायुविकारासुमत्त्वाभावाच्च । विवृताननान्तं कपोलद्वयं जिह्वया विलिहन् आस्वादयन् हिरण्यकशिपुं ददारेति योजना—व्या.      [6] वसाशब्दस्य बिन्द्वर्थत्वं क्लिष्टम् । असृक्सहितमेदसा इत्येव सुवचम् ।

[7] हरेर्भुजदण्डसमूहमार्गं गतानित्यर्थः—व्या.

अम्भोधयः श्वासहता[1] विचुक्षुभुर्निर्ह्रादभीता दिगिभा जहुर्दिशः ।
द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदाऽतिपीडिता ॥३३॥

शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ।
ततः सभायामुपविष्टमुत्तमे नृपासने सम्भृततेजसं विभुम्[2] ॥ ३४ ॥
[3]अलक्षितं भैरवमत्यमर्षणं प्रचण्डवक्त्रं न बभाज कश्चन ॥ ३५ ॥

निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ।
प्रहर्षवेगोत्कलितानना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३६ ॥

तदा विमानावलिभिर्नभःस्थलं दिदृक्षतां संकुलमास नाकिनाम् ।
सुरानका दुन्दुभयो हि जघ्निरे[4] गन्धर्वमुख्या ननृतुर्जगुः स्त्रियः ॥

तदुपव्रज्य विबुधा ब्रह्मेन्द्रगिरिशादयः ।
ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३८ ॥

---

दिगिभाः दिग्गजाः मदं जहुः त्यक्तवन्तः । प्रोत्सर्पत प्रोदसर्पत, उद्गतेत्यर्थः ॥ ३३ ॥
सभावस्थानं तस्य वक्ति—तत इति । सम्भृततेजसं राशीकृततेजसम् ॥ ३४ ॥
अलक्षितं न केनापि दृष्टम् ॥ ३५ ॥

नन्वयं जयः केनापि न लक्षितः । तदङ्कुरव्यक्त्यदर्शनादित्याशङ्क्य पुरुषकोपोपशमनं स्त्रीणामेव सुशकमिति भावेन सुरस्त्रीपुष्पवृष्टिप्रकारमाह—निशम्येति । लोकत्रयस्य मस्तकज्वरं शिरोरोगायमाणम् । प्रहर्षातिरेकेण उत्कलितं विकसितं आननं यासां ताः तथा ताः । सुरस्त्रीवृष्टपुष्पसौरभ्याघ्राणेन किञ्चित् शान्तकोपत्वादस्माकमप्ययमवसर इति मन्वानानां देवानां नभसि विमानावलिसाङ्कुल्यप्रकारं वक्ति—तदेति । सुराणामानकदुन्दुभयः ॥ ३६-३७ ॥

चण्डक्षुब्धानां चित्ताह्लादकरी स्तुतिरेवेति भावेन ब्रह्मादीनामुपक्रममाह—तदुपव्रज्येति । ये

---

[1] अत्र सत्यधर्मतीर्थाः सुधादिसर्वग्रन्थान् विमृश्य भगवतः स्वरूपभूतश्वासो नास्ति । सिंहास्यत्वेन तत्साम्यार्थं श्वासानां सृष्ट्वा प्रदर्शनमिति निरधारयन् । विस्तरस्तु तत्रैव द्रष्टव्यः ।

[2] उपवेशनं च नापूर्वविलोकनेन, दुरात्मोपवेशायातास्पृश्यतापनोदनेन, प्रह्लादस्योपवेशे सदात्मताङ्कुरणार्थमेवेति भावः—स.

[3] अलक्षितद्वैरथम्—स. अलक्षितः द्वैरथः प्रतियोद्धा येन तम्—स.

[4] दुन्दुभयो विनेदिरे—इत्यपि स पाठः ।

मनवः प्रजानां पतयो गन्धर्वाप्सरचारणाः ।
यक्षाः किम्पुरुषास्तात वेतालाः सह किन्नराः ॥ ३९ ॥

ते विष्णुपार्षदाः सर्वे सुनंदकुमुदादयः ।
मूर्ध्नि बद्धाञ्जलिपुटा आसीनं तीव्रतेजसम् ।
ईडिरे नरशार्दूलं[1] नातिदूरचराः पृथक् ॥ ४० ॥

ब्रह्मोवाच —
नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ।
विश्वस्य सर्गस्थितिसंयमान् गुणैः स्वलीलया सन्दधतेऽव्ययात्मने ॥

रुद्र उवाच—
कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः ।
तत्सुतं पाह्यनुसृतं भक्तं ते भक्तवत्सल ॥ ४२ ॥

इन्द्र उवाच—
प्रत्यानीताः परम भवता त्रायता नः स्वभागा
दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ।

---

पूर्वमुपगन्तुं तत्रसुः, ते ब्रह्मादयस्तं पृथगीडिर इत्यन्वयः । नातिदूरचराः[2] किञ्चित् समीपवर्तिनः ॥ ३८–४० ॥

तत्र पृथक् पृथङ्मतिलक्षणं स्तुतिप्रकारं ब्रूते—नतोऽस्मीति । गुणैः सत्वादिभिः । स्वलीलया स्वरूपभूतलीलया । अव्ययात्मने नित्यदेहाय ॥ ४१ ॥

येनायमसुरो हतः स कोपकालो युगान्तः युगावसनोचितः । नेदानीमत्यल्पासुरहनने । तस्मात् कोपं संहृत्य अनुसृतं शरणं प्राप्तं, तस्य सुतं प्रह्लादं रक्षेत्यन्वयः ॥ ४२ ॥

हे परम नः त्रायता रक्षता भवता दैत्यहृता यज्ञेषु स्वभागाः असद्योग्या हविर्भागाः प्रत्यानीता इत्यन्वयः । तपोबलेन[3] दैत्येनाक्रान्तं निमीलितं च तव गृहं तव वासयोग्यं हृदयकमलं प्रत्यबोधि विकासितम् । अस्माकं भवतेति शेषः । विरक्तिभक्तिभ्यामेव वशीकर्तुं योग्यो नान्येनेत्याशयेनाह—

---

[1] नरशार्दूल इत्यपि व्या. पाठः । [2] स्तुतेः कार्यत्वाद्धेतोस्तद्रूपदर्शनाक्षमत्वाच्च नातिदूरचरणमिति सत्यधर्मतीर्थाः । [3] इदं दैत्येनेत्यस्य विशेषणम् ।

कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते
मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ ४३ ॥

ऋषय ऊचुः —
त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं समस्तम्[1]।
तद् विप्रलुप्तममुनाद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः[2] ॥

---

कालेति । नाथ ! यदिदं स्वर्गादिस्थानं कालग्रस्तं कियत् सुखजनकम् ? न किमपीति मत्वा भजति[3] ते शुश्रूषतां त्वां सेवमानानां तेषां करगता मुक्तिरपि बहुमता न, हि यस्मात् तस्मात् हे नारसिंह ! तेषां भक्तानां अपरैः धर्मादिभिः प्राप्तैः किमित्यन्वयः ॥ ४३ ॥

हे आदिपुरुष त्वं यदात्मतेजः आत्मनो हरेर्ज्ञानलक्षणं तेजः तपो नोऽस्माकं परमश्रेयसे आत्थ । येन तपसा आलोचनरूपेण महिम्ना इदं समस्तम् आत्मगतं व्याप्तम् । हे शरण्यपाल अमुना दैत्येन विप्रलुप्तं नष्टम्[4] । तत् तपो जगद्रक्षार्थं गृहीतवपुषा नरसिंहात्मना पुनरप्यस्मात् प्रति कटाक्षमन्वमंस्थाः । उद्धरिष्यामीति शेषः । 'तप आलोचने' इति धातोः । यस्य ज्ञानमयं तपः इति श्रुतेश्च भगवद्ज्ञान-सादृश्यादस्य आत्मतेज इत्यभेदवचनं युज्यते । विप्रलोपस्तिरोधानं, न स्वरूपनाशः[5] ॥ ४४ ॥

---

[1] ससर्जेति कोशेषु पठ्यते । परं समस्तमित्येव पाठः टीकाकृत्सम्मतः । स.व्या. पाठोऽपि तथैव ।

[2] पुनरप्यमंस्थाः—गो.

[3] भजतीत्यस्यान्वयो न ज्ञायते ।

[4] आत्मतेजोरूपं यत् तपः आलोचनात्मकं नः आत्थ तद् विप्रलुप्तमिति भगवत्स्वरूपभूतज्ञानस्य लोपः प्रतीयते । अतः प्रवृत्तं तात्पर्यम्–तद् विप्रलुप्तमिति सादृश्याभेदवचनम्—इति । भगवदालोचनसदृशं यदस्मदालोचनं तन्नष्टमासीदित्याशयः ।

[5] आदिपुरुष तव परमं तपः सृष्टिकारणमालोचनात्मकं ज्ञानं नः आत्थ उक्त्य उपदिदेशिथ । यत् आत्मतेजः स्वयंप्रकाशरूपम् 'स तपोऽतप्यत । स तपस्तप्त्वा । इदं सर्वमसृजत' इति श्रुतिः । येन तपसा इदं समस्तं जगत् तवात्मगतम् ! सर्वज्ञत्वात । अथ च येन ज्ञानेन प्रलयकाले विश्वं सम्यगस्तं सदात्मोदरगतम् । अथ च येन ज्ञानेन आत्मगतं विश्वं पुनः सृष्टिकाले समस्तं बहिर्निरस्तम् । तत्, तादृशभगवज्ज्ञानविषयकमस्मज्ज्ञानं लुप्तप्रायमिवासीत् । ज्ञानिनां ज्ञानस्य च रक्षायै गृहीतेन नरसिंहवपुषा तदेतत् पुनरप्यमंस्थाः । स्वातन्त्र्या-दन्तर्णीतणिच् । अमानयः । व्यज्ञापय इति यावत् । अन्वमंस्थाः अनुमतवानिति वा—गो.

पितर ऊचुः —

श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजै-
दंत्तानि तीर्थसमयेऽपि तिलान् सहाद्भिः[1] ।
तस्योदरान्नखविदीर्णवपाद् य आर्च्छत्
तस्मै नमो भगवतेऽखिलकर्मगोप्त्रे ॥ ४५ ॥

सिद्धा ऊचुः —

यो नो गतिं योगसिद्धामसाधुरहार्षीद् योगतपोबलेन ।
नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ४६ ॥

विद्याधरा ऊचुः —

विद्यां पृथग्धारणयाऽनुरुद्धां न्यषेधदज्ञो बलवत्रवीर्यः ।
स येन सङ्ख्ये पशुवद्धतस्तं महानृसिंहं प्रणताःस्म नित्यम् ॥ ४७ ॥

नागा ऊचुः —

येन पापेन रत्नानि[2] स्त्रीरत्नानि हृतानि नः ।
तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ४८ ॥

मनव ऊचुः —

मनवो वयं तव निदेशकारिणो दितिजेन देवपरिभूतसेतवः ।
भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान् ॥

---

यो भवान् नखविदीर्णवपात् नखविदारितान्त्रात् तस्य दैत्यस्योदरात्[3] आर्च्छत् 'ऋच्छ गतौ' इति धातोः श्राद्धान्यस्माकमगमयदित्यन्वयः ॥ ४५ ॥

योगसिद्धाम् अणिमाद्यष्टैश्वर्यलक्षणां गतिम् । योगः पवनविजयः । तपः कायक्लेशलक्षणम् । तयोर्बलेन । नानाविधो दर्पो यस्य स तथा ॥ ४६ ॥

पृथग् जगद्विलक्षणस्य हरेर्धारणया अखण्डोपासनया अनुरुद्धां लब्धां विद्यामन्तर्धानलक्षणाम्[4] ॥ ४७ ॥ आसां स्त्रीणामर्थे दत्तानन्द ॥ ४८ ॥ निदेशकारिणः आज्ञाकारिणः ॥ ४९ ॥

---

[1] तिलाम्बुमन्ति इत्यपि स पाठः । [2] रत्नानि फणगणस्थानि—स.

[3] ल्यब्लोपनिमित्तेयं पञ्चमी । विदीर्णवपोदरं विधाय तानि यो नः प्रापयामास—स.

[4] पृथग्धारणया तत्तद्भिन्नभिन्नोपासनया अनुरुद्धां तत्तद्योग्यतामनुरुध्य लब्धाम् विद्यामन्तर्धानान्तर्हितपरिज्ञानादि-रूपिणीम्—स.

प्रजापतय ऊचुः —

प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ।
स एष त्वया भिन्नवक्षास्तु शेते जगन्मङ्गलं सत्वमूर्तेऽवतारः ॥ ५० ॥

गन्धर्वा ऊचुः —

वयं विभो ते नटनाट्यगायका येनात्मसाद् वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥

चारणा ऊचुः —

हरे तवाङ्घ्रिपङ्कजं भवापवर्गमाश्रिताः ।
य एष साधुहृच्छ्रयस्त्वयाऽसुरः समापितः ॥ ५२ ॥

यक्षा ऊचुः —

वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञै-
स्त इह दितिसुतेन प्रापिता वाहकत्वम् ।
अनुजनपरितापं तत्कृतं जानता ते
नरहर उपनीतः पञ्चतां पञ्चविंश ॥ ५३ ॥

---

हे परेश त्वया (प्रजेशा इति) अभिसृष्टा येन दैत्येन निषिद्धा वयं प्रजाः न सृजामो वै । स दैत्यः त्वयैव तु इदानीं भिन्नवक्षाः शेते । तथाऽयमवतारो जगन्मङ्गलं जगति शुभसारभूतः । जगतो मङ्गलमुद्दिश्य गृहीतो वा ॥ ५० ॥

नटो नटनं कथाबन्धकथनम् । नाट्यं शृङ्गारादिभावदर्शनम् । एतयोर्गायकाः । एतदुक्तम्— 'नटनं तु कथाबन्धं नाट्यकं भावदर्शनम्[1]' इति । वीर्यबलौजसा येन आत्मसात् आत्माधीनाः कृताः । कल्पते समर्थो भवति ॥ ५१ ॥

२ साधून् हरन्तीति साधुहृतः सज्जनादयः । तेषां श्रयः आश्रयः । साधूनां हृदयं श्रयति ताप-दत्वेनेति वा । समापितः विनाशं गमितः । भवस्यापवर्गो त्यागो यस्मात् तत् तथा तत् । भवात् संसारात् मोक्षो यस्मात् तत् तथेति वा ॥ ५१ ॥ ॥ ५२ ॥

पञ्चतां विनाशम् । हे पञ्चविंश, चतुर्विंशानां मध्य (?) इति शेषः ॥ ५३ ॥

---

[1] आहुरिति शेषः ।

किंपुरुषा ऊचुः —

वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वरः ।
अयं कुपुरुषो[1] नष्टो धिक्कृतः साधुभिर्यतः ॥ ५४ ॥

वेताला ऊचुः —

सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ।
यस्तान् व्यनैषीद् भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन् यथाऽऽमयः ॥

किन्नरा ऊचुः —

वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः[2] ।
भवता हरे स वृजिनो[3]ऽपसादितो नरसिंह नाथ विभवाय नो भव ॥

विष्णुपार्षदा ऊचुः —

अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशापात् तस्येदं निधनमनुग्रहाय विद्मः ॥

इति श्रीमद्भागवते सप्तमस्कन्धेऽष्टमोऽध्यायः ।

---

किम्पुरुषाः पुरुषाभासाः[4] ॥ ५४ ॥

सत्रेषु सभासु । सत्रकारिणः दिष्ट्या सुखं कर्तुम् ॥ ५५ ॥

वेतनहीनतया क्रियमाणं कर्म विष्टिम् । वृजिनं दुःखं करोतीति वृजिनः । कर्त्रर्थः प्रत्ययः । स अपसादितः अपहृत्य नाशितः । विभवाय संसारान्मुक्तये ॥ ५६ ॥

हरिनरयोः सिंहनरयो रूपम् । विधिकरो भृत्यः । किम्[5] ? विप्रशापादसुरयोनिमाप्तस्य[6] ॥५७॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्याष्टमोऽध्यायः

---

[1] कापुरुषः-इत्यपि स.  [2] अमुना नु कारिताः—स.  [3] सवृजिनः—स. व्या.
[4] किम्पुरुषस्तुरङ्गवदनो मयुरित्यमरः—स.  [5] अस्यान्वयो न ज्ञायते ।  [6] अयं शेषः ।

## ॥ अथ नवमोऽध्यायः ॥

नारद उवाच —

एवं सुरादयः सर्वे ब्रह्मरुद्रपुरस्सराः ।
नोपेतुमशकन् मन्युसंरम्भं सुदुरासदम् ॥ १ ॥

साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ।
अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ॥ २ ॥

---

## ॥ अथ नवमोऽध्यायः ॥

अत्रापि भक्तमाहात्म्यमेव प्रकटयति[1] ।

ब्रह्मादिदेवतास्तुत्यनन्तरं कथं कथाप्रसङ्ग इति श्रोतुरान्तरीं शङ्कां परिहर्तुमाह—**एवमिति** । एवं स्तुवन्तोऽपि उपेतुं समीपं गन्तुम् । मन्युसंग्रहं[2] कोपसारभूतम् । मन अवबोधने[3] इति धातुः । ज्ञानसारम् । प्रत्ययसारमिति श्रुतेः । ज्ञानिविवक्षयैतत् । ननु तर्हि कथं समीपं गन्तुं नाशकन्नित्युच्यत इति चेदज्ञेयत्वज्ञापनायेति तात्पर्यम् । 'न तत्र चक्षुर्गच्छति न वाग् गच्छति । तेभ्यो ह प्रादुर्बभूव तन्न व्यजानंत' इत्यादिश्रुतेः । एतदेव दर्शयति—**सुदुरासदमिति** । सुखेन विषयीकर्तुमशक्यम्[4] ॥ १ ॥

एतदेव विवृणोति—**साक्षादिति** । सरस्वत्यादिव्यावृत्त्यर्थं साक्षादिति । **अदृष्टाश्रुतपूर्वत्वात्**, अन्यैः साधारणैर्जनैरिति शेषः । 'द्वावेतौ नित्यमुक्तौ' इत्यादेः । तर्हि नोपेयाय शङ्किता इत्येतत् कथं घटत इति चेत् 'मयाऽपीश्वरः परिच्छेद्यो न भवति । किम्वन्यैः' इति ज्ञापनाय असुरमोहनायेति वा । 'अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः । नृसिंहं शङ्कितेव श्रीर्लोकमोहाय नो ययौ' इति वाक्यसिद्धम् (इदम्) ॥ २ ॥

---

[1] 'उग्रोऽप्यनुग्र एवायं स्वभक्तानां नृकेसरी । केसरीव स्वपोतानामन्येषामुग्रविग्रहः' । इत्याद्यागमावगमितां भक्तवत्सलतां निरूपयितुं तत्कालप्रदर्शितकोपोपशमोपायं रमातामरसंभवभवादीनां हर्यन्तरज्ञतया कृतां काञ्चन प्रह्लादपुरस्कृतिकृतिं निरूपयत्यस्मिन्नध्याये—स.

[2] मन्युसंग्रहं कोपप्राकट्यस्वीकर्तारम् । यद्यपि भगवतो देवदत्तादेरिव न ज्वलनात्मकः कोपः । तथापि शत्र्वपकारहेतुत्वाल्लोकविभीषणचेष्टाहेतुव्यापारः कोप इत्युच्यते । स च ज्ञानानन्दात्मक इति मन्तव्यम्—व्या.

[3] अवबोधार्थो धातुर्मनुरित्येव प्रसिद्धः । अनुव्याख्याने श्रीमदानन्दतीर्थीये तथैव पाठः स्वीकृतः । तथा हि 'अवबोधार्थो मनुधातुः प्रकीर्तितः (१–१–१५) परन्तु विधिध्वजीयटीकायाः सर्वमातृकासु मनु अवबोधने इत्येव पाठोपलब्धिः ।

[4] अस्पष्टमिदम् । स्तुवन्तोऽपि समीपं गन्तुं ज्ञातुं च नाशकन्नित्यभिप्रायः स्यात् ।

प्रह्लादं प्रेषयामास ब्रह्माऽवस्थितमन्तिके ।
तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥

तथेति शनकै राजन् महाभागवतोऽर्भकः ।
उपेत्य भुवि कायेन ननाम विधृताञ्जलिः ॥ ४ ॥

स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ।
उत्थाप्य तच्छीर्ष्ण्यदधात् कराम्बुजं कालाहिनिर्दष्टधियां[1] कृताभयम् ॥

स तत्करस्पर्शधुताखिलाशुभः सपद्यभिव्यक्तपरात्मदर्शनः ।
तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥

---

ममेदानीं प्रह्लादे वात्सल्यातिशयोऽस्ति । भक्तानां मत्सेवातिशयफलाधिकार्थमिति[2] भगवन्मनोज्ञापनाय ब्रह्मणा प्रह्लादः प्रेषित इत्याशयेनाह—**प्रह्लादमिति** । अयमपि लक्ष्मीकान्तसमीपागमनहेतुः । अन्यथा प्रह्लादे वात्सल्यातिशयो न प्रकटितः स्यात् । तदुक्तम्— 'प्रह्लादे चैव वात्सल्यं दर्शनाय हरेरपि । ज्ञात्वा मनस्तदा ब्रह्मा प्रह्लादः प्रेषयत्[3] तदा ' इति । प्रकृष्टो ह्लादः निर्वृतिः यस्य स तथा इत्यनेन प्रह्लादशब्दनिरुक्तिः सूचिता । लक्ष्म्यादिवत्सलतां हित्वा प्रह्लादे तत्करणात् हरेर्वैषम्यबुद्धिर्नाशङ्कनीया । असुरजनमोहनार्थोपपत्तेः । उक्तं च – 'एकत्रैकस्य वात्सल्यं विशेषाद् दर्शयेद् हरिः । अवरस्यापि मोहाय क्रमेणैवापि वत्सलः ' इति । भक्त्यादिदानं नैव करोति[4] । किन्तु वात्सल्यानुसारेणेत्यभिप्रायेण दर्शितम् । 'क्रमेणैवापि वत्सलः ' इत्युक्तम्[5] उपेहि उपेत्य ॥ ३ ॥

नृहरेः प्रह्लादे वात्सल्यातिशयं दर्शयति—**स्वपादमूल इति** । ब्रह्मादिकराम्बुजेभ्यो हरेः कराम्बुजं विशिनष्टि—**कालाहीति** । कालाख्याहिना निर्दष्टा ग्रस्ता धीः येषां ते तथा तेषाम् ॥ ४ ॥

इतरकरस्पर्शवैशिष्ट्यदर्शनायेशकरस्पर्शफलाभिव्यक्तिं वक्ति — **स तत्करेति** । स भगवत्करस्पर्शविधूतसमस्तपापत्वात् तत्क्षण एव सम्यगङ्कुरितपरमात्मज्ञानः । अभिव्यक्तं परस्य हरेः आत्मनः संसारिणश्च दर्शनं स्वरूपविषयज्ञानं यस्य स तथेति वा । क्लिन्नहृद् भक्तिलक्षणामृतजलेनार्द्रीकृतान्तःकरणः । अश्रुणा युक्ते लोचने यस्य स तथा ॥ ६ ॥

---

[1] कालाहिवित्रस्तधियामिति पाठः सुन्दरः—स.

[2] अस्पष्टमिदं पदम् ।

[3] प्रह्लादमिति पाठ एव बहुकोशेषु । प्रह्लाद इति क्वाचित्कः पाठः—स. प्रह्लाद इति पाठ एव टीकाकृत्सम्मत इति ज्ञायते ।

[4] भक्त्यादिदानं वैषम्येण न करोतीति स्यात् ।

[5] इत्युक्तेरिति स्यात् ।

तं अस्तौषीद् हरिमेकाग्रमनसा सुसमाहितः ।
प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥

प्रह्लाद उवाच —

ब्रह्मादयः सुरगणाः मुनयोऽथ सिद्धाः
सत्त्वैकतानमतयो वचसां प्रवाहैः ।
नान्तं परस्य परतोऽप्यधुनाऽपि यान्ति
किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥

मन्ये धनाभिजनरूपतपःश्रुतौज-
स्तेजःप्रभावबलपौरुषबुद्धियोगाः ।
नाराधनाय हि भवन्ति परस्य पुंसो
भक्त्या तुतोष भगवान् ननु यूथपाय ॥ ९ ॥

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।

---

तत्वज्ञानमस्योत्पन्नमित्यस्य किं चिह्नमित्यतस्तत्स्तुत्या व्यज्यत इति भावेन दर्शयति — **अस्तौषीदिति** ॥ ७ ॥

सत्वे नित्याविर्भूतबलज्ञानसमाहारे 'एक एव नान्य' इति वितानमतिः विस्तृतबुद्धिर्येषां ते सत्त्वैकतानमतयः[1] यद्वा सत्त्वे हरावेव नियतबुद्धयः । अधुना परतः[2] परस्यान्तं नापि नैव यान्ति । स हरिः उग्रजातेरसुरजातेः मे तोष्टुं स्तोतुमर्हति किम् इत्यन्वयः । 'न ते विष्णो' इति श्रुतेः ॥ ८ ॥

भक्त्या ननु भक्त्यैव । यूथपाय[3] गजेन्द्राय । 'सेनानेतरि नागेन्द्रे यूथनाथः प्रकीर्तितः' इत्यभिधानम् । अनेन धनादिकमपि भक्त्युपबृंहितं सफलमित्युक्तं भवति ॥ ९ ॥

इतोऽपि भक्तिरेव हरेः प्रसादे प्रधानसाधनमित्याह — **विप्रादिति** । द्विषड्गुणाः द्वादशगुणाः । एतैर्युक्तात् । 'ज्ञानं च सत्यं च दमः शमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं च यज्ञश्च तपः

---

[1] सत्वेन केवलसत्वेन एकताना अनन्यवृत्तिः मतिः येषां ते तथा—स.

[2] परतः अक्षरात् परस्योत्तमस्य—स.

[3] अनेकेषु कीटादिद्दुर्जातिषु सत्सु मदकज्जातित्वाद् गजग्रहणं ज्ञेयम्—स.

मन्ये तदर्पितमनोवचनात्मगेह-
प्राणः पुनाति सकलं[1] न तु भूरिमानः ॥ १० ॥

---

श्रुतं च महाव्रतं[2] द्वादश ब्राह्मणस्य[3] ।' 'एतेभ्यः प्रवरो द्वादशेभ्यो सर्वामपीमां पृथिवीं प्रशिष्यात् । त्रिभिर्द्वाभ्यामेकतो वा विशिष्टो नास्य समोऽस्तीति वेदितव्यः' इत्येते भक्तिमत एव सम्भवन्ति, नान्यस्य । क्वचित् सम्भवेऽप्यन्ततो न तेभ्योऽर्थः स्यात् । 'यद्यप्यनेवंविन्महत्पुण्यं कर्म करोति । तद्धास्यान्ततः क्षीयते' इति श्रुतेः । तस्मात् भक्तिरेव प्रयोजिकेति तात्पर्यम् । सकलं मनआदिकं पुनाति विषयोपरक्तं मलं निरस्य दर्पणवत् स्वच्छं करोति । जगत् पुनातीति वा । 'यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः' इति श्रुतेः । अन्यत्र बाधकमाह —नत्विति । भूरिमानः अहं कर्तेत्यभिगन्ता नैव पुनातीत्यन्वयः । 'समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् । तन्मिथ्या हि न मे कृत्स्नं प्रभावं वेत्थ भारत । मत्समो हि गदायुद्धे पृथिव्यां नास्ति भारत । नासीत् क्वचिदतिक्रान्तो भविता वा न कश्चन' इत्यादि भारते दुर्योधनोक्ताहंकारप्रतीतेरेवंविधभूरिमान इत्यर्थः । 'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात्' इति श्रुतेः । ^'शमो दमस्तपः शौचं क्षान्त्यार्जवविरक्तताः । ज्ञानविज्ञानसन्तोषाः सत्येज्येऽपि[4] द्विषड् गुणाः' इति केचित् । [B] 'सत्यं दमस्तपः शौचं सन्तोषो ह्रीः क्षमाऽर्जवम् । ज्ञानं शमो दया ध्यानं विप्रस्यैते द्विषड् गुणाः' इति केचित् । असम्प्रदायज्ञैरुक्तत्वादत्र न ग्राह्यमेतन्मतद्वयमिति ॥ १० ॥

---

[1] स्वकुलं—स. [2] महाव्रताः—ह.-स.व्या. । व्रतशब्दो धर्मशब्दवदस्त्रियां पठ्यते—गो.

[3] ज्ञानं परापरतत्वविज्ञानम् । सत्यं यथार्थभाषणं भूतहितं वा । दम इन्द्रियनिग्रहः । श्रुतं सच्छास्त्रश्रवणम् । अमात्सर्यं मद्वशो नासौ इति चित्ततोदाभावः । ह्रीरकार्यकरणे लज्जा । तितिक्षा द्वन्द्वसहनम् । अनसूया ईर्ष्याभावः । यज्ञो ब्रह्मयज्ञादिः । दानं सत्पात्रेषु वित्तार्पणम् । धृतिः विषयसान्निध्येऽपि तत्स्पृहारहितता । शमो बुद्धेर्भगवन्निष्ठता । एते द्वादश ब्राह्मणस्य विप्रस्य महाव्रताः—स.

एवं व्याख्यानात् सत्यधर्मतीर्थपाठः एवं संभाव्यते— 'ज्ञानं च सत्यं च दमः श्रुतं च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । यज्ञश्च दानं च धृतिः शमश्च महाव्रता द्वादश ब्राह्मणस्य' इति उत्तरश्लोकेऽप्ययं पाठभेदस्तत्सम्मतः —'यस्त्वेतेभ्यः प्रवसेद् द्वादशेभ्यः सर्वामिमां पृथिवीं स प्रशिष्यात् । त्रिभिर्द्वाभ्यामेकतो वा वियुक्ताः क्रमाद् वियुक्ता मौनभूताभवन्ति' इति । आलस्यादिना एतेषु त्र्यादिगुणहीना अपि मुनिभिः प्राप्यत्वात् मौनो वैकुण्ठादिः, तत्र भूता सत्तावन्तो भवन्तीति तदाशयः । अधुनातनपुस्तकेषूत्तरश्लोक एवं पठ्यते—'यस्त्वेतेभ्योऽप्रवसेद् द्वादशेभ्यः सर्वामिमां पृथिवीं स प्रशिष्यात् । त्रिभिर्द्वाभ्यामेकतो वाऽविमुक्ताः क्रमाद् विमुक्ता मौनभूता भवन्ति' इति । [4] सत्येज्येति इति स्यात् ।

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद् यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ११ ॥

---

ननु श्वपचं वरिष्ठं मन्य इतीदमसंभावितम् । वर्णहीनत्वेन तत्कृतसपर्यास्वीकारानुपपत्तेः । 'नाहं तथाऽद्मि यजमान हविर्वितानैः' इत्यादावन्यथा कथनाच्चेति तत्राह — **नैवेति** । अयं प्रभुः अविदुषो ज्ञानोपदेशानधिकारिणो वर्णहीनात् जनात् मानं पूजां वृणीते स्वीकरोतीति यत् तद् आत्मनोऽर्थे अप्राप्तप्राप्तये नैवेत्यन्वयः । कुत इत्यत उक्तम् — **निजेति** । निजलाभेन नित्यानन्देन पूर्ण इति हेतुगर्भविशेषणम् । 'को ह्येवान्यात्' 'यो वै भूमा तत् सुखम्' इत्यादिश्रुतेः । ननु स्वार्थाभावे सपर्यास्वीकारे किं कारणमिति तत्राह — **करुण इति** । करुणयतीति करुणः । 'देवस्यैष स्वभावोऽयं' 'यमेवैष वृणुते' इत्यादिश्रुतेः । कर्मणः क्षणभंगुरत्वात् कृपया तत्फलप्रदानाय तत्स्वीकारोपचार इति तात्पर्यम् । विद्वद्भिः क्रियमाणं मानं स्वार्थमपि किं न स्यादित्याशङ्क्य विशेषमाह — **यद्यदिति** । विद्वदविद्वद्भेदमन्तरेण समानो जनो भगवते यद्यन्मानं विदधीत तत्तदात्मने च स्वप्रयोजनायैवेत्युपगन्तव्यम् । अत्र दृष्टान्तमाह — **प्रतिमुखस्येति** । यथाऽलंकृतमुखश्रीः[1] दर्पणादौ प्रतिफलितस्य प्रतिबिम्बलक्षणमुखस्य स्वालङ्कारमन्तरेण श्रीर्लभ्यते तथा स्वबिम्बभूतपरमात्मनो निर्दोषगुणराशिध्यानलक्षणमानेन तत्प्रतिबिम्बत्वात् स्वस्यापि निर्दोषसुखलक्षणश्रीर्लभ्यत इत्यर्थः । अनेन ब्रह्मादिजीवराशिरत्यन्ततुच्छीभूत इति सूचितम् । 'श्वपचादपि कष्टत्वं ब्रह्मेशानादयः सुराः' इत्यादेः ।

अयं तु नरसिंह आत्मन एव न प्रभुः । किन्तु सर्वस्यापि । अतोऽखण्डेश्वरत्वात्[2] चक्रवर्ती करमिवाविदुषो जनात् मानं वृणीते । अनेन विद्वज्जनमानाङ्गीकारो व्याख्यातः । स्वतःसिद्धत्वात् । ननु जनपदादर्थादानादिना राज्ञः स्वप्रयोजनोपलब्धिवदीश्वरस्यापि तथा स्यात् किम् ? नेत्याह — **निजेति** । ननून्मत्तः किमीश्वर इति तत्राह — **करुण इति** । कस्यार्थे मानकरणमिति तत्राह — **यद्यदिति** । कथमिव ? यथा मुखस्य मुख्यस्य स्वामिनो राज्ञो मानलक्षणा श्रीः[3] प्रतिमुखस्य राजमुखमनुवर्तमानस्य जनपदस्य परोपद्रवराहित्येन धनधान्यादिसमृद्धिलक्षणा श्रीर्भवति । तथा हरिविषया क्रियमाणा मानश्री[4]रनुरक्तजनस्य संसारशृङ्खलान्मोक्षलक्षणा श्रीर्भवतीत्यर्थः । 'बलमानन्द ओजश्च' इत्यादेः ।

---

[1] मुखश्रियेति स्यात् । [2] अखण्डैश्वर्यत्वात् — ब.

[3] मानलक्षणया श्रियेति स्यात् । [4] क्रियमाणया मानश्रियेति स्यात् ।

**तस्मादहं विगतविक्लव ईश्वरस्य**
**सर्वात्मना न हि गृणामि यथामनीषम् ।**
**नीचोऽजया गुणविसर्गमनुप्रविष्टः**
**पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥**

---

ननु हरेर्जन्मादिमत्त्वेन विशेषमाहात्म्यायोगात् देवदत्तवत् । अतो युक्तं विप्रादीतरजनपरिगृहीतत्वमिति[1] तत्राह—**नैवेति** । अयं नृसिंहः आत्मनो देहात् प्रभुः प्रभूतः उत्पन्नो नैव । किन्तु स्तम्भात् । दृष्टत्वादिति शेषः । अदेहस्य जननायोगात्, जननवत एव विषयसुखानुभवोपपत्तेः, अतः कथं हरेर्विषयानुभूतिरिति तत्राह—**निजेति** । सत्यम् । परतश्चेत् प्राप्तिः । नायं तथा । निजो लाभो यस्य स तथा स्वतःसिद्धानुभवश्च पूर्णो व्याप्तश्च । न हि व्याप्तस्य परिच्छिन्नगर्भवासादिकं युज्यते । 'प्रादेशमात्रं पुरुषम्' इत्यादौ परिच्छेदप्रतीतिरिति चेत् ? 'तस्यान्ते सुषिरं सूक्ष्मम्' इति श्रुतेराकाशवदुपपत्तेः । उपाधिकल्पनायामनवस्थादिदोषापत्तेः । अतः स्वभृत्यभाषितं सत्यं कर्तुं स्वस्य सर्वत्र व्याप्तिं दर्शयितुं इतरत्र जातवद् दर्शनमसुरजनमोहार्थमित्यादि ज्ञातव्यम् । स्वभृत्यभाषितस्य सत्यकरणायेत्येतत् कथमवगतमिति तत्राह—**मानमिति** । अविदुषः स्वरूपाज्ञानिनः अस्मात् जनात् मानं वृणीते[2] । न केवलमस्माज्जनात् । किन्तु सर्वस्मादपि योग्यादित्याशयेनाह—**यद्यदिति** । शेषं पूर्ववत् ।

श्वपचोऽपि भक्त एव वरीयान् । नाभक्तः । तस्य दोषित्वेन[3] दम्भार्थत्वेन विहितपूजाया अस्वीकारादित्यतो वाह[4]—**नेति** । अयं हरिः अविदुषः नित्याज्ञानिनोऽसुरजनाद् आत्मनः स्वस्य मानं लोके दम्भाभिप्रायेण कृतपूजां नैव वृणीते । प्रत्युतानर्थं च करोतीत्याह—**करुण इति** । कृ विक्षेपे इति धातोः, असुरजननिरसनशीलत्वादन्धन्तम एव प्रापयतीत्यर्थः । 'परा पूर्वेषाम्' इति श्रुतेः । तस्मादसुरजनकृतसपर्याऽनर्थजननीत्याशयेनाह—**यद्यदिति** । आत्मने, अनर्थायेति शेषः । यथा मुखश्रीः प्रधानभटयोग्यश्रीः प्रतिमुखस्याल्पस्य प्रतिभटस्य, अनर्थाय मरणलक्षणाय स्यादिति शेषः॥११॥

तस्माद् भक्तिरेव प्रयोजिकेत्याह—**तस्मादिति** । यस्मादचिन्त्यमहिमत्वात् सर्वात्मनेश्वरस्य स्वरूपं स्तोतुं न शक्नोमि तस्माद् विगतविक्लवो[5] निर्धूतचापल्योऽहं यथामनीषं भक्त्या गृणामीत्यन्वयः ।

---

[1] जन्मादिमत्त्वेन देवदत्तवद् विशेषमाहात्म्यायोगादयुक्तं विप्रादीतरजनपरिगृहीतत्वमिति भाव्यम् ।
[2] अस्पष्टमिदं समाधानम् । [3] द्वेषित्वेन—ब. [4] इति वा आहेति पेशलम् ।
[5] अहं विगतविक्लवः, (विक्लव इति) भावप्रधानो निर्देशः, मोचयति न वेति सन्देहरहितः यथामनीषं यथाशक्ति यथाबुद्धि गृणामिति योजना—व्या.
णामि

सर्वे ह्यमी विधिकरास्तव सत्वधाम्नो
ब्रह्मादयो वयमिवेश न चोद्विजन्तः।
क्षेमाय भूतय उतात्मसुखाय चाऽस्य
विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥

त यद् यच्छ मन्युमसुरश्च हतस्त्वयाऽद्य
मोदेत साधुरपि वृश्चिकसर्पहत्या[1] ।
लोकाश्च निर्वृतिमिताः प्रतियान्तु सर्वे
रूपं नृसिंह विभवाय जनाः स्मरन्ति ॥ १४ ॥

---

स्तुतेः फलमाह — **नीच इति**। अजया प्रकृत्या नीचगुणविसर्गे संसारम्। अनुप्रविष्टः पुमान् येनानुवर्णितेन गुणसङ्कीर्तनेन पूयेत शुद्धो भवति हि यस्मात्। तेन संसारमोक्षो भवतीत्यर्थः॥ १२ ॥

यथामनीषं गृणामीत्युक्तं विवृणोति — **सर्व इति**। अमी वयं ब्रह्मादयश्च सर्वे सत्वधाम्नस्तव विधिकरा हि। 'विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि' इति श्रुतेः। तत्र विशेषोऽस्ति। यथा वयं उद्विजन्तः तथा ब्रह्मादयो नैवोद्विजन्तः। प्रधानभक्तत्वात्। कुत एतद् द्वयं विज्ञायत इति तत्राह — **क्षेमायेति**। अस्य हरेः रुचिरावतारैः विक्रीडितम् अस्य जगतः क्षेमाद्यनेकप्रयोजनाय स्यादिति यत्। अनेन अस्मन्निधनेनास्माकमुद्वेगो ब्रह्मादिरक्षणेन तेषामनुद्वेगश्च ज्ञायत इत्यर्थः[2] ॥ १३ ॥

अथैवं कर्तव्यमित्याह — **तद् यच्छेति**। अद्य त्वयाऽसुरो हतश्च यस्मात् तस्मात्। मथ्नाति कलुषीकरोति ज्ञानमिति मन्युः कोपः। इतरेषामेवंविधः। हरेस्तु, स्वेदाधरस्फुरणादिविडम्बनलक्षणादिः। तं यच्छ संहर। प्रसन्नभावं दर्शयेत्यर्थः। मन्युं च त्वद्विषयज्ञानं च यच्छ अनुगृहाणेत्यर्थः। 'मनु अवबोधने[3]' इति धातोरिति वा। त्वद्विषयं पूजालक्षणं यज्ञमिति वा। 'मन्युः कोपे क्रतौ युद्धे' इत्यभिधानम्। सज्जनानन्दाकाङ्क्षाऽपि भगवत्प्रसादकरीत्याशयेनाह — **मोदेतेति**। वृश्चिकसर्पलक्षणासुरहननेन साधुः सज्जनोऽपि मोदेत। साधुरपि मोदेतेति वा योगविभागः[4]। वृश्चिकसर्पलक्षणासुरहत्या निर्वृतिम् आनन्दम् इताः प्राप्ताः सर्वे लोकाः प्रतियान्तु, स्वगृहमिति शेषः। गत्वा किं कुर्वन्तीति तत्राह — **रूपमिति**। हे नृसिंह जनाः तव नृसिंहाकारं रूपं दुरितनिवृत्तिलक्षणाय विभवाय[5] स्मरन्तीत्यन्वयः। साधुः अहिंसापरोऽपि वृश्चिकादिहत्या मोदेत। किं पुनः सर्वलोकोपद्रवकृदसुरहत्या।

---

[1] वृश्चिकसर्पहत्याम् इत्यपि वि पाठः। [2] असपष्टमिदं प्रतिवचनम्। [3] मन अवबोधने—ब.
[4] असपष्टमिदम्। [5] विभवाय मोक्षाय—स.

नाहं बिभेम्यजित तेऽतिभयानकस्य
जिह्वाग्निनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात्[1] ।
आन्त्रस्रजः क्षतजकेसरशङ्कुकर्णा-
न्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥ १५ ॥

त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्र-
संसारचक्रकदनात् कृशतां प्रणीतः ।

---

अतो[?]वाह–मोदेतेति । हत्यामिति पाठे[2] साधुः शास्त्रतत्त्वज्ञो दुष्टवृश्चिकादिहत्यां यथा मोदेत तथाऽहमपि भगवद्द्वेषित्वेन दुष्टत्वात् पितृहत्यां मोदे इत्यभिप्रेत्यातो वाऽऽह—मोदेतेति । नृसिंह इति संबोधनं नामकरणाभिप्रायेणेति ज्ञातव्यं पूर्वमज्ञातनामत्वादिति[3] ॥ १४ ॥

तव कोपाकुलरूपदर्शनाद् भीत्या लोकस्य स्मरणं न संभाव्यत इति तच्छमनं[4] कर्तव्यमित्युक्तम्। तन्मम ज्ञाततत्वस्य विषयो न भवति[5] मम भयं संसारचक्रादित्याह—नाहमिति । भयानकस्य ते तव रूपान्न बिभेमीत्यन्वयः। कीदृशात् ? जिह्मे वक्रे अग्नियुक्ते नेत्रे यस्य तत् तथा। जिह्मया भ्रुकुट्या रभसो यस्य तत् तथा । उग्रे दंष्ट्रे यस्य तत् तथा । जिह्माग्निनेत्रं च जिह्मभ्रुकुटीरभसं च उग्रदंष्ट्रं च तत् तथा तस्मात् । आन्त्रमेव स्रक् माला यस्य तत् तथा तस्मात् । क्षतजेन रुधिरेण सिक्ताः केसरा यस्य तत् तथा । शङ्कुवत् स्थूणवत् स्तब्धौ कर्णौ यस्य तत् तथा । क्षतजकेसरं च शङ्कुकर्णं च तत् तथा तस्मात् । निर्ह्रादेन भीताः दिगिभाः दिग्गजाः यस्य तत् तथा तस्मात्। अरिभिन्दिखनाग्राणि यस्य तत् तथा तस्मात्। अरीन् भिन्दन्तीति अरिभिन्दि नखानामग्राणि ॥ १५ ॥ नखा

दुःसहं चोग्रं च संसारचक्रं च यत् तेन सह कदनात् हिंसालक्षणाद् युद्धात् । उशत्तम[6] ।

---

[1] त्वमेव भीतः कोपशान्तिं प्रार्थयसे किम् , भीतिकराश्चावयवाः के इत्यतस्तथारूपं विशिष्याभयङ्करस्य करस्य शिरसि निधानान्नाहं बिभेमि । किन्तु लोको बिभेतीत्याशयवानाह–नाहमिति—व्या.
भ्रकुटीरभसोग्रदंष्ट्रात्—स. । तथाहि–भ्रुकुटिर्भ्रूकुटिः स्त्रियामित्यमरे सरेफो भकार इति भ्रुरिति पठनीयम् । तथापि लघुपाठश्छान्दस इति केचित् । तन्न । पृषोदरादित्वात् अकारे (आकारे) भ्रकुटीत्यपीति भानुदीक्षितोक्तेः—स.

[2] अत्र लेखकप्रमादः स्यात् । पाट इत्यस्यानन्वयात् । साधुरित्यादि तूत्तरान्वयि । अथवा हत्यामिति पाठोऽपि साधुः । साधुः शास्त्रतत्वज्ञ इति विन्यासः स्यात् ।

[3] अस्य वाक्यस्याभिप्रायो न स्पष्टः । यतः पूर्वाध्याय एव ४३, ४६, ४७, ५३, ५६, एतेषु श्लोकेषु नरसिंहेति नरहर इति वा संबोधनमस्ति । [4] इति चेत् तच्छमनम्—ब. [5] तद् रूपं मम भयविषयो न भवतीत्यर्थः ।

[6] वशकान्तौ । कान्तिरिच्छा । उशन्तीच्छन्तीति उशन्तस्तेषु श्रेष्ठ उशत्तमः । तमबर्थातिशयनमवन्ध्यत्वरूपमुशने

बद्धः स्वकर्मभिरुशत्तम तेऽङ्घ्रिमूलं
भीतापवर्गमरणं समियां कदा नु ॥ १६ ॥

यस्मात् प्रियाप्रियवियोगसुयोगजन्म-
शोकाग्निना सकलयोनिषु दह्यमानः ।
दुःखौषधं तदपि दुःखमतद्धियाऽहं
भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥

सोऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास्तव नृसिंह विरिञ्चगीताः ।
अञ्जस्तराम्यनुगृणन् गुणविप्रमुक्तो
दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १८ ॥

---

सत्यकाम ! भीतानामपवर्गं भीतिजनकसंसारनाशनम् अरणं शरणं समियां यामि ॥ १६ ॥

देवादियोनौ सुखसंभवात् तस्मात् संसारचक्रात् कथं बिभेषीति तत्राह—यस्मादिति । देवादि-सकलयोनिषु प्रियस्य वियोगः अप्रियस्य संयोगः[1] तयोर्जन्म यस्य स तथा । स च शोकाग्निः तेन । प्रियादिवियोगादिना जन्मना च यः शोकाग्निः तेन वा । दह्यमानोऽहं यद् दुःखपरिहारलक्षणम् औषधं कर्म तदपि दुःखरूपमिति मत्वा, अतद्धिया, न तद्धीः अतद्धीः तया, दुःखपरिहारौषधाज्ञानेन भ्रमामि । कुत्र गतेन केनौषधेन वा मे सुखं स्यादिति अनवस्थितिं प्राप्नोमीति यस्मात् तस्मादिदमेव संसारनाशन-मिति मत्वा भवन्तं प्रार्थये । किं तत् ? आह—वदेति । तव दास्यलक्षणं योगम् औषधं वद अनु-गृहाणेत्यन्वयः ॥ १७ ॥

मदुपासनाद्युपायमन्तरेण दास्यमात्रेण तव किं स्यादित्याशङ्क्य बहुप्रयत्नसाध्यामुपासनामन्तरे-णोपायोऽस्तीत्याह—सोऽहमिति । गुणमयसंसाराद् विप्रमुक्तः । पादयुगलमेव आलयमाश्रयो येषां ते तथा । ते च हंसाः निस्सङ्गाः परमहंसाः । तेषां सङ्गः सेवालक्षणो यस्य स तथा । दुर्गाणि कलत्रादीनि नरकाणि वा ॥ १८ ॥

---

विशेषणेऽन्वेति । तत्संबुद्धिः हे उशत्तम अवन्ध्यकाम । वाचो बभूवुरुशतीत्यृग्भाष्यटीकायाम् उशती उशत्यः प्रकाशमाना इत्युक्तेः प्रकाशवत्तमेति वा—स.

[1] मूले सयोगेति क्वचित् पठ्यते । अनेन व्याख्यानेन पाठो दुर्निर्धारः । संयोग इति तु न छन्दोऽनुगुणम् । सुयोग इत्येव स पाठश्च ।

बालस्य चेह शरणं पितरौ नृसिंह
　　आर्तस्य चागदमुदन्वति मज्जतो नौः ।
तप्तस्य तर्पणविधिर्यदिहाञ्जसेष्ट-
　　स्तावत् प्रभो तनुभृतां त्वदुपासकानाम् ॥ १९ ॥

यस्मिन् यतो यर्हि च येन यस्य
　　यस्मै यथा यमुत यस्त्वपरः परो वा ।
भावं करोति विकरोति पृथक् स्वभावः
　　सञ्चोदितस्तदखिलं भवतः स्वरूपम् ॥ २० ॥

---

नृसिंह आर्तस्य इत्यनेन सन्ध्यकरणेन दृष्टान्तदार्ष्टान्तिकयोर्महद् वैलक्षण्यमस्तीति ज्ञापनाय अज्ञानजनबुध्यवताराय चेति ज्ञातव्यम्[1] । निदाघतप्तस्य जलादिना तर्दणविधिः, आप्यायनलक्षणपरिहारः । ज्वराद्यभिभूतस्य 'ज्वरादिपरिहारप्रकारो यद् इष्टः इष्टसाधनं च'[2] ॥ १९ ॥

ब्रह्माद्यन्यतम इष्टः किं न स्यादित्याशङ्क्य कर्तृत्वाद्यभिमतस्य ब्रह्मादेः सत्ताया अपि यदा यदधीनत्वं प्रामाणिकं तदा सर्वस्माद् हरेरिष्टत्वं किं वक्तव्यमीति भावेनाह—**यस्मिन्निति** । अपरः कालादिः[3] यः परो ब्रह्मादिर्वा यस्मिन्नधिष्ठाने स्थित्वा यतो मृदादेः यर्हि यस्मिन् काले येन चक्रसलिलादिना यस्य अदृष्टादेः सहायेन, यस्मै जलाहरणाद्यर्थं यथा विधिना यं भावं घटादिपदार्थं करोति विकरोति सामान्यतो विशेषतो वा । कीदृशः ? पृथक्स्वभावः कार्याद् विलक्षणस्वरूपः ।

---

[1] अस्पष्टमिदं द्वितीयप्रयोजनकथनम् ।

[2] प्रियस्येत्यनेनेष्टत्वमुक्तम् । तद् दृष्टान्तमाल्या चोपपादयतिबालस्येति । चशब्दोऽनुक्तस्य पान्थस्य समुच्चये । यदित्यस्य यद्वदित्यर्थः । इष्टशब्दस्य लिङ्गविपरिणामादिना प्रत्येकमन्वयः । त्वमिति शेषः । एवं च हे प्रभो नृसिंह पान्थस्य शरणं गृहमिष्टं यद्वदेवं बालस्य पितरौ, आर्तस्य रोगार्तस्यागदमौषधम्, उदन्वति समुद्रादौ मज्जतो नौर्नौका । तप्तस्य घर्मतप्तस्य तर्पणविधिः शीतलोदकपानविधिः । त्वदुपासकानां तनुभृतां तद्वत् त्वमञ्जसेष्ट इति योजना । इष्टत्वेऽपि वैलक्षण्यद्योतनायासन्धिः—व्या.

सत्यधर्मतीर्थास्तु सर्वत्र काक्वा योजयामासुः बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमित्यपि पाठः काक्वनपेक्षस्तेषामिष्टः । हे नृसिंह बालस्य पितरौ शरणं किम् ? स्कन्दाद्ग्रहादिभिर्धर्माद्ग्रहादिमारणदर्शनात् । तत्तत्पाल्यमानानां बालानां यथायथं व्यथादर्शनाच्च । आर्तस्य चागदं शरणं किम् ? न । औषधनिषेवणेऽपि मरणदर्शनात् । उदन्वति मज्जतो नौः शरणं किम् ? न । तस्याः स्वस्ति निमज्जनैः (?) सहमज्जनदर्शनात् । निदाघादिनाऽतप्तस्य तर्पणविधिः यथाऽञ्जसेष्टः पानकालेऽपि दुःखनिवृत्त्यादिदर्शनात् तद्वत् त्वमिष्ट इत्यादि योजयामासुः

[3] कुलालादिरिति स्यात् ।

**माया मनः सृजति कर्ममयं बलीयः कालेन चोदितगुणानुमतेन[1] पुंसः ।**
**छन्दोमयं यदजयाऽर्पितषोडशारं संसारचक्रमज कोऽतितरेत् त्वदन्यः ॥**
**स त्वं हि नित्यविजितात्मगुणः स्वधाम्ना**
**कालो वशीकृतविसृज्यविसर्गशक्तिः ।**

---

संचोदितः त्वादृशेन पुरुषेण प्रेरितः । तदखिलं कार्यकारणलक्षणं सर्वं भवतः स्वरूपं च[2] त्वदधीनसत्तात्मकमित्यन्वयः[3] । 'कर्तृकर्मक्रियादीनां सत्ता वृत्तिस्तथैव च । विष्ण्वधीनं यतस्सर्वं सर्वरूपस्तदुच्यते' इति वचनान्नाभेदोऽत्रेति बोद्धव्यम्[4] ॥ २० ॥

संसारचक्रं भक्त्या जनितश्रीहरिप्रसादं विना दुस्तरम् । प्रसादश्चानिगृहीतमनसां दुःसाध्यः, मनोमयत्वात् संसारचक्रस्य । अतः स एव संपाद्य इत्याशयेन संसारस्वरूप निरूपयति—**मायेति** । चित्प्रकृत्याऽभिमतमाया प्रकृतिः उदितगुणानुमतेन उद्भूतरजआदिगुणानुसारिणा कालेन प्रेरितेनादृष्टेन च सहकारिणा पुंसो जीवस्य कर्ममयं नानाविकारकोशम्, अत एव बलीयो निग्रहीतुमशक्यं, छन्दोमयं सङ्कल्पविकल्पलक्षणेच्छात्मकं यत् मनः सृजति, हे अज ! तत् मनोमूलं संसारचक्रं त्वदन्यः त्वदनुग्रहरहितः पुरुषः कोऽतितरेत्[5] ? न कोऽपीत्यन्वयः । केवलात् (चक्रात्) परिकरोपेतस्य बलाधिक्यं स्यादित्यभिप्रायेणाह—**अजयेति** । अजया प्रकृत्या अर्पिताः कल्पिताः (षोडश) भिन्नवर्तिना[6] मनसा सह दशेन्द्रियाणि पञ्च प्राणा एव अरा दलस्थानीया यस्य तत् तथा तत्[7] ॥ २१ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोरिति श्रुतेः । सम्यक् नियुक्तं (मनः) मुक्तिनिमित्तं च त्वदनुग्रहेण स्यादित्याशयेनाह—**स त्वमिति** । यस्त्वं स्वधाम्ना नित्यं विजिता आत्मनो देहस्य गुणाः जननादिलक्षणा धर्माः, जीवस्य वा दुःखादिलक्षणाः, येन स तथा । यश्च कलयति जानाति सर्वमिति

---

[1] चोदितगुणानुमतेन—व्या. [2] चशब्दो सर्वं चेति भिन्नक्रमः । [3] त्वदधीनसत्ताकमिति स्यात् ।

[4] उक्तरीत्या ममेष्टत्वेऽपि स्वातन्त्र्याभावात् कथं फलं दास्यामीत्यतः स्वातन्त्र्यं वर्णयति—यस्मिन्निति । अत्र सर्वकारकाणां सप्रभेदानां प्रकाराणां च भगवदधीनत्वमुच्यते। परो ब्रह्मादिः । अपरः स्वर्णकारादिः । तथा च यः परः ब्रह्मादिः पृथक्स्वभावः भवता सञ्चोदितः यस्मिन् ब्रह्माण्डे यतः पाञ्चभौतिकपञ्चलक्षणोपादानात्, उपादानावशिष्टभागस्यापादानत्वम्, यर्हि सृष्टिकाले, कालदेशभेदेनाधिकरणं द्विविधम्, येन निमित्तभूतदृष्टादृष्टकारणेन यस्य जनस्य संबन्धि, शेषत्वं षष्ठ्यर्थः, यस्मै देवसमूहाय, यथा येन संस्थानविशेषादिप्रकारेण, यं भावं चतुर्दशलोकादिकं करोति उत्पादयति विकरोति विविधं करोति, यश्चापरः स्वर्णकारादिः । तत्राप्येवं द्रष्टव्यम् । तदखिलं भवतः स्वरूपं सर्वात्मना त्वदधीनमित्यर्थः । तात्पर्यवचनेन अधीनं स्वरूपमुच्यत इत्युक्तं भवति—व्या.

[5] हे अज त्वदन्यः कः अतितरेत्, अन्तर्णीतणिच्, अतितारयेत्—व्या. [6] अस्पष्टमिदं पदम् ।

[7] 'दशेन्द्रियप्राणमनोऽरम् । मूलमन (मूलं मन) एव संसारचक्रम्' इति तात्पर्यवचनम् । षोडशारमध्ये पतितस्यापि मनसः प्राधान्यात् तस्यैव चक्रत्वाभिधानम्—व्या.

चक्रे विसृष्टमजयेश्वर षोडशारे
निष्पीड्यमानमपकर्ष[1] विभो प्रपन्नम् ॥ २२ ॥
दृष्टा मया दिवि विभोऽखिलधिष्ण्यपाना-
मायुः श्रियो विभव इच्छति यान् जनोऽयम् ।
येऽस्मत्पितुः कुपितहासविजृम्भितभ्रू-
विस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३ ॥
तस्मादमूस्तनुभृतामहमाशिषो ज्ञः
आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात् ।
नेच्छामि ते विलुलिता उरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥ २४ ॥
कुत्राशिषः श्रुतिसुखा मृगतृष्णरूपाः
क्वेदं कलेवरमशेषरुजां विरोहम् ।
निर्विद्यते नतु जनो यदपीह विद्वान्
कामानलं मधुलवैः शमयन् दुरापैः ॥ २५ ॥

---

कालः । वशीकृता स्वसमवेता विसृज्यस्य सुरनरादिनानाविधस्य जगतो विसर्गशक्तिः विविधसृष्टिः यस्मिन् स तथा[2] । हे ईश्वर स त्वं षोडशारे संसारचक्रे लिङ्गशरीरे वा अजया विसृष्टम् उत्पन्नम्[3] । अत एव दुःखेन निष्पीड्यमानं तत्परिहाराय शरणं प्रपन्नं मां ततः अपकर्ष उत्तर । विभो समुद्धरण-समर्थ ॥ २२ ॥

त्वया कस्मात् स्वर्गाद्यैश्वर्यं नेष्यत इत्याशङ्क्य तस्य नश्वरत्वादित्याशयेनाह—**दृष्टा इति** । अखिलानां धिष्ण्यपानां इन्द्रादीनाम् । विभवो हिरण्यलक्षणोऽर्थः । अस्मत्पितुः हिरण्यकशिपोः कुपित-हासः दुर्हासः तेन विजृम्भितयोः स्फुटितलक्षणयोः भ्रुवोः विस्फूर्जितेन विकासविशेषेण लुलिता विना-शिताः । स तु हिरण्यकशिपुरपि ते त्वया निरस्तः ॥ २३ ॥

यस्मात् क्षणभङ्गुराः तस्मात् ज्ञः अनित्या इति जानन् । ऐन्द्रियं श्रोत्रादीन्द्रियभोगयोग्यम्, इन्द्रियस्य विद्यमानं वा । आविरिञ्चात् विरिञ्चपर्यन्तम् । निजभृत्यानां मुक्तानां पार्श्वम् ॥ २४ ॥

इतोऽपि संसारसुखं हेयमित्याह—**कुत्रेति** । श्रुतिं कर्णं सुखयन्तीति श्रुतिसुखाः । मृगतृष्ण-

---

[1] उपकर्ष त्वत्समीपं प्रकर्षय—स.
[2] अस्पष्टमिदं विग्रहप्रदर्शनम् । वशीकृता विसृज्यानां ब्रह्मादीनां विसर्ग-शक्तिः यस्य स इति सरलम् ।
[3] प्रक्षिप्तमिति यावत् ।

क्वाहं रजःप्रभव ईश तमोऽधिकेऽस्मिन्
जातः सुरेतरकुले क्व तवानुकम्पा ।
न ब्रह्मणो न तु भवस्य न वै रमाया
यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः[1] ॥ २६ ॥

नैषा परावरमतिर्भवतो ननु स्यात्
जन्तोर्यथाऽऽत्मसुहृदो जगतस्तथाऽपि ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूप उदयो न परावरत्वात् ॥ २७ ॥

---

रूपाः ऊष्मोदकसदृशाः । अशेषाणां रुजां रोगाणां विशेषेण रोहो यस्मात् तत् तथा । दुरापैर्मधुलवैः उदबिन्दुकल्पैः सुखलेशैः कामाग्निं शमयन् शान्तिं कर्तुमिच्छन् । यदपि पर्यायेण कलेवरं विषयसुखं चेत्युभयं नश्वरं विद्वानयं जनः इह उभयस्मिन्नपि न तु निर्विद्यते निर्वेदं नैव प्राप्नोतीत्यन्वयः[2] ॥२५॥

हरेर्भक्तवात्सल्यं प्रकटयन् प्रह्लादस्तत्वज्ञानविधुर इवायोग्यजनमोहायाह—**क्वाहमिति** । हे ईश्वर तमोगुणप्रचुरे रजोगुणोत्पत्तिहेतौ अस्मिन् सुरेतरकुले असुरकुले जातोऽहं क्व ? भक्तानुग्रहलक्षणा तवानुकम्पा क्व ? मिथो विरुद्धस्वभावत्वात् । किं चोद्यमत्रेति तत्राह—**न ब्रह्मण इति** । निरन्तर-सेवामेदुरत्वेनेतरस्मादधिकोदयोऽपीदानीं रमादीनां शिरसि नार्पितः[3] । मम शिरसि तव पद्मकरः पद्मोदर-प्रभावत्पाणिनिधानलक्षणः प्रसादोऽर्पित इति यत् तस्मात् चित्रं तव चरितमित्यर्थः । 'श्रीब्रह्मब्राह्मी-वीन्द्राहित्रिकतत्स्त्रीपुरुष्टुताः । तदन्ये च क्रमात् सर्वे सदा मुक्तौ सृतावपि । हरिभक्तौ च तज्ज्ञाने सुखे च नियमेन तु । परतः स्वतः कर्मतो वा न कथञ्चित् तदन्यथा' इति वचनादुक्त एवार्थ इति ॥ २६ ॥

त्वया सेवाधिक्यमेव फलाधिक्ये कारणं, न त्वाभिजात्यादिकमित्यभिप्रेत्याह—**नैषेति** । यथा जन्तोर्या परावरमतिः तथैषा भवतो न स्यान्ननु । कुतः ? आत्मसुहृदः । 'तदेतत् प्रेयः' इति श्रुतेः । लोके यद्यप्याभिजात्यादिकं परावरत्वं निमित्तम् । तथापि लोकविलक्षणमहिमत्वाद् भवतः प्रसादो जगतः

[1] पद्मकरप्रसादः—व्या.स.

[2] यदपि यद्यप्येष (देहोऽशेषरोगोत्पत्तिस्थानम्) तथापि कामानलं दुरापैरायाससाध्यैर्मधुलवैर्विषयलक्षणाज्य-बिन्दुभिः शमयन् भवानीति विद्वान् न निर्विद्यत इति योजना—व्या.

[3] 'रमादीनामिदानीं नार्पितः । रमादीनामधिकोदयोऽपि सेवाधिकत्वादेव । श्रीब्रह्म ........तदन्यथा इति ब्रह्म-तर्के इति तात्पर्यवचनानि । तत्र रमादीनामिदानीं नार्पित इतीयदेव वाक्यमेतत्पद्यसंबद्धमवशिष्टमुत्तरश्लोकसंबद्ध-मिति सत्यधर्मतीर्थाः । इदानीं रमादिशिरसि नार्पितो मम शिरस्यर्पितः, अहो मयि तवानुकम्पेति प्रह्लादस्याशयः। व्यासतत्वज्ञतीर्थास्तु विजयध्वजतीर्थानां सरण्या सर्वमप्येतत्तात्पर्यवाक्यजातमत्रैवोदाजहुः ।

एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वाऽऽत्मसात् सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥

मत्प्राणरक्षणमनन्त पितुर्वधं च
मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ।
खड्गं प्रगृह्य यदवोचदसद् विधित्सु-
स्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥

---

संसेवया । सेवानुगुणः फलाधिक्योदयः स्यात् । 'यावत्सेवा परे तत्त्वे तावत्सुखविशेषता' इति स्मृतेः । परावरत्वं च सेवानिमित्तम् । 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति वचनात्[1] ॥ २७ ॥

नन्वेवं सेवानुरूपफलोदये शास्त्रीये सिद्धे त्वं किं करोषीति तत्राह—**एवमिति** । फलोदयस्य सेवानुविधायित्वात् सोऽहं तव भृत्यसेवां कथं नु विसृजे मम हितरूपत्वात् इति । अतस्तदत्यागे कारणमाह—**जनमिति** । प्रभवाहिकूपे जन्माख्यसर्पविषकलिलसंसारगर्ते पतितम् । कामा विषयाः । तानभिकामयत इति कामाभिकामः तं जनमनु तस्य जनस्य प्रकर्षेण सङ्गो जन्मलक्षणस्तस्मात् प्रपतन्[2] । आत्मसात् कृत्वा आत्मीयेष्वेक इति बुद्धिं कृत्वा । सुरर्षिणा गृहीतः अनुगृहीतः यः सोऽहमिति यस्मात् तस्मादिति शेषः[3] ॥ २८ ॥

स्वभृत्यभाषितमृतं कर्तुं स्तम्भादभूदिति यत् सूचितं पूर्वत्र तदिदानीं स्पष्टमाह—**मत्प्राणेति** । मत्प्राणरक्षणं मत्पितुर्वधं च स्वभृत्यनारदऋषिवाक्यं च असद् विधित्सुः खड्गं प्रगृह्य हिरण्यकशिपुः यदि

---

[1] भक्तिरेव भगवत्प्रसादे निमित्तमिति गूढमभिसन्धाय देवविरुद्धकुले जाते मयि तवानुकम्पेत्येतदाश्चर्यमित्युक्तम् । अधुनाऽभिसन्धिमुद्घाटयति—नैतेति । जन्तोर्जनस्य परावरमतिः स्वकीयपरकीयजातिविषयिणी मतिः यथा प्रसादहेतुस्तथा जगत आत्मसुहृदो भवत एषा मतिर्न प्रसादहेतुः स्यान्नु ? नन्वेतन्मतेः प्रसादहेतुत्वाभावे किं निर्निमित्तः प्रसाद इत्यत उक्तम्—तथापीति । तथापि एतादृशमतेर्हेतुत्वाभावेऽपि जातिविवेकमन्तरा संसेवया सुरतरोरिव ते प्रसादोऽपि संसेवयैव । सोप्यनेकप्रकार इत्याह—सेवेति । उदयः सेवानुरूपो भक्त्यनुसारी, न तु परावरत्वं परावरत्वकारणक इति योजना । रमादीनामपि सेवाधिकत्वादेवेत्यादि तात्पर्यमत्राप्यनुसंधेयम्—व्या.

[2] अस्पष्टमिदम् । [3] केनानुगृहीतोऽसि येनेदृशीभक्तिस्तव जातेत्यत आह—एवमिति । हे भगवन् एवं कामानलमित्युक्तरीत्या प्रभवाहिकूपे प्रकृष्टभवलक्षणदुर्विषयाहियुक्तरूपे निपतितं कामाभिकामं विषयाभिलाषिणं जनमनुसृत्य प्रसङ्गात् तादृशजनसङ्गात् प्रपतन् योऽहं सुरर्षिणा आत्मसात् कृत्वा गृहीतोऽनुगृहीतः सोऽहं तव भृत्यसेवां कथं नु विसृज इति योजना—व्या.

एकस्त्वमेव जगदेतदमुष्य यत्[1] त्व-
-माद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनुप्रविष्टः ॥ ३० ॥

---

मदपर ईश्वरोऽस्ति, स त्वामवतु तस्य तव कं शिरो हरामीति यदवोचत् तच्च ऋतं विधातुं अयमवतारः[2] इति मन्य इत्यन्वयः[3] ॥ २९ ॥

भ्रूविजृम्भणविभ्रंशितेन्द्राद्यैश्वर्यस्य मत्पितुर्हननमस्माकं चित्रं चेदपि न तव चित्रम्, तस्य जगत्येकत्वात् । जगच्च त्वत्सृष्टं त्वत्प्रविष्टं त्वदधीनसत्ताकम् । अतः स्तम्भाविर्भावोऽपि युक्त इत्याह— एक इति । अयमर्थः । एतज्जगत् त्वमेव नान्यः । कुतः ? एकः प्रधानः । प्राधान्यं च कुतोऽवगम्यत इति तत्राह—अमुष्येति । अमुष्य जगत आद्यन्तयोः उत्पत्तेः पूर्वं विनाशादूर्ध्वं च, मध्यतः स्थितिकाले च त्वमेव अवस्यसि सन्निति निर्णीतोऽसि शास्त्र इति यस्मात् । ननु जगतः त्वद्विकारत्वेन तद्विवर्तत्वेन वा[4] त्वदवसानं[5] युक्तम् ? अत्राह—पृथगिति । भिन्नत्वेनेत्यर्थः । पुनः सृष्टिकाले निजमायया स्वसामर्थ्येन स्वाधीनया चित्प्रकृत्या च इदं गुणव्यतिकरं जगत् सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्भिन्नैः पदार्थैर्निमित्तैः नानेव भिन्न इव, न तु भिन्न इत्यवसितोऽसीति यत् तस्माच्च । 'प्रतिदृशमिव नैकधार्कमेकम्' इति स्वोक्तेः । 'इन्द्रो मायाभिः पुरुरूप ईयते' इति श्रुतेश्च । 'नेह नानाऽस्ति किञ्चन' इति त्यादि श्रुत्या नानात्वस्य निषिद्धत्वात् । 'तानेवानुविधावति' इत्यादिनाऽनर्थहेतुत्वाच्च भेददृष्टेः[6] ॥ ३० ॥

---

[1] स त्वमाद्यन्तयोरिति विजयध्वजपाठः स्यात् ?

[2] अयमवतार इत्यस्य स्थाने मत्प्राणरक्षणं मत्पितुर्वधं चेति वाक्यारम्भादाकृष्यान्वेतव्यः । ऋषिवाक्यमृतं विधातुं मत्प्राणरक्षणं मत्पितुर्वधं च मन्य इति ।

[3] भक्तरक्षणाय दुष्टशिक्षणाय भक्तवाक्यपरिपालनाय च त्वदवतार इति स्तौति—मदिति । हे अनन्त मत्प्राणलक्षणं भवान् सर्वत्र व्याप्तो भक्तं रक्षतीति नारदोक्तम् असद् विधित्सुर्मदपरो मत्तोऽन्यो यदीश्वरस्तर्हि त्वामवतु तव कं शिरो हरामीति खड्गं प्रगृह्य यदवचोदस्मत्पिता तस्य पितुर्वधं च सर्वत्र व्याप्त इति स्वभक्तर्षिवाक्यं ऋतं विधातुं कर्तुमवतीर्णं त्वां मन्य इति योजना—व्या.

[4] त्वद्विवर्तत्वेन वेति स्यात् ।

[5] त्वदवस्थानमिति स्यात् ।

[6] भेददर्शनस्यानर्थहेतुत्वाच्चेत्यर्थः । जगतो वैलक्षण्यं तत्स्रष्टृत्वं च तवैवेति स्तौति—एक इति । अनन्तेत्यनुवर्तते हे अनन्त त्वमेवैको मुख्योऽभिन्नश्च । एतज्जगदमुख्यं परस्परभिन्नं च । यथोऽमुष्य जगत आद्यन्तयोर्मध्यतश्च प्रागभावध्वंसकाले स्थितिकाले च यथाक्रमं पृथगवस्यसि अवतिष्ठसि। धातूनामनेकार्थत्वात्। गुणव्यतिकरं गुणवैषम्यं तदुपादानकं निजसामर्थ्येनेदं सृष्ट्वा तदनुप्रविश्य तैर्भिन्नैरधिष्ठानैस्त्वमपि नानेवावसितोऽसीति योजना । वस्तुतस्तु नानाधिष्ठानकस्त्वमेक एव—व्या.

त्वं वा इदं सदसदीश भवांस्ततोऽन्यो
माया यदात्मपरबुद्धिरियं ह्यपार्था ।
यद्यस्य जन्मनिधनं स्थितिरीक्षणं च
तद् वै तदेव खलु कालवदुष्टितर्वोः[1] ॥ ३१ ॥

---

हरेर्जगदन्यत्वस्य स्पष्टमप्रतीतेस्तदर्थं पूर्वपद्योक्तं विशदयति—त्वं वा इति । हे ईश (त्वं) इदं सदसत् चराचरलक्षणं जगत्त्रयम् । सत्ताया अपि त्वदधीनत्वादयं व्यपदेशः । न तादात्म्यात् । तत्वतस्तदात्मत्वं किं न स्यादिति तत्राह—भवानिति । ततो जगतो भवान् अन्योऽपि स्वतो भिन्नोऽपीत्यर्थः । तत्स्वातन्त्र्यवत् जगत्स्वातन्त्र्यमपि किं न स्यात्, उभयोर्भेदोऽपि दृढतरः स्यादिति तत्राह—मायेति । आत्मेत्युपलक्षणम् आत्मानात्मलक्षणस्य प्रपञ्चस्य परत्वबुद्धिः स्वातन्त्र्यज्ञानं यत् सेयं माया अविद्यमाना । कुत इति तत्राह—इयमिति । श्रीनारायणस्य तव स्वातन्त्र्यज्ञानं यथा पुरुषार्थसाधनं तथाऽन्यस्य स्वातन्त्र्यज्ञानम् अनर्थहेतुरिति । उभयं हिशब्देन सिद्धमिति दर्शयति । स्वतन्त्रजीवात्मकत्वात् स्वतन्त्रं जगदित्यतो वाऽऽह—मायेति । आत्मनो जीवस्य परत्वबुद्धिः। जीवस्य परमैक्ये परमात्मना यद् जन्मादिकं क्रियते तदनेनापि कर्तव्यम्। तदनुभवविरुद्धम् । अतो यद् यदधीनजन्मादिकं तद् वस्तु तदेवेति प्राधान्यविवक्षया अभेदोपदेशोपपत्तेरिति[2] प्रकारान्तरेण तद्गतिमाह—यद् यस्येति । अयमर्थः । यस्य जगतो जन्मादिकं यदधीनं तत् जगत् तदेवेत्युच्यत इति यत् तस्मात् जगत् त्वमेवेत्यर्थः[3]। अस्मिन्नर्थे दृष्टान्तमाह—खल्विति । उष्टितर्वोः वृक्षदाहवृक्षयोः कालवत् कालाधीनत्ववत् । एतदेवाचार्यैः सम्यग् विवृतम्—'यथा वृक्षश्च वृक्षदाहश्च दैवकालाधीनत्वात् दैवं कालश्चेत्युच्यते एवं त्वदधीनत्वात् सर्वस्य सर्वमित्युच्यते[4] स्वतस्तद्भिन्नोऽपि इति[5] । 'उष दाहे' इति धातुः । अत्र खलुशब्दः साक्षा-

(margin: द्व्य)

---

[1] तद् वै तदेव वसुकालवदुष्टितर्वोः—गो. [2] अभेदव्यपदेशोपपत्तेरिति ।

[3] यस्य जन्मनिधनं स्थितिरीक्षणं ज्ञानं च यद् यतः तदेव तत्सामानाधिकरण्यव्यपदेशभागेव खलु वै प्रसिद्धम् । उदाहरति—कालवदिति । इदं दैववदित्यस्योपलक्षणम् । तत्र कालाधीनत्वात् कालशब्दस्य प्रलयाग्नौ कालाग्निरिति व्यवहारस्तथा । यथा वा तरौ कल्पवृक्षादौ दैवाधीनत्वाद् दैवतरुः सुरतरुरित्यादि (व्यवहारः) तथेत्यर्थः—व्या.

[4] सर्वमित्युच्यसे—ह, छलारीपाठश्च ।

[5] इदमुक्तं भवति—वने फलिते वनदेवता फलिनीत्युच्यते । वृक्षे च पुष्पिते पुष्पितोऽयं वसन्त इत्युच्यते । यतः वृक्षस्य फलपुष्पसंपत्तिर्दैवकालाधीना । एवं वृक्षदाहेऽपि । तद्यथा—दाह इत्युपलक्षणम् । दाहच्छेदादिना वृक्षे नष्टे दैवान्नष्टः कालतो वा नष्ट इत्युच्यते । यतो दाहच्छेदादिरपि दैवकालाधीनः । एवं सर्वं भगवदधीनमिति सर्वं भगवानित्युच्यते । भगवान् वा सर्वमित्युच्यते । उभयथापि दर्शनात् । 'वासुदेवः सर्वम्' इति भगवान् सर्वमित्युच्यते । 'इदं हि विश्वं भगवान्' इति सर्वं भगवानित्युच्यते—गो.

न्यस्येदमात्मनि जगद् विलयाम्बुमध्ये
शेषासनो निजसुखानुभवो निरीहः ।
योगेन मीलितदृगात्मनि वीतनिद्र-
स्तुर्यस्थितो ननु तमोऽनुगुणांश्च युङ्क्ते[1] ॥ ३२ ॥

तस्यैव ते वपुरिदं निजकालशक्त्या
सञ्चोदितं प्रकृतिधर्मिण आत्मगूढम् ।
अम्भस्यनन्तशयनाद् विरमत्समाधे-
र्नाभेरभूत् स्वकणिकाद् वटवन्महाब्जम् ॥ ३३ ॥

---

दैक्यनिषेधे वर्तते । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति सूत्रात् अलमैक्यकथानिष्ठत्वमित्यर्थः । 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि' इत्यादि श्रुतौ स्वस्यान्यस्य परमात्मत्वोपदेशः प्रतीयते । अतः कथं भेदः कथ्यत इत्यतो वाऽऽह— **मायेति** । आत्मा अहं च परो अन्यश्च परश्च परमेश्वर एवेति या बुद्धिः इयम् अपार्था माया भ्रान्तिः । तस्मात् तदधीनत्वात् तदन्तर्यामित्वेन स्थितत्वाच्च 'सोऽहमस्मि' इत्युच्यते । न तु तद्रूपत्वात् । एतदप्याचार्यैरुक्तम् – 'अहं चान्यश्च परमेश्वर एवेति अपार्था भ्रान्तिः । तदधीनत्वात् स इत्युच्यते । न स्वरूपत्वादित्यर्थः' इति । ईक्षणं ज्ञानम् ॥ ३१ ॥

'स त्वमाद्यन्तयोः' इत्यत्रान्ते श्रीहरिरवशिष्यत इत्युक्तम् । तं प्रकारं दर्शयति— **न्यस्येति** । विलयाम्बुमध्ये इदं जगद् आत्मनि स्वोदरे न्यस्य शेषासनो[2] भूत्वा तुर्यस्थितो[3] जाग्रदाद्यवस्थाप्रवृत्ति-शून्यमूर्तौ स्थितः त्वं तमः प्रकृतिं गुणान् सत्वादींश्चात्मनि युङ्क्ते ननु । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः । क्षोभयामास' इत्यादौ प्रतीतप्रवृत्तिशून्योऽभूदित्यन्वयः । निजसुखेत्यादिना तुरीयस्वभावं दर्शयति — **वीतनिद्रः**[4] । अनिरस्तज्ञानः ॥ ३२ ॥

सृष्टेः प्रागित्युक्तं दर्शयति— **तस्येति** । तस्य तुरीयस्यास्य जगत्कारणस्य[5] च कश्चिद् विशेषो नास्तीति द्योतनाय एवकारः । आत्मनि देहे जठरे गूढं निलीनम् इदं जगत् जगदात्मकं महाब्जं

---

[1] तमोऽनु गुणान् नियुङ्क्षे—स. तमोऽनुगुणांश्च युङ्क्षे—व्या. तमो न गुणांश्च युङ्क्षे—गो.

[2] शिष्यत इति शेषं प्रलयकाले विद्यमानं वटपत्रमासनं यस्य सः—व्या.

[3] तुर्यः स्थितः—हृ.स. छलारीपाठश्च । तुर्ये स्थितः—व्या.

[4] निद्रेति सुषुप्तिः स्वप्नश्चोच्यते । तेन तत्कारणमज्ञानं लक्ष्यते । तथाचानिरस्तज्ञान इति फलितम् । तुरीयस्वभावं दर्शयतीति वाक्यानुरोधेन तुर्यः अवस्थात्रयप्रेरकः सन् स्थित इति योजनैव स्वरसेति भाति ।

[5] मूलरूपनारायणस्य जगत्कारणस्य पद्मनाभरूपस्य चेत्यर्थः ।

तत्सम्भवः कविरतोऽन्यदपश्यमान-
स्त्वां बीजमात्मनि ततं स बहिर्विचिन्वन् ।
नाविन्ददब्दशतमप्सु निमज्जमानो
जातेऽङ्कुरे कथमिहोपलमेत बीजम् ॥ ३४ ॥

---

यस्य तव नाभेरभूत् तदब्जं तस्यैव ते वपुः सन्निधानविषयत्वात् प्रतिमास्थानीयम्[1] । कीदृशं स्वरूपम् ? भूतसृष्टिकालशक्त्या संचोदितं सृष्ट्ये प्रेरितं कटाक्षीकृतम् । कीदृशस्य ? प्रकृतिधर्मिणः प्रकृतिप्रेरकधर्मवतः । प्रलयोदकेऽनन्ताख्यशयनादुत्थाय विरमन् समाप्तिं कुर्वन् समाधिः योगनिद्रालक्षणो यस्य स तथा तस्य । कथमिव ? वटवत् । वटलक्षणोऽङ्कुरो यथा स्वकर्णिकाद् उत्पत्स्यमानकणिकात् कणिकाख्यवटबीजादित्यर्थः । नन्वयं विषमो दृष्टान्तः । तथाहि—'कणिका नाम वटबीजविकारो हि वटाख्याङ्कुरः' । न चायं प्रकृते संभवति । 'निर्विकारोऽक्षरः शुद्धः' इति वचनात् । उच्यते । स्वकणिकात् इति लिङ्गव्यत्ययेन कश्चिद्विशेषो विज्ञायते । कोऽयमिति चेदुच्यते । कणिका नामादृश्या देवता सर्वस्थावरबीजानामभिमानिन्यपि वटाश्वत्थबीजयोर्विशेषतः सन्निहिता । अतः तत्तद्बीजेभ्यस्तदङ्कुरव्यञ्जनात् तत्प्रागपि तत्र स्थित्वा जातेत्युच्यते यथा तथा श्रीहरिरपि प्रकृत्यादिस्वामित्वेन तत्सन्निहितत्वेन च स्थितः, तत्कार्येष्वनुप्रविष्टत्वेन जात इत्युच्यते । 'आत्मन आकाशः संभूतः' इत्यादौ श्रुतत्वात् । तत्रापि वटबीजाद् वटांकुरस्य साक्षादुत्पत्तिः । वटवृक्षिणः चेतनस्याचेतनाभिमानादुत्पत्तिः उभयाभिमानिन्या देवताया अभिव्यञ्जकत्वेन अभिव्यक्तिः । तथा यथायोग्यं सत्वतमोमिश्ररजोगुणात् जगदात्मनः पद्मस्य साक्षादुद्भवः । पद्मिनो हिरण्यगर्भस्याभिमानजननम् । हरेः रूपान्तरेणाविर्भाव इत्यादिकमिति । 'स्थावराणां तु सर्वेषां देवता याऽभिमानिनी । विशेषाद् वटबीजे च साऽश्वत्थे च व्यवस्थिता । अदृश्या कणिका नाम, सा वृक्षान् व्यञ्जयत्यपि । अतो बीजमिति प्रोक्ता सा जातेत्यङ्कुरे स्थिता । एवं हरिः कारणेषु स्थितः कार्यजनेरनु । कार्याण्यनुप्रविष्टः सन् प्रथमं तत्र दृश्यते' इत्यनेनोक्तविशेषो विज्ञायत इति न काऽपि शङ्का कार्येति । तस्माद् दृष्टान्तदार्ष्टान्तिकयोरुपपत्तिरस्तीति युक्त एव दृष्टान्तः ॥ ३३ ॥

तत्र विरिञ्चस्य लोकपद्मलक्षणदेहाभिमानोत्पत्तिपूर्वकं हरेर्वटबीजाभिमानिदेवतावददृश्यत्वं प्रकटयन् तस्य मीमांसामाह—**तत्सम्भव इति** । पद्मस्य प्रकृत्यात्मकत्वेन तस्मात् पद्मात् सम्भवो जननं यस्य स तथा । लोकात्मकत्वेन तस्मिन् देहस्थानीये अभिमानसम्भवो यस्य स तथा । उभयोरप्यत्र विवक्षित-

---

[1] जगदात्मकमब्जमपि भगवद्वशत्वात् भगवत्सान्निध्याच्च तद्वपुरिति तात्पर्यम् ।

स त्वात्मयोनिरतिविस्मित आश्रितोऽब्जं
कालेन तीव्रतपसा परिशुद्धभावः ।
त्वामात्मनीश भुवि गन्धमिवातिसूक्ष्मं
भूतेन्द्रियाशयमये विततं ददर्श ॥ ३५ ॥
एवं सहस्रवदनाङ्घ्रिशिरःकरोरु-
नासास्यकर्णनयनाभरणायुधाढ्यम् ।

---

त्वात् । अतः अब्जाद् अन्यद् वस्तु न पश्यन् अप्सु निमज्जमानो निमज्य मूलं विचिन्वत् लोके न बीजादङ्कुरे जाते नष्टं बीजमिव पृथिव्यां कथमुपलभेत पुरुष इति तच्चिन्तां दर्शयन्नेवंविधः कविः ब्रह्मा आत्मनि स्वात्मनि अब्जान्तः तस्माद् बहिश्च विततं व्यञ्जकत्वाद् बीजदेवतावद् बीजसंज्ञं त्वां नाविन्दत् नोपलब्धवानित्यन्वयः[1] ॥ ३४ ॥

आत्मा परमात्मा योनिः कारणं यस्य स तथा । तुशब्देनैकस्य हरेर्बहुधा जन्मास्तीति विशेषं दर्शयति । स एव ब्रह्मा अब्दशतसंज्ञितेन कालेन विचिन्त्य विविधपृथिव्याद्याधाराणामनुत्पन्नत्वाद् अस्य व्या केनचिदाधारेण भवितव्यम्, लौकिके बीजनाशवत्[2] नाशायोगात्, सन्नपि न दृश्यते, कुतूहलमेतदिति अतिविस्मितः अब्जमाश्रितः तप इति द्व्यक्षरं श्रुतवान् । 'तपसाऽहं द्रष्टुं शक्तः' इत्यनेनोक्तमभिजानन् तीव्रेण तपसा परिशुद्धान्तःकरणो भूतेन्द्रियाशये जगति विततं त्वाम् आत्मनि स्वस्मिन् स्थितं ददर्शेत्यन्वयः । कथमिव ? भुवि व्याप्तमतिसूक्ष्मं गन्धाख्यदेवतास्वरूपं यथा पश्यति योगी तथेत्यर्थः । 'गन्धाख्यदेवता यद्वत् पृथिव्यां व्याप्य तिष्ठति । एवं व्याप्तं जगद् विष्णुं[3] ब्रह्माऽऽत्मस्थं ददर्श ह' इति वाक्याद् गन्धशब्देन देवताकथनं युक्तमिति भावः ॥ ३५ ॥

यथा सूक्ष्मरूपं दृष्ट्वा मुमुदे तथा विराड्रूपमपि तयोरीषदपि विशेषाभावादित्याह—**एवमिति**[4]। अनेन ब्रह्माण्डशरीरी ब्रह्मा 'पातालमेतस्य हि पादमूलम्' इत्याद्युक्तं यद् रूपमपश्यत् तदेव पद्मज-

---

[1] पूर्वश्लोके पद्मोत्पत्तिमुक्त्वाऽधुना ब्रह्मणः पद्मादुद्भवं पद्मोपादानगतरूपस्य पद्मादन्यत्रादर्शनं चाह—तदिति । तत्संभवः पद्मसंभवः कविः सर्वज्ञः सः प्रसिद्धो हिरण्यगर्भः अतः पद्माद् अन्यद् वस्त्वपश्यन् पद्माद् बहिर्विचिन्वन् गवेषमाणो नाविन्दत् । कुत इत्यत आह—जात इति । अङ्कुरे जाते तत्रैव विद्यमानं बीजगतं रूपम् इह ततो बहिः कथमुपलमेतेति योजना । अत्र पद्मोपादानगतस्य कर्णिकाशब्दवाच्यस्यादृश्यस्य योगिगम्यस्य कार्ये जाते तद्गतत्वेनान्यत्राभावाद् अन्यत्रादर्शनम्। पद्मगतत्वेनैव दर्शनं च ग्राह्यम्। बहिर्गवेषणं च लोकविडम्बनाय भगवत्प्रीत्यर्थमेव वा । अन्यथा कविरित्युक्तसर्वज्ञत्वविरोधात् । उपादानाद्यनन्तर्गतपद्मनाभदर्शनं तु तपसाऽस्त्येव। तृतीयस्कन्धे तथैवोक्तेरिति मन्तव्यम्—व्या. [2] लौकिकबीजनाशवदिति स्यात् ।
[3] जगद् व्याप्य तिष्ठन्तं विष्णुमित्यर्थः—व्या. [4] न केवलं पद्मान्तर्गतसूक्ष्मरूपं, बहिः पद्मनाभरूपं(च) दृष्टवान् । किन्तु पातालमेतस्य हीत्यादिनोक्तं विराड्रूपं (च) दृष्ट्वा मुदमापेत्याह—एवमिति—व्या.

मायामयं सदुपलक्षणसन्निवेशं
दृष्ट्वा महापुरुषमाप मुदं विरिञ्चः ॥ ३६ ॥

तस्मै भवान् हयशिरस्तनुवं च बिभ्रद्
वेदद्रुहावतिबलौ मधुकैटभाख्यौ ।
हत्वाऽनयत् श्रुतिगणांश्च रजस्तमश्च
सत्वं तव प्रियतमां तनुमामनन्ति ॥ ३७ ॥

इत्थं नृतिर्यगृषिदेवझषावतारै-
र्लोकान् विभावयसि हंसि जगत्प्रतीपान् ।
धर्मं महापुरुष पासि युगानुवृत्तं
छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥ ३८ ॥

नैतन्मनस्तव कथासु विकुण्ठनाथ
सम्प्रीयते दुरितदुष्टमसाधु तीव्रम् ।

---

मपीति ज्ञातव्यम् । आत्मयोनिरिति विशेषणात् । मायामयं ज्ञानरूपम् । अनिर्वाच्याऽविद्या माया नामेति किं न स्यादित्यत्राह — सदिति । आनन्दादिलक्षणसमुदायरूपम् । 'अथ कस्मादुच्यते सदिति सन्तो ह्यस्मिन्नानन्द ओजो बलम्' इति स्पष्टश्रुतेः । 'सन्निवेशश्च यः स्तोमः समुदायो गणः स्मृतः' इत्यभिधानम्[1] । आनन्दादिलक्षणानां सन्निवेशो यस्मिन् स तथा तम् । गुणगुणिनोरभेदात् स्वरूपत्वं सिध्यति । 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेः । लक्षणत्वज्ञाप्नायादिशब्देन ज्ञानग्रहणम्[2] ॥ ३६ ॥

रजस्तमःस्वभावौ (स्वभवौ) अतिबलौ वेदद्रुहौ मधुकैटभाख्यौ हत्वा श्रुतिगणाननयत् । आनीयास्मै विरिञ्चायावोचत्, इति शेषेणान्वयः । अनेनैतत् सिद्धमभूदित्याह — सत्वमिति । चतुष्पद्धर्मं पासि । यस्त्वं कलौ छन्नोऽभव इति यस्मात् तस्मात् स त्वं त्रियुग इति ख्यातः[3] ॥ ३७-३८ ॥

एवं हरेर्भक्तवात्सल्यं विज्ञाप्य स्वाशक्तिं विज्ञापयति — नैतदिति । यदेतन्मनः तव कथासु न सम्प्रीयते तस्मिन् मनसि तव गतिं कथं विमृशामीत्यन्वयः । ईषणम्, वित्तादीनामिति शेषः ॥ ३९ ॥

---

[1] इदमभिधानं सत्यधर्मतीर्था व्यासतत्वज्ञतीर्था अप्युदाजहुः । सन्निवेशादिशब्दानां पर्यायत्वमास्थेयम् । सन्निवेशः स्तोमः, समुदायो गण इति व्याख्याने तात्पर्यविरोधः स्यात् ।

[2] सदुपलक्षणसन्निवेशम् आनन्दादिलक्षणसमुदायरूपमिति तात्पर्यम् । तत्रत्यादिपदार्थकथनमेतत् ।

[3] भगवदवताराणां लोकविभावनधर्मपरिपालनदुष्टहननादिकमेव प्रयोजनम् । अतो दैत्यमोहनाय (कलौ) बुद्धावतारेऽपि न दोष इति मन्तव्यम् — व्या.

कामातुरं हर्षशोकभयेषणार्तं
तस्मिन् कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥
जिह्वैकतोऽच्युत विकर्षति मा वितृप्ता
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्ति-
र्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ ४० ॥
एवं स्वकर्मपतितं भववैतरण्या-
मन्योन्यजन्ममरणाशनिभीतभीतम् ।
पश्यन् जनं स्वपरविग्रहवैरमैत्रं
हन्तेति पारमतिपीपृहि मूढसत्त्वम्[1] ॥ ४१ ॥
कोऽन्वत्र तेऽखिलगुरो भगवन् प्रयास
उत्तारणेऽस्य भवसम्भवलोपहेतोः ।
मूढेषु वै महदनुग्रह आर्तबन्धो
किं तेन ते प्रियजनाननुसेवमानः ॥ ४२ ॥

---

मनःसमाधानाभावादन्येन्द्रियाण्यपि मत्पुरुषार्थविरुद्धानीत्याह—**जिह्वेति**। स्पर्धाभाषणशीलत्वात् जिह्वा। दुःसङ्गेन पुण्यश्लथनशीलत्वात् शिश्नः। 'त्वच सम्पर्के' इति धातोः दुःसम्पर्कशीलत्वात् त्वक्। उदात् ककुदं रमयतीत्युदरम्[2]। कर्मशक्तिरित्यनेन कर्मेन्द्रियाणि वागादीनि लक्षयति। गेहपतिं देहस्वामिनम्। अन्यत्र गृहपतिम् ॥ ४० ॥

स्वैः परैश्च सह विग्रहलक्षणं वैरं विरुद्धाचरणं मैत्रं च यस्य तथा तं जनं पश्यन्। अतस्तमसो भवस्य[3] पारमतिपीपृहि अतिपारं गमय। मूढसत्त्वं[4] मूढप्राणिनम् असुरजातित्वात्। तिर्यग्जातित्वात् तामसमिव स्थितं गजेन्द्रं पारं नीत्वा यथाऽपालयः तथा पारं च प्रापय्य मां पालयेति वा[5] ॥ ४१ ॥

मम संसारपारनेतृत्वं तव दुःशकं नेत्याह—**क इति**। हे अत्र अन्यपातृरहित भगवन् मम संसारोत्तारणे ते तव को नु प्रयासः ? न कोऽपि। अत्र जीवराशौ वा। कुतो न प्रयास इति तत्राह—**अस्येति**। अस्य जगतो भवो जन्म, सम्भवः स्थापनेन सम्भावनम्, लोपः संहारः, एषां हेतोः

---

[1] हन्तेति पारचर पीपृहि मूढमय इत्यपि स पाठः। [2] उदात् उदकात्। उपलक्षणमिदम्। अन्नादेरपि। बुभुक्षामुत्पाद्य जिह्वां रमयतीति। [3] इमानि पदानि न मूलारूढानि। टीकाकृत्सम्मतं पाठान्तरं वर्तेत। [4] मूढसत्त्वं पारगमनोपायाज्ञं प्राणिनम्—व्या. [5] मां च पारं प्रापय्य पालयेत्यर्थः।

नैवोद्विजे भवदुरत्ययवैतरण्या-
स्त्वत्तीर्थगायनमहामृतमत्तचित्तः ।
शोचे नु ते विमुखचेतस इन्द्रियार्थ-
मायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥

प्रायेण देवमुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजनेन परार्थनिष्ठाः[1] ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥ ४४ ॥

---

कारणस्य । अस्य जगत उत्तारणे तव प्रयासो नास्ति । ममोत्तारणे को नु इति वा । कुत इति तत्राह—**भवेति** । भवस्य संसारस्य सम्भव उत्पत्तिः । तस्य नाशहेतोस्तव । किं प्रकृते इत्याशङ्क्यासद्वात्सल्यमन्तरेण न किमपि प्रयोजनं तवेत्याह—**मूढेष्विति** । गजेन्द्रकल्पार्तजनबन्धो मूढेष्वसाधु यो महदनुग्रहः तेन तव किं प्रयोजनम् ? न किमपीत्यर्थः । ननु प्रयोजनाभावे किमर्थं तथाकरणमित्याशङ्क्य स्वभाव इत्याशयेनाह—**प्रियेति** । प्रियजनाननुसेवमानः, त्वमिति यत् स तव स्वभाव इति शेषः ॥ ४२ ॥

संसारभीरूणां संसारवैतरण्युत्तरणोपायः क इत्याशङ्क्य निरन्तरवेदान्तशास्त्रश्रवणमननादिर्येषामस्ति तेषां तद्भयं नास्ति । अन्यथा न कदापि तत उत्तरणमित्याशयेनाह—**नैवेति**[2] । त्वत्तीर्थं त्वद्विषयं वेदान्तशास्त्रम् । तस्य गायनं श्रुत्वा मत्वा व्याख्यानं व्याख्यापनं च । तदेव महामृतं यत् तेन मत्तं हृष्टं विवशं वा चित्तं यस्य स तथा । एवंविधोऽहं संसारवैतरण्या नैवोद्विजे न बिभेमि । एवशब्देन त्वत्तीर्थसेवाभावे संसारकदनाद् बिभेमि तत्सम्भवे नेत्ययोगव्यवच्छेदः क्रियते । अनेनासङ्गतं प्रह्लादस्तवनमित्येतदपि परिहृतम् । 'सत्स्वन्यत्र ततो दया' इति वचनादिदं च भक्तिलक्षणमिति[3] प्रकटयन्नाह—**शोच इति** । ते त्वत्तः । इन्द्रियार्थेभ्यो विषयेभ्यो मायासुखं प्राकृतमस्वरूपं सुखं यत् तदर्थं भरं कुटुम्बभारम् ॥ ४३ ॥

स्वेतरेषु क्रियमाणा कृपा स्वाश्रितेष्वेव कर्तव्या देवादिभिः क्रियमाणत्वादित्यभिप्रेत्याह—**प्रायेणेति** । देवमुनयश्च विजनेन एकान्तस्थलेन साधनेन सहिताः काष्ठमौनादिव्रतं चरन्ति । कीदृशाः ? स्वकीयानां जनानां विमुक्तिः स्यादिति स्वविमुक्तिकामाः । स महतां स्वभाव इत्याह—**परेति** । पर-

---

[1] विजने न परार्थनिष्ठाः—व्या. स. [2] एवं माहात्म्यं ज्ञात्वा स्तुवतस्तव निश्चिते उत्तारणे कुतः संसारादुद्वेग इत्यतो न मदर्थं प्रार्थये किन्तु संसारलोलुपयोग्यजनायेत्याह—नैवेति—व्या. [3] भक्तलक्षणमिति स्यात् ।

**यन्मैथुनादि गृहमेधिसुखं हि तुच्छं**
**कण्डूयनेन करयोरिव दुःखदुःखम् ।**
**तृप्यन्ति देहकृपणा बहुदुःखभाजः**
**कण्डूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥**

---

प्रयोजनतात्पर्योपेताः । 'देवेषु तात्त्विकैर्विशेषतः । मुनिषु कैश्चिदेव' इति विशेषप्रकाशनाय **प्रायेणेति** । तदुक्तम्—'आश्रितेषु कृपा कार्या विशेषात् तात्त्विकैः सुरैः । मुनिभिश्च तथा कैश्चित् कैश्चित् कार्याऽखिलेष्वपि । तथाऽपि तात्त्विकसुरकृपाविषयतां गताः । ये त एव विमुच्यन्ते तदन्ये न कथञ्चन' इति । यतो देवादयोऽप्याश्रितेषु कृपां कुर्वन्ति अतोऽहमप्याश्रितानेतान् कृपणान् कृपाविषयान् विहाय एको न विमुमुक्षे । त्वमेको मत्प्रसादेन मुक्तो भव, अन्येऽन्येन वर्त्मना मुक्ताः सन्त्विति तत्राह—**नान्यमिति** । स्वकर्मणा नानायोनिषु भ्रमतो मामाश्रितजनस्यानुकूलं त्वदन्यं शरणं नानुपश्य इत्यन्वयः[1] ॥ ४४ ॥

सुखानुभवार्थं हि मोक्षाकाङ्क्षा । तत् शब्दादिविषयेभ्योऽपि स्यात् । अतोऽजागलस्तनायितमोक्षसुखाय को वा प्रेक्षावान् महाप्रयत्नं कुर्यात्, उन्मत्तमन्तरेणेति तत्राह—**यन्मैथुनादीति** । **मैथुनादि** गृहस्थसुखं यत् तल्लब्ध्वा । देहकृपणाः देहमात्रपोषणपरायणाः तृप्यन्ति । नान्ये प्रेक्षावन्त इति शेषः । तदपि न सुखमित्याह—**बहुदुःखेति** । तत्र बुद्धिमतैवं कार्यमित्याह—**कण्डूतिवदिति** । मनसिजं कामम् ॥ ४५ ॥

---

[1] अत्र देवमुनयः स्वविमुक्तिकामा विजने तपआदिकं चरन्ति न परार्थनिष्ठा इत्यनेन देवादीनां स्वाश्रितेषु प्रसादो नेति न मन्तव्यम् । देवानां प्रसादाभावे इन्द्रियप्रेरणाभावेन साधनानुष्ठानायोगात् । मुनीनां प्रसादाभावे तद्दृष्टवेदानां तत्कृतकल्पसूत्राणां च प्रचाराभावेन वैदिककर्मानुष्ठानानुपपत्तेः। किन्तु तत्वाद्यनियामकानां साधारणदेवानां वेदाद्यद्रष्टॄणां मुनीनां च विशेषतः स्वेतरयोग्यजनमोक्षे न निर्भरोऽस्तीति । अत एव प्रायेणेत्युक्तम् । तदर्थं तात्पर्ये प्रमाणमुदाहृतम् । तथा चेन्द्रियप्रेरणाय स्वोपजीवकेष्ववश्यं तात्विकैर्विशेषाद् दया कार्येति भगवत आज्ञा । तथा च कैश्चित् प्रबलैर्मुनिभिः स्वदृष्टवेदादिना आश्रितेषु स्वोपजीवकेषु विशेषतो दया कार्येति भगवतोऽनुशासनम् । कैश्चित् तद्भिन्नैः साधारणैरखिलेष्वपि । अपिरभिव्याप्तौ । साधारण्येन सर्वेषु गोब्राह्मणेभ्यः शुभं भवतु, ब्राह्मणाः सन्तु निर्भया इत्यादिरूपेणैव साधारणदया । न च देवादीनामपि साधारण्येन दयाऽस्तीति तयैवालमिति मन्तव्यम् । यद्यप्यस्ति तथापि विशेषतस्तात्विकसुरकृपाविषयतां गता एव विमुच्यन्ते नान्यथेति सा आवश्यकी । प्रकृते तु दैत्यबालानां स्वाश्रितत्वात् तेषु स्वस्य विशेषतो दयाऽस्तीति तदुत्तारणप्रार्थना युक्तेति भावः—व्या.

मौनव्रतश्रुततपोऽध्ययनस्वधर्म-
व्याख्यारहोजपसमाधय आपवर्ग्याः ।
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां
वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् ॥ ४६ ॥

रूपे इमे सदसती तव वेददृष्टे
बीजाङ्कुराविव न चान्यदरूपकस्य ।
युक्ताः समक्षमुभयत्र विचिन्वते त्वां
योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥

---

मुमुक्षुभिः प्रथमत इन्द्रियजय एव समर्थनीयः । अन्यथा मुक्तिसाधनानामपि मौनादीनां लोके जीवनोपायमात्रत्वं भवतीत्याह—**मौनेति** । आपवर्ग्या मुक्तिहेतवः प्रायः, सम्यग् भक्त्याऽनुष्ठिता इति शेषः । हे पुरुष परं न चेत् । त एवाजितेन्द्रियाणां पुंसां वार्ताः तत्कालजीवनमात्रोपायाः भवन्त्युत अपि सम्भावनामात्रं, न तु मुख्यत इत्यर्थः । लोकमोहनार्थं मौनादिकमनुतिष्ठतां दाम्भिकानां तदपि न सेत्स्यतीत्याह—**नवेति** । अत्र जीवलोके । वा यथा अजितेन्द्रियाणां जीवनमात्रोपाया न तथा दाम्भिकानां भवन्तीति । 'वा विकल्पोपमानयोः' इत्यभिधानम् । न वा भवन्तीत्येकवाक्यं वा ॥ ४६ ॥

मौनादीनां क्लेशसाध्यत्वेनासर्वाधिकारिकत्वात् सर्वाधिकारिकोपासनाविषयं निरूपयति—**रूपे** इमे सदसती कार्यकारणे तव रूपे । त्वद्वशत्वात् त्वत्सन्निधानयोग्ये । अत्र प्रमाणमाह—**वेदेति** । 'द्वे वाव ब्रह्मणो रूपे' इत्यादौ । कार्यकारणत्वं किं विकारभावेन, निमित्तनैमित्तिकभावेन वेत्याशङ्क्य यथायोग्यमित्यूहनीयमित्यत्र दृष्टान्तमाह—**बीजेति** । व्याख्यातमेतत् । 'विज्ञानमानन्दं ब्रह्म' इतिवत् वेददृष्टे चेत् किं साक्षाद् रूपे ? नेत्याह—**न चेति** । अन्यद् विलक्षणम् । ज्ञानानन्दादिलक्षणं नैव । कुतः ? अत्राह—**अरूपकस्येति** । प्राकृतरूपाभावादित्यर्थः । महतां प्रत्यक्षं चात्र प्रमाणमित्याह—**युक्ता इति** । भक्तियोगेन उभयत्र रूपद्वये युक्ताः, उपासनालक्षणध्यानेनेति शेषः । युक्ताः योगिनः उभयत्र सन्निहितं त्वां पश्यन्तीति वा । दर्शनप्रकारमाह—**वह्निमिति** । योगेन मथनाद्युपायेन । अन्ययोगं निवारयति—**नान्यत इति** । भक्तियोगादन्यतः अन्येनेति । साक्षात् स्वरूपादन्यत् प्राकृतं रूपं नैव । 'अरूपमक्षरं ब्रह्म' इति श्रुतेः । अतो न साक्षाद् रूपे इति वा योजना । '[1]साक्षात् स्वरूपापेक्षया स्वरूपादन्यद् रूपं न' इत्याचार्यविवरणमत्र प्रमाणम् ॥ ४७ ॥

---

[1] एतदादौ 'कार्यकारणे रूपे तद्वशत्वापेक्षया' इति तात्पर्यवचनम् ।

त्वं वायुरग्निरवनिर्वियदम्बुमात्राः
प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत् त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥

नैते गुणा न गुणिनो महदादयो ये
सर्वे मनःप्रभृतयः सहदेवमर्त्याः ।
आद्यन्तवन्त उरुगाय विदन्ति हि त्वा-
मेवं विमृश्य सुधियो विरमन्ति शब्दात् ॥ ४९ ॥

---

के ते कार्यकारणे इत्यतस्तन्नामनिर्देशः तत्सत्ताप्रदत्वेन तद्रूपत्वाभिप्राय इत्याशयेनाह—त्वमिति । चिदनुग्रहः चेतनः । तन्मनसा वचसा निरुक्तम् । न त्वदन्यत् त्वां विना प्रवृत्तिमन्नास्ति । सगुणः संसारी । शौक्ल्यादिगुणयुक्तो वा । विगुणो मुक्तः । उत्पन्नानन्तरक्षणविशिष्टपदार्थो वा[1] ॥४८॥

पृथिव्यादिमहत्तत्त्वान्तं पदार्थजातं कार्यकारणात्मना द्वित्वेन क्रोडीकृतम् । भगवद्रूपं ततो भिन्नमित्युक्तम् । इदानीं तदवस्थितपरमात्मानं तदभिमानिनो देवा अपि साकल्येन न जानन्तीत्येवंविधानन्तमाहात्म्याम्बुराशिरिति निश्चित्य तमुपासते सन्त इत्याह—नेति । गुणाः सत्वादिगुणाभिमानिनः । गुणिनो गुणविकाराः सहदेवमर्त्या इत्यत्र देवशब्देन पृथग्विग्रहवन्त इन्द्रादयो गृह्यन्ते । सुधियो निश्चितशास्त्रार्थाः । शब्दात् वेदादिशब्दराशिप्रमाणात् एते आद्यन्तवन्तस्त्वां न विदन्तीत्येवं विमृश्य विचार्य उपास्य तत्प्रसादेन संदृश्य विरमन्ति, संसारादिति शेषः । 'यद् वाचाऽनभ्युदितम्' इत्यादि श्रुतेः 'शब्दाद् विरमन्ति' इत्यत्र शब्दत्यागो नार्थः[2] । किन्तु वेदेन निर्णीततत्वस्य तत्वे निरन्तरस्यन्दमानबुद्धिजलराशेः पुंसो हरिगुणानुस्मरणायासो नास्तीति वा[3] ॥ ४९ ॥

---

[1] अस्पष्टमिदम् । [2] संसारादिति शेषमकृत्वा यद्वाचेत्यादिश्रुतिबलात् शब्दाद् विरमन्तीति सन्निधिप्रयुक्तान्वय स्वीकारेऽपि शब्दत्यागो नार्थ इत्याशयः ।

[3] युक्ताः समक्षमुभयत्र विचक्षते त्वामिति कार्यकारणात्मकप्रपञ्चलक्षणप्रतिमायामुपास्य प्रत्यक्षीकुर्वन्तीत्युक्तम् । तच्चोपासनं न साकल्येन । तदभिमानिदेवानामपि साकल्येन ज्ञानाभावेनेतरेषां कैमुत्यन्यायेन साकल्येनोपासनाभावात् । किन्तु यथाशक्त्युपास्य साक्षात्कृत्य संसाराद् विरमन्तीत्याह—नैते इति । हे उरुगाय विष्णो ये गुणा गुणत्रयाभिमानिनः, गुणिनो गुणविकारमहदाद्यभिमानिनः, मनःप्रभृतयस्तदभिमानिनः, सहदेवमर्त्या रूपान्तरेण विद्यमानैर्देवैर्मर्त्यैर्ऋषिभिश्च सहिताः, आद्यन्तवन्तः सृष्ट्यादौ प्रलये चोत्पत्तिनाशवन्तः । बहुकालीना इति यावत् । एते सर्वे सुधियस्त्वां साकल्येन न विदन्ति । एवं विमृश्य निश्चित्य अन्येऽधिकारिणः शब्दाद् वेदात् सर्ववेदान्तप्रत्ययन्यायेन यथायोग्यं श्रुत्वा मत्वा ध्यात्वा साक्षात्कृत्य च संसाराद् विरमन्ति । एवं निश्चिनोमीति योजना—व्या.

तत्वे मनो दर्शने दृगपि स्तुतौ च
वाक् कर्मणि ह्यपि करौ श्रवणं कथायाम् ।
संसेवया त्वयि विनेति षडङ्गया किं
भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥

नारद उवाच —

एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ।
प्रह्लादं प्रणतं प्रीतो गतमन्युरभाषत ॥ ५१ ॥

श्रीभगवानुवाच —

प्रह्लाद भद्र भद्रं ते प्रीतोऽहं तेऽसुरोत्तम ।
वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥

मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे ।
दृष्ट्वा मां न पुनर्जन्तुरात्मानं तप्तुमर्हति ॥ ५३ ॥

---

श्रीनारायणप्रसाद एव पुरुषार्थसाधनमित्युक्तम् । तस्य भक्तिज्ञाने । तयोश्च षडङ्गोपासनासाध्यं ध्यानं विना नान्यत् । अन्यथा न स्यादित्याशयेनाह–**तत्व इति**[1] । हिशब्देन अन्यथा जीवन् शव इत्याह । अपिशब्दात् पादौ तव क्षेत्रानुगमनेऽभियोज्याविति ग्राह्यम् । (इति) एवं षडङ्गया सेवया विना जनो मुमुक्षुः परमहंसानां गतौ आश्रयभूते त्वयि भक्तिं ज्ञानं च लभेत किम् ? साधनान्तराभावान्नाप्नोतीत्यन्वयः । भक्तिज्ञानयोर्हेतुहेतुमद्भावादेकग्रहणेन द्वयोर्ग्रहणं युज्यत इति भावः । 'परा पूर्वेषां सख्या वृणक्ति' इति श्रुतेः ॥ ५० ॥

हरेरसुरेषु प्रद्वेषाशयात् प्रह्लादस्यापि तज्जातित्वेन तत्स्तुत्या कोपोपशमः स्यात् किम् ? प्रत्युताक्षेपाकरत्वेनाग्नौ शुष्केन्धनप्रक्षेपणवत् तज्ज्वलनाय स्यादिति तत्राह—**एतावदिति** । योग्यतानुकूल्येन भक्त्या भक्तेन इति विशेषणद्वयेन शङ्का निरस्तेति ज्ञातव्यम् । (असुर)जातित्वमप्रयोजकम् । (प्रयोजिका) भक्तिरेवेति सूचनेन देवदत्तवदुन्मत्तो न भवति भगवानिति सिद्धम् ॥ ५१ ॥

मन्युशान्तेः किं गमकमिति तत्राह—**प्रह्लादेति** । वरदानसामर्थ्ये हेतुमाह—**कामपूर इति** । नृणाम्, भक्तानामिति शेषः ॥ ५२ ॥

---

[1] सुधियः संसाराद् विरमन्तीत्युक्तम् । सुष्ठु ध्यानं च भक्तिज्ञाने विना न भवति । भक्तिज्ञाने च षडङ्गसेवया विना न भवत इति प्रदर्शयति–तत्व इति—व्या.

प्रीणन्ति ह्यथ मां धीराः सर्वभावेन माधवम् ।
श्रेयस्कामा महाभागाः सर्वेषामाशिषां पतिम् ॥ ५४ ॥

नारद उवाच —

एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ।
एकान्तित्वाद् भगवति नैच्छत् तानसुरोत्तमः ॥ ५५ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे नवमोऽध्यायः ।

॥ अथ दशमोऽध्यायः ॥

नारद उवाच —

भक्तियोगस्य तत् सर्वमन्तरायतयाऽर्भकः ।
मन्यमानो हृषीकेशं स्मयमान उवाच ह[1] ॥ १ ॥

---

मत्प्रसाद एव दर्शने कारणमित्याह—मामिति । मामप्रीणतः अप्रीणयतः[2] । मद्दर्शनफलं च पान्थदर्शनवन्नेत्याह—हृष्टेति । यतो न तप्तालभ्या[3] तस्मात् धीरा माधवं मां प्रीणन्ति प्रीणयन्ति । केन ? सर्वभावेन पूर्णभक्त्या । माधव इत्यस्यार्थो मङ्गलदेवतापतिरित्यभिप्रायेणाह—सर्वेषामिति । सर्वेषामविशेषेण या या अभिलषिता आशिषः तासां तासामाशिषां पतिं पातृत्वेन दातारमित्यर्थः ॥ ५३–५४ ॥

प्रह्लादोऽपि सामान्यभक्तो न भवति । किन्तु भक्तोत्तम इति प्रकटनाय भगवता विप्रलुब्धोऽपि तान् वरान् नैच्छदित्याह—एवमिति । एकान्तित्वात् नैसर्गिकभक्तत्वात् ॥ ५५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य नवमोऽध्यायः ।

॥ अथ दशमोऽध्यायः ॥

अस्मिन्नध्याये भक्त्यैव पुरुषार्थो न द्वेषेणेत्येतत्प्रतिपादनं पुनःपुनर्भक्तेः प्राधान्यज्ञापनाय, अन्यदसुरमोहनायेति तात्पर्यम् ।

वराननिच्छन् प्रह्लादो हरिं किं प्रत्युवाचेति हार्दं युधिष्ठिरप्रश्नं परिहरन् नारदस्तत्र वक्तीत्याह—नारद इति । वयसाऽर्भको न तु ज्ञानेनेत्येतद्विशेषप्रकाशनाय हेति विशेषणम्[4] । 'हि हेतौ' इत्यमरः[5] ॥ १ ॥

---

[1] उवाच च इत्यपि स पाठः । [2] अश्रान्तोऽप्यतो मे मम दर्शनं दुर्लभमित्यन्वयः ।
[3] धर्मादित्रितयेनेत्यर्थः स्यात् ? [4] अर्भकस्यापि तत्त्वशदार्थमाश्चर्यमिति हेत्यनेनाह—व्या. [5] अस्पष्टमिदम् ।

प्रह्लाद उवाच —

मा मा प्रलोभयोत्पत्त्याऽऽसक्तं[1] कामेषु तैर्वरैः ।
तत्सङ्गभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेषु चोदयात् ।
भवान् संसारबीजेषु हृदयग्रन्थिषु प्रभो ॥ ३ ॥

नान्यथा तेऽखिलगुरोर्घटते करुणात्मनः ।
नष्टदृष्टेस्तमस्यन्धे त्वं पारः पारदर्शिनः ॥ ४ ॥

यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
स वै स्वामी स वै भृत्यो गुणलुब्धौ न कामुकौ ॥ ५ ॥

---

त॰ ज्ञातसर्वेन्द्रियवृत्तित्वाद् हृषीकेशेन त्वया मन्मनोगतं ज्ञातमिति यत्, अतो मनःपरीक्षणार्थे एतैर्मनःप्रलोभनं न कुर्विति प्रार्थयत इत्याशयेनाह—**मा मेति** । गुरुवचनमज्ञातेष्टबोधकत्वेन प्रमाणं स्यात् । इदं स्वभावत एव ज्ञातेष्टबोधकत्वाद् व्यर्थमिव प्रतिभातीत्याशयवानाह—**उत्पत्त्येति** । आसक्तमिति लोकवृत्तान्तप्रदर्शनपरम् । प्रह्लादस्यार्भकावस्थामारभ्य विष्णुधर्मैकनिष्ठत्वात् । यतो विषयसङ्गिनामनर्थपरम्परा दृश्यते तत् तस्माद् विषण्णः । विषयिणो विषयासिद्ध्या तात्कालिकप्रसूतिनिर्वेदवन्नायं निर्वेद इत्याह—**मुमुक्षुरिति** । अनेन प्रह्लादस्याधिकारलक्षणसामग्री विद्यत इति दर्शितम् ॥ २ ॥

ननु भगवद्वाक्यं क्वापि विप्रलम्भकं न भवति । 'अजस्यावक्रचेतसः' इति श्रुतेः । भवता तथैव प्रोच्यते । तथा च भगवद्वाक्यस्याविश्वसनीयत्वं स्यादिति तत्राह—**भृत्येति** । चोदयात् चोदयति । 'धियो यो नः प्रचोदयात्' इति श्रुतेः ॥ ३ ॥

वञ्चनार्थमेव तथोच्यत इति किं न स्यात् ? अत्राह—**नान्यथेति** । अखिलगुरुत्वान्यथानुपपत्त्या न वञ्चनं युक्तमित्यर्थः । इतोऽपि भृत्यलक्षणजिज्ञासैव[2] प्रयोजनं त्वद्वचनस्य । अन्यथा तवेष्टजनघातकत्वदोषापत्तिः स्यात् । सा निर्दोषत्वेन न युक्तेत्याशयवानाह—**नष्टेति** । न केवलमितरगुरुवन्मार्गमात्रप्रदर्शकः । किन्तु गम्यं च । अतो विप्रलोभनं न युक्तम् । अतो वाऽऽह—**नष्टेति** । पारदर्शिनः पारं चान्तं द्रष्टुमिच्छतः[3] ॥ ४ ॥

ननु मत्प्रातिकामायाशीर्दानवचनमस्तु नाम प्रलोभनम् । तत्कामुकस्यामीष्टदानावचनेऽनाकाङ्क्षि-

---

[1] उत्पत्त्या सक्तम्—व्या. [2] भृत्यलक्षणज्ञापनमेव त्वद्वचनस्य प्रयोजनमित्यर्थः ।
[3] पारं द्रष्टुमिच्छतः (अधिकारिणः) त्वमेव पारः पारदर्शकश्चेति योजना—व्या.

आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ।
न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥ ६ ॥

अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ७ ॥

यदि रासीश मे कामान् वरान् त्वं वरदर्षभ ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ८ ॥

---

तामिधानं स्यादिति तत्राह—**यस्त इति**[1] । ते तव सकाशात् । आशिषः सम्पदः सेवायाः । तर्हि स क इति तत्राह—**स इति** । 'वन षण सम्भक्तौ' इति धातोः संभजनं विक्रेयं द्रव्यं प्रसार्य दान-लक्षणम् । तत्कर्ता वणिग् वै हि । अयं च किञ्चित्सुकृतकरणलक्षणदानेन भवादृशाज्जनात् पुण्य-लक्षणफलप्रदानं करोतीति यस्मात् तस्मात् वणिगित्यर्थः । आशास्ते इच्छति । अनेन फलदस्य स्वामित्वं च विघटितं भवतीति दर्शितम् । तर्हि कयोः स्वामिभृत्यभाव इति तत्राह—**स वा इति** । 'लुभ गार्ध्ये' इति धातोः भक्त्यादिगुणोद्रेकाकाङ्क्षिणौ गुणलुब्धौ । मिथः फलानि न कामुकौ ॥ ५ ॥

ननूभयोः फलकामित्वे को दोष इति तत्राह—**आशासान इति** । स्वामिनि समवेता आशिषः आत्मनः स्वस्य आशासानो यः स भृत्यो न वै नैव । किन्तु प्रतिभट एव । वरदानादिना भृत्यात् स्वस्य स्वामित्वमिच्छन् यो भृत्यायाशिषो राति ददाति सः स्वामी न च । कल्पितस्वामित्वेन तच्छब्दस्य मुख्यार्थालाभात् ॥ ६ ॥

प्रकृते किमभूदिति तत्राह—**अहं त्विति** । अनपाश्रयः भृत्यप्राप्यफलानाश्रयः स्वामी, अव्या-हतस्वामीत्यर्थः । एतदेव द्रढयति—**नान्यथेति** । निष्कामत्वेन भृत्यत्वं मम । अनपाश्रयत्वेन स्वामित्वं तव । एतस्मादन्यथा प्रकारान्तरेण आवयोरर्थो नास्ति । किं तत् प्रकारान्तरम् ? तत्राह—**राजेति** । इह लोके यथा राज्ञः सेवकस्य च स्वाज्ञानतिलङ्घनप्रीत्यादिलक्षणो वेतनादिलक्षणः स्वार्थोऽस्ति तथेति ॥ ७ ॥

ननु शास्त्रेषु प्रतिपाद्यमानसेव्यसेवकभावो ज्ञातृज्ञेयभावो दातृस्वीकर्तृभाव इत्यादिसम्बन्धिसंबन्ध-लक्षणार्थसम्भवात् आवयोरर्थो नास्तीति निषेधः कथं क्रियत इत्याशङ्कां परिहर्तुमाह[2]—**यदीति** । नान्यथेश्वरभाषितम् इति वचनाद् भवदुक्तमन्यथा माभूदिति भीत्या च तं वृणे इत्यतो वाऽऽह—**यदीति**[3] । 'रा दाने' इति धातुः । काम्यन्ते इति कामाः अभिमता एव वराः तान् । कामानां[4]

---

[1] आशीराशासने भृत्यत्वमेव नेत्याह—यस्त इति—व्या. [2] असपष्टेयमवतारिका ।
[3] वरं वृणीष्वेत्याज्ञाऽनुल्लङ्घनीयेत्याशयेनाह—यदीति—व्या. [4] कामानां मोक्षविरुद्धविषयेच्छानाम्—व्या.

इन्द्रियाणि मनः प्राणा आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः सत्यं येषां नश्यन्ति जन्मना ॥ ९ ॥

विमुञ्चति यदा कामान् मानवो मनसि श्रितान् ।
तर्ह्येव पुण्डरीकाक्ष न भवायावकल्पते
नारदेनोपदिष्टं मे तव मन्त्रमिमं स्मरे ॥ १० ॥

ओं नमो भगवते तुभ्यं पुरुषाय महात्मने ।
हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ ११ ॥

**श्रीनृसिंह उवाच —**

नैकान्तिनो मे मयि जात्विहाशिष आशासतेऽमुत्र तथा भवादृशाः ।
तथाऽपि मन्वन्तरमेतदत्र दैत्येश्वराणामनुभुङ्क्ष्व भोगान् ॥ १२ ॥

---

विषयाणाम् असंरोहं सम्यगनुत्पादं नाम वरं वृणे इत्यन्वयः ॥ ८ ॥

केन दोषेण तेषामनुत्पादः प्रार्थ्यत इति तत्राह—**इन्द्रियाणीति** । येषां कामानां विषयाणां जन्मना, इन्द्रियादयो नश्यन्ति तेषामिति शेषः । ‘सर्वेन्द्रियाणां जरयन्ति तेजः’ इति श्रुतेः । आत्मा भक्तिः[1] ॥ ९ ॥

ननु कामासंरोहो नाम काममोक्षो विवक्षितः । तस्मात् किं फलमिति तत्राह—**विमुञ्चतीति** । भवाय पुनर्जननाय ॥ १० ॥

भवन्नमनादिलक्षणा भक्तिश्च तत्फलमित्याह—**नम इति**[2] । भगवत इत्यनेन किञ्चित् पूज्यमात्रवस्तु सिध्यति । अतः पुरुषायेति । अनेनापि कश्चिदेवेत्यतो महात्मन इति । कोऽसावित्यतो हरय इति । हरिशब्दस्यानेकार्थत्वादत्र क इत्यतो अद्भुतेति । तिर्यक्प्राणिना त्वया किं स्यादित्यतो ब्रह्मण इति । अस्याप्यनेकार्थत्वादत्र क इत्यतः परमात्मन इति ॥ ११ ॥

अहं त्वकाम इत्येकान्तभक्तलक्षणं यत् त्वयोक्तं, तत् सत्यम् । तथाऽपि मदाज्ञाकारिणस्तव

---

[1] आत्मा देहः । धर्मः पूर्वार्जितपुण्यम् । धृतिः सर्वथा दुर्विषयांस्त्यजेयमिति धैर्यम् । मतिः शास्त्रजनितज्ञानम् । ह्रीरन्ये न पश्येयुरिति लज्जा । श्रीर्देहकान्तिः । तेजो ब्रह्मवर्चसम् । स्मृतिः शास्त्रानुभवजन्यस्मृतिः । दुर्विषयलोलुपस्येन्द्रियाणि दुष्टानि नष्टानि भवन्तीति भावः—व्या.

[2] ओमिति—व्या.स. ओं नम इत्यारभ्य मन्त्रस्त्रयस्त्रिंशदक्षरात्मकोऽनुष्टुप्छन्दस्कः, वराहमन्त्रवत्—व्या. नमो भगवते इत्येव वि पाठः ।

कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि सन्तमेकम् ।
सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन्        ॥ १३ ॥

भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ।
कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबन्धः ॥ १४ ॥

य एतत् कीर्तयेन्मह्यं त्वया गीतमिदं नरः ।
त्वां च मां च स्मरन् काले कर्मबन्धाद् विमुच्यते        ॥ १५ ॥

प्रह्लाद उवाच —
वरं वरय एतत् ते वरदेशान्महेश्वर ।
यदनिन्दत् पिता मे त्वामविद्वांस्तेज ऐश्वरम्        ॥ १६ ॥

---

पुण्याभिवृद्धिः स्यात् । अत एतत् कर्तव्यमित्याह — **नैकान्तिन इति** । किं तदिति तत्राह — **तथापीति** ॥ १२ ॥

ननु कर्दमजलस्नानानिच्छया ह्येतावन्तं कालं मया कण्ठशोषणमकारि । तदरण्यरोदनवद् व्यर्थमभूत् । यतस्त्वं तत्रैव स्नाहीत्युपदिशसि । अतस्त्वदाज्ञाऽनुल्लङ्घ्या (इति) त्वमेव जानासीति शङ्कारोगनिर्मूलनाय सुखसाध्यमौषधं विधास्यामीत्याशयवानाह — **कथा इति** । बहुवचनेन सर्वावतारादिकथा उपलक्षयति । भूतेष्वित्युपलक्षणम् । चरुपुरोडाशादिष्वपि । यज्ञमूर्तिः सन्निहित इति योगेन भक्तियुक्तध्यानेन । हिन्वन् नाशयन् ॥ १३ ॥

नन्वेतावता मम कालान्तरभाविनी त्वत्प्राप्तिः स्यात् किमित्यत्राह — **भोगेनेति**[1] । मुक्तावनभिमतं पुण्यं भोगेन क्षपयित्वा प्रायश्चित्तादिकुशलकर्मणा पापं निर्मूलयित्वा[2] । विताय विस्तृत्य ॥ १४ ॥

मया तवोक्तयोगकरणाशक्तस्यानायाससाध्यं योगमुपदिशामीत्युपसंहरति — **य इति** । मह्यं मामुद्दिश्य । युक्तकाले ॥ १५ ॥

अभिमतमित्युक्तत्वादिमं त्वदभिमतं[3] वरं वृण इत्याह — **वरमिति** । ते सकाशात् । अनेन दातृस्वीकर्तृभावसम्बन्धोऽस्तीति ज्ञायते ॥ १६ ॥

---

[1] आधिपत्ये भोगादिप्राप्तिरावश्यकीति न चिन्तयितव्यम् । भोगादेरपि प्रारब्धपुण्यक्षयादिसंपादकतया मत्प्राप्त्युपयोगित्वादित्याह–भोगेनेति—व्या.

[2] महाभारततात्पर्यनिर्णये (८-१५७) प्रतोलयित्वा बलदेवसूनुः इति उपसर्गसाहचर्येऽपि प्रयोग इवात्राप्यनुसन्धेयः ।

[3] मदभिमतमिति स्यात् ।

बद्धामर्षाशयः साक्षात् सर्वलोकगुरुं प्रभुम् ।
भ्रातृहेति मृषादृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ १७ ॥

तस्मात् पिता मे पूयेत दुरन्ताद् दुस्तरादघात् ।
पूतस्तेऽपाङ्गसन्दृष्टस्तदा कृपणवत्सल ॥ १८ ॥

श्रीभगवानुवाच —

त्रिः सप्तभिः पिता पूतः पितृभिः सह तेऽनघ ।
यत् साधोऽस्य कुले जातो भवान् वै कुलपावनः ॥ १९ ॥

यत्र यत्र च मद्भक्ताः प्रशान्ताः समदर्शिनः ।
साधवः समुदाचारास्ते पूयन्तेऽपि कीकटान्[1] ॥ २० ॥

सर्वात्मना न हिंसन्ति भूतग्रामेषु किञ्चन ।
उच्चावचेषु दैत्येन्द्र मद्भावेन गतस्पृहाः ॥ २१ ॥

---

शुद्ध्यर्थं साधनान्तरानुष्ठानं नापेक्षितमित्याह—**पूत इति**[2] ॥ १८ ॥

न केवलमयमेव पिता पूतः, किन्तु जन्मान्तरेऽपि विद्यमानाः पितरः पूताः स्युरित्याशयवानाह त्वा —**त्रिः सप्तभिरिति**। सा विशुद्धिः मत्कटाक्षपात्रीभूतत्वज्जन्मनेत्याह—**यत्साधोऽस्येति** ॥ १९ ॥

एतन्न्यायमन्यत्रातिदिशति —**यत्रेति**। कीकटाः इति पाठे तु आभीरा इत्यर्थः ॥ २० ॥

ननु त्वद्भक्तानामेवंविधमाहात्म्यं कस्मादित्याशङ्क्य तपोवृद्धिक्षयहेतुहिंसाद्यभावादित्याह—**सर्वात्मनेति**। सर्वात्मना यदपि किञ्चन कृकलासादिकमपि। 'तस्मात् प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य' इति श्रुतेः। तत्र निमित्तमाह—**मद्भावेनेति**। 'ईश्वरो जीवकल्या प्रविष्टः' इति वचनात् सर्वत्र मम भावः सत्ताऽस्तीति भावो भावना निरन्तरानुस्मरणं तेन गतस्पृहाः नष्टस्पर्धाः। [3]हिंसायाः कारणम्। निमित्ताभावान्नैमित्तिकाभाव इत्यर्थः ॥ २१ ॥

---

[1] पूयन्तेऽपि कीटकान्, पूयन्तेऽपि कीकटाः, इत्यपि पाठौ स सम्मतौ।

[2] अमरादिनिरीक्षणे स पूत एव, तथापि पामरसमाध्यर्थमियं याच्ञा मम लालनीयेत्याह—पूत इति। यदा तेऽपाङ्गेन नयनप्रान्तेन संदृष्टोऽभूत् तदैव पूतः। हे कृपणवत्सल तस्मादपि पामरदृष्टिं प्राप्यापि पूयेतेत्यन्वयः। एवमनन्वयेऽनन्वय एवैतदर्थस्येति ज्ञेयम्—स.

[3] इतः प्राक् स्पृहेत्युपस्कर्तव्यमिति भाति।

भवन्ति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ।
भवान् मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २२ ॥

कुरु ते प्रेतकार्याणि पितुः पूतस्य सर्वशः ।
मदङ्गस्पर्शनेनाङ्ग लोकान् यास्यति सुप्रजाः ॥ २३ ॥

पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ।
मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥ २४ ॥

**नारद उवाच —**

प्रह्लादोऽपि तथा चक्रे पितुर्यत् साम्परायिकम् ।
यथाऽऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ।
प्रह्लादस्तु तथाऽकार्षीद् राज्यं निहतकण्टकम् ॥ २५ ॥

---

इह लोके ये मद्भक्ताः पुरुषा भवन्ति विद्यन्ते ते न हिंसन्तीत्यन्वयः । मद्भक्तेष्वपि तव विशेषोऽस्तीत्याह — **भवानिति** । प्रतिरूपधृक् दृष्टान्तस्थलभूतः । खलुशब्देन कांश्चिन्निषिध्यावशिष्टानां सर्वेषामिति सर्वेषामित्यस्यार्थो गृह्यते । तेन यावत् तावदित्यर्थः । 'ऋते तु तात्त्विकान् देवान् नारदादीन्स्तथैव च । प्रह्लादादुत्तमः को नु विष्णुभक्तो जगत्त्रये ' इति वचनात् । ' निषेधवाक्यालङ्कारजिज्ञासानुनये खलु ' इत्यभिधानम् [1] ॥ २२ ॥

मत्पिता भगवद्द्वेषीति मत्वा तत्प्रेतकार्याणि न करोमीति मतिर्माभूत् । 'श्रौतं स्मार्तं न लङ्घयेत्' इति वचनात् । मदाज्ञया तान्यपि कर्तव्यानि । 'नावैष्णवाय दातव्यं नोदबिन्दु न तण्डुलम् ' इत्येतदसम्बन्धिविषयत्वेन सावकाशमित्याशयेनाह — **मदङ्गेति** । सुप्रजाः सुपुत्राः ॥ २३ ॥

पितृमेधं कृत्वा विरज्य वनं न व्रज । किन्तु राज्यं कुर्वित्याह — **पित्र्यमिति** । राज्यं कुर्वन् पितृवत् लोकोपद्रवं न कुरु । किन्तु ब्रह्मवाद्युक्तधर्मेणेत्याह — **यथोक्तमिति** । न तावता पूर्यते, अन्यच्चावश्यकमित्याह — **मयीति** । कर्माणि सामादिविषयाणि । पूजादीनि वा ॥ २४ ॥

भगवदाज्ञानुल्लङ्घनेन भगवत्प्रीतिः स्यादिति कृत्वा तदाज्ञाकरणप्रकारमाह — **नारद इति**[2] ।

---

[1] लोके ये मद्भक्ताः पुरुषा भवन्ति सन्ति तेषां भक्तानां सर्वेषां तात्त्विकनारदादिव्यतिरिक्तानां भवान् प्रतिरूपधृक् बिम्ब इति यावत् । ये त्वामनुव्रता लोके पुरुषास्तेऽपि मद्भक्ता यतो भवन्त्यतो मे सर्वेषां भक्तानां त्वं प्रतिरूपधृक् प्रह्लादो महाश्रेष्ठ इति निदर्शयितुं योग्य इति व्याचक्षते—स.

[2] नृहर्याज्ञोत्तरमुत्तरक्रियां कृत्वा किं प्रव्रजनमुत वनव्रजनं तत।न किं वा पित्र्यमित्युक्तं राज्यमकरोदिति धर्ममनःशङ्कुमुद्धरति नारद इत्याह—नारद इति—स. का

प्रह्लादसुमुखं[1] दृष्ट्वा ब्रह्मा नरहरिं हरिम् ।
स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २६ ॥

ब्रह्मोवाच —

देवदेवाखिलाध्यक्ष भूतभावन पूर्वज ।
दिष्ट्या ते निहतः पापो लोकसन्तापनोऽसुरः ॥ २७ ॥
योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ।
तपोयोगबलोन्नद्धः समस्तनिगमानहन्[2] ॥ २८ ॥
दिष्ट्याऽस्य तनयः साधुर्महाभागवतोऽर्भकः ।
त्वया विमोचितो मृत्योर्दिष्ट्या त्रातस्त्वयाऽधुना ॥ २९ ॥
एतद् वपुस्ते भगवन् ध्यायतः प्रयतात्मनः ।
सर्वतो गोप्तृ सन्त्रासान्मृत्योरपि जिघांसतः ॥ ३० ॥

श्रीभगवानुवाच —

मैवं विभोऽसुराणां ते प्रदेयः पद्मसम्भव ।
वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥ ३१ ॥

---

साम्परायिकं पारलौकिकम् ॥ २५ ॥

सत्कलं तत्रागतेषु देवेष्वेकतमेनापि संलापो हरेरभून्न वा ? आद्ये, केन ? द्वितीये, दैत्येभ्य एषां को विशेषः ? किञ्च सेव्यसेवकादिभावाभावेन ब्रह्मविद्याधिकारो[3]ऽप्युत्पादितः स्यादित्याशङ्कां परिहरति — प्रह्लादेति । देवादिभिर्वृत इत्यनेन तैरपि स्वच्छन्दवचनं कृतमिति ज्ञातव्यम् ॥ २६ ॥

दिष्ट्या सुखमभूत् ॥ २७ ॥

मम सकाशात् । सृष्टं सर्जनं एषामस्ति ते सृष्टिनः तैः, मया सृष्टैरित्यर्थः ॥ २८ ॥

दिष्ट्या सज्जनसुखहेतुतः । अधुना तस्मै दिष्ट्या सुखलक्षणो वरः, दत्त इति शेषः ॥ २९ ॥

अनेन वपुषा न केवलं दैत्यहननमेव प्रयोजनम् । किञ्चान्यच्चास्तीत्याह — एतदिति ॥ ३० ॥

एवं स्तुतो भगवान् कमनुग्रहमकार्षीत् तेषामिति तत्राह — श्रीभगवानिति । निसर्गतः क्रूराणाम । अमृतं पयः । 'देवान्ने सलिले क्षीरे त्वमृतं ना विमुक्तिगे' इति । अत्र हिरण्यकशिपुमन्तरे-

---

[1] प्रह्लादसुमुखमित्यपि स पाठः । [2] निगमान् वेदान् अहन् अध्वंसयत् , वैदिकयज्ञादिलोपकर्तेति यावत् — व्या. [3] ब्रह्मविद्यानधिकार इति स्यात् ?

नारद उवाच —

इत्युक्त्वा भगवान् राजन् ततश्चान्तर्दधे हरिः ।
अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३२ ॥

ततः सम्पूज्य विधिवद् ववन्दे परमेष्ठिनम् ।
भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कलाः ॥ ३३ ॥

ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ।
दैत्यानां दानवानां च प्रह्लादमकरोत् पतिम् ॥ ३४ ॥

प्रतिनन्द्य ततो देवाः प्रयुज्य परमाशिषः ।
स्वधामानि ययू राजन् ब्रह्माद्याः प्रतिपूजिताः ॥ ३५ ॥

एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ।
हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३६ ॥

---

णान्येषां न दातव्य इत्याज्ञा क्रियते । न त्वस्य हि । 'यथा हिरण्यकस्यादादन्तःस्थितहरीरितः' इत्यादिना स्वप्रेरितत्वावगमादिति[1] ॥ ३१ ॥

मद्भृत्यानामपि योग्यप्रत्यक्षत्वे हरेरुपर्युपरि व्यवहारेण 'ध्यायन्ति देवमनुष्याः' इति श्रुतेः देवस्वभावो यः स विहतः स्यादिति मत्वा तद्रक्षणार्थं तद्विग्रहेणादृष्टोऽभूदित्याह—**नारद इति**[2] । सर्वभूतानामदृश्य इत्यनेन भक्तानुकम्पित्वं प्रदर्शितम्[3] ॥ ३२ ॥

अनन्तरं प्रह्लादेन ब्रह्मादयो देवाः सत्कृता उतात्मनो भगवदनुग्रहपात्रत्वेनाहंभावेन धिक्कृताः ? आद्ये वैष्णवाचारः प्रवर्तितः स्यात्, द्वितीये भगवच्छिक्षणं गजस्नानवत् स्यादिति तत्राह—**तत इति** । भगवतः कला लेशाः येषु ते तथा । भगवतो भिन्नांशा वा ॥ ३३ ॥

भगवच्चित्तज्ञेन ब्रह्मणा चेदमन्वग्राहीत्याह—**तत इति** । अनेन भक्तेन भगवद्भक्तेषु यथायोग्यं प्रेम कर्तव्यमिति शास्त्राचारो दर्शितः ॥ ३४ ॥

प्रह्लादवरदानानन्तरं भगवता स्वाचारत्वेन यददर्शनमकारि तदस्माभिरप्यनुष्ठेयमिति कृत्वा ब्रह्माद्या

---

[1] अत्र मैवंविधो देय इत्यनेन हिरण्यकशिपोरेवंविधो वरो भगवदनभिमत एव दत्तः । एतदाज्ञामुल्लङ्घ्यैव रावणादिभ्यो पुनर्दास्यत इति न मन्तव्यम् । हिरण्यकशिपुवरदानेऽन्तःस्थितहरिणा तथैव प्रेरितत्वात् । एवंविध इति विशेषणेन दास्यमानवरस्यैवंविधत्वाभावेनाज्ञाया अप्यनुल्लङ्घनात् । एतदेवाभिप्रेत्य तात्पर्यम्-यथा हिरण्यकस्यादादन्तःस्थितहरीरितः । तथा नादात् तदन्यस्य ब्रह्मा दैत्यस्य कस्यचित् इति—व्या. [2] अदृष्टोऽभूदित्याह नारद इत्या०—नारद इति । इति स्वरसम् । [3] भक्तानुकम्पयैव भगवतः स्वात्मप्रदर्शनमिति हेतोः ।

पुनस्तौ पूर्वशापेन राक्षसौ तौ बभूवतुः ।
कुम्भकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३७ ॥
शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ।
तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३८ ॥
ताविहाद्य[1] पुनर्जातौ शिशुपालकरूशजौ[2] ।
हरौ[3] वैरानुबन्धेन पश्यतस्ते समीयतुः ॥ ३९ ॥
एनः पूर्वकृतं यत् तद् राजानः कृष्णवैरिणः ।
जहुस्तेऽन्ते तदात्मानः कीटाः पेशस्कृतो यथा ॥ ४० ॥

---

अपि स्वगृहान् ययुरित्याह—**प्रतिनन्द्येति** । इदानीं विशकलितोक्तमर्थं निक्षिप्योपसंहरति—**एवमिति** । हृदि स्थितेन वैरभावेन हेतुना हरिणा हतौ ॥ ३६ ॥

प्राक्तनजन्मनि जयविजयशब्दवाच्ये पूर्वजन्मनि यथा तच्चित्तौ तथाऽत्रापीति शेषः । हिरण्यकशिपुहिरण्याक्षाख्ये पूर्वजन्मनि यथा यथेति वा ॥ ३७–३८ ॥ त

वैरानुबन्धेन वैरोपसर्जनेन अनुबन्धेन स्नेहेन समीयतुः, हरिमिति शेषः । तत्रासुरौ तम ईयतुरित्यनुसन्धेयम् । सम्यग् भक्त्यैव श्रीहरिप्राप्तिः, तदभावेन तम एवेति द्योतनाय समित्युपसर्गः । 'मधुकैटभौ भक्त्यभावाद्धरौ भगवतो मृतौ । तम एव क्रमादाप्तौ भक्त्या चैद्यो हरिं ययौ ' इति वचनात् ॥ ३९ ॥

अन्येषामपि सद्भावादेतदुपलक्षणार्थमुक्तमित्यभिप्रेत्याह—**एन इति** । अत्रापि वैरानुबन्धेनेत्येतदनुवर्तते । ये राजानः पौण्ड्रकादिशब्दवाच्याः तेषु असुरदेहेषु आत्मा रूपविशेषो येषां ते तथा । तत्रापि, तस्मिन् कृष्णे आत्मा चित्तं येषां ते तथा । तदनुष्ठितपुण्यफलस्वीकारार्थं तत्राविष्टास्तद्भक्ता इत्यर्थः । ते भक्त्यैव यत् पूर्वकृतं तत्सम्बन्धात् प्राप्तं एनः पापं तत् जहुः । तद् हित्वा हर्याज्ञाकरणप्राप्तपुण्यप्रचयेन तं हरिमीयुः । त एव कृष्णवैरिणः अनादिकालमारभ्य भगवद्द्वेषिणः, कृष्णाश्च तामसाश्च वैरिणः वैररूपिणः, राजानः राजसाः तमःप्रकृतयो[4] दैत्याः तदात्मानो द्वेषरूपिणः । ते जन्मप्रभृति चीर्णं यदेनः तेन पापेन, वैरानुबन्धेन निरन्तरवैरिचिन्तया पूर्वकृतं ब्रह्मणा पूर्वं क्लृप्तं तमो जहुः जग्मुरित्यन्वयः । 'ओ हाङ् गतौ ' इति धातुः । ' इति सखेकहास्तं न्यस्य समुकुलं सुरं

---

[1] ताविहापि—गो. [2] शिशुपालकरूशकौ—गो. [3] हतौ—गो.
[4] राजसतामसप्रकृतय इति स्यात् ?

यथा यथा भागवता भक्त्या परमया भिदाम् ।
नृपाश्चैद्यादयः साम्यं हरेस्तच्चिन्तया ययुः ॥ ४१ ॥

आख्यातं सर्वमेतत् ते यन्मां त्वं परिपृष्टवान् ।
दमघोषसुतादीनां हरेः साम्यमपि द्विषाम् ॥ ४२ ॥

एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ।
अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४३ ॥

प्रह्लादस्यानुचरितं महाभागवतस्य च ।
भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४४ ॥

---

प्रवेकेहास्ते[1] ' इति प्रयोगश्च । अन्ते भक्त्यादिसाधनसामग्र्यनन्तरम् । इतरत्र द्वेषपूर्त्यनन्तरम् । 'तस्य तावदेव चिरम् ' इति श्रुतेः । 'अनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते ' इत्यादेश्च । कीटाः पेशस्कृतश्चिन्तनया पेशस्कृदाकारमाप्नुवन्ति । न तु तदात्मत्वम् । अत्र प्रमाणम्—'पौण्ड्रके नरके चैव शाल्वे कंसे च रुक्मिणि । आविष्टास्ते हरेर्भक्तास्तद्भक्त्या हरिमीयिरे[2] । ' असुरास्तु स्वयं ते तु महातमसि पातिताः ' इति वाक्यम् ॥ ४० ॥

अत्रापि तारतम्यमस्तीत्याह—**यथेति** । भिदां[3] विशेषम् । 'भेदो विशेषे दलने ' इत्यभिधानम् । अभिदाम् असम्प्रज्ञातसमाध्यवस्थां ययुरिति वा । साम्यं निर्दोषत्वादि चतुर्भुजलक्षणम् । अन्यथा कीटाः पेशस्कृतो ध्यानेन केचन पेशस्कृतो भवन्ति । न तु स एव । पृथग् दृश्यमानत्वादित्याशयं दृष्टान्तोऽनर्थः स्यादिति ॥ ४१ ॥ त्य

ग्रन्थाधिक्यभयादुपसंहरति—**आख्यातमिति** । अत्र 'चैद्यादयः' 'दमघोषसुतादीनाम् ' इत्यादिबहुवारोक्तिर्भक्तेरनादिकालसम्बन्धित्वद्योतनार्था । अन्यथा 'वेनादीनां' इत्याद्युक्तिरपि स्यात्[4] ॥ ४२ ॥ श्रद्धाजननाय स्तौति—**एषेति** । ब्रह्मण्यदेवस्य रामस्य चन्द्रदान्नरसिंहस्य । यत्र श। कथायाम्[5] ॥ ४३ ॥

भक्त्यादिकमेव मुक्तिसाधनं न द्वेषादिकमित्येतदत्र प्रतिपाद्यत इत्युपसंहरति—**प्रह्लादस्येति** । भक्त्यादिलक्षणो धर्मश्चात्र कथित इत्यन्वयः ॥ ४४ ॥

---

[1] अस्पष्टमिदम् । [2] आपिरे इति सरलः पाठः—स. [3] भिदां सुखेऽवान्तरविशेषयुक्तं साम्यं ययुः—व्या. [4] अस्पष्टमिदम् । द्विषतामपि साम्यमसंभावितमिति यत् पृष्टवान् तदनादिभक्तत्वेनासंभवनिरासेनोपपादितमिति योजना—व्या. [5] पारवश्येन स्तौति-एषेति । ब्रह्मण्यदेवस्य ब्राह्मणप्रियश्चासौ देवश्च तस्य । सनकाद्युक्ति-

सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ।
परावरेषां स्थानानां कालेनाव्यत्ययो[1] महान् ॥ ४५ ॥

धर्मो भागवतानां च भगवान् येन गम्यते ।
आख्यानेऽस्मिन् समाख्यातमाध्यात्मिकमशेषतः ॥ ४६ ॥

य एतत् पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ।
कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशैर्विमुच्यते ॥ ४७ ॥

एतद् य आद्यपुरुषस्य मृगेन्द्रलीलां
दैत्येन्द्रयूथपवधं प्रयतः पठेत ।
दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं
श्रुत्वानुभावमकुतोभयमेति लोकम् ॥ ४८ ॥

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियान्ति ।
एषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ४९ ॥

---

हरिमितरेभ्यो व्यावर्तयति—सर्गेति । अव्यत्ययो यथास्थिततत्वम्[2] ॥ ४५ ॥

येन भक्त्यादिलक्षणधर्मेण । आत्मानमधिकृत्य वर्तमानमिन्द्रियादिस्वरूपं च कथितमस्मिन्नाख्यान इत्याह । अत्र एवं तौ पार्षदौ विष्णोरित्यावृत्तानुकथनं च भक्त्यादिकं मुक्तिसाधनं न द्वेषादिकमिति ज्ञापनाय । येन भागवतधर्मेणैव भगवान् गम्यते, न द्वेषादिनेति शेषः । 'भक्तिर्ज्ञानं विरक्तिश्च नवकः श्रवणादिकः । धर्मो भागवतः प्रोक्तस्तद्भक्तेषु तथा नव' इति वचनात् 'भागवतधर्मेणैव श्रीहरिर्गम्यत इति कथमुच्यते भक्त्यादिना विना' इतीयमाशङ्का परिहृता । भक्त्यादेर्धर्मपदवाच्यत्वात् । 'श्रवणं कीर्तनं विष्णोः' इत्यादि श्रवणादिनवकम् ॥ ४६ ॥

अधुनाऽऽख्यानकीर्तनादिना यत् पुण्यं तदाह—य इति । सामान्यत उक्तं विवृणोति—एतदिति । ननु प्रह्लादानुभावस्यात्युत्तमत्ववर्णनेन युधिष्ठिरादीनां ततोऽधमत्वं प्रतीयत इति मन्दाशङ्कां

---

रिरक्षयाऽवातारि भगवतेति ब्रह्मण्यता स्फुटमभूदिति भावः । वराहनृसिंहरामकृष्णाद्यात्मनः । कृष्णस्यान्तिमत्वमेव विनिगमकमिति कृष्णस्येति गमनिका युक्ता—स.

[1] कालेन व्यत्ययो महान्—स.

[2] परेषां ब्रह्मादीनामवरेषां तृणजीवानां कालेन प्रलयरूपेण तथा स्थानानां सत्यादीनां व्यत्ययो नाश इति ज्ञानम् । कालेनाव्यत्यय इति पाठे कालेन आ सम्यग् व्यत्यय इत्यर्थः । कालेन व्यत्यय इति पाङ्क्तः पाठः—स.

स वा अयं ब्रह्म महद् विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद् गुरुश्च ॥

न यस्य साक्षाद् भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ५१ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे दशमोऽध्यायः ।

॥ अथैकादशोऽध्यायः ॥

**नारद उवाच —**

स एष भगवान् राजन् व्यतनोद् विततं यशः ।
पुरा रुद्रस्य देवस्य मयेनानन्तमायिना ॥ १ ॥

---

परिहरति—**यूयमिति**[1] । मुनय एतानिति यथातीत्य वर्तयन्ति बत विस्मये[2] । खेदानुकम्पासन्तोष-विस्मयामन्त्रणे बत ' इति ॥ ४९ ॥

ननु ' परब्रह्माणि मुक्तिगाः ' इत्यतः परब्रह्मशब्देन विष्णुत्वनिश्चयः कथमिति तत्राह— **स वा इति** । कैवल्येन अनासक्तत्वेन यन्निर्वाणसुखम् अशरीरसुखं तस्यानुभूतिः अनुभवो यस्य स तथा । अनन्ययोग्यस्वरूपानन्दमनुभवतीत्यर्थः । अनेन विष्णुत्वं निरणायि । विधिकृद् आज्ञाकारी । गुरुः हितोपदेष्टा ॥ ५० ॥

ति ननु दुर्ज्ञेयरूपत्वं हि विष्णुलिङ्गम् । ' न हि सुज्ञेयम् । अणुर्ह्येष आत्मा सः ' इति श्रुतेः । स्वरूपानन्दानुभवित्वं सायुज्यभाजोऽप्यस्ति । अतः कथं निर्णय इति तत्राह—**न यस्येति**[3] ॥ ५१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य दशमोऽध्यायः ।

॥ अथैकादशोऽध्यायः ॥

अस्मिन्नध्याये हरौ भक्तिविधानार्थं रुद्रमाहात्म्यकथनव्याजेन तन्माहात्म्यं प्रतिपाद्यते[4] । अधुना तत्र ' एको रुद्रो न द्वितीयोऽवतस्थे ' इत्यादिश्रुतेः प्रतीयमानरुद्रस्याद्वितीयार्थत्वं प्रतिपद्यमानैर्जने-

---

[1] एवं प्रह्लादानुभवं वर्णयित्वा ततोऽप्यतिशयेन युधिष्ठिरादीन् स्तौति-यूयमिति—व्या. भा

[2] अस्पष्टमिदम् । [3] एवं युधिष्ठिरादीनुक्त्वा स्वयं कृष्णप्रसादं प्रार्थयते—व्या.

[4] समग्रमप्येतदध्यायं दशमाध्याय एवान्तर्भावयन्ति सत्यधर्मतीर्थाः । तेषां सप्तमस्कन्ध आहत्य पञ्चदशाध्याया एव । व्यासतत्त्वज्ञतीर्थास्तु विजयध्वजतीर्थानां सरण्या षोडशाध्यायानङ्गीकुर्वन्ति । तथा तत्र तेषामवतारिका—

राजोवाच —

कस्मिन् कर्मणि देवस्य यशोऽभूज्जगदीशितुः ।
यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ २ ॥

नारद उवाच —

निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ।
मायिनां परमाचार्यं मयं शरणमाययुः ॥ ३ ॥

---

महाद्रव्यव्ययेन पूज्यमानस्य 'ईशानः सर्वविद्यानाम्', 'ईश्वरः सर्वभूतानाम्' इत्यादिमन्त्रैः स्तूयमानस्य सतो रुद्रस्यासुरावेशात् संशयो बभूव इदं सर्वं भगवदधीनं न वा इति ।

तत्र दयालुर्भक्तवत्सलः श्रीनारायणो रुद्रस्य तं संशयमपाचक्रे । कथं केनेति तत्राह—**स एष इति** । स भगवान् नृसिंहात्मना ब्रह्मदत्तवरेण दृप्तहिरण्यकशिपुपुरःसरासुरजातिं निर्मूलयित्वा प्रह्लादादिभक्तसमुदायस्यानुग्रहीता स एष युष्मद्बन्धुभूतः श्रीकृष्णः पुरा कल्पविशेषे देवस्य हरेः स्तुतिध्यानादिकं कुर्वाणस्य रुद्रस्य रोदनाद्यवगततल्लक्षणस्य, अत एव तन्नाम्नः, शिवस्य अनन्तमायिना अनेकशतसहस्रमायावता । अत एवार्थादल्पेन मयेन वक्ष्यमाणप्रतीकारं कृत्वा तस्य रुद्रस्य भगवद्भक्तप्रधान इत्यादि यशो विततं त्रिपुरनाशनेन व्याप्तमकरोत् । आत्मनोऽतिशयस्वामित्वेन[1] तदनुग्राहकत्वेन च विमलमकृतेत्यन्वयः ॥ १ ॥

नापृष्टः कस्यचिद् ब्रूयादिति वचनात् प्रसक्तं प्रमेयं विस्तृत्य श्रोतुं राजा पृच्छति—**कस्मिन् कर्मणीति** । कस्मिन् कर्मणि मयो विपरीतं चकार येन ईशितुर्देवस्य यशोऽभूत् । सा च कीर्तिः कृष्णेन यथा कथम् उपचिता प्रचिता स कथाविशेषो मम कथ्यतामित्यन्वयः ॥ २ ॥

नारदः प्रश्नं परिहरति—**निर्जिता इति** । अनेन हरिणा उपबृंहितैः । 'अन्यसहायेनासुरा जिताः इत्येतद् देवानां न दोषाय । विष्णववेक्षणस्य स्वतःसिद्धत्वाद् देवानाम् । 'सापेक्षं न तु दोषाय यत्र सिद्धमपेक्षितम्[2]' इति वचनात् ॥ ३ ॥

---

अस्मिन्नध्याये प्रह्लादे कृतनृसिंहानुग्रहप्रसङ्गान्महोपासके रुद्रेऽपि तत्कृतोऽनिष्टनिवर्तकत्वत्रिपुरारित्वादिकीर्तिसंपादकत्वरूपोऽनुग्रहो वर्ण्यते इति ।

[1] स्वामित्वज्ञापनेनेति स्यात् ।

[2] सत्यधर्मतीर्था व्यासतत्वज्ञतीर्थाश्चैतत्तात्पर्यवचनं पूर्वश्लोकसङ्गततया व्याचक्षते । पूर्वश्लोके हि कस्मिन् कर्मणीत्येव प्रश्नः कस्मिन् कर्मणि मयो विपरीतं चकारेत्यर्थे । तथापि सापेक्षत्वेन न दोषः । सापेक्षत्वनिरासायापेक्षितस्य मयो विपरीतं चकारेत्यस्य ततः प्राक्तनश्लोकेनैव प्रमाणान्तरेण च सिद्धत्वादिति ।

स निर्ममे पुरस्तिस्रो हैमरौप्यायसीर्विभुः ।
दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ४ ॥

ताभिस्तेऽसुरसेनान्यो लोकान् त्रीन् सेश्वरान् नृप ।
स्मरन्तो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५ ॥

ततस्ते सेश्वरा लोका उपासाद्येश्वरं ततः ।
त्राहि नस्तावकान् देव विनष्टान् त्रिपुरालयैः ॥ ६ ॥

अथानुगृह्य भगवान् मा भैष्टेति सुरान् विभुः ।
शरं धनुषि सन्धाय पुर्यामस्त्रं व्यमुञ्चत ॥ ७ ॥

ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमण्डलात् ।
यथा मयूखसन्दोहा नादृश्यन्त पुरो यतः ॥ ८ ॥

तैः स्पृष्टा[1] व्यसवः सर्वे निपेतुस्त्रिपुरौकसः ।
तानानीय महायोगैर्मयः[2] कूपरसेऽक्षिपत् ॥ ९ ॥

---

मयेन त्रिपुरनिर्माणकर्म विपरीतं कृतमित्याह—**स निर्मम इति** । स तिस्रः । दुर्लक्ष्यो दुर्ज्ञेयो अपायसंयोगो नाशसंबन्धः अन्तःप्रवेशसंबन्धो यासां तास्तथा[3] । अत एवादृश्यबहुतरायुधादिपरिकराः ॥ ४ ॥ असुरसेनान्यः असुरसेनानायकाः ॥ ५ ॥

सेश्वराः सहरयः[4] । अत्रापि विष्णुसहितदेवानां रुद्रापेक्षित्वं न दोषाय । त्रिपुरहननं रुद्रेण कार्यमिति हरिणा क्लृप्तत्वात् । इन्द्रादिभिर्वा ॥ ६ ॥

विभुः शिवः । मा भैष्टेत्युक्त्वा । पुर्यामित्येकवचनं जात्यपेक्षया[5] ॥ ७ ॥

ततो धनुषः । मयूखसन्दोहा रश्मिराशयः । यतो यैः शरैः । पुरः पुराणि ॥ ८ ॥

स्पृष्टाः तप्ताः । व्यसवो गतप्राणाः । इदं च मयेन कृतं विपरीतमित्याशयवानाह—**तानिति** ॥ ९ ॥

---

[1] स्पृष्टाः—व्या. स्पृष्टाः संबद्धाः—व्या. [2] महायोगी मयः—क.

[3] दुर्लक्ष्यौ अपायसंयोगौ यासां ताः । तत्क्षणादेवागच्छन्ति अपगच्छन्ति चेत्यागमविगमौ दुर्लक्ष्यावित्यर्थः-व्या.

[4] सेश्वरा रुद्रसहिताः । ईश्वरं भगवन्तम्—व्या.

[5] भगवान् विष्णुः शरं सन्धायास्त्रमभिमन्त्रितं शरं व्यमुञ्चत । अत्र सन्धाय व्यमुञ्चतेत्यन्तर्णीतण्यन्तम् । सन्धाय व्यमुञ्चयदित्यर्थः (व्यमोचयदित्यर्थः) । तथा हि तैत्तिरीये-त इषुं समकुर्वतेत्यादि—व्या.

सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ।
उत्तस्थुर्मेघदलनाद्[1] वैद्युता इव वह्नयः ॥ १० ॥

विलोक्य भग्नसङ्कल्पं विमनस्कं वृषध्वजम् ।
तदाऽयं भगवान् विष्णुस्तस्योपायमकल्पयत् ॥ ११ ॥

वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ।
प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ।
तेऽसुरा ह्यपि पश्यन्तो न न्यषेधन् विमोहिताः ॥ १२ ॥

तद् विज्ञाय महायोगी रसपालानिदं जगौ ।
स्मरन् विशोकः शोकार्तान् स्मरन् दैवगतिं च ताम् ॥ १३ ॥

देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ।
वा आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ १४ ॥

---

सिद्धामृतरसः मृतसञ्जीवनरसः । तस्मिन् स्पृष्टाः स्नाताः । वैद्युताः विद्युत्सम्बन्धिनः । चशब्देन[2] जलादिना यथा नाशो नास्ति तथैषामिति सूचयति ॥ १० ॥

कथं कृष्णेनोपचिता कीर्तिरितीमं प्रश्नं परिहर्तुमाह—विलोक्येति ॥ ११ ॥

कोऽसाविति तत्राह-- वत्स इति । हिशब्देन विष्णुर्ब्रह्माणमपेक्षत इति न दोषाय तत्संक्लस-कारित्वेन सिद्धत्वादिति सूचयति । काले मध्यन्दिने । ग्रन्थान्तरसिद्धत्वात् । हिशब्देन भगवन्माया-यास्तन्मायातोऽपरिमितमाहात्म्यमस्तीति सूचयति ॥ १२ ॥

स्वकृतापराधप्रहाणाय स्वस्य भगवद्भक्तिप्रकटनाय च मयस्तद्विषयज्ञानं च ममास्तीत्यभिप्रायेणाह[3] —तदिति । तद् दैत्यवधोपायकरणम् । कश्चित् कालमसुराणां जयदायिनीम्, इदानीं देवानाम् इति दैवगतिम् ॥ १३ ॥

किं जगाविति तत्राह — देव इति । आत्मनः स्वस्य अन्यस्य देवदत्तस्य चेति द्वयोः दैवेन आ विष्णुना दिष्टं क्लप्तं व्यपोहितुं अन्यथाकर्तुम् । इह जीवराशौ देवोऽसुरोऽन्यो वा कश्चन ईश्वरः समर्थो नास्तीत्यतस्तूष्णींभाव एव वरीयानित्यर्थः ॥ १४ ॥

---

[1] मेघदलनान्मेघमण्डलान्तर्भेदं कृत्वा । पटलादिति पाठे समूहादित्यर्थः—स.

[2] चोत्तस्थुरिति टीकाकृत्सम्मतः पाठः स्यात् । [3] अस्पष्टमिदम् ।

अथासौ शक्तिभिः स्वाभिः शम्भोः प्राधानिकं व्यधात् ।
धर्मज्ञानविरक्त्यादितपोविद्याक्रियादिभिः ॥ १५ ॥
रथं सूतं ध्वजं वाहं धनुर्वर्म शरादि यत् ।
सन्नद्धो रथमास्थाय सशरं धनुराददे ॥ १६ ॥
शरं धनुषि सन्धाय मुहूर्तेऽभिजितीश्वरः ।
भगवत्तेजसा गुप्तो ददाह त्रिपुरं नृप ॥ १७ ॥
दिवि दुन्दुभयो नेदुर्विमानशतसङ्कुले ।
देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ।
अवाकिरन् जगुर्हृष्टा ननृतुश्चाप्सरोगणाः ॥ १८ ॥
एवं दग्ध्वा पुरस्तिस्रो भगवान् पुरहा नृप ।
ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ १९ ॥
एवंविधान्यस्य हरेः स्वमायया विडम्बमानस्य नृलोकमात्मनः ।
वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान् पुनानान्यपरं वदामि किम् ॥

इति श्रीमद्भागवते सप्तमस्कन्धे एकादशोऽध्यायः ।

---

ननु सिद्धरसपानं व्यर्थमिव प्रतिभाति त्रिपुराणामनाशादित्याशङ्क्य तन्नाशसाधनमाह—**अथेति**। अथ दैत्यजीवनसाधनरसनाशानन्तरं स्वाभिः शक्तिभिः भूम्यादिभिः शम्भोः प्राधानिकं युद्धसाधनं रथादिकं व्यधादित्यन्वयः । धर्मादिबलोपेतत्वादभेद्याभिः ॥ १५ ॥

किं तत् प्राधानिकमिति तदाह—**रथमिति** । भगवतो हरेस्तेजसा गुप्तो रक्षितः ॥ १७ ॥

यशोविततिप्रकारमाह—**दिवीति** । जयेत्युक्त्वा जगुरित्यनेन यशोविततिर्ज्ञायते ॥ १८ ॥

ब्रह्मादिभिः ब्रह्मोत्पन्नैः सनकादिभिः 'इमा रुद्राय स्थिरधन्विने गिरः क्षिप्रेषवे' इत्यादिवेदवाक्यैर्वा ॥ १९ ॥

शम्भोः पुरदहनमाहात्म्यं यत् तत् श्रीनारायणैकनिष्ठमित्याशयेनोपसंहरति—**एवंविधानीति** । अपरं भगवच्चरितम्, तद् वदेति शेषः । अपरं अन्यद् वस्तु एवंविधमाहात्म्योपेतं किं वदामि । न किमपीति वा ॥ २० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्यैकादशोऽध्यायः

॥ अथ द्वादशोऽध्यायः ॥

श्रीशुक उवाच —

श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ।
युधिष्ठिरो दैत्यपतेर्मुदान्वितः पप्रच्छ भूयस्तनयं स्वयम्भुवः ॥

युधिष्ठिर उवाच —

भगवन् श्रोतुमिच्छामि नृणां धर्मं सनातनम् ।
वर्णाश्रमाचारयुतं यत् पुमान् विन्दते परम् ॥ २ ॥
भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः ।
सुतानां सम्मतो ब्रह्मन् तपोज्ञानसमाधिभिः ॥ ३ ॥
नारायणपरा विप्रा धर्मं गुह्यं यथा विदुः ।
करुणाः साधवः शान्तास्त्वद्विधा न तथा परे ॥ ४ ॥

नारद उवाच —

नत्वा भगवतेऽजाय लोकानां धर्महेतवे ।
वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥
योऽवतीर्यात्मनोंऽशेन दाक्षायण्यां तु धर्मतः ।
लोकानां स्वस्तये[1]ऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥

---

॥ अथ द्वादशोऽध्यायः ॥

भगवद्भक्त्या यथावद्गीतवर्णाश्रमाचाराचरणेन समुत्पन्नापरोक्षज्ञानेन प्रसन्नो हरिः स्वस्वयोग्यां मुक्तिं ददातीत्येतदर्थमुत्तरेषामध्यायानामारम्भः ।

तत्र वर्णाश्रमधर्मान् श्रोतुकामो युधिष्ठिरो नारदं पृच्छतीत्याह–श्रुत्वेति । महत्तमानाम् अग्रण्यस्य[2] श्रेष्ठस्य । उरुक्रमे हरौ आत्मा मनो यस्य स तथा तस्य दैत्यपतेः प्रह्लादस्य । ईहितं चरितम् । साधुसभासु सभाजितं सम्भावितम् । महत्तमानां ब्रह्मादीनाम् उत्तमस्य दैत्यानामपि पत्युः उरुक्रमात्मनो नरसिंहस्येति वा ॥१॥ धर्मं विशिनष्टि–वर्णेति । वर्णाश्रमाचारयुतम् । 'यु मिश्रण' इति धातुः ॥२॥

पुरुषार्थोपयोगित्वाद् वक्तुमिच्छामीत्याह— योऽवतीर्येति । दाक्षायण्यां नाम्ना मूर्तौ धर्मतः[3]

---

[1] लोकानां स्वस्तय इति व्या स पाठः । लोकानामीश्वर इति वि पाठः स्यात् ।

[2] अग्रण्य इति स्यात् । महत्तमाग्रण्यः महत्तमानां श्रेष्ठः—व्या. महन्महांस्तदग्रणीस्तस्य—स.

[3] धर्मतो यमधर्मतः—व्या. धर्मनाम्नः पितृतः—स.

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः ।
स्मृतिश्च तद्विदां राजन् येन चात्मा प्रसीदति ॥ ७ ॥

सत्यं दया तपः शौचं तितिक्षेज्या शमो दमः ।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥

सन्तोषः समदृक् सेवा[1] ग्राम्येहोपरमः शनैः ।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥

अन्नाद्यादेः संविभागो भूतेभ्यश्च यथाऽर्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥ १० ॥

---

धर्मप्रवर्तनार्थम् । 'स्यादध्यधिक ईश्वरे' इत्यभिधानाद् (अधि) ईश्वरः तप उद्दिश्य बदरिकाश्रमे आस्ते इत्यन्वयः । बदरिकाश्रमे तपोऽध्यास्ते इति वा ॥ ६ ॥

तत्रानुष्ठानधर्मविषये[2] ज्ञाते क्षिप्रप्रवृत्तिः स्यादधिकारिणामिति तमाह—**धर्ममूलमिति** । धर्ममूलं धर्मविषयः । सर्ववेदमयः सर्ववेदप्रतिपाद्येषु प्रधानः । अनेन रुद्रादयो निवृत्ता इति ज्ञातव्यम् । न केवलं धर्मविषय एव तत्प्रतिष्ठापकश्चेत्यतो धर्ममूलमिति । अत्र प्रमाणम्—**सर्ववेदमय इति** । प्रमाणान्तरं चास्तीत्याह—**स्मृतिरिति** । प्रमाणमिति शेषः । भगवत्प्रसादहेतुत्वात् प्रमाणमित्याह—**येनेति**[3] । अनेन भगवत्तत्त्वज्ञैः स्मृतो धर्मः । न कपिलादिभिरित्युक्तं भवति ॥ ७ ॥

विषयं निरूप्य सर्वसाधारणं सर्वधर्मसाधनमाह—**सत्यमिति** । सत्यादिचतुष्टयमन्तरङ्गम् । तितिक्षादिकमुपाङ्गमिति ज्ञातव्यम् ॥ ८ ॥

ग्राम्येहोपरमः विषयभोगेच्छानिवृत्तिः । विषयविपर्ययेहेक्षा प्राणिनां स्वत एव निषिद्धकर्मचेष्टा ईहा तस्याः पर्यालोचनम् । मोक्षविपरीतप्रवृत्तिदर्शनं वा । मौनं मन्त्रार्थचिन्तनम् । प्रलापवर्जनं वा । आत्मविमर्शनं आत्मविचारः[4] ॥ ९ ॥

तेषु नृषु आत्मदेवताबुद्धिः परमात्मा स्थित इति ज्ञानम् । सुतरामित्यनेन नृषु विशेषतः कर्तव्य-

---

[1] समदृक्सेवा —स. [2] अनुष्ठेयधर्मविषये इति यावत् ।

[3] प्रमाणमुक्त्वा लक्षणमाह-येनेति । अनेन भगवत्प्रसादसाधनत्वे सत्यनुष्ठेयत्वं धर्मत्वमिति लक्षणमुक्तं भवति—व्या.

[4] आत्मविमर्शनम् अहमल्प इति वा भगवान् सर्वोत्तम इति वा विचारणम्—स.

श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्याऽवनतिः[1] सख्यं दास्यमात्मसमर्पणम् ॥ ११ ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः ।
त्रिंशल्लक्षणसंयुक्तः सर्वात्मा येन तुष्यति ॥ १२ ॥

---

मिति सूचयति । 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः । दमः क्षमाऽऽर्जवं दानं सर्वेषां धर्मसाधनम्' इति स्मृतत्वादेषां धर्माङ्गत्वं, न तु धर्मत्वमिति ज्ञातव्यम्[2] ॥ १० ॥

ननु तर्हि कोऽयं धर्मो नामेत्याशङ्क्य सर्वसांधारणं धर्ममाह— **श्रवणमिति** । महतां या गतिः स्थितिस्तस्याः सेवा[3]। सङ्गतेः सेवेति वा। दास्यात्मसमर्पणयोरेकार्थत्वात् कथं पृथग् ग्रहणं कृतमित्याशङ्का 'अनाद्यनन्तकालेषु मुक्तौ संसार एव च । मयिस्थश्चोदयत्येको विष्णुर्मां सर्वदैव तु' इति संप्रीतिकं ज्ञानं विद्यादात्मसमर्पणम् । 'बहिश्चेश्वरदासत्वं दास्यमित्युच्यते बुधैः' इत्यनेन परिहरणीया । अनाद्यनन्तकालं मयि स्थित्वा विष्णुः सर्वत्र मां प्रेरयतीति प्रीतिपूर्वकज्ञानमात्मसमर्पणम् । प्रतिमादिसन्निहित. भगवद्दासत्वज्ञानं दास्यम् ॥ ११ ॥

तारतम्यज्ञानार्थं ब्रह्मादिविषयश्रवणादिरपि धर्मः स्यात् । अतः (कथं) विशिष्योच्यत इत्यत उक्तम्— **पर इति** । 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इति वचनात् समुदाहृत इति । समीचीनत्वं कुतः ? अत्राह— **त्रिंशल्लक्षणेति**[4] । अनन्तलक्षणस्य हरेः त्रिंशल्लक्षणयुक्तत्वं 'तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे' इति वचनाद् भक्तप्रकाश्याकारविषयविवक्षया । 'सप्तपादश्चतुर्हस्तः' इत्यादिशास्त्रेषु पुरुषलक्षणस्य निरूपितत्वात् । इदं च भक्तिप्रचयाय प्रोक्तमिति ज्ञायते । अनेन भगवत्तोषकरो धर्मः, नान्य इत्युक्तं भवति ॥ १२ ॥

---

[1] इज्यावनतिः—व्या. [2] भगवत्तोषहेतुत्वे सत्यनुष्ठेयत्वरूपलक्षणाक्रान्तत्वादहिंसादीनां धर्मत्वेऽपि धर्माङ्गत्वमप्यस्तीति ज्ञातव्यम्—व्या.

[3] महतां गतेः संगतेः सेवा संपादनम् । इज्यावनतिः पूज्येषु नम्रता—व्या. श्रवणादिनवसु सेवेज्ययोः सत्वेऽपि तत्र समदृक्सेवाऽत्र तु भगवतः, इज्या तत्र मखोऽत्रार्चनमिति विवेकः—स.

तथा च सत्यधर्मतीर्थरीत्या सत्यमित्यादिश्लोके त्रयोदश, सन्तोष इत्यादिश्लोके षट्, अन्नेत्यादिश्लोके द्वौ श्रवणमित्यादिश्लोके नव, आहत्य त्रिंशद्धर्माः । व्यासतत्वज्ञतीर्थरीत्या ते क्रमेण त्रयोदश, सप्त, द्वौ, अष्टावित्याहत्य त्रिंशद्धर्माः । विजयध्वजतीर्थानां पक्षोऽनयोरन्यतरः स्यात् । स्पष्टं निर्णेतुं न शक्यते ।

[4] सत्यादिभागवतधर्माणां त्रिंशत्संख्याकत्वमभिमतं व्यासतत्वज्ञतीर्थानां, सत्यधर्मतीर्थानां च ।

संस्कारा यस्याविच्छिन्ना[1] स द्विजो वैदिकादयः ।
इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ १३ ॥
जन्मकर्मावदातानां क्रियाश्च निगमोदिताः ।
विप्रस्याध्यापनादीनि ततोऽन्यस्यापरिग्रहः ॥ १४ ॥

---

एवं धर्मस्वरूपं निरूप्य तदधिकारिण निरूपयति—**संस्कारा इति** । निषेकादिश्मशानान्ता ये संस्काराः ते यस्याविच्छिन्नाः अखंडिताः स द्विजः । स एवाधिकार्यत्रेति शेषः । अविच्छेद्यत्वेन कर्तव्यत्वे को हेतुरिति तत्राह—**वैदिकेति** । वेदप्रतिपाद्यत्वेन प्रामाणिकत्वेन कर्तव्या इत्यर्थः । नन्विदं द्विजमात्रसाधारणं किम्? नेत्याह--**आदय इति** । स्त्रीणां ब्राह्मणजातित्वेऽपि 'मन्त्रेण[2] क्रिया एताः' इति यदतः शिष्टाचारत्वेन संगृहीतत्वादिदं वैदिकत्वेऽपि कर्तव्यम्[3] । ननु स्त्रीणां वैदिकसंस्काराभावे यागानधिकारित्वमित्यस्येदमेवोत्तरम्—**वैदिकादय इति** । वैदिका अवैदिकाश्च सन्तीत्यर्थः । तदुक्तम्—'निषेकाद्या श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः । गर्भाधानमृतौ पुंसवनं च स्यन्दनात् पुरा । षष्ठेऽष्टमे वा सीमन्तो मासतो जातकर्म च । अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः । षष्ठेऽन्नप्राशनं मासे चूडा कार्या यथाकुलम् । एवमेनः शमं याति बीजगर्भसमुद्भवम् । तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः' इत्यादि । 'तां पूषञ्शिवतमामेरयस्व यस्यां बीजं मनुष्या वयन्ति । या न ऊरू उशती विश्रयाते यस्यामुशन्तः प्रहराम शेपम् । उपोप मे परामृश मा मे दभ्राणि मन्यथाः । सर्वाऽहमस्मि रोमशा गन्धारीणामिवाविका:' इत्यादिसंस्कारमन्त्राः । ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्चत्वारो वर्णाः । तेषां आद्यास्त्रयो द्विजाः । तेषां साधारणं धर्ममाह—**इज्येति** । 'ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः' इति स्मृतेः । 'इज्याध्यापनदानानि विप्रस्य क्षत्रियस्य च' इत्यादेः ॥ १३ ॥

एतान्यपि द्विजमात्रस्य न किन्तु विशिष्टानामित्याशयेनाह—**जन्मेति** । जन्मना कर्मणा वा अवदातानाम्[4], 'कारीर्या यजेत वृष्टिकामः' 'मलवद्वाससा न संवदेत्' इत्यादिवेदोदिताः क्रियाश्च विहिता इत्याह—**क्रिया इति** । विशेषधर्ममाह—**विप्रस्येति** । अध्यापनयाजनपरिग्रहाः । ततो ब्राह्मणादन्यस्य क्षत्रियादेरपरिग्रहः । 'परिग्रहाधिको विप्रो याजनाध्यापने तथा' इति वचनात् ॥ १४ ॥

---

[1] संस्कारा यद्यविच्छिन्नाः—व्या.स. – [2] अमन्त्रेणेति स्यात् ।
[3] इदमवैदिकत्वेऽपि कर्तव्यमिति स्यात् । असमग्रमिदं वाक्यजातम् । [4] जन्मना कर्मणा चावदातानाम्—व्या.

राज्ञो वृत्तिः प्रजागोप्तुरविप्राद् वा करादिभिः ।
वैश्यस्तु वार्तावृत्तिः स्यान्नित्यं ब्रह्मकुलानुगः ॥ १५ ॥

शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ।
वार्ता विचित्रशालीनं यायावर्यं शिलोञ्छनम् ॥ १६ ॥

विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ।
जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ १७ ॥

ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ।
ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ १८ ॥

---

प्रतिग्रहादिनाऽपि प्रवृत्तिमभिप्रेत्य राजादिवृत्तिमाह—**राज्ञ इति** । आदिशब्देन न्यायतो दण्डाद्यागतं धनं गृह्यते । प्रजागोप्तुरित्यनेन प्रजागुप्त्यैव ततो धनमाहर्तव्यम् । अन्यथा दुष्कृतमेवादत्त इति सूचयति । वाशब्देन देवा गृह्यन्ते[1] । देवविप्रैर्विनेत्यर्थः । दण्डार्हविप्रमन्तरेण चेति । वार्ता कृषिगोरक्षवाणिज्यलक्षणा ॥ १५ ॥

स्वामिनः सकाशाज्जीवनं चेति शेषः । भृत्यानां स्वामिनः शुश्रूषा च वृत्तिरिति वा । विप्रवृत्तिं कण्ठोक्त्याऽऽह—**वार्तेति** । अत्र वार्तादिकमापदीति ग्राह्यम्[2] । विप्रानुज्ञया क्षत्रियवैश्ययोः तत्त्वविज्ञापनं धर्म इत्युच्यते । तदभावे शूद्रस्य कथमिति तत्राह—**जघन्य इति** । जघन्यो नरः शूद्रः अनापदि तत्सद्भावे उत्तमां वृत्तिं तत्त्वज्ञान (ज्ञापन ?) लक्षणां न भजेत् न कुर्यादित्यन्वयः । आपदि तदभावे तदनुज्ञया कुर्यादित्यतः अनापदि इति विशेषणम् । पालनादिवृत्तिं वा । ननु वर्णहीनस्य कथमित्यस्येदमेवोत्तरम् । जघन्यो वर्णहीनः अनापद्यपि[3] उत्तमां वृत्तिं न भजेत् । 'वर्णेष्वज्ञेष्ववर्णस्तु न ज्ञानी स्यात् कथञ्चन' इति श्रुतिः[4] ॥ १६—१७ ॥

राजानं विना सर्वेषां विप्रादीनामापदि उक्तसर्ववृत्तिभिर्जीवने दोषो नास्तीत्याह—**ऋते**

---

[1] वाशब्दोऽवधारणे—व्या.

[2] वार्ता कृष्यादिकम् । विचित्रशालीनं नानाधान्यसंग्रहः । यायावर्यं प्रत्यहं प्रतिगेहं याच्ञा । शिलोञ्छनमिति समाहारो वोत्तरपदलोपी (मध्यमपदलोपी ?) समासो वा । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति वचनात् । विचित्रशालीनं यायावर्यं शिलमुञ्छनं चेति चतुर्धा । इयं चादित उक्ता वार्ता चेति पञ्चधेति योजना । अथवा विचित्रशालीनमिति यायावर्यविशेषणम् । यद्वोत्तरत्र ऋतमुञ्छशिलं प्रोक्तमिति द्वन्द्वस्य कीर्तिष्यमाणत्वात् समाहारवृत्तिरेकैवेति ज्ञेयम्—स.

वार्ता कुसीदादिरूपा । विचित्रशालीनं नानाक्षेत्रेभ्यो नानाधान्यार्जनम्—व्या. अन्यत् समानम् ।

[3] आपद्यपीति स्यात् । [4] स्मृतिरिति स्यात् ।

सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथञ्चन ।
ऋतमुञ्छशिलं प्रोक्तममृतं यदयाचितम् ॥ १९ ॥

मृतं तु नित्यं याञ्चा स्यात् प्रमृतं कर्षणं स्मृतम् ।
सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ २० ॥

वर्जयेत् तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २१ ॥

शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम् ।
दानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २२ ॥

शौर्यं वीर्यं धृतिस्तेजस्त्याग आत्मजयः क्षमा ।
ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥ २३ ॥

देवगुर्वार्यगोभक्तिस्त्रिवर्गपरितोषणम् ।
आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥ २४ ॥

---

राजन्यमिति[1] । ऋतादीनामप्रतीतार्थत्वाद् व्याचष्टे—ऋतमित्यादिना । कर्षणं कृषिः ॥१८-२०॥

श्ववृत्तिवर्जने हेतुमाह—सर्वेति । 'सर्वा देवता वेदविदि ब्राह्मणे वसन्ति' इति श्रुतेः । 'नाविष्णुः पृथिवीपतिः' इत्यादेश्च ॥ २१ ॥

विप्रादीनां विविच्य ज्ञाने प्रथमं लक्षणमाह—शम इत्यादिना । अच्युतात्मत्वम् अच्युतमनस्कत्वम् ॥ २२ ॥

त्यागो दातव्ये मुक्तहस्तता । आत्मजयो मनोजयः ॥ २३ ॥

त्रिवर्गैः धर्मार्थकामैः ईश्वरपरितोषणम् । त्रयो वर्गाः येषां ते त्रिवर्गाः, तेषां द्रव्यादिना परितोषणम्[2] ॥ २४ ॥

---

[1] आपदि वृत्तिमाह-ऋत इति । राजन्यं विना आपत्सु सर्वेषां विप्रादीनां सर्वशः सर्वप्रकारेणापि वृत्तिः कर्तव्या । विप्रस्य स्ववृत्त्यसंभवे क्षत्रियवृत्त्या तस्याप्यसंभवे वैश्यवृत्त्या । एवमेव क्षत्रियस्य प्राप्तौ ऋते राजन्यमित्यपवादः । एष च सामान्यापत्सु । विशेषापत्सु तु विप्रवृत्त्या जीवनम् । अत्यापत्सु विप्रक्षत्रशुश्रूषालक्षणशूद्रवृत्त्यापि जीवितं ज्ञेयम् । वैश्यस्त्वापदि शूद्रवृत्त्यैव जीवेत् । सर्वेषामिति तूत्सर्गः । शूद्रस्तु वैश्यवृत्त्या कारुकवृत्त्या वा जीवेत् । वैश्यवृत्त्या जीवनेऽप्यध्ययनं न कुर्यादित्यादिकं ज्ञेयम् । एतत्सर्वं गीतातात्पर्योदाहृतव्यासस्मृतितोऽवगन्तव्यम्—व्या. [2] ब्रह्मक्षत्रियविशां वा परितोषणम्—व्या.

शूद्रस्य अन्ततः शौचं सेवा स्वामिन्यमायया ।
अमन्त्रयज्ञो ह्यस्तेयं मौढ्यं गोविप्ररक्षणम् ॥ २५ ॥

स्त्रीणां तु पतिदेवानां तच्छुश्रूषाऽनुकूलता ।
तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २६ ॥

सम्मार्जनोपलेपाभ्यां गृहमण्डनवर्तनैः ।
स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदा ॥ २७ ॥

कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ।
वाक्यैः सत्यैः प्रियैः प्रेम्णा काले काले भजेत् पतिम् ॥२८॥

सन्तुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ।
अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥ २९ ॥

या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ ३० ॥

---

शूद्रस्य अन्ततः सकृत् स्पृष्टाभिरद्भिराचमनलक्षणं शौचम् । 'हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः । शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः' इति वचनात् । केशश्मश्रुनखाद्यधारणं मौढ्यं[1]न ॥ २५ ॥

स्त्रीणां सामान्यलक्षणमाह—स्त्रीणामिति । अनुकूलता उक्तकारित्वम् । 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते । स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परं स्त्रियः' इति वचनात् । तद्बन्धुषु भर्तृबन्धुषु भागिनेयादिषु । तद्व्रतधारणं पातिव्रत्यम् । तस्य यद्व्रतं तदेवास्या व्रतमिति वा ॥ २६ ॥

गृहमण्डनवर्तनैः गृहालङ्कारकरणैः ॥ २७ ॥ कामैः विषयैः ॥ २८ ॥

अलोलुपा अयोग्याभिलाषरहिता । अपतितं ब्रह्महत्यादिपातकरहितम्[2] ॥ २९ ॥

अस्मिन् पतौ हरिः सन्निहित इति या बुद्धिः स हरिभावः । 'हरिरस्मिन् स्थित इति स्त्रीणां भर्तरि भावना । शिष्याणां च गुरौ नित्यं शूद्राणां ब्राह्मणादिषु । भृत्यानां स्वामिनि तथा हरिभाव इतीरितः' इति वचनान्न तयोरैक्यार्थः[3] । हर्यात्मना हरेर्विशेषसन्निधानवता पत्या सह ॥ ३० ॥

---

[1] मौढ्यं जानंश्चेदपि ज्ञानिपुरतोऽहं कियानिति मूढताप्रदर्शनम्—स.

[2] पतिः स्त्रीभिर्न हातव्यो यदि स्यान्नैव पातकीति वचनात्—स.

[3] न तयोरैक्यमर्थो हरिभावशब्दस्येत्यर्थः ।

वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत् ।
[1]अचौराणामपापानामन्त्यजान्तेऽवसायिनाम् ॥ ३१ ॥

प्रायः स्वभावविहितो नृणां धर्मो युगे युगे ।
वेददृग्भिः स्मृतो राजन् प्रेत्य चेह च शर्मकृत् ॥ ३२ ॥

वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मणि ।
हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३३ ॥

---

क्षत्रियाद् विप्रस्त्रीसूतानां विप्रात् क्षत्रियस्त्रीजातानां क्षत्रियाद् वैश्यस्त्रीसूतानां वैश्याच्छूद्रस्त्रीसूतानामित्येवं जातानां का वृत्तिरिति तत्राह—**वृत्तिरिति** । येषां जातिविशेषा अम्बष्ठनिषादपाराशरादिनाम्ना ज्ञातव्याः । तदुक्तम्—'विप्रान्मूर्धावसिक्ता स्त्री राज्ञोम्बष्ठ[2] विशोऽङ्गना' इत्यादि । अध्ययनमन्तरेणाम्बष्ठादीनां संस्कारादिकम् । तत्कुलानुकूल्येन तेषां गुणमाह—**अचौराणामिति** । यस्य यस्याविहितं तत्करणं चौर्यम्[3] । तद्रहितम् । शूद्राद् ब्राह्मण्यां जाता अन्त्यजाः रजकादिसप्तकारवः[4] । ततो जाता अन्तेवसायिनः पुल्कसमतङ्गादयः, येषां तत्कुलविहित एव धर्मः । 'ब्राह्मण्यां क्षत्रियात् सूतो वैश्याद् वैदेहिकस्तथा । शूद्राज्जातस्तु चण्डालः सर्ववर्णविगर्हितः' इति च[5] ॥३१॥

तत्तद्वर्णैस्तत्तत्स्वभावेनानुष्ठितस्य धर्मस्य फलमाह—**प्राय इति** । सात्त्विकादिस्वभावानुसारेण ब्राह्मणानां विहितः । अत्र प्रमाणमाह—**वेदेति** । स्मृतः ग्रन्थस्वरूपेण कृतः[6] । प्रेत्य परलोके । 'नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः । अतो यदात्मनः पथ्यं परस्य न तदाचरेत् । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यादिवचनाद् भक्त्युपबृंहितस्य धर्मस्यापेक्षिताशेषपुरुषार्थहेतुत्वं, न केवलस्येत्यभिप्रायेण प्राय इत्युक्तम् । तत्र तत्तद्विशेषवर्णने[7] ग्रन्थबाहुल्यं स्यादित्युपरम्यते ॥ ३२ ॥

न केवलमनेन धर्मेण स्वर्गादिप्राप्तिः । अपि तु भक्त्यादिसाधनपूर्णेन मुक्तिरपि स्यादित्याह—**वृत्त्येति** । स्वभावेन स्वात्मना कृतया प्रेरितया सात्त्विकादिस्वभावपूर्णया वा वृत्त्या जडलक्षणया भक्त्या

---

[1] अचोरागाम्—स. [2] विप्रान्मूर्धावसिक्तस्त्री जातोऽम्बष्ठः—स. [3] यस्य यद् विहितं तदकरणं चौर्यम्—स.
[4] रजकश्चर्मकारश्च नटो बुरुड एव च । कैवर्तमेदभिल्लाश्च सप्तैतेऽन्त्यजाः स्मृताः-इति स्मृतेः—स.
[5] ब्राह्मणस्य तिस्रोऽनुलोमजातयः । क्षत्रियस्य द्वेऽनुलोमजाती एका प्रतिलोमजातिः । वैश्यस्यैकाऽनुलोमजातिः द्वे प्रतिलोमजाती । शूद्रस्य तिस्रः प्रतिलोमजातयः । (ब्राह्मणादिचतुर्जात्या सह) एवं द्वादश जातयः । एवं तासां परस्परभिन्नजातिषु चतुर्वर्ण्यां जाता जातयस्ततो जाता इति बह्व्यः सङ्करजातयः—व्या.
[6] स्वभावविहितः स्वस्य भावो जातिः । यज्जातीयत्वमिति यावत् । तज्जातीयस्य यो वेददृग्भिः स्मृतः स्मृतिरूपग्रन्थेषूक्तः—व्या. [7] तत्तद्विशेषणवर्णनम्—व.

उप्यमानं मुहुः क्षेत्रं स्वयं निर्वीर्यतामियात् ।
न कल्पते पुनः सूत्यै उप्तं बीजं च नश्यति ॥ ३४ ॥
एवं कामाशयं चित्तं कामानामतिसेवया ।
विरज्येत यथा राजन्नाग्निवत्[1] कामबिन्दुभिः ॥ ३५ ॥

---

वा योग्यतया स्वविहितकर्मणि वर्तमानः पुरुषः । शनैः शनैः बहूनां जन्मनामन्ते । स्वभावजं पुण्यपाप-लक्षणम् । निर्गुणतां मुक्तिम् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतेः ज्ञानपूर्वकमनुष्ठितो नित्यानन्दाविर्भावलक्षणपुरुषार्थस्य हेतुः । [2]'यद्यप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव' इति श्रुतेः । तत्वज्ञानपूर्वकं[3] भगवद्भक्तप्रद्वेषोपरक्तः प्रवृद्धो धर्मो[4] नित्य-दुःखाविर्भावलक्षणपुरुषार्थस्य, 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इत्यादि नित्यं प्रार्थनादिगुणोपरक्तोऽनित्यसत्त्वगुणनिमित्तसुखलक्षणस्य, इत्यादि ॥ ३३ ॥

ननु सगुणो धर्मः सगुणपुरुषार्थहेतुर्भवतु । अनुकूलत्वात् । निर्गुणपुरुषार्थस्य कथं, विरुद्ध-त्वादित्याशङ्क्य, मनो हि पुरुषार्थकारणम् । तद् विषयोपरक्तं दुःखोदर्कविषयसुखाय स्यात् । तदेव विषयाणां क्षणभङ्गुराणां दुःखोदर्काणां दुस्साधनत्वचिन्तया[5] वैराग्यानलभर्जितं पुनस्तदङ्कुरीभावा-समर्थम् । भगवच्चरणारविन्दभक्तिसलिलसिक्तं चेत् तज्ज्ञानाङ्कुरीकरणनिदानं भवतीत्येतमर्थं सदृष्टान्त-माह—**उप्यमानमिति** । यथा बीजैरुप्यमानं पुनः मेदुरसाधनहीनं क्षेत्रं केदारलक्षणं निर्वीर्यतां सस्य-जननशक्तिराहित्यमेति । तदेव स्फुटयति—**पुनरिति** । सूत्यै उत्पत्त्यै । न केवलमुत्पादनासमर्थं, किन्तु बीजनाशहेतुश्च ॥ ३४ ॥

एवं तथा कामाशयं कामाशाविश्रमं चित्तम् । विषयसेवासमये दुःखस्य तदभावे सुखस्य च स्मरणसमर्थं मनः कामानां विषयाणाम् अतिसेवया क्षयरोगादिहेतुभूतया । द्रव्यादिनाशकारणानित्यसुखाय विरज्येत विरक्तं भवति असारताबुद्धिं प्राप्नोति । इदं च योग्यानामेव । नायोग्यानामिति । किञ्चिद्विषय-सेवया किं स्यादिति तत्राह—**यथेति** । कामानां बिन्दुभिः किञ्चित् सेवितैः मनो यथावत् पुरुषार्थ-

---

[1] सत्यधर्मतीर्थाः राजन्नग्निवदिति पाठमुरीकृत्यैवं व्याकुर्वत । न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धत इति स्थानान्तरस्थवाक्यानुगुल्येन व्यतिरेकमुक्त्वाऽन्वयनिदर्शनं दर्शयति । अग्निवदिति । कामबिन्दुभिः स्वोत्तेजकतया काम्यविषयघृतबिन्दुभिर्यथाऽग्निरेधते न विरज्येत तथा चित्तं तदायत्तं सन्न विरज्येत । किन्तु विरज्येत विशेषतो रज्येतानुरक्तमेव भवेदित्यर्थः ।

[2] 'यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति' ........ इति (बृह ३-५-९) उपलभ्यते ।

[3] तत्त्वज्ञानपूर्वकमिति स्यात् । [4] प्रवृद्धोऽधर्म इति स्यात् ।

[5] दुःखसाधनत्वचिन्तयेति स्यात् । अथवा यथास्थितमेव साधु । दुर्दुःखमिति संप्रोक्तमिति वचनात् ।

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यद्यन्यत्रापि दृश्येत तत् तेनैव विनिर्दिशेत् ॥ ३६ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

नारद उवाच —

ब्रह्मचारी गुरुकुले वसेद् दान्तो गुरोर्हितम् ।
आचरेद् दासवन्नीचो गुरौ सुदृढसौहृदः ॥ १ ॥

---

हेतुतया न विरज्येत विरक्तं न भवति । पुनः तृष्णातिशयः स्यात् । कथमिव ? मुखकान्तिहेतुत्वात् काम आज्यम् । तद्बिन्दुभिः यथाऽग्निर्वर्धते तथेति भावः[1] ॥ ३५ ॥

नन्वत्र वर्णादिज्ञानं यथा (तथा) तारतम्यतः तत्पूजाऽपि तयोभयस्य निःश्रेयसी । यस्यैतदभावे तद्धितकरणाद्यभीष्टासिद्धिः स्यादिति तत्राह[2]—यस्येति । यस्य ब्राह्मणादेः ब्राह्मणत्वादिव्यञ्जकं शमदमादिलक्षणं प्रोक्तम्, शास्त्र इति शेषः । तल्लक्षणं यद्यन्यत्र व्यक्तं दृश्येत । अपिशब्देनाव्याप्त्यादिदोषाभावं सूचयति । तर्हीतरलक्षणेनैव[3] तद् वस्तु ब्राह्मणादिकमिति निर्देशेत् उपदिशेत् । गोः किं लक्षणमिति पृष्टः 'सास्नादिमान् गौः' इति उपदिशति यदा तदा पुच्छवत्त्वशृङ्गवत्त्वादिव्यभिचार्य[4] विहाय यं गोपिण्डं सास्नादिमन्तं पश्यति तदा 'इयं गौः' इति यथा प्रत्येति तत्प्रयुक्तं व्यवहारं करोति आप्तायोपदिशति च तथाऽत्रापि । विरक्तिबलभक्तिरेव ब्राह्मणादेः मुक्तिसाधनं लक्षणमिति सकलशास्त्रतात्पर्यार्थः । ततः सैव बुभूषुभिः सम्पादनीयेति भावः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

हितं नीचः प्रश्रितः । हिताचरणं[5] मनोवाक्कर्मभिरिति शेषः । क्वचिद् अपराधे सति । एकान्नादनवर्ज-क्षाय नार्थम् उपवसेदित्युक्तम् । स्वार्थमात्रसिद्धिः तन्मात्रं यावदिति । बृहद्व्रतो ब्रह्मचारी । स्त्र्यादिव्यवहार-

---

[1] उप्यमानक्षेत्रवत् कामाशयं चित्तं कामानामतिसेवया विरज्येत । अन्तर्णीतणिच् । विरक्तं कुर्यात् । निर्वीर्यत्वादिप्राप्तेः । स्वतस्तु न विरक्तं भवति । किन्तु कामबिन्दुभिरभिवर्धत एव । आज्यबिन्दुभिरग्निवत्—व्या.
[2] असङ्ख्येयमवतारिका । [3] तल्लक्षणादिनैवेति स्यात् । शमदमादिलक्षणेनेत्यर्थः । [4] व्यभिचारिधर्मं विहायेत्यर्थः ।
[5] हितमाचरन्निति स्यात् ।

सायं प्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान्[1] ।
सन्ध्ये उभे च यतवाग् जपन् ब्रह्म[2] समाहितः ॥ २ ॥

छन्दांस्यधीयेत गुरोराहूतश्च सुयन्त्रितः ।
उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥

मेखलाजिनवासांसि[3] जटादण्डकमण्डलून् ।
बिभृयादुपवीतं च दर्भपाणिर्यथोदितम्[4] ॥ ४ ॥

सायं प्रातश्चरेद् भैक्ष्यं गुरवे तन्निवेदयेत् ।
भुञ्जीत यद्यनुज्ञातो नो चेदुपवसेत् क्वचित् ॥ ५ ॥

सुशीलो मितभुग् दक्षः श्रद्दधानो जितेन्द्रियः ।
यावदर्थं व्यवहरेत् स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥

वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः ।
इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः ॥ ७ ॥

केशप्रसाधनोन्मर्दस्नपनाभ्यञ्जनादिकम् ।
गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥

नन्वग्निः प्रमदा नाम घृतकुम्भः पुमान् यतः[5] ।
सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥

---

वर्जननिमित्तमाह—इन्द्रियाणीति । निर्जितेन्द्रियग्रामो यतिः । 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यभिधानात् ॥ १–७ ॥

प्रसाधनं संस्करणम् । 'मधुमांसोच्छुनोच्छिष्टं शुल्कस्त्रीप्राणिहिंसनम् । भास्करालोकनाशीलपरिवादांश्च वर्जयेत्' इत्यपव्याख्यानं[6] न कर्तव्यम् ॥ ८ ॥

कुतो न कार्यम् ? अत्राह—नन्विति । अन्यदा व्यवहारयोग्यसमये ॥ ९ ॥

---

[1] अग्निमग्निकार्यार्थम् , अर्कं प्रातः सायं वरुणं चेत्यपि ग्राह्यम् । सुरोत्तमान् प्राच्यादिदिक्स्थितदेवान्—व्या.

[2] ब्रह्म गायत्रीम्—व्या.   [3] वासः उपरिवस्त्रं परिधानीयम्—स.

[4] यथोदितं समित्पाणिरित्यादिश्रुतिशंसितम् । तथा पालाशो ब्राह्मणस्येत्यादिनियममनतिक्रम्य दण्डं बिभृयात् –स.

[5] घृतकुम्भसमः पुमान्—स   [6] कस्येदमपव्याख्यानमिति न ज्ञायते । श्लोकश्च शोधनीयः ।

कल्पयेदात्मनो यावदाभासमिदमीश्वरः ।
द्वैतं तावन्न विरमेत् ततो ह्यस्य विपर्ययः ॥ १० ॥

एतच्चान्यद् गृहस्थस्य समाम्नातं यतेरपि ।
गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥

---

ननु बन्धनिवृत्त्यर्थं भगवदर्पणबुद्ध्या धर्मोऽनुष्ठेय इति विधीयते । तस्य मिथ्यात्वेन स्वत एव निवृत्त्युपपत्तेर्न तद्विधानमत्रावश्यकमित्याशङ्क्य ईश्वरकल्पितस्य मिथ्यात्वासम्भवेन यद्बुद्ध्या यस्य शृङ्खलाबन्धः तस्य तत्प्रसादेन तन्निवृत्तिवद् ईश्वरप्रसादजनकधर्मग्रामो विधेयः । अन्यथा बन्धानुत्थिति-रित्याशयवान् तस्येश्वरकल्पितत्वमाह—**कल्पयेदिति** । यावन्तं कालमीश्वरः आत्मनो जीवस्य ज्ञानलक्षण-रहितं ज्ञानवदवभासमानम् इदमाभासम् अज्ञानं कल्पयेत् तावन्तं कालं द्वैतम् अयथार्थज्ञानं न विरमेत् नापगच्छेत् ततोऽज्ञानादस्य विपर्ययो बन्धः, अनुवर्तते इति शेषः । तदुक्तम्—'बहुत्वेनैव वस्तूनां यथार्थज्ञानमुच्यते । अद्वैतज्ञानमित्येव द्वैतज्ञानं तदन्यथा । यथा ज्ञानं तथा वस्तु यथा वस्तु तथा मतिः । नैव ज्ञानार्थयोर्भेदस्तत एकत्ववेदनम्' इति च । ननु वर्णादिर्विहितो धर्मग्रामः कियन्तं काल-मनुष्ठेयः ? बहुसमयसाध्यत्वे दुःखप्रयासत्वेनाशक्त्याऽविरक्त्याऽनधिकारिकः स्यादित्याशङ्क्याह—**कल्पयेदिति** । यावदीश्वरः इदमाभासं मिथ्याभूतं जगत् कल्पयेत् तावद् द्वैतं वर्णाश्रमादिधर्मलक्षणं न विरमेत् नापगच्छेत् । ततोऽधिष्ठानज्ञानं स्यात् । ततो विहितधर्मग्रामस्य निवृत्तिः"[2] इत्ययमर्थो हिशब्द-सूचितया 'सत्यसृष्टावशक्ता हि मायासृष्टिं वितन्वते' इति स्मृत्या विरुद्धत्वेनानुपपन्नः । ईश्वर इत्यनेन सत्यसृष्टिसामर्थ्यं सूचयति । तात्पर्येण विधानं चानुपपन्नं यतः (अतः) उक्त एवार्थः ॥ १० ॥

नन्वयं धर्मो ब्रह्मचारिणो भवेत्, उतान्यस्यापि सम्भवति ? नाद्यः, अतिव्याप्तेः । न द्वितीयः, पृथग्विधानानुपपत्तेरित्यतोऽतिदेशन्यायेन यथासम्भवमन्यस्यापीत्याह—**एतदिति** । अन्यद् वक्ष्यमाणम् । न केवलं गृहस्थस्यैव । किन्तु यतेरपीत्याह—**यतेरपीति** । यथासम्भवमित्युक्तं विवृणोति[3]—**गुरु-वृत्तिरिति** । गुरुवृत्तिः गुरौ वासः । ब्रह्मचर्यं भिक्षावृत्तिरित्येतत् सर्वं गृहस्थस्य निवर्तेत इत्यर्थः । विकल्पेन व्यवस्थितविकल्पेन उदितानुदितहोमवदित्यर्थः । कुतो निवर्तेत इति तत्राह—**ऋतुगामिन**

---

[1] निवृत्तिवदिति स्यात् ।

[2] इदमपव्याख्यानं न श्रीधरस्य । अतश्चित्सुखस्य, चतुर्थस्कन्धोक्तशुकतीर्थादेर्वा स्यात् ।

[3] यथासंभवमित्यभिप्रेतं विवृणोतीत्यर्थः ।

अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेपामिषं[1] मधु ।
स्रग्गन्धलेपालङ्कारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥
उषित्वैवं गुरुकुले द्विजोऽधीत्यावबुध्य च ।
त्रयीं साङ्गोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥
दत्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ।
गृहं वनं वा प्रविशेत् प्रव्रजेत् तत्र वा वसेत् ॥ १४ ॥
अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ।
भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥

---

इति[2] ॥ ११ ॥

पञ्चयज्ञाद्याचरणायासेन कालयापनं कुर्वतो गृहस्थस्यापि व्रतधारणे ब्रह्मचारिवदभ्यञ्जनादिकं वर्जनीयमित्याह—अञ्जनेति ।[3] अवलेपं दर्पम् ॥ १२ ॥

अवबुध्य अर्थविचारं कृत्वा तत्त्वं ज्ञात्वा ॥ १३ ॥

गार्हस्थ्यधर्मस्य वानप्रस्थधर्मस्य यतिधर्मस्य चानुष्ठानेन[4] समर्थश्चेदेष्वभीष्टं कुर्यादित्याह—यदीति । 'नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ । तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि च' इति वचनाद् एतादृशस्य गुरौ वासोऽनुज्ञायते । अन्यस्य तु गुरोराज्ञया दूरं गत्वा गृहस्थाश्रम इति । तदुक्तम्—'गुरोराज्ञानुरोधेन दूरस्थो वा गृही भवेत्' इति चेति ॥ १४ ॥

भगवदर्पणबुद्ध्याऽग्न्यादौ क्रियमाणं कर्म तस्य (सान्निध्य) बुद्ध्या कर्तव्यं, न तु तदैक्य-बुद्ध्येत्याशयेनाह—अग्नाविति । 'स गुरुर्यः क्रियाः कृत्वा वेदमस्मै ददाति च । उपनीय वदेद् वेद-

---

[1] स्त्र्यवलेखामिषम्—इत्यपि स पाठः । स्त्र्यवलेखो स्त्रीचित्रणं प्रतिमा वा—स. । अवलोपो मदकारी स्त्रीभोगार्थं सेवनीयः पदार्थः । आमिषं फले जम्बीरं धान्ये माषादि—व्या.

[2] ब्रह्मचारिण उक्तधर्मं गृहस्थादिष्वतिदिशति—एतदिति । एतद् उक्तं यथासंभवं गृहस्थस्येति । तेन भिक्षाचरणाग्नि-कार्यादेरभावः । तथा च ब्रह्मचारिणो विशिष्य धर्मोक्तिर्युक्ता । अन्यच्च अन्यदपि यज्ञप्रजनातिथिभोजनादि । अनेन गृहस्थस्यापि विशिष्य धर्मोक्तिर्युक्तेति । यतेरपीत्यत्रापि यथासंभवं बोध्यम् ः अग्निकार्यादेरभावात् । अन्यदपीत्यनुवर्तनीयम् । प्रणवजपलयन्यासादेर्विद्यमानत्वात् । गृहस्थस्य गुरुकुलवृत्तिर्विकल्पितेत्याह—गुरुवृत्ति-रिति । ऋतुगामिन इत्यनेन तदनिषिद्धमिति सूचितम्—व्या.

[3] विकल्पश्च व्यवस्थित इत्याह—अञ्जनेति । ये गुरुकुले धृतव्रतास्तदाऽञ्जनादिकं त्यजेयुः, यदि न धृतव्रतास्तदा कुर्युरिति वा । [4] अनुष्ठाने समर्थश्चेदिति पेशलम् ।

एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ।
परं विन्दति विज्ञानं परं ब्रह्माधिगच्छति ॥ १६ ॥

वानप्रस्थस्य वक्ष्यामि नियमान् मुनिसंमतान् ।
यानातिष्ठन् मुनिर्गच्छेद् ऋषिलोकमिहाञ्जसा ॥ १७ ॥

न कृष्टपच्यमश्नीयादकृष्टं वाऽप्यकालतः ।
अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥

वन्यैश्चरुपुरोडाशान् निर्वपेन्नित्यचोदितान् । त् काल
लब्धेन येन चान्नेन पुराणं तु परित्यजेत् ॥ १९ ॥

अग्न्यर्थमेव शरणमुटजं वाऽद्रिकन्दरम् ।
श्रयेत हिमवाय्वग्निवर्षार्कातपनान् स्वयम् ॥ २० ॥

---

माचार्यः स उदाहृतः । एकदेश उपाध्याय ऋत्विक् यज्ञकृदुच्यते । एते मान्या यथापूर्वमेभ्यो माता गरीयसी ' इति वचनाद् गुरुशब्देन सर्वे एते विवक्ष्यन्ते । स्वधामभिः (स्वस्य) आवासस्थानभूतैः । अप्रविष्टं सर्वगतं प्रविष्टवत् स्थितं अनुरूपवन्तम् । ' अप्रविष्टः सर्वगतः प्रविष्टस्त्वनुरूपवान् । एवं द्विरूपो भगवान् हरिरेको जनार्दनः ' इति वचनात् ॥ १५ ॥

एवमाकारेण क्रियमाणस्य कर्मणः फलमाह—**एवंविध इति** ॥ १६ ॥

ब्रह्मचारिवानप्रस्थनियमानां कृच्छ्रसाध्यत्वेन साम्यात् प्रथमाश्रमधर्मकथनानन्तरं वानप्रस्थधर्मानाह—**वानप्रस्थस्येति** । ऋषेः सर्वज्ञस्य लोकं[1] वैकुण्ठम् । ' त्वमग्ने प्रथमोऽङ्गिरा ऋषिः ' इति श्रुतेः । ' ऋषिर्हरौ तापसे च ज्ञानवत्यपि कीर्तितः ' इति च ॥ १७ ॥

कृष्टपच्यं कर्षणादिना पक्वं व्रीह्यन्नम् । अकालतः विहितकालमुल्लङ्घ्य । आमम् अग्न्यादिनाऽनातपाकम् आमलकादि[2] ॥ १८ ॥

वन्यैः देवव्रीह्यादिभिः । कालचोदितान् तत्तत्कालविहितान् ॥ १९ ॥

अग्न्यर्थम् अग्निरक्षणार्थम् । उटजं पर्णशालाम् । शरणं गृहम् अन्यदा हिमादिकं श्रयेत[3] । आतपनम् आतपः ॥ २० ॥

---

[1] ऋषिलोकं सप्तर्षिलोकम्—व्या.

[2] अकृष्टमप्यकालतो जायमानम् अग्निपक्वं वा नाश्नीयात् । आमं वा अर्कपक्वमुत वा आहरेदिति योजना—व्या.

[3] सहेतेत्यर्थः—स.

केशरोमनखश्मश्रुमलानि जटिलो दधत् ।
कमण्डल्वजिने दण्डवल्कलाग्निपरिच्छदान् ॥ २१ ॥
चरेद् वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ।
द्वावेकं वा यथाबुद्धिर्न विपद्येत कृच्छ्रतः ॥ २२ ॥
यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथवा ।
आन्विक्षिक्यां च विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥
आत्मन्यग्निं समारोप्य संन्यस्याहंममात्मताम् ।
कारणेषु न्यसेत् सम्यक् सङ्घातं तु यथार्हतः ॥ २४ ॥
खे खानि वायौ निःश्वासान् तेजस्यूष्माणमात्मवान् ।
अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥

---

अग्निपरिच्छदाः दर्भादयः ॥ २१ ॥ न विपद्येत क्लिष्टो न भवेत्[1] ॥ २२ ॥

अकल्पः असमर्थः । आन्विक्षिक्याम् आत्मविचारलक्षणायाम् अनशनम् अशनत्यागः । तत्राशक्तौ मासे गते पक्षे वा दिवसे वाऽश्नीयादित्यादिकमादिपदेन गृहीतम् । यथाऽऽह याज्ञवल्क्यः —'पक्षे गते वा प्राश्नीयान्मासे वाऽहनि चागते' इति[2] ॥ २३ ॥

म्रियमाणेन पुरुषेणाध्यात्मं कार्यकारणजातं यत् तत्रेदं कार्यमेतस्मिन् कारणे विलीयत इति ध्यानं कर्तव्यमित्यभिप्रायेणाह—**कारणेष्विति**। सङ्घातं कार्यजातम् । न्यासो ज्ञानपूर्वकं ध्यानम् । 'कार्यस्य कारणलयज्ञानमात्रं विलापनम्' इति वचनात् ॥ २४ ॥

यथार्हत इत्युक्तं विवृणोति—**खे खानीति**। खे आकाशे खानि शरीरावच्छिन्नाकाशानि । श्वासं शरीरवायुं बाह्यवायौ । शारीरमूष्माणं कारणतेजसि । आत्मवान् परमात्मज्ञानवान् । वशीकृतमना वा । श्लेष्मपूयासृक्कार्याणि अप्सु लीयन्त इति चिन्तयेत् । शेषं गन्धं क्षितौ । नन्वाकाशादेर्लाघवादीनामुत्पत्तेः कथमियतामेव लयश्चिन्त्यत इति तत्राह—**यथोद्भवमिति**। 'आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रं तथा बलम् । वायोस्तु प्रेरणं चेष्टा व्यूहनं सौक्ष्म्यमेव च । अग्नेस्तु दर्शनं शक्तिरौष्ण्यं[3] रूपप्रकाशकम् । रसेभ्यो रसनं शैत्यं स्नेहक्लेदनमार्दवम् । भूमेर्गन्धस्तथा घ्राणं गौरवं मूर्तिरेव च'

---

[1] मुनिर्वनस्थो बुद्धिः कष्टतो यथा न विपद्येत तथा द्वादशाब्दानष्टौ चतुरो द्वावेकं वा वने चरेदिति श्लोकद्वययोजना—व्या. [2] वनस्थो यदा व्याधिभिर्जरया च स्वक्रियायामग्निहोत्रेष्ट्यादिक्रियायाम् आन्वीक्षिक्यां ब्रह्मविद्यायां तदुपदेशे अकल्पोऽसमर्थस्तदा प्राणांस्त्यक्तुमनशनादिकं कुर्यात्—व्या. [3] वक्तिरौष्ण्यम्—स.

वाचमग्नौ [1]सवक्तव्यमिन्द्रे शिल्पं करावपि ।
पदानि गतिमिर्विष्णौ रत्योपस्थं प्रजापतौ ॥ २६ ॥
मृत्यौ[2] पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ।
दिक्षु श्रोत्रं सनादेन स्पर्शेनाध्यात्मनि त्वचम् ।
रूपाणि चक्षुषा राजन् ज्योतिष्यभिनिवेशयेत् ॥ २७ ॥
अप्सु प्रवेशयेद् जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेद् ।
मनो मनोरथैश्चन्द्रे बुद्धिं बोध्यैः कवौ परे ॥ २८ ॥
कर्माण्यध्यात्मना रुद्रे यदहंसंमताः क्रियाः ।
सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥ २९ ॥
अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ।
कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥ ३० ॥

---

इति वचनात् । उत्पत्त्यनुसारेण लयश्चिन्तनीय इत्यर्थः ॥ २५ ॥

इदानीं वागादीन्द्रियाणामग्न्यादिदेवताधीनत्वमपि चिन्तनीयमित्याह—**वाचमिति** । सवक्तव्यमिति क्रियाविशेषणम् । प्रजापतौ दक्षे । 'यथास्थानमित्यनेनाभिमानिनामभिमन्यमानानां तत्तदुत्पत्तिकारणमनुसृत्येत्युच्यते । सनादेन श्रोतव्येन सह । त्वचं त्वगिन्द्रियं स्पर्शेन सह, वायाविति शेषः । ज्योतिषि आदित्ये निवेशयेत् निविशतीति चिन्तयेत् ॥ २६-२७ ॥

जिह्वां, रसेनेति शेषः । परे कवौ बृहस्पतौ । उशनसोऽपि कविशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थं परे इति । अध्यात्मना अहङ्कारेण सह कर्माणि रुद्रे । तत्र हेतुः—**यदहमिति** । क्रिया अहंसंमताः अहङ्कारादुत्पन्नत्वेन संमता इति यत्, तस्मादिति शेषः । सत्त्वेन साधुपुण्यकर्मणा सह चित्तं क्षेत्रज्ञे हिरण्यगर्भे निवेश्य । एतल्लक्षणं विलयं स्मृत्वा वैकारिकनामानं हिरण्यगर्भं गुणैः सह क्षेत्रज्ञाख्ये परे परमात्मनि लक्ष्मीद्वारा लयमार्गं चिन्तयेत्[3] । 'चित्तं हिरण्यगर्भे तु विलाप्य परमात्मनि । क्षेत्रज्ञाख्ये लापयेच्च ततो नान्यत् स्मरेद् बुधः' इति चात्र मानम् ॥ २८-२९ ॥

इदानीमबादीनां लयप्रकारं निरूपयति—**अप्स्विति** । तच्च नभः । कूटस्थे वैकारिकतैजसतामसकूटरूपेऽहङ्कारतत्वे । महति महत्तत्वे । तत् महत्तत्वम् अव्यक्ते । तद् अव्यक्तम् अक्षरे हरौ (एवं)

---

[1] सवक्तव्यामित्यपि स पाठः । तदा वाचमित्यस्य विशेषणम् ।

[2] मित्रे—व्या म पाठः । मित्रे मित्रनामकसूर्ये । मृत्याविति पाठे मृत्युपदेन मित्र एव वाऽन्यो वा कश्चन देव इति ज्ञातव्यम्—व्या.  [3] हिरण्यगर्भस्य लक्ष्मीद्वारा परमात्मनि लयं चिन्तयेदित्यर्थः ।

इत्यक्षरतयाऽऽत्मानं चिन्मात्रमवशेषितम्
ज्ञात्वाऽद्वयोऽथ विरमेद् दग्धयोनिरिवानिलः ॥ ३१ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

**नारद उवाच —**

कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ।
ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥

---

विलयप्रकारं स्मरेत् । जडस्य स्वकारणैक्यम्, अभिमानिनो जीवस्य प्रवेशलक्षणम् । तत्तत्कार्यस्थहिरण्यगर्भस्योत्तररूपेणैक्यम् । हिरण्यगर्भस्थहरेरप्युत्तरोत्तररूपैकीकरणमिति लयभेदं तुशब्दो ज्ञापयति । इतिशब्दो लयसमाप्तिसूचकः । कूटस्थोऽक्षर उच्यत इति वचनाद् अक्षरनाम्न्यां चित्प्रकृतौ स्थित्वा अक्षरलक्षणनित्यत्वहेतुत्वादक्षरनामत्वेन स्थितम् आत्मानं परमात्मानं चिन्मात्रमवशेषितं सृष्ट्याद्यव्यापारोदासीनं ज्ञात्वा अद्वयः हरिव्यतिरिक्तवस्तुस्वातन्त्र्यस्मरणरहितोऽथ कृत्याद् विरमेदित्यन्वयः । कृत्याद् विरामोक्तिरत्र कथमित्याह—दग्धयोनिरिति । दग्धा योनिः इन्धनलक्षणा येन स तथा । यथाग्नेरिन्धनदहनात् परं कृत्यं नास्ति तथा श्रीनारायणोपासकस्य सविकासं तत्वज्ञानात् परं कृत्यं नेति भावः । 'न हरिं स्मरतः कृत्यं दग्धेन्धनहुताशवत्' इति वचनात्[1] ॥ ३०-३१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

क्रमप्राप्तं यतिधर्मं निरूपयति—कल्प इति । एवमुक्तं कृच्छ्रं सोढुं कल्पः[2] । अप्यर्थस्तुशब्दः । तर्हि परिव्रज्य संन्यस्य महीं चरेदित्यन्वयः । देहमात्रावशेषित इत्यनेन प्रव्रजनं विशिनष्टि । 'अधीतवेदो जपकृत् पुत्राद्यानन्ददोऽग्निमान् । शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा' इति नियमं

---

[1] अक्षरतया अक्षरलक्षणलयरहिततया आत्मानं परमात्मानम्, जडस्यान्तर्लयाच्चिन्मात्रमवशेषितं ज्ञात्वा अद्वयो भगवतोऽन्यस्मृतिवर्जितो दग्धयोनिः दग्धारणिरनल इव कृत्यान्तराभावाद् विरमेत् उपरतो भवेदिति योजना —व्या.

[2] पूर्वमकल्पस्य (वनस्थस्य) आत्मारोपणेनानशनादिना विराम उक्तः । इदानीं कल्पस्तु वनस्थो विरक्तश्चेत् प्रव्रजेदिति संन्यासं विधत्ते । वस्तुतो वैराग्यमात्रं सर्वाश्रमिणोऽपि संन्यासे निमित्तम्—व्या.

विभृयाद् यद्यसौ वासः कौपीनाच्छादनं परम् ।
त्यक्तं न लिङ्गदण्डाभ्यामन्यत् किञ्चिदनापदि ॥ २ ॥

---

तुशब्देन वारयति । 'यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति विशेषविधानाद् ब्रह्मचारिणोऽपि तुर्याश्रमग्रहणोपपत्तेः । अत एव कल्प इत्युक्तम् । कामक्रोधादिसहजशत्रुजयसमर्थ इत्यर्थः । 'उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् । वेदमध्यापयेत् पश्चात् शौचाचारांश्च शिक्षयेत्' इति वचनाद् ब्रह्मचारिणोऽध्ययनप्रारम्भेणाधीतवेदत्वं युज्यत इति वा[1] । संन्यासाश्रमः चतुर्धा भिद्यते । कुटीचको बहूदको हंसः परमहंस इति । तत्र परमहंसधर्मः कथ्यत इत्यर्थद्योतको वा तुशब्दः । निरपेक्षः अलोलुपः ॥ १ ॥

देहमात्रावशेषित इत्यस्यापवादमाह- विभृयादिति । यद्यसौ भिक्षुरप्सु त्यक्तं वासः परं पश्चात् प्रतिनिधिलक्षणं बिभृयात् धर्तुमिच्छेत् तर्हि कौपीनलक्षणं आच्छादनं बिभृयात् । अथवा कौपीनं शीतातपनिवारकमेकमाच्छादनं च बिभृयात् । परं न बिभृयादित्यर्थः । 'शीतातपनिवारार्थमेकमाच्छादनं यतेः । कौपीनात् परमित्याहुरेके नान्यद् विना वपुः' इति वचनात् । कौपीनाच्छादनं चेत्येकवद्भावः[2] । नन्वयं यतिरिति केन ज्ञातुं शक्यते ? तत्राह । न लिङ्गेति । लिङ्गदण्डाभ्यां विना किञ्चित् न बिभृयात् । लिङ्गं चक्रशङ्खादिमुद्राधारणम् । कमण्डल्वादिकं वा । 'सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः' इति वचनात् । वाक्कायचेतसां यमनं त्रिदण्डित्वम् । लिङ्गदण्डाभ्यामिति[3] विशेषणादेक एव तु लक्षणो[4] दण्डोऽन्यथा परमहंसत्वं न स्यात् । दण्डो वाग्देहचेतसामिति वक्ष्यति[5] ॥२॥

---

[1] अतोऽधीतवेदत्वाद् वटोरपि पारमहंस्ययोग्यता संभवतीति भावः । [2] कौपीनं चाच्छादनं चेत्येकवद्भाव इति स्यात् । [3] अन्यथा लिङ्गदण्डैरित्यवक्ष्यत् । [4] लक्षण इत्यस्यान्वयो न ज्ञायते ।

[5] यदीत्यनेन वस्तुतो दिग्वासस्त्वमेव ध्वनितम् । यदि वासो बिभृयाद् गुह्यगूहनार्थं लोकप्रार्थनया वा वासो धर्तुमिच्छेत् कौपीनाच्छादनं परं वासो बिभृयादिति योजना । कौपीनं चाच्छादनं च तयोः समाहारः । सर्वोऽपि द्वन्द्वो विभाषयैकवद् भवतीत्युक्तेः । न तु कौपीनरूपाच्छादनम् । ........ कौपीनपदेनैवाच्छादनलाभे तदन्यनितम्बाच्छादनमेवाच्छादनपदेन ग्राह्यम् । अत एव मध्वविजये—शुभशुद्धनितम्बबिम्बराजन्नवकौशेयविशेषबाह्यवस्त्रम् इति कौपीनातिरिक्तं नितम्बाच्छादनमुक्तम् । परम् उत्तमं शीतातपादिनिवारणदक्षमन्यदाच्छादनम् । यथोक्तं मध्वविजये-मृदुसूक्ष्मघनारुणाविकाच्छप्रकटप्रावरणेन भासमानम् । अतिनूतनतिग्मभानुभासां निकरेणेव सुवर्णसानुमन्तम्-इति । न च 'शीतातपनिवारार्थमेकमाच्छादनं यतेः । कौपीनात् परमित्याहुरेकेनान्यद् विना वपुः' इति वचनविरोधः । तत्रैकशब्दस्य शीतातपादिनिवारणदक्षमुख्यपरत्वात् । अन्यथा एकत्वपरत्वे कौपीनेन द्वित्वप्राप्त्या विरोधात् । नितम्बच्छादनप्रापकमध्वविजयविरोधाच्च । न चेदमेव शीतातपनिवारार्थं नितम्बाच्छादनमपीति वाच्यम् । बहिर्वाससो नाभेरधो निषिद्धत्वात् । मध्वविजये नितम्बाच्छादनस्य कौशेयत्वस्य वातातपनिवारार्थस्याविकत्वस्य चोक्तेश्च । किञ्चैकत्वसंख्यार्थकत्वे करवस्त्रमपि स्यात् । तथा च मध्वविजयविरोधः । करगपटपिण्डार्थमतिष्ठदिति तत्रोक्तेः । तस्मादेवमेव ज्ञेयम्—व्या.

एक एव[1] चरेद् भिक्षुरात्मारामोऽनपाश्रयः ।
सर्वभूतसुहृच्छान्तो नारायणपरायणः ॥ ३ ॥

पश्येदात्मन्यदो विश्वं परे सदसतोऽद्वये ।
आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥ ४ ॥

सुप्तप्रबोधयोः सन्धावात्मनो गतिमात्मदृक् ।
पश्यन् बन्धं च मोक्षं च मायामात्रं न वस्तुतः ॥ ५ ॥

नाभिनन्देद् ध्रुवं मृत्युमध्रुवं वा स्वजीवितम् ।
कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥

---

वी. अनपाश्रयो ग्रामाद्यावसविधुरः । यथाऽऽह याज्ञवल्क्यः—'एकारामः[2] परिव्रज्य भैक्षार्थं ग्राममाश्रयेत् । अप्रमत्तश्चरेद् भैक्ष्यं सायाह्नेऽनुपलक्षितः' इति वचनात् ॥ ३ ॥

नारायणपरत्वं दर्शयति—पश्येदिति । अदो विश्वम् आत्मनि पश्येत्, तदाधारत्वेन स्थितमिति शेषः । आत्मनीति जीवः किं न स्यादिति तत्राह—पर इति । सदसतः परे । उत्कर्षवाचित्वेन विकल्पात् सर्वनामसंज्ञा नास्ति[3] । जीवस्य संसारित्वेनानुत्कृष्टत्वात् । नैतादृशोऽन्योऽस्तीत्याह—अद्वय इति । नैतावता पूर्यत इत्याह—आत्मानं चेति । सर्वत्र सदसन्मये जगति अवसित[4]मात्मानं परं ब्रह्म पश्येत् । ईदृशं नाम चिन्तनम् ॥ ४ ॥

सुप्तप्रबोधयोः सुप्तजाग्रतोः । सन्धौ अहर्णोदयकाले शयनप्रारम्भकाले च । आत्मनः स्वस्य गतिं 'सता सौम्य तदा सम्पन्नो भवति' 'अतः प्रबोधोऽस्मात्' इत्यादिप्रमाणबलात् परमात्माधीनत्वलक्षणां स्थितिं हरेश्च स्वातन्त्र्यलक्षणां पश्यन् बन्धं मोक्षं मायामात्रं हरेरिच्छया निर्मितं ज्ञातं पश्यन् वस्तुतः स्वातन्त्र्येण न, अन्याधीनत्वेन पश्येत्[5] ॥ ५ ॥

मृत्युं ध्रुवमिति नाभिनन्देत् । स्वजीवितं वाऽध्रुवमिति । तर्हि कथं निश्चय इति तत्राह—कालमिति । भूतानां प्रभवाप्ययं कालाख्यभगवदधीनं प्रतीक्षेत । किं बहुना ? सर्वं भगवदधीनमिति पश्येत् ॥ ६ ॥

---

[1] एक एव पत्न्यादिरहित एव । तेन शिष्यपरिवृतत्वेऽपि न दोषः—व्या.

[2] 'एको नैकः' इत्युक्तेर्विष्ण्वाश्रय इत्यर्थः । [3] अन्यथा परस्मिन्निति स्यात् । [4] अवस्थितमिति स्यात् ।

[5] 'मायामात्रं च वस्तुनः' इति व्या. पाठः । बन्धं मोक्षं च वस्तुनः स्वतन्त्रवस्तुनो भगवतः सकाशात् स्थितं मायामात्रं भगवदिच्छया निर्मितं ज्ञातं च पश्यन् नाभिनन्देदिति योजना—व्या.

नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादान् त्यजेत् तर्कान् पक्षं कञ्चिन्न संश्रयेत् ॥ ७ ॥
न शिष्याननुबध्नीत ग्रन्थान् नैवाभ्यसेद् बहून् ।
न व्याख्यामुपजीवेत नारम्भानारभेत् क्वचित् ॥ ८ ॥
न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ।
शान्तस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥
अव्यक्तलिङ्गो व्यक्तार्थो मनीष्युन्मत्तबालवत् ।
कविर्मूकवदात्मानमदृश्यो दर्शयेन्नृणाम् ॥ १० ॥

---

जीविकां वेतनादिलक्षणाम् । वेदवादमतीत्य तर्कान् वैशेषिकादिशास्त्रनिष्ठितान् । अप्रयोजकं पक्षं सिद्धान्तम् । 'नाप्रयोजनपक्षी स्यान्न वृथा शिष्यबन्धकृत् । न चोदासीनशास्त्राणि न विरुद्धानि वाऽभ्यसेत् । न व्याख्ययोपजीवी च न निषिद्धान् समाचरेत् । एवंभूतो यतिर्याति तदेकशरणो हरिम्' वेत् इति निर्णीतमानम् । बहून् ग्रन्थान् वैष्णवाभासान् मोक्षविरुद्धान् वात्स्यायनादीन् ज्योतिःशास्त्रादीन् । व्याख्यायोपजीवनं न कुर्यात् । आरम्भान् निषिद्धान् कृष्यादीन् ॥ ७-८ ॥

कृष्यादिनोत्पन्नद्रव्येण दानादिधर्मसम्पादनोपपत्तेः कथं नारम्भानारभेदित्युच्यत इति तत्राह —**न यतेरिति** । प्रायो यतेराश्रमो धर्महेतुर्नभवति[1] । किन्तु निरन्तरोपासनया ज्ञानहेतुः । ज्ञानाधिकारे प्रवृत्तस्य कर्माधिकारप्रवृत्तिरधःपातहेतुः स्यात् । ईश्वराज्ञोल्लङ्घनदोषापातात् । समे ब्रह्मणि चित्तं सततस्मरणसमर्थम् अन्तःकरणं यस्य स तथा तस्य । एवंविधस्य यतेराश्रमलक्षणं दण्डादि साधारणं न चावश्यकमित्याह— **बिभृयादिति** । यदाह याज्ञवल्क्यः—'नाश्रमः कारणं धर्मे क्रियमाणो भवेद्धि सः । अतो यदात्मनः पथ्यं परस्य न, तदाचरेत्[2]' इति ॥ ९ ॥

'बाह्यलिङ्गाभावेऽप्यान्तरं लिङ्गमस्तीत्याह — **अव्यक्तेति** । अव्यक्तं जनेनाज्ञातं मानसं गुप्तं[3] लिङ्गं यस्य स तथा[4] । विद्यातपआदिभिरप्रकटितस्वरूपो वा । तर्ह्यस्य किं वक्तव्यम् ? अत्राह—

---

[1] यतेराश्रमः प्रायोऽन्नदानादिधर्महेतुर्न स्यात् । पूजनेन स्वपरिवाराणां मिष्टमन्नं दीयते चेत् तदा बहुजनान्नदानधर्मलाभो भवतीति प्राय इत्युक्तम् । (परिवारस्य) यत्नानायासेन भरणं तदा बिभृयात्, नो चेत् त्यजेत्—व्या. प्राय इति भिक्षया गृह्णतो द्रविणं रक्षयतस्तेन जनान् महासंस्थानिकान् व्यावर्तयति । उपासनायां धर्मे चाधिकारः केषाञ्चित्, उपासनायामेवान्येषामिति मन्तव्यम् । एवंविधो यतिर्दण्डादिकं बिभृयादुत वा त्यजेत्—स.

[2] आत्मनः पथ्यमाचरेन् न परस्यैव पथ्यमित्यन्वयः—व्या.　　[3] कलुषम्—व.

[4] अव्यक्तं बाह्यलिङ्गं यस्य सः—व्या.

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥

तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि[1] ।
रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥

ददर्श लोकान् विचरन् लोकतत्त्वविवित्सया ।
वृतोऽमात्यैः कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥

कर्मणाऽऽकृतिभिर्वाचा लिङ्गैर्वर्णाश्रमादिभिः ।
नाविन्दत जनोऽयं वै सोऽसाविति न चेति च ॥ १४ ॥

तं नत्वाऽभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन् ।
विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥

प्रह्लाद उवाच —

बिभर्षि कायं पीवानं सोद्यमो भोगवान् यथा ।
वित्तं नैवाद्य भवतो भोगो वित्तवतामिह ॥ १६ ॥

---

व्यक्तार्थ इति । अपरोक्षीकृतभगवत्स्वरूपलक्षणपुरुषार्थः । अनेन दण्डादिलिङ्गधारणमेवंविधस्य नावश्यकम्, अन्यस्य नेत्युक्तं भवति । मनीषी निरन्तरमननशीलः । अव्यक्तस्वरूपं दर्शयतीति अदृश्यः । अदृश्यः[2] प्राकृतजनाज्ञेयः । कविः अतिक्रान्तदर्शी ॥ १० ॥

अत्र अपरोक्षज्ञानियत्याचारे । इतिहासशब्दार्थमाह—पुरातनमिति । आजगरस्य अजगरव्रतधारिणः ॥ ११ ॥

सह्यसानुनि सह्याख्यपर्वततटे । कावेर्यां कावेर्युत्पत्तिक्षेत्रे । तनूदेशैः शरीरावयवैः । विवित्सया वेदितुमिच्छया । स एव देवदत्तः असौ, न वा इति नाविन्दत[3] न ज्ञातवान् ॥ १२–१४ ॥

भोगवान् सम्पन्नः । ननु परिणममानस्य देहस्य पीनत्वविशेषः परिणामोऽपि कस्माचित् स्यात्, मदिरासेव्यस्येव, किमत्र चोद्यम् ? अत्राह—वित्तमिति । सत्यम् । कृष्याद्युद्योगवतो देहिनो

---

[1] सिंहसानुनि सिंहस्य सिंहाद्रेः सानुनि मार्गे । अन्यथा भूभुजनिभलनासंभव इति भावः । सानु शृङ्गे बुधे मार्गे इति विश्वः—स.

[2] संन्यासी अदृश्यो भवेत् । दृश्यश्चेदपि लौकिकव्यवहर्तॄणामुन्मत्तवत्, स्त्रीणां बालवत्, शतगोष्ठीवक्तॄणां मूकवत्, आत्मानं दर्शयेत्—व्या.

[3] नवेति च इति वि पाठः स्यात् । कर्मादिना सोऽसाविति वा नेति वा जनो नाविन्दतेति योजना—व्या.

भोगिनां खलु देहोऽयं पीवा भवति नान्यथा ॥ १७ ॥

न ते शयानस्य निरुद्यमस्य ब्रह्मन्निहार्थो यत एव भोगाः ।
अभोगिनोऽयं तव विप्र देहः पीवा यतस्तद् वद नः क्षमं चेत् ॥१८॥

कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ।
लोकस्य कुर्वतः कर्म शेषे न द्वेक्षि नौषि वा ॥ १९ ॥

नारद उवाच —

स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ।
स्मयमानस्तमभ्याह तद्वागमृतयन्त्रितः ॥ २० ॥

ब्राह्मण उवाच —

वेदेदमसुरश्रेष्ठ भवान् नन्वार्यसम्मतः ।
ईहोपरमयोर्नृणां पदमध्यात्मचक्षुषा ॥ २१ ॥

---

श्रीह्यादिवित्तं भवति । इह लोके तद्भुतां भोगः खलु । भोगिनामयं देहः पीनो भवति । हेत्वन्तरं नास्तीत्याह — **नान्यथेति** ॥ १६–१७ ॥

प्रकृतेऽपि तथा स्यादिति तत्राह — **न त इति** । अर्थो वित्तम् । यतो वित्तात् । पीवेति यत् तस्माद् बत विस्मयो जायते[1] । लोके निमित्तान्तराभावे सति पीनत्वं भोगित्वेन दृष्टम् । अत्र भोगित्वं न दृश्यते । पीनत्वं तु दृश्यते । तस्मिन् निमित्तान्तरमस्ति । तदस्माकं श्रोतुं क्षमं चेद् वद इत्यन्वयः ॥१८॥

इतोऽपि निमित्तान्तरेण भाव्यम् । अन्यथा कवित्वादयो भोगिगुणा न स्युरित्याह — **कविरिति** । 'तयैतर्हि वेदाननुभवसि । अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति श्रुतेः । 'यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति । अक्रुष्टो परिक्रुष्टश्च समस्तस्य च तस्य च' इति श्रुतेः (?) सर्वस्य समः । न द्वेक्षि न द्वेषं करोषि । नौषि स्तुतिं करोषि । अनेन समत्वं विवृतम्[2] ॥ १९ ॥

इतरत्र विरक्त्या भक्त्या श्रीनारायणचरणारविन्दस्मरणमकरन्दपानमेव पीनत्वे निमित्तमिति परिहारमभिप्रेत्य प्रह्लादं प्रति ब्रूत इत्याह — **नारद इति** । ज्ञानिष्वेको भवानिदं वेदेत्यन्वयः । इदमिति

---

[1] अभोगिनोऽयं बत विप्र देह इति वि पाठः स्यात् ।

[2] मनआदिकरणपाटवस्य भोगसाध्यत्वाद् भोगाभावेऽपि पाटवमस्ति तत्र कारणं किमित्याशयः । कविरिति मनःपाटवम् । कल्प इति देहपाटवम् । अतिनिपुणदृगिति नेत्रपाटवम् । चित्रप्रियकथ इति वाक्पाटवम् । सम इत्यनेन च साम्यं ज्ञानिलक्षणं सूचितम् । तस्योपपादनं कुर्वतो लोकस्य यत् कर्म तन्न द्वेक्षि न नौषि वेति — व्या.

यस्य नारायणो देवो भगवान् हृद्गतः सदा ।
भक्त्या केवलया श्लिष्टो धुनोति ध्वान्तमर्कवत् ॥ २२ ॥
अथापि ब्रूमहे प्रश्नान् तव राजन् यथाश्रुतम् ।
सम्भाषणीयो हि भवानात्मनः शुद्धिमिच्छता ॥ २३ ॥
तृष्णया भववाहिन्या ग्राम्यकामैरपूर्णया ।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २४ ॥

---

किम् ? केन साधनेन वेद ? अत्राह—वेदेति । भवान् अध्यात्मचक्षुषा परमात्मानुग्रहोत्पन्नज्ञानेन नृणां ईहोपरमयोः प्रवृत्तिनिवृत्तिलक्षणयोर्मार्गयोः, पदं निश्चितं विषयस्थानं वेदेति शेषः[1] ॥ २१ ॥

देहिनामज्ञानसम्भवात्, तेष्वेकत्वात्, ममापि तद्विषयं ज्ञानं नास्तीति किं न स्यादित्याशङ्क्य सत्यं विशेषोऽस्ति तवेत्याह—यस्येति । हृद्गतत्वं सामान्यमिति मत्वा श्लिष्ट इत्युक्तम् । केवलया फलानाकाङ्क्षया । ध्वान्तम् अज्ञानलक्षणम् । अन्यत्र अन्धकारम् । अज्ञानं तत्वाप्रतिभा कारणत्वेन दृष्टं यतस्तव नास्ति तस्माद् भवान् जानातीत्यर्थः ॥ २२ ॥

यद्यपि वक्तव्यांशो नास्ति । अथापि । इदमप्राक्षीदिति एकविषयः प्रश्नः कृतः । परिहारे प्रश्नानित्यनेकविषयः । कथमयं सङ्गच्छत इति चेत् । निरुद्यमस्य वित्तं कथम् ? निर्वित्तस्य भोगः कथम् ? अभोगिनः पीनत्वं कथम् ? इति प्रश्नानामपि बहुत्वात् । इदमित्यस्य व्यत्ययेन जातिविषयत्वेन चोपपत्तेः । तव प्रश्नान् ब्रूमह इत्यनेन तदनुवादः क्रियते उत परिहारः । नाद्यः । अदर्शनात् । द्वितीयोऽपि तद्वाचकपदाभावादनुपपन्नः । तव प्रश्नानुद्दिश्य परिहारान् ब्रूमह इति पक्षोऽपि गौरवादयुक्त इति चेदुच्यते । 'ब्रूञ् व्यक्तायां वाचि' इति धातोः, व्यक्तिर्नाम स्पष्टीकरणम् । तस्य परिहारार्थोपपत्तेः । यथाश्रुतमित्यनेनापि स्पष्टीकरणप्रतीतेरिति । ननु यदज्ञातज्ञापकं तदेवोपादेयम् । न चेदं तथा । प्रह्लादस्य भगवदनुग्रहेण ज्ञाताशेषार्थत्वात् । अतः कस्मै स्पष्टीक्रियत इत्याशङ्क्य तदज्ञातमस्माभिर्निबोध्यते । किन्तु महत्सम्भाषणलक्षणार्थसेवया[2]ऽन्तःकरणशुद्धिः स्यादिति मत्वा स्पष्टीक्रियत इत्याह——सम्भाषणीय इति । अनेन ब्रूमहे इत्यात्मनेपदार्थो विवृत इति ज्ञायते[3] ॥ २३ ॥

निवृत्तिमार्ग एव संसारोन्मूलनहेतुरित्युक्तम् । प्रवृत्तिमार्गस्तु नानादुःखहेतुत्वेन हेयः प्रेक्षावतेत्येतत् स्वानुभवसिद्धमित्याह—तृष्णयेति । भववाहिन्या नदीवद् वर्धमानया संसारापादिकया वा । इतरनदीनामृतुभेदेन पूर्त्यपूर्ती स्याताम्, नास्याः कदाऽपि पूर्तिरित्याह—ग्राम्येति ॥ २४ ॥

---

[1] शेषो नापेक्षित इति भाति । [2] संभाषणलक्षणार्थसेवयेति स्वरसम् । [3] वचनफलस्यान्तःकरणशुद्धेरात्मगामित्वमिति ।

यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ।
स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ २५ ॥

अत्रापि दम्पतीनां च सुखायान्यापनुत्तये ।
कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २६ ॥

सुखमस्यात्मनो रूपं सर्वेहोपरतेर्हि यत् ।
मनःसंस्पर्शजान् दृष्ट्वा भोगान् शस्तान् न संविशेत् ॥ २७ ॥

---

यदृच्छया दैवेच्छया । लोकं शरीरम्[1] । 'अस्माल्लोकात् प्रेत्य' इति श्रुतेः । न केवलं स्वर्गादेर्द्वारम् । किन्तु तिर्यगादिजन्मनोऽपि कारणमित्याह—तिरश्चामिति । अस्य मनुष्यशरीरस्यापि, द्वारमिति शेषः ॥ २५ ॥

कृष्युद्योगवतो वित्तं स्यादित्यादिना यदुक्तं सुखं स्यादिति तत् परिहरति—अत्रापीति । अत्रापि मनुष्यशरीरेऽपि । दम्पतीनां विपर्ययं दुःखं दृष्ट्वा निवृत्तिमार्गमाश्रितोऽस्मीत्यन्वयः । अन्यापनुत्तये सुखादन्यस्य दुःखस्य निरासाय । 'सुखाय कर्माणि करोति लोको न तैः सुखं नान्यदुपारमं वा' इति स्वोक्तेः ॥ २६ ॥

कर्मणो निवृत्तस्य दुःखस्य निरासाय सुखावाप्तौ (च) किमन्तरङ्गमित्याशङ्क्य यदि सुखं स्वरूपाद् भिन्नं तर्हि तत्प्राप्तौ यत्नः कर्तव्यः; न चैवम्, स्वरूपत्वात् सुखस्य, तद्व्यक्तौ स्वरूपाच्छादकसर्वनिषिद्धकर्मनिवृत्त्याऽऽविर्भूतभगवत्प्रसाद[2] एव मुख्यनिमित्तमित्याह—सुखमिति । 'बलमानन्द ओजश्च सहो ज्ञानमनाकुलम् । स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद् विभोः' इत्यादि हिशब्देन दर्शयति । अस्य आत्मनो जीवस्य स्वरूपभूतं यत् सुखं तत् सर्वेहोपरतेः प्रसन्नात् । सर्वा पूर्णा ईहा चेष्टा यस्य सः सर्वेहः । 'को ह्येवान्यात्' इति श्रुतेः । उपा अधिका अत्युद्रिक्ता रतिः आनन्दो यस्य स उपरतिः । 'यदेष आकाश आनन्दो न स्यात्' इति श्रुतेः । सर्वेहश्च (असौ) उपरतिश्च सर्वेहोपरतिः । तस्मात् हरेः, आविर्भवतीति शेषः । 'उपोऽधिके' इति सूत्रात् । ततः किम् ? तत्राह—मनःसंस्पर्शजानिति । मनोऽधिष्ठितेन्द्रियाणां विषयैः संस्पर्शात् संबन्धाज्जातान् शस्तान् स्वर्गादिभोगान् न संविशेत् न सेवेत । बुद्धिमानिति शेषः ॥ २७ ॥

---

[1] लोकं ब्राह्मणमानुषदेहम्—व्या. [2] अस्पष्टमिदम् ।

इत्येतदात्मनः स्वार्थं सन्तं विस्मृत्य वै पुमान् ।
विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २८ ॥

जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ।
मृगतृष्णामुपाधावेत् तथाऽन्यत्रार्थदृक् स्वतः ॥ २९ ॥

देहादिभिर्दैवतन्त्रैरात्मनः सुखमीहतः ।
दुःखात्ययं वाऽनीशस्य क्रिया मोघाः कृताः कृताः ॥ ३० ॥

आध्यात्मिकादिभिर्दुःखैरविरक्तस्य कर्हिचित् ।
मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३१ ॥

---

एतदङ्गीकारविरुद्धस्य[1] बाधकमाह—इतीति । आत्मनः इति एतदुक्तम् इति एवम्, तव लिङ्गमिति शेषः । इतिशब्दः प्रकारवचनः । तत्र पुमान् सन्तं सनातनं स्वार्थं पुरुषार्थं विस्मृत्य असति भगवत्प्रसादेन निवर्तमाने द्वैते अन्यथाज्ञाने विषये विचित्रां सुरनरादिनानायोनिविषयां घोरां संसृतिमाप्नोति वै इत्यन्वयः[2] ॥ २८ ॥

स्वतृष्णायाः अनिवृत्तकत्वात्[3] संसारस्य घोरत्वमितीममर्थं सदृष्टान्तमाह—**जलमिति** । तदुद्भवैः जलोद्भवैः शैवालादिभिः । अज्ञो ज्ञानरहितोऽजितेन्द्रियः । मृगतृष्णां[4] सूर्यमरीचिसंपृक्तसलिलं यथोपधावेत् तथा स्वतः स्वतन्त्राद्धरेः अन्यत्र अर्थदृक् देवदत्तादौ पुरुषार्थदर्शी ॥ २९ ॥

ननु पुरुषार्थसाधनत्वेन जातैर्देहादिभिरनुष्ठिताः क्रियाः सुखादिहेतवः स्युरित्याशङ्क्य भगवदर्पणबुद्धिचिकित्सारहिता व्यर्था इत्याह—**देहादिभिरिति** । या याः कृताः कृताः क्रियाः तास्ताः सर्वा अपि मोघाः । तत्र हेतुगर्भं विशेषणम्—**अनीशस्य** । ईशविरुद्धस्य ॥ ३० ॥

इतोऽपि वित्तापादने न प्रयतनीयम् । आध्यात्मादिक्लेशग्राहगृहीतत्वेन डुण्डुभग्रस्तमण्डूकवत् समृद्धशारीरबलाभावात् । कृतान्तपाशबद्धगलस्य पुरुषस्य पुरतो निहितक्षीरासववत् व्यर्थं वित्तमित्याह—**आध्यात्मिकादिभिरिति** । कामैः शब्दादिविषयैः ॥ ३१ ॥

---

[1] पुरुषस्येति शेषः । [2] तर्हि लोकः कुतः प्रवर्तत इत्यत आह–इतीति । इत्येतत्पूर्वमुक्तं सन्तं समीचीनं स्वार्थं स्वप्रयोजनं शास्त्रसिद्धं विस्मृत्य असति असमीचीने द्वैते दम्पत्याश्रमे स्थितः पुमान् विचित्रां घोरां संसृतिमाप्नोति वै इति योजना—व्या. असति अमङ्गले द्वैतेऽन्यथाज्ञाने सति घोरां सोढुमशक्यां विचित्रां निर्मायां वास्तवीं संसृतिमाप्नोति । (चित्रा मायेति भानुदीक्षितः)—स.

[3] अनिवृत्तिकत्वादित्यर्थः । [4] जलभ्रान्तिविषयीभूतां मरुमरीचिकाम्—व्या.

पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ।
भयादलब्धनिद्राणां सर्वतोऽपि विशङ्किनाम् ॥ ३२ ॥

राजतश्चोरतः शत्रोः स्वजनात् पशुपक्षितः ।
अर्थिभ्यः कालतः स्वस्मात्[1] नित्यं प्राणार्थवद्भयम् ॥ ३३ ॥

शोकमोहभयक्रोधा रागक्लैब्य[2]श्रमादयः ।
यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३४ ॥

मधुकारमहासर्पौ[3] लोकेऽस्मिन् नो गुरूत्तमौ ।
वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३५ ॥

विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ।
कृच्छ्राप्तं मधु तद्वित्तं हत्वाऽप्यन्यो हरेत् पतिम् ॥ ३६ ॥

अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ।
नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३७ ॥

---

कस्यचिददृष्टबलादुपार्जितवित्तस्य समृद्धशारीरबलस्यापि लोभाभिभूतमनस्कत्वेनापि भोगो दुर्घट इत्याह—**पश्यामीति**। प्राणार्थवद्भयं अर्थवतः प्राणभयं भवति । प्राणवतोऽर्थवतश्चेति वा[4] ॥३३॥

ननु सर्वानर्थशमने किं कारणमित्याशङ्क्य स्पृहा सर्वापदो निदानम् । अतः तत्त्याग एव प्रथमतः कारणमित्याह—**शोकेति** । या स्पृहा मूलं येषां ते तथा । प्राणेऽर्थे च स्पृहाम् । वैष्णवसिद्धान्ते तद्विरोधिनो जनात् प्राणसङ्कटे प्राप्ते प्राणरक्षणे स्पृहाऽपि न कार्या । किमुतार्थे इति प्रदर्शनाय प्राणग्रहणम् ॥ ३४ ॥

वित्तवतः प्राणभयम्, वित्तस्पृहया शोकादिकं स्यात्, इत्याद्युक्तमर्थं मधुकराजगरदृष्टान्तेन बोधयति—**मधुकरेति** । गुरूत्तमाद् या शिक्षा साऽऽभ्यामेवाप्तेति गुरूत्तमावित्यूचे । यथा च तं मधुकृतं हत्वाऽन्यो मधु हरति तथा वित्तापादकं (वित्तपतिं) हत्वा कृच्छ्रादर्जितं राजाद्यन्यतमो हरेत् । मधुकृत्स्थितिं दृष्ट्वा सर्वकामेभ्यो विरागः शिक्षितः ॥ ३५–३६ ॥

उदरपोषणप्रयत्नहीनः अनीहः । नो चेद् यदृच्छयाऽप्राप्तं चेत् । महाहिः अजगरः । भूरि

---

[1] स्थापितस्थानविस्मरणादिना—स.    [2] क्लैब्यमसामर्थ्यम्—व्या. । क्लैब्यं विह्वलता द्वेषेति पाठेऽपि तोष:—स.

[3] मधुकारमहासर्पौ—व्या. स.    [4] प्राणा इव अर्था येषां सन्ति ते प्राणार्थवन्तस्तेषां भयं राजादितः पश्यामीत्यन्वयः—स.

क्वचिदल्पं क्वचिद् भूरि भुङ्क्तेऽन्नं साध्वसाधु वा ।
क्वचिद् भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३८ ॥

श्रद्धयोपहृतं क्वापि कदाचिन्मानवर्जितम् ।
भुङ्क्ते भुक्त्वाऽथ कस्मिंश्चिद् दिवा नक्तं यदृच्छया ॥ ३९ ॥

क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ।
वसेऽन्यदपि सम्प्राप्तं दिष्टभुक् तुष्टधीरहम् ॥ ४० ॥

क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ।
क्वचित् प्रासादपर्यङ्के कशिपौ वा परेच्छया ॥ ४१ ॥

क्वचित् स्नातोऽनुलिप्ताङ्गः सुवासाः स्रग्व्यलङ्कृतः ।
रथेभाश्वैश्चरन् क्वापि दिग्वासा ग्रहवत् क्वचित् ॥ ४२ ॥

नाहं निन्दे च न स्तौमि स्वभावविषमं जनम् ।
एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४३ ॥

विकल्पं जुहुयाच्चित्ते तन्मनस्यर्थविभ्रमे ।
मनो वैकारिके हुत्वा मायायां वै जुहोत्यमुम् ॥ ४४ ॥

---

गुणोपेतम् । कस्मिंश्चिद् दिवा अह्न्येवाभुक्त्वा नक्तं भुङ्क्ते । कस्मिंश्चिद् दिने नक्तमभुक्त्वाऽह्नि भुङ्क्ते ॥ ३७-३९ ॥

क्षौमं दुकूलमित्यादिकमेकस्मिन् जन्मनि बहुजन्मनि चेति यथायोग्यमङ्गीकर्तव्यम् । देवलब्धेन भुङ्क्त इति दिष्टभुक् । क्षौमाद्याच्छादनं गजादिभिश्चरणं प्रासादादिशयनं क्षत्रजन्मनि । भूपृष्ठे शयनं च पश्वादिजन्मनि । भस्मादौ शयनं श्वानादिजन्मनि बाल्ये च । अजिनाद्याच्छादनं ऋष्यादिजन्मनि जन्मान्तरे वा ॥ ४०–४१ ॥ दिग्वासाः दिगम्बरः ॥ ४२ ॥

सत्वादिगुणस्वभावेन विषमं सात्त्विकराजसतामसभेदभिन्नम् । 'सर्वेभ्योऽभयं मत्तः' इति यतिधर्मत्वाद् भूतानां भद्रमेवाशासे । तत्रापि भगवत्स्वामित्वं न विस्मरामीत्याह— उतेति । आशास इत्यनुवर्तते । 'जगत एक एव स्वामी इति भावम् ऐकात्म्यम् उताशासे । कस्मिन् विषये ? महात्मनि । त्वम भगवद्विषय इत्यर्थः ॥ ४३ ॥

तुर्याश्रमस्थेन विहितोपासनानन्तरमिदं च कर्तव्यम्, ब्रह्मप्राप्तिमार्गत्वादित्याह— **विकल्पमिति** । विकल्पं जगत् । चित्ते मनोवृत्त्यभिमानिनि जुहुयात् न्यसेत् । जगत् चिदाख्याभ्यधीनमिति चिन्तयेत्

आत्मानुभूतौ तां मायां जुहुयात् सत्यदृङ् मुनिः ।
ततो निरीहो विरमेत् स्वानुभूत्याऽऽत्मनि स्थितः ॥ ४५ ॥
स्वात्मवृत्तं मयेत्थं ते सुगुप्तमनुवर्णितम् ।
व्यपेतं लोकशास्त्राभ्यां भवान् हि भगवत्प्रियः ॥ ४६ ॥

नारद उवाच —

धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ।
पूजयित्वा ततः प्रीत आमन्त्र्य प्रययौ गृहान् ॥ ४७ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे चतुर्दशोऽध्यायः ।

---

चित्तम् अग्निम् अर्थेषु भ्रमम भगवत्युपधावमाने[1] मनसि मनोनामेन्द्राधीनतया तिष्ठतीति चिन्तयेत् । मनः इन्द्रं वैकारिके रुद्रे हुत्वा संचिन्त्य अमुं रुद्रं मायायां प्रकृतिविकारे महत्तत्वे विरिञ्चे संचिन्त्य तां मायां तं विरिञ्चं चात्मानुभूतौ चित्प्रकृतौ जुहोति चिन्तयेत् । 'चित्ताख्याग्नेरधीनं हि जगदेतद् हुयात् विचिन्तयेत् । मनोनामेन्द्रवशगमग्निं च प्रविचिन्तयेत्' इति वाक्यात् सर्वमवगन्तव्यम् । अत्र जडकार्यस्य जडकारणात्मकत्वं चेतनस्य चेतनाधीनत्वं चिन्तनीयमित्यर्थः । तामात्मानुभूतिं स्वानुभूतेर्लक्ष्म्या आत्मनि स्वामिनि पत्यौ निरन्तरं चिन्तयेत्[2] । ततो मुनिः अनन्तरं कृतकृत्यः । 'वेत्ता वेद्यस्य सर्वस्य मुनिः सद्भिरुदाहृतः' इत्युत्पलमालावचनात् । किञ्च सत्यं साधुगुणं पूर्णं विष्णुं पश्यतीति सत्यदृक् । स्वानन्दानुभवात्मनि स्वमहिम्नि स्थितः, 'महिम्नि स्वे महीयते' इति वचनात् । स्वरूपानन्दज्ञानात्मनि ब्रह्मणि स्थित इति वा । निरीहः अत एव निषिद्धचेष्टारहितः विरमेत्, कृत्यादिति शेषः ॥४४–४५॥

प्रतिपादितमर्थं निगमयति — स्वात्मेति । मया स्वात्मनो मम वृत्तं तुभ्यमनुवर्णितमित्यन्वयः । स्वात्मनः जीवस्य वा । परमात्मनो वा । कीदृशम् ? मुखतो लोकशास्त्राभ्यां व्यपेतं रहितम् । आन्तरतो विपरीतत्वेन प्राप्तं[3] शास्त्रसिद्धत्वात् शास्त्रीयमित्यर्थः । 'अशास्त्रीयत्वान्मुखतः[4] शास्त्रापेतमिदं विदुः । शास्त्रनिर्णयगम्यत्वात् शास्त्रीयमभिधीयते' इति वचनादुक्त एवार्थः । इदं (तव) सिद्धमित्यभिप्रेत्याह — भवानिति ॥ ४६ ॥

ततः प्रह्लादेन किं कृतमित्यतस्तद्गमनमाह — नारद इति । पारमहंस्यं परमहंसानां निवृत्तिमार्ग-

---

[1] 'अर्थविभ्रमे अर्थेषु भ्रममाणे' इति तात्पर्यम् । अर्थेष्विति बहुवचनेन निर्देशादात्मनीत्येकवचनेनोक्तो भगवान् नात्रार्थकोटिषु प्रविष्ट इति सत्यधर्मतीर्था अभिप्रयन्ति । अतो भगवत्युपधावमाने इति नापेक्षितमिति ।

2 [2] आत्मानुभूताविल्यस्य अत्र अनुभूतेरात्मनीत्यर्थः टीकाकृदिष्टः ।

[3] विरुद्धतया प्रतीयमानमित्यर्थः स्यात् ?     [4] अशास्त्रितत्वान्मुखतः—हृ. ।

॥ अथ पञ्चदशोऽध्यायः ॥

युधिष्ठिर उवाच —

गृहस्थ एतां पदवीं विधिना येन चाञ्जसा ।
यायाद् देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥

नारद उवाच —

साधु पृष्टं महाभाग लोकानामनुगृह्णता ।
तत्वेन तदहं वक्ष्ये नैष्कर्म्यं येन कर्मणाम् ॥ २ ॥

गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः ।
वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ ३ ॥

शृण्वन् भगवतोऽभीक्ष्णमवतारकथामृतम् ।
श्रद्दधानो यथाकालमुपशान्तजनादृतम् ॥ ४ ॥

---

स्थानां विद्यमानम् ॥ ४७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

सर्ववर्णाश्रमाणां गृहाश्रममूलत्वात् सूचीकटाहन्यायेन वर्णाद्याश्रमधर्मं निरूप्य गृहाश्रमधर्मं निरूपयत्यस्मिन्नध्याये । तत्र नापृष्टः कस्यचिद् ब्रूयादिति न्यायाद् युधिष्ठिरः पृच्छतीत्याह — **युधिष्ठिर** इति । एतां पदवीम् अन्याश्रमविषयाम्[1] । विधिना प्रकारेण ॥ १ ॥ नैष्कर्म्यं मोक्षसाधनत्वम् ॥ २ ॥

गृहोचिताः क्रियाः पञ्चयज्ञलक्षणाः । 'पञ्चयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् । बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः । भूतपित्रमरब्रह्ममनुष्याणां महामखाः' इति याज्ञवल्क्यः । वासुदेवार्पणम्, कुर्वन्निति शेषः ॥ ३ ॥

उपशान्तजनेन संन्यासिजनेन आदृतं कामितम् ॥ ४ ॥

---

[1] अवधूतादिसाध्यां मोक्षपदवीम् — व्या.

तत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु ।
विमुञ्चेन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ५ ॥

यावदर्थमुपासीनो[1] देहे गेहे च पण्डितः ।
विरक्तो रक्तवत्[2] तत्र नृलोके नरतां न्यसेत् ॥ ६ ॥

ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ।
यद् वदन्ति यदिच्छन्ति अनुमोदेत निर्ममः ॥ ७ ॥

दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्मितम् ।
तत्सर्वमुपयुञ्जीरन् न स्वीकुर्यात् स्वतो बुधः ॥ ८ ॥

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ ९ ॥

नृगोखराश्वमर्काखुसरीसृपविमक्षिकान् ।
आत्मनः पुत्रवत् पश्येत् तैरेषामन्तरं कियत् ॥ १० ॥

---

स्वप्नं दृष्ट्वोत्थितः स्वप्नदृष्टपदार्थसङ्गं यथा जहाति तथा जायादिसङ्गं मुञ्चेदित्यन्वयः[3] ॥ ५ ॥

यावदर्थो यावद्देहयात्राप्रयोजनो देहादावुपासीनः अवतिष्ठमानः । तत्र देहादौ रक्तवत् स्निग्धवत् नरतां नरत्वं न्यसेत् त्यजेत्[4] । यतिर्भवेदित्यर्थः ॥ ६ ॥

आन्तरिक्षं द्यावापृथिव्योर्मध्यभवम् । अच्युतेन निर्मितं यद् वित्तम् उपयुञ्जीरन्, लोका इति न शेषः । तत् सर्वं जानन् स्वकीयमिति न स्वीकुर्यात् ॥ ७–८ ॥ ॥ ८ ॥

यावदर्थ इत्युक्तं विवृणोति—यावदिति । जठरं यावदन्नं भ्रियेत गृह्णाति तावदन्नं स्वत्वं स्वकीयमिति न स्वीकुर्यात् । ततोऽधिकादाने (तद्) दण्डयोग्यमित्याह—अधिकमिति ॥ ९ ॥

'आखुभुक् पृषदंशश्च[5] मार्जारो मर्क उच्यते' इत्यभिधानम् । वयः पक्षिणः । अन्तरं भेदः कियान्? न कोऽपि । पराधीनत्वाविशेषात्[6] ॥ १० ॥

---

[1] अवस्थितो यावदर्थमिति हृदयङ्गमः पाठः—स. [2] विरक्तोऽन्तः रक्तवद् बहिः—स.

[3] आत्मनि देहे जायादिषु मुच्यमानेषु दैवात् सन्त्यजत्सु, परस्परं संगम्य वा मुच्यमानेषु उत्थितः स्वाप्नपुत्रादिष्विव सङ्गं स्नेहं शनकैः क्रमेण स्वयं मुञ्चेदिति श्लोकद्वययोजना—व्या.

[4] नरतामायुःपूर्त्यनन्तरं न्यसेत् क्षिपेत्—व्या. पण्डितः सन् नृलोके नरतामज्ञतां जह्यात, क्रमाज्ज्ञानी स्यादित्यर्थः—स. [5] पृथुदंशश्च—व्या. वृशदंशश्च—व.स. [6] भगवन्नियतत्वाविशेषात्—स.

त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ।
यथादेशं यथाकालं यावद् दैवोपपादितम् ॥ ११ ॥

आश्वभ्योऽन्तेवसायिभ्यः कामान् संविभजेद् यथा ।
आप्त्वैतान् महतो दारान् नृणां सत्त्वग्रहो यतः ॥ १२ ॥

जह्याद् यदर्थे स्वान् प्राणान् हन्याद् वा पितरं गुरुम् ।
तस्यां स्वत्वं स्त्रियां जह्याद् यस्तेन ह्यजितो जितः[1] ॥ १३ ॥

---

अतिकृच्छ्रेण शास्त्राविहितमार्गेण शूद्रप्रतिग्रहादिलक्षणेन । गृहमेधी गृहस्थोऽपि सर्वाश्रयत्वेऽपि । दैवोपपादितं यवादिव्रीहिजातम् । अयाचितोपपन्नं वा ॥ ११ ॥

कर्माङ्गं[2] च दारग्रहणप्रयोजनम् । न ग्राम्यभोगः । तथात्वे तदाशापूरणस्य दुःसाध्यत्वेन तत्प्रयत्ने महान् दोष आपद्येत । तदभिप्रायेणाह—आप्त्वेति । यदर्थे येषामर्थे कामपूरणार्थं स्वप्राणान् जह्यात् । पितरं वा गुरुं वा हन्यात्, तद्विरोधे सतीति शेषः । किञ्च यतो येभ्यो नृणां सत्वग्रहो सत्व-गुणग्रहो धैर्यनिग्रहः, भवतीति शेषः । तानेतान् महतो दारान् आप्त्वा कामान् यथायोग्यं संविभज्य, श्रेयसे घटेतेति शेषः[3] । यद्यङ्गना प्राणाद्यपहारिणी तर्हि तया श्रेयसे घटनं कथमित्याशङ्क्याह—तस्यामिति । सत्वग्रह इत्यादिकमुत्तरत्रापि संबध्यते । अजितोऽपि यस्याः सत्वग्रहः तस्यां स्त्रियां[4] तेन सत्त्वेन जितः वशं गतः पुमान् तस्यां स्त्रियां स्वत्वं जह्यादित्यन्वयः । यदि स्वात्मानमुल्लङ्घ्य सा वर्तते तर्हि तस्यास्त्याग एव वरीयानितीममर्थं हिशब्देन दर्शयति । 'हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद् व्यभिचारिणीम्' इति च । 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तस्य वर्धते । मृते जीवति वा पत्यौ या नान्यमुपगच्छति । सेह कीर्तिमवाप्नोति मोदते चोमया सह । स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियः' इति च ॥ १२–१३ ॥

---

[1] अजितोऽजितः—व्या. यस्तेन स्वत्वाभिमानेनाजितः स एवाजितो हि—व्या.

[2] गृहस्थकर्माधिकारसिद्धिरिति यावत् ।

[3] एतान् महतो गुणवतो दारानाप्त्वा आश्वभ्यः कामान् संविभज्य श्रेयसे घटेतेत्येकं वाक्यम् । नृणां सत्वग्रहो यत इत्युत्तरान्वयि । यदि सा भार्या दुष्टा तदा किं कार्यमिति वाक्यान्तरेणाह । तस्यां स्वत्वं जह्यादिति । इति विविच्यार्थो ज्ञातव्यः—व्या.

[4] द्विरुक्तमिदमस्मिन् वाक्ये । अतोऽत्र नापेक्षितमिति भाति । अजितोऽपि यस्याः सत्वग्रहः सत्त्वेन जित इति वाक्यविन्यासः स्वरसः ।

कृमिविड्भस्मनिष्ठान्तं क्वेदं तुच्छं कलेवरम् ।
क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः[1] ॥ १४ ॥

सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद् वृत्तिमात्मनः ।
शेषे स्वत्वं त्यजेत् प्राज्ञः पदवीं महतामियात् ॥ १५ ॥

देवानृषीन् नृभूतानि पितॄनात्मानमन्वहम् ।
स्ववृत्त्याऽऽगतवित्तेन यजेत पुरुषं पृथक् ॥ १६ ॥

यर्ह्यात्मनोऽधिकारोऽस्ति सर्वाः स्युर्यज्ञसम्पदः ।
वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥ १७ ॥

न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ।
इज्येत हविषा राजन् यथा विप्रमुखैर्हुतैः ॥ १८ ॥

---

शरीरमेवानित्यं क्षणिकं भयग्रस्तं च न तु नित्यम् । अतश्च नित्यदुःखम् । शरीरं च कृमिविड्भस्मावसायि न वरम् । अनेनाकाशशरीरब्रह्मज्ञानं दुरुत्पादमेतत्करुणामन्तरेण । अतो दुःखहेतुत्वाद् दुश्चरित्रस्त्रीत्याग एव श्रेयानित्याशयवानाह— कृमीति । तदीयदेहेन क्रियमाणा रतिः यस्याः सा तथा[2] । आत्मा परमात्मा । अत्रात्मा जीवः किं न स्याच्छरीरप्रसङ्गादित्यत उक्तम्—नभश्छदिरिति । नभसः छदिः आच्छादनं यस्य स तथा । नभो व्याप्य व्यवस्थित इत्यर्थः । 'आकाशशरीरं ब्रह्म' इति-श्रुतेः । 'अणुर्ह्येष आत्मा यं वा एते सिनीतः पुण्यं च पापं च' इति श्रुतेर्जीवस्याणुपरिमाणत्वेन सिद्धत्वात् ॥ १४ ॥

'यज देवपूजासङ्गतिकरणदानेषु' इति धातोः यज्ञो नारायणाख्यदेवपूजा । तत्करणावशेषितैः सिद्धैः ज्ञानसाधनयोग्यैरर्थैः स्ववृत्तिं देहयात्रालक्षणां कल्पयेत् । तत्रापि शेषे अवशिष्टे वस्तुनि स्वत्वं स्वकीयत्वं त्यजेद् यः सः प्राज्ञो महतां संन्यासिनां पदवीमाप्नोतीत्यन्वयः ॥ १५ ॥

देवादियागेषु तदन्तर्यामित्वेन तद्भिन्नत्वेन भगवत्पूजैव विधेयेत्याशयेनाह— देवानिति । यर्हि यदाऽस्य यज्ञाधिकारोऽस्ति यदा वा सर्वा यज्ञसम्पदः स्युः, तदा वैतानिकविधिना अग्निहोत्रविधिना वा यजेदित्यन्वयः[3] ॥ १६–१७ ॥

---

[1] नभश्छदः—गो. [2] तदीया तुच्छैतच्छरीरसंबन्धिनी रतिरासक्तिर्यस्या सा—स. तदीया एतादृशतुच्छदेहसम्बन्धिनी रतिर्यस्याः सेति वा । [3] वैतानिकः क्रतुकर्मसंबन्धी । वितानो यज्ञविस्तारोल्लोचेषु क्रतुकर्मणीति विश्वः । तेन विधिना विधानेनाग्निहोत्रादिना यजेदिष्टं भावयेत्—स.

तस्माद् ब्राह्मणदेवेषु मर्त्यादिषु[1] यथार्हतः ।
तैस्तैः कामैर्यजेच्चैनं क्षेत्रज्ञं ब्राह्मणाननम् ॥ १९ ॥

कुर्यादपरपक्षीयं मासि प्रोष्ठपदे द्विजः ।
श्राद्धं पित्रोर्यथावित्तं तद्बन्धूनां च वित्तवान् ॥ २० ॥

अयने विषुवे कुह्वां व्यतीपाते दिनक्षये ।
चन्द्रादित्योपरागे च द्वादश्यां श्रवणेषु च ॥ २१ ॥

तृतीयायां[2] शुक्लपक्षे नवम्यामथ कार्तिके[3] ।
चतसृष्वप्यष्टकासु हेमन्ते शिशिरे तथा ॥ २२ ॥
माघे च सितसप्तम्यां[4] मघाराकासमागमे ।

राकया वाऽनुमत्या वा मासर्क्षाणि युतान्यपि ॥ २३ ॥

द्वादश्यामनुराधा स्यात् श्रवणस्तिस्र उत्तराः ।
तिसृष्वेकादशी चासु जन्मर्क्षं सौम्ययोगयुक् ॥ २४ ॥

---

ननु होमादिकरणं मुख्यं भगवत्प्रीतिजनकं किम् ? तत्राह—**न हीति** । उपसंहारमुखेनोक्तार्थं निर्धारयति—**तस्मादिति** । ब्राह्मणः आननं यस्य स तथा तम् ॥ १९ ॥

ननु यज्ञसम्भारे सति विशिष्टफलप्रदः कालः क इति तत्राह-**कुर्यादिति** । प्रोष्ठपदे कन्याख्ये सिंहमासामावास्यामारभ्य कन्यामासामावास्यापर्यन्ते । तत्राप्यपरपक्षीयकाले श्राद्धं कुर्यादित्युपर्यप्यन्वेतव्यम् । तद्बन्धूनां पितृमातृबन्धूनां पितामहमातामहादीनाम् ॥ २० ॥

अयने उत्तरदक्षिणसंज्ञे । विषुवे[5] संवत्सरान्तसंक्रमणे । कुह्वाम् अमावास्यायाम् । श्रवणेषु श्रवणादित्रिषु चशब्दात् सप्तम्यादित्रिषु त्रयोदश्यां च । तदुक्तम् —' सप्तम्यादित्रयं चैव तथा चैव त्रयोदशी । चतस्रस्त्वष्टकाः प्रोक्ताः सर्वपक्षाद् विशेषतः ' इति । वृश्चिकमासामावास्यामारभ्य मकरमासामावास्यापर्यन्तः कालो हेमन्तः । तदुपरिकालः शिशिरः । ' हेमन्ते शिशिरे चैव नित्यश्राद्धे गुणोत्तरम् ' इति वचनादयमपि विशिष्टकालः[6] । राका पौर्णमासी । मघापौर्णमास्योः संगमे । ' शशिनि सिनीवाली स्यात् दृष्टे, नष्टे कुहूरमावास्या । अनुमतिरूने, राका सम्पूर्णे पौर्णमासी च' इति हलायुधः । राकयाऽ

---

[1] ब्राह्मणदेवेषु ब्राह्मणेषु देवेषु च । मर्त्यादिषु मर्त्येष्वमर्त्येषु च—व्या. [2] अक्षय्यतृतीयायाम्—व्या.
[3] महानवम्याम्—व्या. [4] रथसप्तम्याम्—स. [5] विषुवे मेषतुलासंक्रमयोः । पारणयोग्यद्वादश्याम्-व्या.
[6] अत्रापि हेमन्तशिशिराधिष्ठानकाष्टकचतुष्टयमेव ग्राह्यम् । पूर्वगवत्यनुष्ठातृभिस्तथैवानुष्ठानात्—व्या.

त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ।
कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २५ ॥
येषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ।
पितृदेवनृभूतेभ्यो यद् दत्तं तद्ध्यनश्वरम् ॥ २६ ॥
संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ।
प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २७ ॥
अथ देशान् प्रवक्ष्यामि धर्मादिश्रेयआवहान् ।
स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २८ ॥
विम्बं भागवतो यत्र जगदेतच्चराचरम् ।
यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ २९ ॥
यत्र यत्र हरेरर्चा स देशः श्रेयसां पदम् ।
यत्र गङ्गादयो नद्यः पुराणेषु च विश्रुताः ॥ ३० ॥

---

नुमत्या (वा) युतानि मासनक्षत्राणि । याः तिस्रः श्रवणादितारा आसु तारासु प्राप्तैकादशी पुण्यकालः । अत्र श्राद्धकरणं च विकल्पः । एकादश्यां श्राद्धकरणस्य निषिद्धत्वात् न वैष्णवसिद्धान्तिनस्तदाचरन्ति[1] । त्रैविद्याश्चरन्ति च वा । यथैकादशी पुण्यदिनम्, अत्र क्रियमाणं कर्म सफलं तथा तिसृष्वपि तारासु इति वा । जन्मनक्षत्रं श्राद्धकाल इति शेषः । सौम्ययोगयुक् मृगशिरस्संबन्धयुक्तं दिनं च[2] ॥२१-२७॥

सत्पात्रं विशिनष्टि—विश्वमिति । यस्मिन् देशे भागवतस्तस्मिन् चराचरं सर्वं जगदस्तीति ज्ञातव्यम् । 'यतिर्यस्य गृहे भुङ्क्ते तत्र भुङ्क्ते हरिः स्वयम् । हरिर्यस्य गृहे भुङ्क्ते [तत्र भुञ्जते] जगत्त्रयम्' इति वचनात् ॥ २८ २९ ॥

अर्चाः शालग्रामादिप्रतिमाः । पुराणेषु भागवतादिषु विश्रुताः कृष्णवेण्यादयश्च । क्षेत्राणि पुरुषोत्तमादीनि । अर्हैः पूज्यैः अगस्त्यादिभिः आश्रितानि अधिष्ठितानि । फल्गुनं स्थानं हरपुरं

---

[1] स्नानादीनां मध्ये होमो युक्तदिने कार्यः । एवं श्राद्धमपि । हरिवासरे न जुहुयान्न श्राद्धं कुर्यादिति विशेषनिषेधात् । न च तत्रैकादशीग्रहणं निरवकाशमिति वाच्यम् । जपादिविषयत्वेन विद्धैकादशीविषयत्वेन (वा) सावकाशत्वात्—व्या.

[2] अभ्युदये अभ्युदयार्थं क्रियमाणकर्मणि—व्या. जायाया भार्यायाः संस्कारकालः षष्ठेऽष्टमे वा सीमन्त इत्यनुशिष्टः । अपत्यस्य नामकरणादिसमयः । आत्मनो वसन्ते ब्राह्मण इत्यादिमवनसमयः । प्रेतसंस्था मृतदाहादिः । मृताहः सांवत्सरिकं यदा तदा कर्मणि एतस्मिन्नभ्युदये महोदये । तदर्थं श्रेयः कुर्यादित्यन्वयः—स.

सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ।
कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः[1] ॥ ३१ ॥

नैमिषं फल्गुनं सेतुः प्रभासोऽथ कुशस्थली ।
वाराणसी मधुपुरी पम्पा विन्दुसरस्तथा ॥ ३२ ॥

नारायणाश्रमो नन्दा सीतारामाश्रमादयः ।
सर्वे कुलाचला राजन् महेन्द्रमलयादयः ॥ ३३ ॥

एते पुण्यतमा देशा हरेरर्चाश्रिताः पुनः ।
एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ ३४ ॥

धर्मो ह्यत्रोदितः पुंसां सहस्राधिफलोदयः[2] ।
पात्रं चात्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ ३५ ॥

हरिरेवैक उर्वीश यन्मयं च चराचरम् ।
देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ।
राजन् यदग्रपूजायां मतः पात्रतयाऽच्युतः ॥ ३६ ॥

---

कन्यातीर्थं वा । 'कन्यापुरं फल्गुनं स्यात् स्थानं हरपुरं च तत्' इत्यभिधानम् । वाराणसी पुरी काशी । हरेरर्चाश्रिताः हरिक्षेत्रादयः । पुनर्वचनं सर्वस्मात् तेषां श्रैष्ठ्यद्योतनाय ॥ ३०–३४ ॥

एतद्देशनिषेवणेन किं विशेषफलमिति तत्राह—धर्म इति । 'कृष्णातरङ्गसम्भूतपवनस्पर्शमात्रतः । निर्धूतपातकाः सर्वे जना विष्णुपदं ययुः' इत्यादिशास्त्रेषु सहस्राधिकफलोदयत्वेनोदितः । पात्रेष्वपि तारतम्यमस्ति । तत्र मुख्यपात्रं हरिरित्याह—पात्रमिति । पात्रतारतम्यवित्तमैः कविभिः पात्रं च निरुक्तं वै मुख्यत्वेन निर्णीतं हीत्यन्वयः[3] ॥ ३५ ॥

किं तदित्यत उक्तम्—हरिरिति । चराचरं यन्मयं यत्स्वामिकं, यद्व्याप्तं सर्वं यस्मात् तस्माद् हरिरेव मुख्यपात्रमित्यन्वयः । इदं भवतोऽपि सिद्धमित्याह—देवेति । ब्रह्मात्मजादिषु सत्सु । देवाश्च ऋषयश्च देवर्षयः । त एव अर्हन्तः पूजायोग्या येष्वपि सत्सु । तत्र यज्ञशालायाम् । अच्युतः गुणतो वयतः[4] स्वरूपतश्च च्युतिरहितत्वात् श्रीनारायणः अग्रपूजायां पात्रतया मतः, त्वया ज्ञात इति यत् । अतो मुख्यपात्रं हरिरित्यवधारणा युक्ता ॥ ३६ ॥

---

[1] दूरपुरम्—व्या. स. [2] सहस्राधिकफलोदयः—ग. [3] हरिरित्युत्तरश्लोकस्थेनान्वयः ।
[4] वयस्त इति स्यात् ।

जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ।
तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३७ ॥

पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ।
शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३८ ॥

[1]तेष्वीशो भगवान् राजन् तारतम्येन वर्तते ।
तस्मात् पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३९ ॥

दृष्ट्वा तेषां मिथो नृणामवज्ञामात्मनो नृप ।
त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ४० ॥

---

किञ्च प्रत्येकं पूजाऽपि न विधेया । भगवत्पूजया तत्तृप्तिसम्भवात् । तन्मूलत्वात् तेषाम् । तरुमूलनिषेचनं शाखानामिवेति मुख्यवैष्णवसिद्धान्तमाह — जीवराशिभिरिति ॥ ३७ ॥

ननु मुख्यपात्रालाभे विहितकर्मानुष्ठानविषयाभावेन तद्विधानं व्यर्थमित्याशङ्क्य तत्तद्योग्यपात्रं वक्तुं कञ्चन सृष्टिप्रकारमाह — पुराणीति[2] । अनेन दयालुना हरिणा नृतिर्यगादिसंज्ञितानि पुराणि शरीराणि सृष्टानीत्यन्वयः । ततः किम् ? तत्राह — शेत इति । श्रीहरिरेषु पुरेषु भोगायतनेषु जीवेन रूपेण स्वप्रतिबिम्बेन सह शेत इति यत् तस्मादसौ पुरुष इत्युच्यते । जीवोऽपि तन्नामेति शेषः । 'पुरि शयनात् पुरुषः' इति श्रुतिं हिशब्देन सूचयति ॥ ३८ ॥

ईशो भगवान् तेषु पुरेषु स्थितः पुरुषनामसु जीवेषु च तारतम्येन तत्तद्भक्त्यादिगुणतारतम्यानुसारेण सन्निधानतारतम्येन वर्तत इति यस्मात् तस्मात् तत्तद्योग्यतानुसारेण पुरुषो जीवराशिश्च पात्रम्, तदन्तर्यामिहरिस्मरणपूर्वकमिति शेषः । अत्र सन्निधानतारतम्यमेव हरेः । न तु स्वरूपतारतम्यम् । तदुक्तम् — 'ब्रह्मादिस्थावरान्तेषु न विशेषो हरेः क्वचित् । व्यक्तिमात्रविशेषेण तारतम्यं वदन्ति च ' इति । अत्रापीत्थंभावमाह — यावानिति । पुरुषे तु स्थित आत्मा यावान् महिम्ना, यथा येन प्रकारेण ज्ञायते तदानुकूल्येन जीवराशिः पात्रमित्यर्थः ॥ ३९ ॥

हरिप्रतिमापूजायाः पुरुषस्थितपुरुषनाम्नो हरेः पूजा सम्यक् फलवतीत्याशयेनाह — दृष्ट्वेति[3] ।

---

[1] नन्वेवं भगवतः सर्वशरीरस्थत्वेन पूज्यत्वे पात्रतारतम्यं न स्यादित्यत आह-तेष्विति—व्या.

[2] ननु भगवत एव पूज्यत्वे साक्षात्तदलाभे पूजाविलोपप्रसङ्ग इत्यतः सर्वशरीरेष्वपि भगवतः सत्वान्न तदनुपपत्तिरित्याशयेन पुरुषशब्दं भगवति निर्वक्ति-पुराणीति—व्या.

[3] यावानात्मा यथेयत इत्यनेनाधिष्ठानतारतम्यानुसारेण भगवतो व्यक्तितारतम्योक्त्याऽधर्मोत्तमपुरुषेषु भगवान्

ततोऽर्चायां हरिं केचिच्छ्रद्धया च सपर्यया ।
उपासते उपास्ता हि नार्थदा पुरुषद्विषाम् ॥ ४१ ॥
पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ।
तपसा विद्यया तुष्ट्या धत्ते चेदं[1] हरेस्तनुम् ॥ ४२ ॥
तन्वोऽस्य[2] ब्राह्मणा राजन् कृष्णस्य जगदात्मनः ।
पुनन्तः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४३ ॥

इति श्रीमद्भागवते सप्तमस्कन्धे पञ्चदशोऽध्यायः ।

---

कविभिस्तेषां नृणां मिथ आत्मनो हरेरवज्ञां दृष्ट्वा त्रेतायां सपर्याक्रियायै हरेरर्चा कृता[3] यस्मात् ततः केचित् सश्रद्धया सपर्यया अर्चायां हरिमुपासते । ये तेषां[4] पुरुषस्थितहरिद्विषां सोपास्ता ऐहिकफलमन्तरेण परमपुरुषार्थप्रदा न भवतीत्यन्वयः ॥ ४०–४१ ॥

मुख्यपात्रमाह—पुरुषेष्विति । कीदृशो ब्राह्मणो मुख्यं पात्रमित्यतस्तद्विशिनष्टि—तपसेति । तनुं प्रतिमास्थानम् । अत्र 'शिलावत् प्रतिमाः सन्तो विप्राद्याश्च हरेः स्मृताः' इति वचनात् विप्रादिमात्रं हरिशिलास्थानीयं न । किन्तु तपआदिविशिष्टब्राह्मणकुलम् । अन्यथा 'हरेरर्चोपास्ता पुरुषार्थप्रदा न स्यात्' इति तदुपासां विनिन्द्य 'सुपात्रं ब्राह्मणं विदुः' इति कथनं व्यर्थं स्यात्[5] । अत एव ब्रह्म अणतीति ब्राह्मण इति तत्पदं प्रायोजि ॥ ४२–४३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
सप्तमस्कन्धस्य पञ्चदशोऽध्यायः

---

पूज्य इत्यायातम् । एवं चलप्रतिमायां सत्यामचलप्रतिमायां पूजासंप्रदायः कुत आगत इत्याशङ्कायामाह—दृष्ट्वेति—व्या.

[1] चेदम्—व्या । हरेस्तनुं प्रतिमाभूतमिदं शरीरं धत्ते, चो यत इत्यर्थे—व्या. । वेदम्—स । यस्तु वेदं धत्ते विद्ययाऽपरोक्षज्ञानेन निमित्तेन तं हरेस्तनुं सुपात्रं विदुः—स ।

[2] नन्वस्य इत्यपि पाठो दृश्यते । परं तन्वोऽस्य इत्येव सर्वैरादृत इति भाति ।

[3] कृते ब्राह्मणानां परस्परतारतम्ये कलहाभावात् तारतम्येन चलप्रतिमासु पूजासंभवेऽपि त्रेतादौ कलहेन तदसंभवादर्चायां पूजासंप्रदायः कृत इति भाति —व्या.

[4] ये तेषामित्यस्यान्वयो न ज्ञायते । अधिकमिति भाति । [5] अस्पष्टमिदम् ।

॥ अथ षोडशोऽध्यायः ॥

नारद उवाच —

कर्मनिष्ठा द्विजाः केचित् तपोनिष्ठा नृपापरे ।
स्वाध्यायेऽन्ये प्रवचने अन्ये च ज्ञानयोगयोः ॥ १ ॥

ज्ञाननिष्ठाय देयानि कव्यान्यानन्त्यमिच्छता ।
दैवे च तदभावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥

द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत् सुसमृद्धोऽपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥

देशकालोचितश्रद्धाद्रव्यपात्रार्हणानि च ।
सम्यग् भवन्ति नैतानि विस्तरात् स्वजनार्पणात् ॥ ४ ॥

---

॥ अथ षोडशोऽध्यायः ॥

कर्ममार्गो ज्ञानमार्गश्च कार्याणां कारणेषु लयः प्रवेशलक्षणं च तत्साधनं च प्रपञ्चस्वरूपं च निरूपयत्यस्मिन्नध्याये[1] ।

तत्र प्रथमतो ब्राह्मणादपि ज्ञाननिष्ठमुत्तमं पात्रं[2], दैवोपलब्धेन द्रव्येणैव नित्यनैमित्तिकक्रियाकरणं, धर्माधर्मविवेकश्च कथ्यते । तत्र ब्राह्मणान् विवेचयति—कर्मेति । कर्मनिष्ठा गृहस्थाः । तपोनिष्ठा वानप्रस्थाः । स्वाध्यायनिष्ठा ब्रह्मचारिणः । प्रवचननिष्ठाः कुटीचका बहूदकाश्च । योगनिष्ठा हंसाः । ज्ञाननिष्ठाः परमहंसाः ॥ १ ॥

तत्र सन्ततेरानन्त्यं मुक्तिं चेच्छता ज्ञाननिष्ठाय परमहंसाय कव्यानि पितृभ्यो दीयमानान्यन्नानि दातव्यानीति विधिरित्यन्वयः । दैवे कर्मणि, च तस्मा इति शेषः । तदभावे परमहंसाभावे इतरेभ्यो हंसादिभ्यो श्राद्धादिदानं स्यात्[3] । तत्रापि यथाऽर्हतः यथायोग्यम् ॥ २ ॥

अत्र भोक्तुः संख्यानियमानाह—द्वाविति । कुतो विस्तरो न कर्तव्य इति तत्राह—देशेति । स्वजनार्पणात् आत्मीयार्पणलक्षणाद् विस्तरात् एतानि देशकालोचितश्रद्धादीनि सम्यङ् न भवन्तीति यत् श्रा तस्माद् विस्तरं न कुर्यादिति पूर्वेणान्वयः ॥ ३—४ ॥

---

[1] उक्तसर्वधर्मात् ज्ञानादींश्च संगृह्य तत्तारतम्यं फलतारतम्यं चाह (अस्मिन् अध्याये)—व्या. [2] साधारण-ब्राह्मणादपि ज्ञाननिष्ठो ब्राह्मण उत्तमं पात्रमिति कथ्यत इत्यर्थः । [3] सत्यधर्मतीर्था अप्येवमेव व्याचक्षते । व्य व्यासतत्वज्ञतीर्थास्तु ज्ञाननिष्ठाय देयानि, तदभावे इतरेभ्यः कर्मनिष्ठादिभ्यो यथाऽर्हतो देयानीति व्याचकुः ।

देशे काले च सम्प्राप्तमुत्पन्नं हरिदैवतम् ।
श्रद्धया विधिवत् पात्रे न्यस्तं कामधुगक्षयम् ॥ ५ ॥

भूतेभ्य देवर्षिपितृदेवेभ्य आत्मने स्वजनाय च ।
अन्नं संविभजन् पश्येत् सर्वतः पुरुषात्मकम्[1] ॥ ६ ॥

न दद्यादामिषं श्राद्धे न चाद्याद् धर्मतत्त्ववित् ।
मुनीनां स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥

नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ।
न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य यः ॥ ८ ॥

---

यतः श्राद्धभोजने मुख्याधिकारित्वे मांसविधानं कथमुपपद्यत इति तदपवादत्वेन विधत्ते—**न दद्यादिति** । शास्त्रान्तरविधिमोहितेन केनचित् कामपरिमोक्षणेन[2] मस्करिणा न भोक्तव्यमिति विधत्ते—**न चेति** । न च श्राद्धभङ्ग इत्याह—**धर्मेति** । ' विना मांसेन मधुना विना दक्षिणयाऽऽशिषा । अक्षयं भवति श्राद्धं यतिषु श्राद्धभोजिषु । ग्रामे वा नगरेऽरण्ये ज्ञातभिक्षु[3]र्वसेद् यदि । तमन्तरेण यत् श्राद्धं तदासुरमथो भवेत् ' इत्यादिस्मृतेः, तद्विधायकशास्त्रमासुरजनमोहनार्थत्वेन देशकालविशेषविषयत्वेन वा योजनीयम् । आमिषाभावे भोक्तुः सौहित्याभावेन पितृणां सौहित्यं न स्यादिति तत्राह—**मुनीनामिति** । मुनीनां संयमिनां यथा मांसानदनेन परा प्रीतिः सौहित्यं स्यात् तथा पशुहिंसया जातमांसेन न स्यात् । यथा मुनीनां पितृणां यतिभोजनेन परा प्रीतिस्तथा पशुहिंसया जातामिषभोजनेन न स्यादिति द्विरावृत्त्या योजनीयम् । ' वाचंयमे च सर्वज्ञे मुनिशब्दः पितृष्वपि ' इत्यभिधानम् । मुनीनां सर्वज्ञानां देवानां यथा परमा प्रीतिस्तथा पशुहिंसालक्षणेन यागेन नेति वा[4] ॥ ७ ॥

श्राद्धे चतुर्थाश्रम्येव पूज्य इति नियमः प्रायिकः । तद्धर्मो यस्यास्ति सोऽपि मान्य इत्याशयेनाह—**नैतादृश इति** । सद्धर्ममिच्छतां नृणां भूतेषु मनोवाक्कायकर्मजस्य दण्डस्य न्यासः संत्यागो य एतादृशो धर्मः, परोऽन्यो नास्ति । अयमेव मुख्यो धर्मः । तस्मादेतादृशधर्मोऽपि, श्राद्धे मान्य

---

[1] देवर्ष्यादिभ्योऽन्नं विभजन् विभागेन समर्पयन् सर्वतः सर्वं पुरुषात्मकं पश्येदिति योजना । परमात्मैव सर्वाधिष्ठानेषु भुङ्क्त इति चिन्तयेदिति भावः—व्या.

[2] अस्पष्टमिदं पदम् । केनचिद् यजमानेन परिवेषणे मस्करिणा न भोक्तव्यमिति पाठः संभाव्यते ।

[3] ज्ञानी भिक्षुः—स. [4] अजलं ज्ञानिबीजानि छागं नो हन्तुमर्हथेति भारते द्वितीयपञ्चकस्यान्नगाष्टमनवमखण्डयोः स्फुटं पशुहिंसां निषिध्य पिष्टपशुयागविधानात् पशुहिंसा न कार्येति भावः—स.

एके कर्ममयान् यज्ञान् ज्ञानिनो यज्ञवित्तमाः ।
आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥
द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ।
एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब् ध्रुवम् ॥ १० ॥

---

इत्याशयः । 'वेणुभिर्न भवेद् यतिः' इति वक्ष्यति । न केवलं पश्वालम्भनलक्षणहिंसाभावान्मुनीनां[1] प्रीतिजनकः, अपि तु मनआदिना क्रियमाणदण्डलक्षणहिंसाभावोऽपीत्यतो वाऽऽह—नैतादृशेति ॥ ८ ॥

श्राद्धादिकर्मग्रामो यत्यादिपात्रमुद्दिश्य कर्तव्यमित्यभिहितम् । अधुना परमभागवता तदपि न कुर्वन्तीत्याशयेनाह—एक इति । 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति शिक्षिता एके त्या भगवदेकार्पितदेहयात्रा ज्ञानिनः कर्ममयान् श्राद्धादियज्ञान् आत्मसंयमने मनःसंयमनाग्नौ जुह्वति मानसयागं कुर्वन्तीत्यन्वयः । आत्मसंयमनं विशिनष्टि—ज्ञानेति । ज्ञानेन्धनदीपिते । यज्ञवित्तमाः मानसयज्ञप्रयोगपटवः । अनीहा इति हेतुगर्भविशेषणम् । निवृत्तमार्गप्रवृत्तत्वादित्यर्थः ॥ ९ ॥

ननु द्रव्ययज्ञं सन्त्यज्य ज्ञानयज्ञकरणे किं कारणमित्याशङ्क्य भूतभयजनकहेतुत्वेन[2] निरयहेतुरय/मित्याशयेनाह—द्रव्येति । एष द्रव्ययज्ञकारिसमुदायो मा मां हन्यादिति भूतानि बिभ्यतीत्यन्वयः । 'अग्नीषोमीयं पशुमालभेत' इति विहितत्वात् तदुक्तं कुर्वतो दृष्ट्वा कथं भयं स्यादित्यत उक्तम्—अतज्ज्ञ इति[3] । विध्यभिप्रायमजानन् । 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादिः विहितविधेरभिप्रायः । अत एव अकरुण इत्युक्तम् । एतादृशोऽसुरदेश्य इत्याशयेनोक्तम्—असुतृबिति । 'नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति[4]' इति श्रुतिः हिशब्देन गृह्यते । ध्रुवमित्ययं शब्दः श्रीहरिविमुखस्यानर्थं निश्चाययति । 'असुन्वन्तं समं जहि दूणाशं यो न तेमयः' इति श्रुतेः । तेमयः त्वत्प्रधानकः । दूणाशं दुर्नाशं । असुन्वन्तं सुन्वविरोधिनं अन्यथा सुन्वन्तं वा । 'परा चिच्छीर्षा ववृजुस्त इन्द्रा-

---

[1] पश्वालम्भनलक्षणहिंसाभावो मुनीनामिति पाठः स्यात् ।

[2] भूतभयजननहेतुत्वेनेति स्यात् ।

[3] तेषां पशूनां भयोत्पादे यजमानस्य का क्षतिः ? अग्नीषोमीयं पशुमालभेतेति शास्त्रं जानन् करोतु पशुयज्ञमित्यत आह—अतज्ज्ञ इति इति स्वरसम् ।

[4] जल्पिरित्यन्यथाज्ञानजनिका वाक् । अत्रान्यथाज्ञानं लक्ष्यते । यथा च जल्प्या अन्यथाज्ञानलक्षणेन नीहारेण हिमेन प्रावृता आवृतचक्षुषः; नष्टदृष्टय इति यावत्, उक्थशासः उक्थेन प्राणेन शास्याः सन्तोऽसुतृपः असुभिस्तृप्यन्तीति तादृशाः प्राणिहिंसका इन्द्रियलोलुपा वा चरन्ति कर्माण्याचरन्ति, जीवन्तीति श्रुत्यर्थः ।

तस्माद् दैवोपपन्नेन मुन्यन्नेनैव धर्मवित् ।
सन्तुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकाः क्रियाः ॥ ११ ॥

विधर्मः परधर्मश्च आभास उपमा छलः ।
अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत् त्यजेत् ॥ १२ ॥

धर्मबाधो विधर्मः स्यात् परधर्मोऽन्यचोदितः ।
उपधर्मस्तु पाखण्डो दम्भो वा धर्मभिच्छलः ॥ १३ ॥

यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमः[1] पृथक् ।
स्वभावविहितो धर्मः कल्प्यते[2]ऽस्योपशान्तये ॥ १४ ॥

---

यज्वानो यज्वभिः स्पर्धमाना[3] ' इति श्रुतेः ॥ १० ॥

ननु तर्हि ' नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ' इति विधानं व्यर्थमिति तदुपायमाह — **तस्मादिति** । दैवोपपन्नेन अयाचितादिविधिना प्राप्तेन नीवारादिना तदभावे उत्पन्नेन फलशाकादिना ॥ ११ ॥

धर्मविरुद्धं नाम तत्प्रतिपक्षाधर्मभेदलक्षणे ज्ञाते शुद्धं स्यादित्यतस्तच्छाखा आह— **विधर्म इति** । अधर्मवद् विधर्मादीनां स्वरूपं दर्शयति -- **धर्मेति** । अधर्मवद् धर्मपीडनं विधर्मः । अन्यस्य क्षत्रियादेः चोदितो विहितो धर्मो ब्राह्मणेनानुष्ठीयमानः परधर्मः । दम्भेन क्रियमाणो धर्मो दम्भः, स चोपधर्म इत्युच्यते । धर्मशब्दार्थमिच्छतां धारको हि धर्मः । तमर्थं भिनत्तीति स छलधर्म इत्युच्यते ॥ १३ ॥

पुम्भिः काम्यफलेच्छया कृतो यो धर्मः स आभास इत्युच्यते । हिशब्दः इयानेषां भेद इत्याह । धर्मप्रतिपक्षभेदस्वरूपमुक्त्वा धर्मप्रयोजनमाह— **आश्रम इति** । हिशब्द उत्तरत्रापि सम्बध्यते । तेन वर्णं लक्षयति । यो ब्राह्मणादिवर्णो यश्च ब्रह्मचर्याद्याश्रमः, अत्र तत्तत्स्वभावानुसारेण भगवदर्पणबुद्ध्या पृथक् पृथक् विहितो यो धर्मः[4] स जीवस्योपशान्तये संसारनिर्मूलनाय कल्प्यते समर्थ्यते । शास्त्रेष्विति शेषः । स्वभावपदसामर्थ्यात् सात्त्विको धर्मो मुक्तिहेतुर्नान्यः । राजसतामसः स्वर्गनरकादिहेतुः ।

---

[1] ह्याश्रमे पृथक्—स.व्या. आश्रमे इत्युपलक्षणम्, आश्रमे वर्णे च उचितः स्वभावविहितो धर्मोऽस्योपशान्तये कल्प्यत इति योजना—व्या. [2] कल्पते—व्या.

[3] हे इन्द्र ये पूर्वोक्तेभ्योऽन्ये वक्ष्यमाणा असुरा अयज्वानः सन्ति, ते यज्वभिः स्पर्धमानाः सन्तः शीर्षाचित् शीर्षाणिचित्, स्वशिरांस्यपि परावृजुः सन्तत्यजुः । स्पर्धानिमित्तं स्वशिरस्त्यागमपि न गणयन्ति, सद्भिः सह स्पर्धामात्रेण प्राप्तप्रयोजना इति भावः—श्रीराघवेन्द्रतीर्थाः मन्त्रार्थमञ्जर्याम् ।

[4] यो धर्म इति पदद्वयमधिकमिति भाति ।

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ।
अनीहाऽनीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥

सन्तुष्टस्य निरीहस्य स्वात्मारामस्य यत् सुखम् ।
कुतस्तत् कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥

सदा सन्तुष्टमनसः सर्वाः शिवमया दिशः ।
शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् ॥ १७ ॥

सन्तुष्टः केन वा राजन् न वर्तेतापि वारिणा ।
औपस्थ्यजैह्व्यकार्पण्याद् गृहपालायते जनः ॥ १८ ॥

---

'धर्मो भवत्यधर्मोऽपि कृतो भक्तैस्तवाच्युत । पापं भवति धर्मोऽपि यो नभक्तैः कृतो हरे' इति वचनात् । अस्य जीवस्य उपशान्तये मोक्षाय इति वा ॥ १४ ॥

ननु निष्कर्मणा पुरुषेण धर्मकरणं दुःसाध्यम् । अर्थाभावात् । तस्मादधनेन तदर्थं कृष्यादिकं कर्म कर्तव्यमिति । तत्राह—धर्मार्थमिति । तर्हि देहादियात्रार्थं कर्म कर्तव्यम् । अन्यथा तन्नाशेन पुरुषार्थानुदय इति तत्राह—यात्रार्थमिति । नन्वेवं चेत् कथं देहयात्रासिद्धिरिति तत्राह—अनीहेति। अत्र अनीहा स्वदेहपोषणायासनिवृत्तिः । महाहेः अजगरस्य[1] ॥ १५ ॥

निरन्तरं भगवदुपासनाऽमृतपायिनोऽनीहा परमानन्दकारणमित्याह—सन्तुष्टस्येति । यदृच्छया सन्तुष्टस्य यत् सुखं (तत्) कामलोभेन कामभोगेच्छया अर्थेहया धनयाचनप्रवृत्त्या दिशो धावतः पुंसः कस्मात् कर्मणो लभ्यत इत्यन्वयः ॥ १६ ॥ णः तत् सुखं

दुस्त्यजेषु विषयेषु सर्वतो दिशं जाग्रत्सु निष्कर्मणः कथं सुखमुपलभ्यत इति तत्राह—सदेति । 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः' इत्यादेः । एतमर्थं निदर्शयति—शर्करेति । शिवं सुखम्, आप्नोतीति शेषः । शर्कराः पाषाणशकलानि ॥ १७ ॥

अन्नाद्यर्जनायासाभावेऽपि प्राणधारणार्थं पानीयादिप्रयत्नः स्यादेव । 'आपोमयाः प्राणाः'[2] इति श्रुतेरिति । तत्राह—सन्तुष्ट इति । केन वा येन केनापि प्रयत्नमन्तरेणोपनतेन द्रव्येण लोकविलक्षणेन

---

[1] अयाचितवृत्तिं स्तौति-धर्मार्थमिति । धर्मार्थं यज्ञाद्यर्थं यात्रार्थं देहयात्रार्थम् अधनः परकीयधनं नेहेत न याचेत । स्वतः सिद्धनीवारादिनाऽयाचितप्राप्तधनादिना वा धर्मयात्रादिकं कुर्यादिति भावः । लोके याच्ञायामपि न ददाति धनिको धनं कथमयाच्ञायां वृत्तिः स्यादित्यत आह-अनीहेति । अनीहमानस्यायाचकस्य अनीहा अनीहया तुष्टो भगवान् महाहेरजगरस्येव वृत्तिदा वृत्तिप्रदो भवति । एतादृशधर्मसन्तुष्टो भगवानदित्सताऽपि धनादिकं दापयतीति भावः—व्या. [2] आपोमयः प्राण इति प्रसिद्धपाठः ।

असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः ।
स्रवंतीन्द्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥

कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ।
जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥

---

परमात्मना वा सन्तुष्टः विषयालम्बुद्धिमान् वारिणाऽपि न वर्तेतेत्यन्वयः । ननु सर्वात्मना सर्वनिषेधस्य कोऽभिप्राय इत्याशङ्क्य किञ्चिदभ्यनुज्ञाते महान् दोषः स्यात् जलस्यन्दनवत् । विधिं विना स्वातन्त्र्यवज्जनस्य[1] कार्पण्यदर्शनाच्चेत्याह — औपस्थ्येति । गृहं पालयतेऽसौ गृहपालः सारमेयः तद्वच्चरति । 'कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः । क्षुधाऽऽक्रान्तो जीर्णो ह्यपि वरकपालार्पितगलः शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः' इत्यादेः ॥ १८ ॥

उक्तार्थानङ्गीकारे बाधकमाह — असन्तुष्टस्येति । तेजः शापानुग्रहशक्तिः रेतोलक्षणं वा । विद्या शास्त्रविषया । ज्ञानं मनोत्थमखण्डं शास्त्रानपेक्षि दीपज्वालानिभम् । अवकीर्यते विक्षिप्यते शिलानिक्षिप्तपांसुपिण्डवत् नश्यतीत्यर्थः । 'कॄ विक्षेपे' इति धातोः । वृषभविषाणाहतसेतुवत् । सुडागमाभावश्छान्दसः[2] । 'अवकीर्णोऽक्षतव्रतः[3]' इत्यभिधानम् । असन्तुष्टस्य विषयानालम्बुद्धेः ॥ १९ ॥

अत्रानलम्बुद्धिर्द्विधा । विषयाणामुपर्युपरिभोगतृष्णैका । द्वितीयाऽविश्रान्तविश्राणने न तत् पर्याप्तं भवतीत्यतो न व्ययामि, किन्तु राशीकरोमीत्याकाङ्क्षा । तत्र प्रथमाया अलाभे कामः क्रोधश्च । तयोरुभयोः शान्तिरनायाससाध्या । द्वितीयाया लोभापरपर्यायायाः नाशो दुःसाध्य इत्याह — कामस्येति । जनोऽङ्कुरिताभ्यां क्षुत्तृड्भ्यां कामस्य उपस्थादिविषयतृष्णापरपर्यायस्य अन्तं नाशं याति । कुत इत्यत उक्तम् — हीति । 'विषया विनिवर्तन्ते निराहारस्य देहिनः' इति स्मृतेः प्रसिद्धेः । एतत्फलोदयाद् तु एतयोः क्षुत्तृषोः अशनपानलक्षणभोगाभ्यां तृप्तिलक्षणफलोत्पत्तेः तदलाभोत्पन्नस्य क्रोधस्य च शान्तिं याति । दिशो जित्वा भुवो भुक्त्वाऽपि लोभस्यान्तं यागाद्युपाधिना वित्तव्ययेच्छालक्षणं न यातीत्यन्वयः[3] ॥ २० ॥

---

[1] स्वतन्त्रवज्जनस्य — ब । अस्पष्टमिदम् । असन्तुष्टं निन्दति — औपस्थ्येति — व्या.

[2] अस्पष्टमिदम् । [3] अवकीर्णः क्षतव्रत इति स्यात् । अवकीर्णी व्रतक्षतः — स.

[3] कामक्रोधापेक्षया लोभस्य दुर्निरासत्वमाह — कामस्येति । कामो विषयभोगेच्छा । क्रोधस्तदपकारकजनहननादीच्छाऽविनाभूतो मनोविकारविशेषः । लोभश्च लब्धद्रव्यराज्यादेः कियन्मात्रस्याप्यपरित्यागेच्छाऽविनाभूतो वृत्तिविशेषः । तत्र जनः क्षुत्तृड्भ्याम्, विषयिवाचिनो विषये लक्षणा, अन्नपानाभ्याम् । उपलक्षणमेतत् । लब्धेन काम्येन कामस्यान्तं निरासं याति । एवमेतत्फलस्य क्रोधफलस्य अपकारिजनहननादेरुदयात् क्रोधस्यान्तं

पण्डिता बहवो राजन् बहुज्ञाः संशयच्छिदः ।
सदसस्पतयोऽप्येके असन्तोषात् पतन्त्यधः ॥ २१ ॥

असङ्कल्पाज्जयेत् कामान् क्रोधं कामविवर्जनात्[1] ।
अर्थानर्थेक्षया लोभं भयं तत्वावमर्शनात्[3] ॥ २२ ॥

क्षि आन्वीक्षिक्या शोकमोहौ दम्भं महदुपाश्रयात् ।
योगान्तरायान् मौनेन हिंसां कामाद्यनीहया[2] ॥ २३ ॥

---

ननु बहुत्यागेन वित्तव्ययेन स्वयं नष्टः स्यात् । 'अल्पसारस्तु यो मोहाद् विस्तारं कर्तुमिच्छति । स विनश्यति दुर्मेधा नारिकेलाम्बुकं यथा' इति वचनात् । तस्माल्लोभो महान् गुणो देहयात्राहेतुत्वादित्याह — पण्डिता इति । पाण्डित्यं नाम सभाकम्पादिदोपराहित्यम् । तत् पूर्वस्यापि किं न स्यादित्यत उक्तम्–बहुज्ञा इति । सार्वज्ञ्यं घटदीपप्रभावत्नेत्याह–संशयच्छिद इति । एवंविधधर्मवन्तः के इति तत्राह — सदसस्पतय इति । एतादृशाश्च केचनेत्याह—एके इति । एवंविधा अपि असन्तोषात् लोभात् अधः कीटादियोनौ पतन्तीति यस्मात् तस्मादवैष्णवविषय एव लोभो गुणः, न तु वैष्णवविषय इति भावः । एके असन्तोपात् इति सन्धिकार्याभावो यदि तर्हि इति पदद्वयाध्याहारसूचनार्थः । यद्येवंविधा असन्तोषाद् यथायोग्यं यथालब्धद्रव्यं यथापात्रं न नियुञ्जते तर्ह्यधः पतन्तीत्यभ्युपगमसिद्धान्तोऽयम् । न केवलमसन्तुष्टस्य विद्यादिनाशः । अपि तु अधःपातः स्यादित्यतो वाऽऽह — पण्डिता इति ॥ २१ ॥

इदानीं कामादिजयोपायमाह—असङ्कल्पादिति । अत्र सङ्कल्पोऽपि द्विविधः । पुण्यपापविषयश्चेति । अत्र असङ्कल्पात् पापविरुद्धपुण्यविषयादित्यर्थः । कामात् निषिद्धान् । क्रोधः कामिताऽलाभनकारणकः । कारणनाशेन कार्यनाश इत्यर्थः । अनर्थकार्यस्य लोभस्य नाशः केनेति तत्राह—अर्थेति । अर्थेषु राजादिनिमित्तानर्थदर्शनेन । असद्व्ययो नश्वरफलहेतुरिति निरीक्षणेन च । तत्त्वावमर्शनात्[3] तत्त्वज्ञानात् । भयं वैष्णवसिद्धान्तसञ्चलनम् । 'भी भयसञ्चलनयोः' इति धातुः ॥ २२ ॥

शोकमोहौ देहगतान्तःकरणस्यैव । नान्यस्य । स्वतश्चिदानन्दस्वरूपस्यासम्भवात् । आन्वीक्षिक्या अनुकूलतर्कोपेतत्र्यातिज्ञानेन । आत्मन्यविद्यमानमहिमारोपो दम्भः । महतां प्रावण्यादिगुणाकराणाम् रा

---

याति । दिशो जित्वा भुवो भुक्त्वा विद्यमानोऽपि जनो लोभस्यान्तं न यातीति योजना । बहुद्रव्यराज्यादिमतो किञ्चित्त्यागेच्छाप्रतिबन्धको लोभो नापैतीति भावः—व्या. [1] कामविसर्जनात्—स [2] कायाद्यनीहया—स ।

[3] तत्वावमर्शनात् सर्वभूतानि भगवदाश्रितानि, भगवांश्च सर्वभूतेषु रक्षकत्वेन स्थित इत्येवं ज्ञानाद् भयं जयेत् । एवं जानतो भयं नोत्पद्यते । 'ततो न विजुगुप्सत' इति श्रुतेरिति भावः—व्या.

कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ।
आत्मजं योगवीर्येण निद्रां सत्वनिषेवया ॥ २४ ॥

रजस्तमश्च सत्वेन सत्वं चोपशमेन च ।
एतत् सर्वं गुरौ भक्त्या पुरुषो मनसा जयेत् ॥ २५ ॥

यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ ।
अभिसन्धिः श्रुतस्तस्य[1] सर्वं कुञ्जरशौचवत् ॥ २६ ॥

एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोकोऽयं मन्यते नरम् ॥ २७ ॥

---

आत्मस्तुतिलज्जितानां पुरुषाणां निरन्तरनिषेवया सद्गुणाभ्यासलक्षणया[2] । योगान्तरायान् भगवद्गुणश्रवणा-विघ्नान् मौनेन सम्भाषणवर्जनेन जयेदिति शेषः । कामाद्यनीहया कामादिनिषिद्धेच्छाराहित्येन विवाद-लक्षणां हिंसां जयेदित्यन्वयः ॥ २३ ॥

भूतजं भौतिकं दुःखम् उन्मादादिकं वा कृपया मन्त्रौषधादिसामर्थ्येन । 'कृपू सामर्थ्ये' इति धातुः । अनुक्रोशलक्षणगुणेन वा । दैवम् आधिदैविकं दुःखं समाधिना इन्द्रादिदेवताध्यानेन । 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट् करिष्यन्' 'कारीर्या यजेत वृष्टिकामः' इति श्रुतेः, अनावृष्ट्यादिदुःखं जह्यात् । क्षीरसागरतरङ्गसीकराप्लुतश्रीनारायणध्यानेन वा । आत्मजम् आध्यात्मिकं दुःखं योगवीर्येण अष्टाङ्गसामर्थ्येन पवनवशीकरणेनेत्यर्थः । सत्वनिषेवया सात्विकपुरुषनिषेवया निद्राम् अज्ञानम् ॥ २४ ॥

सत्वगुणेन रजस्तमसी । उपशमेन भगवन्निष्ठया । सर्वत्रापि भगवद्भक्तिरेव प्रयोजिकेत्याशयेनाह—एतदिति ॥ २५ ॥

विपक्षे बाधकमाह—यस्येति । अभिसन्धिः अतिक्रमणम्, भक्त्यनुसन्धानराहित्यम् । अव-ज्ञतेति[3] यावत् ॥ २६ ॥

कथमवज्ञाप्रकार इति तत्राह—एष इति । एष एवंविधमाहात्म्योपेतः । लोकोऽयं नरं सुख-दुःखभोक्तारं मन्यत इत्येवमवज्ञाप्रकार इत्यर्थः ॥ २७ ॥

---

[1] अतिसन्धिः श्रुतं तस्य—व्या. । अभिसन्धिः श्रुतं तस्य, मत्र्यासिद्धौ श्रुतं तैस्य—स ।
[2] तद्गुणाभ्यासलक्षणया—ग. [3] अवज्ञेति स्यात् ।

षड्वर्गसंयमैकान्ताः सर्वा निगमचोदनाः
तदन्ता यदि नो [1]योगमावहेयुः श्रमावहाः ॥ २८ ॥

यथा वार्तादयो विद्याः पुंसः स्वार्थं न बिभ्रति ।
अनर्थाय भवेयुश्च पूर्तमिष्टं तथाऽसतः ॥ २९ ॥

यश्चित्तविजयेच्छुः स्यान्निःसङ्गो निष्परिग्रहः ।
एको विविक्तशरणो भिक्षुर्भैक्ष्यमिताशनः ॥ ३० ॥

शुचौ देशे समे राजन्नास्थाप्यासनमात्मनः ।
स्थिरं सुखं समं तस्मिन्नासीतर्ज्वङ्ग ओमिति ॥ ३१ ॥

---

ननु हरेः प्रकृतिनिलीनत्वेन नरत्वं सम्भाव्यते । 'तुच्छेनाभ्वपिहितं यदासीत्', 'प्रकृतौ लीनः संसारमेति' 'सच्च त्यच्चाभवत्' इति श्रुतेरिति । तत्राह —षड्वर्गेति । सर्वा निगमचोदनाः 'सन्ध्यामुपासीत' इत्यादिवेदविधयोऽपि हरौ (यदि) भक्तियोगं न कुर्युस्तर्हि श्रमावहाः क्लेशहेतव एवेत्यन्वयः । श्रमावहन्ति चेत् कथंकारमित्यत उक्तम्—षडिति । षडिन्द्रियाणां संयमो विषयादाहृत्य हर्येकविषयीकरणलक्षणः, तस्मिन् एकान्तो निश्चयेन तात्पर्यं यासां तास्तथा । अन्यत् तात्पर्यं किं न स्यादिति तत्राह —तदन्ता इति । तस्य भक्तियोगस्य अन्तो निर्णयो यासां तास्तथा । यथा षड्वर्गसंयमैकान्ताः सर्वा निगमचोदनाः तदन्ता निगमा यदि योगं नो आवहेयुरिति वा ॥ २८ ॥

इष्टापूर्तादिना पुरुषस्य पुरुषार्थसम्भवेन तद्विधायिवेदः पूर्णार्थो[2] लभत इत्यतो वेदस्य श्रमावहत्वं कथम् ? अत्राह —यथेति । यस्य[3] पुंसो या वार्तादयो विद्यास्ता अर्थं न बिभ्रति । प्रत्युतानर्थाय भवेयुश्च । तथाऽसतः तस्य पूर्तमिष्टं चार्थं न विभ्रत इत्यन्वयः । पूर्तादेरनित्यफलहेतुत्वेन निन्दितत्वात् तदर्थविधायित्वं वेदस्य जुगुप्सितम् । अतस्तद्विधाने श्रमावहत्वं प्रकटमित्यर्थः । 'इष्टापूर्तं मन्यमाना वरिष्ठम्' इत्यादिश्रुतेः ॥ २९ ॥ त्या

यदि 'यदि नो योगम्' इत्यत्र योगशब्देन ध्यानं चोच्यते तदा तद्ध्यानं ध्येये मनो निधायोपासनापरपर्यायं भवेत् । तत्र जलचरस्येवानवस्थानस्य मनसो जयेन (चोदनं) सफलं स्यात् । अतस्तदुपायमाह —यश्चित्तेति । यः चित्तविजयेच्छुः स्यात् स ओमिति मन्त्रमुच्चार्य तस्मिन्नासीते-

---

[1] योगानिति पाठे धारणध्यानसमाधीनित्यर्थः—स. [2] पूर्णार्थत्वं सार्थक्यमित्यर्थः । [3] यथेति स्यात् ।

प्राणापानौ सन्निरुन्ध्यात् पूरकुम्भकरेचकैः ।
यावन्मनस्त्यजेत् कामान् स्वनासाग्रनिरीक्षणः ॥ ३२ ॥

यतो यतो निःसरति मनः कामहतं भ्रमत् ।
ततस्तत उपाहृत्य हृदि रुन्ध्याच्छनैर्बुधः ॥ ३३ ॥

एवमभ्यसतश्चित्तं कालेनाल्पीयसा मुनेः ।
अविषण्णं च निर्वाणं[1] यात्यनिन्धनवह्निवत् ॥ ३४ ॥

कामादिभिरनाविद्धं प्रशान्ताखिलवृत्ति यत् ।
चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥ ३५ ॥

यः प्रव्रज्य गृहात् पूर्वं त्रिवर्गावपनात् पुनः ।
यदा सेवेत तान् भिक्षुः स पापो निरपत्रपः ॥ ३६ ॥

---

त्यन्वयः ॥ तद्विजयोपायमाह— **निस्सङ्ग इति** । निस्सङ्गत्वं कथम् ? अत्राह— **निष्परिग्रह इति** । तत्फलम्— **एक इति** । एकस्यापि स्वजनरहितस्य जनतामध्यस्थितस्य नानावार्ताश्रवणेन विक्षिप्तस्य पुंसो मनोजयः कथमुपपद्यत इत्यत उक्तम्— **विविक्तेति** । एतदपि गृहस्थस्य न घटत इत्यत उक्तम्— **भिक्षुरिति** । तस्याशनचिन्तया द्वितीयापेक्षयोक्तं न युक्तमित्यत उक्तम्— **भैक्ष्येति** । भैक्ष्यमपि वहु सम्पन्नं न योगोपयोगि स्यादित्यत उक्तम्— **मितेति** । ऋज्वङ्गः समीकृतकायशिरोग्रीवः ॥३०—३२॥

उपाहृत्य हृदिस्थिते हरौ । इन्धनरहितो वह्निर्यथा निर्वाणं नाशं याति तथा चित्तं प्राकृतं नाशं याति । अप्राकृतं स्वरूपभूतं शरीराभिमानरहितं ब्रह्म[2] यातीत्यन्वयः । 'बाणं शरीरं सम्प्रोक्तं बाणो बलिसुते शरे' इत्यभिधानम् । 'निर्वाणममृतमक्षरं ब्रह्म' इत्यभिधानम् ॥ ३३—३४ ॥

एवं विषयीकृतब्रह्मणोऽप्राकृतस्य चित्तस्य स्वभावफलमाह— **कामादिभिरिति** । यत् चित्तं कामादिभिरनाविद्धत्वात् प्रशान्ताखिलवृत्तित्वाच्च ब्रह्म पूर्णसुखरूपं स्पृष्टं विषयीकुर्वीत् तत् कर्हिचित् ततो नोत्तिष्ठेत । ततोऽन्यत्र न गच्छतीत्यर्थः ॥ ३५ ॥

ननु कस्यचित् चेतोऽन्यत्र गच्छति चेत् किं दूषणमित्याशङ्क्य तस्य पापकरणत्वेन सर्वहास्यत्वं दूषणमित्याशयेनाह— **यः प्रव्रज्येति**[3] । त्रिवर्गावपनात् धर्मार्थकामबीजानामावपनक्षेत्रभूतात् । तान् कामादीन् । यदा सेवेत, तर्हीति शेषः ॥ ३६ ॥

---

[1] अविषण्णस्य निर्वाणम्—स. [2] द्वितीययोजनायां निर्वाणमित्यावर्त्यार्थकथनमेतत् ।

[3] परिव्राजकं पुनस्त्रिवर्गसाधने प्रवृत्तं निन्दति—य इति—व्या.

यस्य देहः स्मृतोऽनात्मा मर्त्यो विट्कृमिभस्मवत् ।
तमेव स्वात्मसात् कृत्वा श्लाघयन्ति ह्यसत्तमाः ॥ ३७ ॥

गृहस्थस्य क्रियात्यागो[1] व्रतत्यागो[2] वटोरपि ।
तपस्विनो ग्रामसेवा[3] भिक्षोरिन्द्रियलौल्यता ॥ ३८ ॥

आश्रमापसदा ह्येते खल्वाश्रमविडम्बिनः ।
देवमायाविमूढांस्तानुपेक्षेतानुकम्पया ॥ ३९ ॥

आत्मानं चेद् विजानीयादेवं ज्ञानधृताशयः ।
किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लम्पटः ॥ ४० ॥

---

एवंविधा असुरजातय इत्यभिप्रायेणाह—यस्येति । यस्य देहिनः । अनात्मा देहो विट्कृमिभस्मवत् स्मृतः, तस्य तमेव देहं तत्सदृशमेव भोगायतनं स्वात्मसात्कृत्वा 'अहमेवात्मा'[4] इति कृत्वा ये देहं श्लाघयन्ति ते असत्तमा असुरा इत्यन्वयः । 'आत्मेव महीयान्'[5] इति श्रुतिं हिशब्देन सूचयति । 'यैः स्वदेह' इति पाठे यैः मर्त्यैरनात्मा स्वदेहो विट्कृमिभस्मवत् स्मृतः ते तमेव स्वात्मसात् कृत्वा श्लाघयन्ति तर्हि असत्तमा इत्यन्वयः ॥ ३७ ॥

न केवलं यतेराश्रमत्यागे दूषणम् । अपि तु गृहस्थानामपि स्वधर्मत्यागे दोषः स्यादित्याह—गृहस्थस्येति । यत्यादेः कस्य कस्य धर्मस्य त्यागे दोषः स्यादित्यतो वाऽऽह—गृहस्थस्येति । वटो ब्रह्मचारिणः । यदि गृहस्थादीनां क्रियात्यागादयः सन्ति तर्ह्येते आश्रमापसदा हीत्यन्वयः । नन्वेतावताऽपि फलं स्यात् किम् ? नेत्याह—खल्विति । आश्रमान् विडम्बयन्ति अनुकुर्वन्तीत्याश्रमविडम्बिनः खलु । आश्रमफलाहेतुत्वादित्यर्थः । निषेधवाक्यालङ्कारादौ खलुशब्दप्रयोगात् । न चैते पुण्याशया मान्या इत्याह—देवेति । [illegible] भगवद्विषयैवानुकम्पा प्रेमविशेषः[6] ॥ ३९ ॥

यतः स्वधर्मत्यागी निन्द्योऽतो विहितातिरेकेण देहपोषो न युक्त इत्याह—आत्मानमिति । विवेकज्ञानेन धृताशयः [illegible] पुरुषः आत्मानं स्वस्वरूपं परमात्मानं च विजानीयात् चेत्, तर्हि स किं सुखमिच्छन्, कस्य हेतोः सुखार्थं वा लम्पटो रागी इन्द्रियलोलुपो भूत्वा देहं पुष्णातीत्यन्वयः ।

---

[1] अग्निहोत्रादि[illegible] । [2] [illegible]ध्ययनादित्यागः । [3] वानप्रस्थस्य पुनः ग्रामे वास इत्यर्थः ।
[4] अहमेवात्मेति [illegible] । [5] आत्मैव महीयान् इति प्रसिद्धपाठः ।
[6] भगवद्विरुद्धा [illegible] अनुकम्पया वृथा नश्यन्तीति शोकेनापेक्षेत —व्या. । अनुकम्पया कृपया खलु विना [illegible] उपेक्षा नयुक्त —श.

आहुः शरीरं रथमिन्द्रियाणि हयानभीषुं मन इन्द्रियेशम् ।
वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बन्धुर[1]मीशधाम[2] ॥ ४१ ॥
अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ।
धनुर्हि तस्य प्रणवं पठन्ति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥
रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ।
मानोऽभिमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥
रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ।
रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥

---

'सुखार्थी वा त्यजेद् विद्यां विद्यार्थी वा सुखं त्यजेत्' इति वचनात् ॥ ४० ॥

नन्वयं देहो हेयश्चेत् किमनेनार्थ इत्याशङ्क्य महाप्रयोजनमस्त्येवं कृतं चेदित्याशयेनाह— आहुरिति । अभीषुं प्रग्रहम् । इन्द्रियेशं श्रोत्रादीन्द्रियनेतारम् । मात्रा विषयाः । धिषणा बुद्धिः । ईशस्य धाम गृहस्थानीयम् । सत्त्वं अन्तःकरणविशेषः ॥ ४१ ॥

दशप्राणं प्राणदशकम् / अक्षम्, आहुरिति सर्वत्र योज्यम् । प्राणापानव्यानोदानसमाननागकूर्मकृकलदेवदत्तधनञ्जयनामानो दशप्राणाः । अधर्मधर्मौ पापपुण्यलक्षणे चक्रे शकटपदस्थानीये । अभिमानं अहङ्कारलक्षणं जीवं रथिनं पठन्तीत्यन्वयः । शरं तु जीवमित्यत्र तुशब्देन एतत्प्रवृत्तिविशेषभेदं सूचयति न तु स्वरूपभेदम् । 'प्रणवो धनुः शरो ह्यात्मा' इति श्रुतेः । 'अथ देवस्सुतस्य वागुद्धिः' इति च । परं ब्रह्म ॥ ४२ ॥

अस्य रथिनो जेतव्यानाह—राग इत्यादिना । 'अपूज्ये पूज्यबुद्धिस्तु मानः सद्भिरुदाहृतः' इति । 'मानोऽभिमानोऽवज्ञे (?) च परिमाणे च पूजने' इति च । 'अभिमानोऽर्थादिदर्पेऽज्ञाने प्रणयहिंसयोः' इति च । माया कैतवम् । रागादयो आन्तरीयाः शत्रवः । बाह्याः शत्रवः सहोदरादयः । आदिशब्देन दुन्दुभ्यादयः सुग्रीववाल्यादयः[3] । ते सर्वे शत्रवो रागादयो उपायेन परिहर्तव्या इति शेषः ॥ ४३–४४ ।

---

[1] सत्रीडम्—व्या. बृहत् महत् बन्धुरम् उन्नतानतं त्रिवेणुम्—स. [2] ईशमृग्मिति च स्फुटार्थः पाठः—स.
[3] अस्य वाक्यस्य सङ्गतिर्न स्पष्टा ।

यावन्नृकायरथमात्मवशोपकल्पं
धत्ते गरिष्ठचरणार्चनया निशातम् ।
ज्ञानासिमच्युतबलं दधदस्तशत्रुः
स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् ॥ ४५ ॥

नो चेत् प्रमत्तमसदिन्द्रियवाजिसूता
नीत्वोत्पथं विषयदस्युषु निक्षिपन्ति ।
ते दस्यवः सहयसूतममुं तमोऽन्धे
संसारकूप उरुमृत्युभये क्षिपन्ति ॥ ४६ ॥

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ।
आवर्तते प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥

---

एवं वर्णनोपयोगमाह—यावदिति । नृकायरथं मनुष्यशरीराख्यरथम् । 'रथ गतौ' इति धातोः ज्ञानसाधनत्वात् तच्छब्दशब्दितम् । यावद् आत्मवशोपकल्पं स्ववशत्वेन कल्पितं धत्ते तावत् गरिष्ठचरणार्चनया महापुरुषश्रीपादपूजनेन निशातं धौतं ज्ञानासिं दधत् । अच्युतो बलं यस्य स तथा । अक्षरितं बलं यस्य स तथेति वा । अस्तशत्रुः निरस्तरागादिशत्रुः । स्वाराज्येन ईश्वरेण दृष्टेन तुष्टः विषयालम्बुद्धिमान् उपशान्तः पूर्वस्मादाधिक्येनोपात्तभगवन्निष्ठः पुरुष इदं संसाराख्यं हेयत्वेन सर्पनिर्मोकवत् क्लृप्तं वस्तु जह्यादित्यन्वयः ॥ ४५ ॥

इतोऽन्यथाऽस्य मुक्तिरेव न सेत्स्यतीत्याह—नो चेदिति । नो चेत् इन्द्रियग्राममात्मवशं कृत्वा ज्ञानासिना संसारानुच्छेदः शब्दादिविषयाभिलाषश्चेद् यदि तर्हि असन्तोषिता इन्द्रियहयबुद्धिसूताः प्रमत्तं रागान्धीभूतचक्षुषम् अमुं रथिनम् उत्पथं अशास्त्रमार्गं नीत्वा शब्दादिविषयलक्षणेषु दस्युषु दुःखाकरेषु चोरेषु निक्षिपन्ति । ते विषयचोराः सहयसूतं इन्द्रियबुद्धिसहितम् इमं रथम् उरुमृत्युभये तमोलक्षणाज्ञानान्धे चक्षुरविषये संसारकूपे क्षिपन्तीत्यन्वयः[1] ॥ ४६ ॥

ननु स्वर्गकामो यजेतेत्यादिशक्यार्थश्रवणसमनन्तरं तदुक्तकर्मणि प्रवर्तमानं दुष्प्रापापारसंसारकूपे पातयन्तीति कथमुच्यते ? तस्यापि वैदिकत्वेनाङ्गीकार्यत्वात् । अन्यस्य सर्वधर्मपरित्यागस्यावैदिकस्यापि संसारोच्छेदकत्वं च कथम् ? सर्वधर्मान् परित्यज्येति स्मृतेरिति तत्राह—प्रवृत्तं चेति । चः समुच्चये । द्विविधमित्यनेनात्यन्तभिन्नविषयत्वम् (इति) दर्शयति । 'यद्यप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धा-

---

[1] तमोयोग्यं तमोऽन्धे नित्यसंसारिणं संसारकूपे (क्षिपन्ति)—व्या.

हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ।
दर्शश्च पूर्णमासश्च चातुर्मास्यः पशुः पुनः ॥ ४८ ॥
एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ।
पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥
द्रव्यमूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ।
अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥
अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ।
एकैकस्यानुपूर्व्याच भूत्वा भूत्वेह जायते ॥ ५१ ॥

---

स्यान्ततः क्षीयते ' ' नारायणोऽसौ परमो विचिन्त्यः ' इत्यादिना वैदिकत्वाच्च ॥ ४७ ॥

कीदृशं तत् प्रवृत्तं येनानुष्ठितेन पुनरावृत्तिः स्यादिति तत्राह— हिंस्रमित्यादिना । अश्वत्थादिद्रव्यच्छेदनात्मकत्वाद् हिंस्रम् । अशान्तिदं मुक्तिविपरीतफलप्रदम् । हुतं वैश्वदेवम् । प्रहुतं हुत्वा बलिहरणम् । एतद् द्रव्यमिष्टम् । सुरालयादिविपाकान्ताः पूर्तम् । आजीव्याः सर्वसेव्याः कुट्टिममूला विस्तृतशाखातरवः ॥ ४८–४९ ॥

द्रव्यमूक्ष्मविपाकः पुरोडाशादिद्रव्यजनितापूर्वं फलम्[1] । धूम इत्यादिना धूमादिशब्दवाच्या देवताश्चात्र गृह्यन्त इति ज्ञातव्यम् । अपक्षयः कृष्णपक्षः । सोमश्चन्द्रः । पर्वदर्शशब्देन[2] तत्प्रयुक्तकर्मविशेषः (उच्यते) । अत्र तु तदभिमानिदेवा उच्यन्ते । अनेन मार्गेण गतस्य गतिप्रकारमाह— ओषधीति । पितृयानं गतः अम्बुवृष्ट्यादिद्वारेण भुवं प्राप्तः ओषध्यादिर्भवति अन्नरूपेण पितरं प्रविश्य रेतोरूपेण मातरं चेति पुनःपुनर्भवतीति पुनर्भवः, स्यादिति शेषः । न केवलमोषध्यादिभावोऽस्य किन्तु धूमादिभावोऽप्यस्तीति विशदयति— एकैकस्येति । अत्र आनुपूर्व्यात् क्रमात् । ' अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति ' इत्युपक्रम्य ' यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद् भूय एव भवति ' इत्यनेनायमर्थः प्रपञ्च्यते[3] ॥ ५१ ॥ ॥ ५० ॥ द्रूप

---

[1] असष्टमिदम् । पुरोडाशादिद्रव्यजनितापूर्वं च पूर्तम् । फलमाह–धूम इत्यादिना । धूम इत्यादिना देवताश्चात्र गृह्यन्ते । एवं विन्यासः सरलः । ' ऊष्मविपाको द्रव्यम् ऊष्मणा विपच्यमानं ब्राह्मणेभ्यो दीयमानमन्नादिकं च पूर्तम् । एतदपि काम्यं चेत् प्रवृत्तम् । ' — व्या. [2] पर्वत्राचिदर्शशब्देनेत्यर्थः ।

[3] प्रवृत्तकर्मानुष्ठातुर्मार्गमाह–धूम इति । धूमरात्रिकृष्णपक्षदर्शदक्षिणायनाभिमानिनां सोमस्य च लोकः पितृयानम् । अत्राभ्रमेघादिकमपि ग्राह्यम् । ओषधिवीरुधान्नरेतश्च । एकैकस्य धूमादेः स्थानमानुपूर्व्याद् भूत्वा पुनः पुनः प्राप्येह मनुष्यलोके जायते—व्या.

निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ।
इन्द्रियेषु क्रियायज्ञान् ज्ञानदीपेषु जुह्वति ॥ ५२ ॥

इन्द्रियाणि मनस्येवं वाचि वैकारिकं मनः ।
तां तु वर्णसमाम्नाये तमोङ्कारे स्वरे न्यसेत् ॥ ५३ ॥

ओङ्कारं बिन्दुनादे तु तं तु प्राणे महत्यमुम् ।
अग्निः सूर्यो दिवा वायुः शुक्लो राकोत्तरः स्वराट् ॥ ५४ ॥

---

अत्र च 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा' इत्यादेरभिप्रायं दर्शयति — **निषेकादीति** । निषेको रेतःसेकः । अनेनापि पुनर्भव इत्यस्य भावो विवृत इति ज्ञायते । देवयानापरपर्यायार्चिरादिमार्गाभिमानिदेवचक्रं वदिष्यन् तन्मार्गगतावित्थंभूतसाधनमाह —**इन्द्रियेष्विति** । क्रियायज्ञान् क्रियात्मकयज्ञाभिमानिदेवान् ज्ञानं दीपयन्ति जनयन्तीति ज्ञानदीपानि । ज्ञानमेव दीपो येषां तानि तथा तेषु इन्द्रियेषु इन्द्रियाभिमानिदेवेषु जुह्वति । हवनं नाम तद्वशत्वेन स्मरणम् । तदुक्तम्-'यज्ञाभिमानिनो देवान् स्मरन्तीन्द्रियमानिनाम् । वशगान् तान् मनोमानिसुरेन्द्रस्य वशे स्थितान् । वेदात्मिकायाः पार्वत्यास्तं तां रुद्रवशे स्थिताम् । वर्णत्रयात्मकं रुद्रं शेषे तु प्रणवात्मके । बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत् । 'मूलस्थ[1]नादरूपायां तां वायौ तं जनार्दने । प्रकृत्यामथवा प्राणं तामेव पुरुषोत्तमे' इति ॥ ५२ ॥

इन्द्रियाणि तदभिमानिदेवान् मनसि मनोऽभिमानीन्द्रवशे, एवं पूर्ववत् स्मरन्तीति शेषः । विशिष्टाकारपराक्रमलक्षणं कर्माऽस्यास्तीति वैकारिकं मनोऽभिमानिनमिन्द्रं वाचि वेदाभिमानिन्यां पार्वत्याम् । तामुमां वर्णसमाम्नाये पदवर्गस्वरक्रमाणां सम्यगाम्नायः सम्प्रदायः अनन्यथापाठलक्षणो यस्मिन् स तथा । (यद्वा) अकारोकारमकाराणां त्रयाणां वर्णानां समाम्नायः मेलनं यस्मिन् ओङ्कारे[2] स तथा तस्मिन् तदभिमानिनि रुद्रे, स्थितामिति शेषः । तुशब्देन भार्याभर्तृभावं पूर्वस्माद् विशिनष्टि । तं रुद्रं ओङ्काराभिमानिनि, स्वं परमात्मानं रमयतीति स्वरः शेषः तस्मिन् स्थितं न्यसेत् । मनस्तद्विषयं करोति ॥ ५३ ॥

तमोङ्कारं शेषं बिन्दुनादे बिन्दुनादरूपसरस्वत्यां तदाधारत्वेन स्थितम् । तुशब्देन पूर्वयोरेकत्रत्वं[3] अत्र स्वस्वामिभावं सूचयति । तां बिन्दुरूपां मूलाधारस्थनादरूपायां प्रकृतिनाम्न्यां सरस्वत्यामेकीभूय।

---

[1] मूलस्था मूलाधारस्थिता—स.   [2] अत्रैवं बहुव्रीहिर्न स्वरसः । शेषस्योंकाराभिमानकथनात् । 'पृथक् पृथगकारोकारमकाररूपवर्णत्रयात्मकं रुद्रं प्रणवात्मके एतत्संश्लिष्टोङ्काररूपे शेषे'—स.

[3] असग्रमिदं पदम् ।

विश्वोऽथ तैजसः प्राज्ञस्तुर्य आत्मा समन्वयः ।
देवयानमिदं प्राहुर्भूत्वा भूत्वाऽनुपूर्वशः
आत्मयाज्युपशान्तात्मा ह्यात्मस्थो न निवर्तते ॥ ५५ ॥

---

स्थितिशब्देन तयोरेकत्वं दर्शयति[1] । तं तां नादरूपां प्राणे प्रकृष्टानन्दरूपे वायौ स्थिताम् । अत्रापि तुना भार्याभर्तृभावमाह । अमुं वायुं महति जनार्दने स्थितं स्मरेत् । अथवा प्राणनामानं वायुं
महति प्रधाने प्रकृतिशब्दवाच्ये स्थितम् । अमुम् अक्षरं प्रकृतिनामानं महति पुरुषोत्तमे स्थितमिति महतीति शब्दो द्विरावृत्त्या व्याख्येयः । एतत् सर्वं 'बिन्दुरूपसरस्वत्यां तं तां तस्यां पुनर्न्यसेत्' इत्यादिपूर्वोक्तेन मानेन सविस्तरमुक्तम् । इदानीमर्चिरादिमार्गे देहादुत्क्रान्तस्य ज्ञानिनः प्राप्यान् देवानाह—अग्निरिति । दिवा दिवसाभिमानी । शुक्लः शुक्लपक्षाभिमानी । राका पूर्णमास्याभिमानिनी । उत्तरः उत्तरायणाभिमानिनी । स्वराड् इन्द्रः ॥ ५४ ॥

अत्र न केवलमग्न्यादय एव प्राप्याः । अपि तु विश्वाद्या अनिरुद्धाद्या भगवतो मूर्तिविशेषाश्च प्राप्या इत्याशयेनाह—विश्व इति । अथ शब्देनानिरुद्धादिग्रहणम् । तेषामुभयेषां विष्णुरूपत्वं सूचयति[2] । 'विश्वाद्या अनिरुद्धाद्यास्ते द्विधा सम्प्रकीर्तिताः । विष्णुरूपास्तदन्ये च तान् सर्वान् याति मोक्षगाः' इति वचनात् । किञ्चान्ये च दिवस्पुत्राः तन्निकटवर्तिनः सन्ति । तेऽप्यथशब्देन सूचिताः । 'तदन्ये च दिवस्पुत्राः सर्वे च द्युसमीपगाः । ते दिवं प्रापयन्त्येनं सवायुं[3] स हरिं पृथक्[4] । विश्वादिरूपं तुर्यश्च[5] वासुदेवश्च नापरः' इत्युक्तेः । गतिक्रमोऽप्यनेन ज्ञातव्यः । न परं विश्वादिकमेवाप्तव्यम् । किन्तु तन्मूलरूपो हरिरासव्य इत्याह—आत्मेति । आत्मा विश्वादिरूपो हरिः । सम्यगन्वीयतेऽनेन
ज्ञानेनेति समन्वयः । तदुक्तम्—'.... सहरिं पृथग् । विश्वादिरूपं ....' इति । वासुदेवः तुर्याद्वन्यो नेत्याह—तुर्य इति । तुर्य आत्मा वासुदेवः । 'अत सातत्यगमने' इति धातोः । सततगमनं व्याप्तिः । 'यश्चास्य संततो भावः' इति स्मृतेः सर्वत्र वचनशीलत्वात्, क्रीडारूपत्वात्, जपाकुसुमाद्युपाध्यनाविद्धस्फटिकवन्निर्मलज्ञानरूपत्वाद् वासुदेवः । 'शुद्धस्फटिकसंकाशं वासुदेवं निरञ्जनम्' इति स्मृतिः । 'ऐकात्म्यप्रत्ययसारं प्रपञ्चोपशमं शिवम् । अद्वैतं तुर्यं मन्यन्ते स आत्मा स विज्ञेयः' इति श्रुतेः । '.... तुर्यश्च वासुदेवश्च नापरः' इति च । किञ्च मार्गस्थानां सर्वेषां देवानामपि परमात्मनि समन्वयोऽस्तीति ज्ञापनाय समन्वय इत्युक्तम् । एतस्य नाम निर्दिशति—देवयानमिति । 'संवत्सरो

---

[1] अस्पष्टमिदम् । [2] अथशब्देन सूचयतीत्यर्थः । [3] सा वायुं—ग. [4] स हरिः पृथक्—ड.
[5] विश्वादिरूपस्तुर्यश्च—ड.

य एते पितृदेवानामयने देवनिर्मिते ।
शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥

आदावन्ते जनानाशं बहिरन्तः परावरम् ।
ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिश्च सत् स्वयम् ॥ ५७ ॥

---

वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च ' इत्यारभ्य ' एतस्मान्न पुनरावर्तन्त इत्येष निरोधः ' इत्यन्तं वेदान्ताः प्राहुरित्यन्वयः । अस्य फलमाह—भूत्वेति । अनुपूर्वशः क्रमेणोपर्युपरि सुखादिभिरधिको भूत्वा आत्मस्थः मुक्तः न निवर्तत इत्यन्वयः कुतः ? ' आत्मयाजी ' परमात्मपूजकत्वात् । पुनरावृत्तीच्छाऽपि तस्य नास्तीति भावेनाह—उपशान्तेति । पूर्णानन्दस्वरूपः । धूमादिमार्गवदस्यपि, स्या पुनरावृत्तिभीरस्ति किमित्यतो भूत्वेति[1] ॥ ५५ ॥

ननु किमेतज्ज्ञानेन प्रयोजनं येनावश्यं वक्तव्यतामियादिति तत्राह—य एते इति । जनस्थो देहस्थः । ' तद् य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति ' इत्यादिना शास्त्रेण । केवलं मोहं न प्राप्नोति । नीचां गतिमपि न यातीत्यतोऽपीत्युक्तम् । ' भक्तिमान् मार्गविन्नैव नीचां गतिमवाप्नुयात् ' इति स्मृतेः ॥ ५६ ॥

' जाग्रदाद्यवस्थाप्रवर्तकविश्वादीन् कल्पितानतिक्रम्य प्रपञ्चोपशमतुर्यात्मा भूत्वा निर्द्वन्द्व आस्ते ' इति केचिद् व्याचक्षते । तन्मतदूषणायाह—आदाविति । आदौ उत्पत्तिकाले अन्ते मुक्तिकाले च यत् जनानाशं जननं विनाशं च । ' जनी प्रादुर्भावे ' इत्यस्मात् पचाद्यचि अजादित्वात् टापि कृते 'जना' इति रूपं सिद्ध्यति । (नाशः) वध्यघातकभावो मार्जारमूषकवत् । यच्च बहिरन्तर्विद्यमानं परावरं उत्तमाधमं भूतभविष्यद् वा । यच्च ज्ञानादिकम् । सर्वस्य ग्लापकत्वात् ग्लानिजनकत्वात् तमः प्रकृतिः। ज्योतिः तदाभासकः स्वप्रकाशश्च यः । तदेतत् सर्वं स्वयं तुर्यात्मा श्रीहरिः । तत्सत्ताया अपि तदधीनत्वात् स इत्युच्यते । न तु तदात्मकत्वात् । ' पुरुष एवेदं सर्वम् ' इति श्रुतेः । आदौ ~~यथा तदधीन~~त्वं तथाऽन्तेऽपि श्रीनारायणाधीनत्वमित्यतो वाऽऽह—आदाविति । उक्तार्थः श्लोकः । निरुपचरितापराधीनत्वं हरेरेव, न मुक्तस्यापीत्यतो वाऽऽह—आदाविति । आदावन्ते उत्पत्तेः प्रागूर्ध्वम्[2] अयं परमात्मा वर्तत इति शेषः । कथङ्कारम् ? अत्राह—जनेति । जनकत्वेन नाशकत्वेनेत्यादिरूपेण सर्वकर्तृत्वस्वातन्त्र्येण तच्छब्दवाच्यत्वं हरेरप्युक्तम् । तमःशब्दस्य 'ग्लापकत्वात्' इति णिच्प्रत्ययान्तत्वेन विवरणादयमर्थो[3] ज्ञायत इति ॥ ५७ ॥

---

[1] अस्पष्टमिदम् । [2] लयादूर्ध्वमिति स्यात् । [3] जननाशमित्यादौ जनयति नाशयतीत्यादिणिजन्तार्थः ।

अबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ।
दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥

मिश्रा क्षित्यादीनां पदार्थानां छाया न कतमाऽपि हि ।
न संघातो विकारोऽपि न पृथङ्‌ नान्वितोऽपि वा ॥ ५९ ॥

---

ननु सत्तायास्तदधीनत्वं प्रामाणिकं चेद् ब्रह्मत्वेनोक्तिर्घटेत । ततः काऽत्र युक्तिरित्याशङ्क्योपपादयति —अबाधित इति । प्राकृतवैकृतलक्षणकार्येषु विशिष्टकान्तिमत्तया भासते विद्योतत इति आभासो देहः प्रतिबिम्बलक्षणः यथा वस्तुतया 'वसनाद् वासयेद् वस्तु नित्याप्रतिहतत्वतः' इति स्मृतेः वस्तु परमात्मा तत्वेन स्मृतः 'इदं हि विश्वं भगवानिवेतरः' 'इन्द्रो मायाभिः' इत्यादिना । ननु देहस्य सत्वे तत्सत्ताया भगवदधीनत्वेन तद् वक्तुं युक्तम् । तस्य दग्धपटाभासवदर्थक्रियाऽनर्हत्वादिति तत्राह[1] —अबाधित इति । शुक्तिकायां प्रतिभासितं रजतं वलयकरणाद्यर्थक्रियानर्हत्वेन नेदं रजतमिति बाधितं स्याद् यथा तथाऽयं न बाधितः । हानोपादानाद्यर्थक्रियायोग्यत्वात् । अपिशब्दोऽत्र स्वातन्त्र्यशङ्कां सूचयति[2] । हिशब्देन प्रत्यक्षसिद्धत्वेन दग्धपटाभासवैलक्षण्यं दर्शयति । तद्वत् तथा ऐन्द्रियकं इन्द्रियविषयं घटपटादिकम् । अर्थशब्दो भावप्रधानः । अर्थत्वेन अर्थक्रियाख्यप्रयोजनतया कल्पितं समर्थितम् । परमात्मनेति शेषः । 'कर्तृकर्मक्रियादीनां सत्ता वृत्तिस्तथैव च विष्ण्वधीनं यतः' इति वचनादर्थक्रियासामर्थ्यस्य भगवदधीनत्वेन 'सर्वं खल्विदं ब्रह्म' इति सर्वस्य तत्त्वं युक्तमिति भावः[3] । एवमनङ्गीकारे बाधकमाह—दुर्घटत्वादिति । ईश्वरादन्येन कर्तुमशक्यत्वात्[4] ॥ ५८ ॥

सामर्थ्यानां दुर्घटत्वमेव दर्शयति—क्षित्यादीनामिति । क्षित्यादीनां पदार्थानां कतमाऽपि छाया कतमोऽपि विशेषः, प्रकारः विचार्यमाणे सति न घटत इति । 'छाया रीतिः प्रकारश्च भावश्चेत्यभिधीयते' इत्यभिधानम् । इह कार्यप्रपञ्चे । हिशब्दो हेत्वर्थः । निर्धारणार्थवाचिना तमप्प्रत्ययेन कस्यापि प्रकारस्यासम्भवोक्तेः

---

[1] अशक्यस्य न भगवदधीनत्वं वक्तुं शक्यमिति चेत् तत्राहेत्याशयः । [2] आग्रहमिदम् ।

[3] सर्वस्य तत्त्वेनोक्तिर्युक्तेति भावः ।

[4] ननु सत्यस्याधीनत्वं संभवति, प्रपञ्चस्य त्वाभासत्वाद् दृश्यत्वान्मिथ्यात्वेन कथं तदधीनत्वमित्यत आह—अबाधित इति । प्रपञ्च आभासोऽपि दृश्यमानोऽपि यथा वस्तु ब्रह्म तथैव सत्यत्वेन स्मृतः । दृश्यत्वहेतोः सर्वदोषदुष्टत्वात् । मिथ्यात्वे बाधस्यैव प्रयोजकत्वात् । अयं चाबाधितः । असंभावितोत्पत्त्यादिमत्त्वात् कथं ब्रह्मवत् सत्यं स्यादित्यत उक्तम्-दुर्घटत्वादिति । भगवतो दुर्घटघटनाशक्तिमत्त्वात्, अर्थेनेति भावप्रधानो निर्देशः, अर्थत्वेन अर्थक्रियाकारित्वेन विविधतया कल्पितमुत्पादितम् । ऐन्द्रियकमिति प्रत्यक्षादिप्रमाणसिद्धत्वं सूचयति । अतः सत्यमिति योजना । न हि भगवान् सत्यसर्जनासमर्थो येन मायया मोहयेदिति भावः—व्या.

धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ।
न स्युर्ह्यसत्यवयविन्यासन्नावयवा इव[1] ॥ ६० ॥

परमेश्वरकल्पितत्वेनैतत् कार्यं सदिति वक्तुं युक्तम् । प्रकाराभावमुपपादयति— न सन्घात इति । परमेश्वरकल्पनामन्तरेण कार्यं भवतीति वदन् प्रष्टव्यो भवति–क्षितिलक्षणं कार्यं केवलमपां पुञ्जः, तद्विकारो वा, तद्व्यतिरेकेणोत्पन्नं वा, वृक्षद्वयसंयोगवदुभयोः संयोगमात्रं वेति । न प्रथम इत्याह— नेति । अयं संघातो न । असंभवात् । क्षितेः कठिनावयवारब्धत्वात् केवलमपां द्रवत्वेन तत्कार्ये पर्वतादीनां मज्जनापत्त्या क्षितेः स्वरूपलयप्राप्तेः आधाराभावेन सर्वप्राणिप्राणनाशप्रसङ्गात् । न द्वितीय इत्याह— विकार इति । अत्र नञोऽध्याहारः कर्तव्यः । अपां विकारः (इति) अपि नोपपद्यते । कालुष्यादिलक्षणविकारमात्रेण क्षितित्वानुपपत्तेः । न तृतीय इत्याह— न पृथगिति । अद्भ्यः क्षितेः पृथक् स्थित्यदर्शनात् । नापि चतुर्थ इत्याह–नान्वित इति । सहावस्थानमात्रेण कार्योत्पत्त्यदर्शनात् । क्षित्यादीनां पदार्थानां कतमाऽपि छाया कतमोऽपि भावः पदार्थः कार्यजननशक्तिमान् न घटते । विचारासहत्वात् । तथाहि—'अद्भ्यः पृथिवी' इति श्रूयते । तत्र प्रस्तुतात्मशक्तिमन्तरेण केवलानामपां पृथिवीजनकत्वं कथमिति वा[2] । शेषं पूर्ववत् ॥ ५९ ॥

ननु विश्लिष्टानां पदार्थानामन्योन्यं महाकार्योत्पत्तावसामर्थ्यमस्तु । संश्लिष्टानां नेयमनुपपत्तिरित्याशङ्क्य श्रीनारायणकटाक्षबीजमन्तरेणावयवावयविनोरप्यनुपपत्तिः स्यादेवेत्याह — धातव इति । धातवः क्षित्यादिपञ्चभूतादिपदार्थाः तन्मात्रावयवैर्विना गन्धादिव्यतिरेकेण । सुरभिगन्धवती पृथिवी । शुक्लभास्वरं जलमित्यादिव्यावर्तकधर्माभावे स्वरूपाभावप्राप्तिरेव स्यादित्यर्थः — अवयवित्वादिति । न ह्यवयविनोऽवयवाभावेऽवयविव्यवहारो युक्तः । तस्मात् । चशब्द एवार्थे, समुच्चयार्थे वा । प्रत्यक्षसिद्धत्वादवयवित्वाच्चेति । अयं निर्णयः कुत्र दृष्ट इति तत्राह—असतीति । इव यथा आ समन्तात् सन्नावयवाः सर्वात्मना तन्तुलक्षणा अवयवा नष्टा यदि तर्ह्यसदवयविनि तन्तुरहिते पटे पटव्यवहारोऽपि नष्ट इति शेषः । तन्तुव्यतिरेकेण पटाभावाद् । यथाऽवयवाभावेऽवयवी नास्ति तथा अवयविनि निवृत्ते अवयवा अपि निवृत्ताः स्युरित्यतो वाऽऽह–आसन्नावयवा इति । आसन्नावयवा अपि नष्टाः स्युरित्यर्थः । यथा आसन्नावयवा आतानवितानावयवत्वसंसर्गं प्राप्ताः[3] तन्तुलक्षणा अवयवाः प्रागसत्यवयविनि पटे पटव्यवहारं न जनयन्ति तथा गन्धाद्यवयवाः प्रागसत्सु क्षित्यादिषु पश्चात् क्षित्यादिव्यवहारं न जन-

[1] 'आसन्नावयवा इव' (आसन् न अवयवा इव) इति 'असन्नवयवोऽन्ततः' इति च स पाठः ।

[2] तात्पर्यरीत्या छायाशब्दस्य प्रकारार्थत्वमङ्गीकृत्य प्रथमं व्याख्यातम् । इदानीं भावार्थत्वं स्वीकृत्य व्याख्यायते । परं न स्पष्टतया प्रादर्शि ।

[3] आतानवितानलक्षणसंसर्गं [illegible]प्ता इति स्यात् ?

स्यात् सादृश्यभ्रमस्तावद् विकल्पे सति वस्तुनः ।
जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥

---

यन्तीत्यतस्तदभावेन[1] तद्भावः स्पष्ट इत्यन्वयव्यतिरेकौ दर्शिताविति ज्ञातव्यम् । एवं दुर्घटत्वेनाविद्याकल्पितप्रपञ्चस्याविद्याबाधानन्तरमनुवृत्तस्यापि न वस्तुत्वमिति कल्पनमनुपपन्नम्। 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्' । 'यद्धि युक्त्या विरुद्ध्येत तदीशकृतमेव हि' इति श्रुतिस्मृतिप्रसिद्धां युक्तिं हिशब्देन दर्शयति । 'असत्यस्यावयविन्यासन्नावयवा न च' इति केचित् पठन्ति । अयमर्थः— गन्धावयवव्यतिरेकेण पृथिव्याद्यवयविनो न स्युश्चेत् किं नश्छिन्नमिति तत्राह— असतीति । क्षित्यामवयविन्यसति गन्धाद्यवयवा एव नासन्नित्यन्वयः । अवयवाभावेऽवयव्यभावेन कारणाभावापत्त्या सर्वासत्त्वप्रसङ्गलक्षणोच्छेद इति भावः ॥ ६० ॥[2]

नन्ववयवावयविनोः सादृश्यमात्रेण तस्यायमवयव इति व्यवहारः । तस्मात् तद्व्यतिरेकेण सोऽपि नास्तीति कथमापद्यत इति तत्राह— स्यादिति । सत्यम् । सादृश्यभ्रमः स्यात् तावत् । कस्मिन् सतीति तत्राह— विकल्प इति । वस्तुनो विकल्पे भेदे सतीत्यन्वयः । यथा पट्टणादिषु रूप्यमवलोक्य तत्संस्कारवतः सहस्रकिरणसम्पर्केण चकाशमानं क्वापि शुक्तिकाशकलं संदृश्य द्वयोः सादृश्यमात्रादिदं रजतमिति भ्रमो दृश्यते । तथा क्षित्यादेर्गन्धादेर्भेदे वस्तुसादृश्यमात्रेण व्यवहारः स्यात् । न चात्र भेदो युज्यते । स्वरूपहानेः । अतोऽवयवाभावेऽवयव्यभाव आपद्यते स्वरूपत्वादिति भावः । पटस्य प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाऽभेदादुक्तं युक्तमिति ।

---

[1] तदभावः—ग.

[2] 'आसन् न अवयवा इव' इति पाठं स्वीकृत्य गोविन्दाचार्या एवं व्याकुर्वन् । तथा हि । धातवः पृथिव्यादयोऽवयवद्रव्याणीति अवयवैः पृथक्त्वेन न स्युः । अवयवैर्विना न स्युः । उक्तं हि–'तन्तुभ्योऽन्यः पटः साक्षात् कस्य दृष्टिपथं गतः' इति । तर्ह्यवयविनाऽवयवानामत्यन्ताभेद एवास्तु । तदपि न संभवतीत्याह–असत्यवयविन्यासन् । पुरा धातुसृष्टेः धातावसत्यपि तन्मात्रा अवयवा आसन् किल । यो यदभावेऽप्यस्ति स कथं तत् स्यात् । तर्हि भेद एवोच्यताम् । तदपि न चारु । यतोऽवयवैर्विनाभूतोऽवयवी न दृष्टिपथं गत इत्युक्तम् । नन्ववयविनोऽभावेऽवयवाः कथमासन् ? यतोऽवयवत्वं नामावयविसापेक्षो धर्मः । आह–नावयवा इव । किन्त्वनवयवा एवासन् स्वोपादानस्यावयविभूताः। कथं तेषामवयवत्वम् ? कथं च तैरवयवी जातः ? अयमर्थः । न तावदवयवसङ्घातमात्रमवयवी । न हि तन्तुसङ्घातमात्रं पटः। पटात् पूर्वमपि सत्त्वात् । न च विकारमात्रम् । न हि केनचित् तन्तुविकारमात्रेण पटो भवति । तस्यापि पूर्वमेव भावात् । न चावयवेभ्यः पृथक् स्थितिः । अवयवैर्विना पृथगदृष्टेः । नापि वस्तुद्वयवत् सहावस्थानमात्रम् पृथगदृष्टेरेव । तस्मात् स्वतो दुर्घटत्वात् तन्तुवायेन संस्थानविशेषमापन्नास्तन्तवो यथा पटभावमापद्यन्ते एवं दुर्घटया शक्त्या भगवता जगत् कार्यकारणात्मना क्लृप्तमिति सर्वं समञ्जसमिति ।

नन्ववयविपदार्थसद्भावे इयं चिन्ता। स एव नास्ति। परमाणव एव पुञ्जीभूय कार्यं जनयन्तीत्यङ्गीकार्यत्वात्। प्रतिक्षणं नाशाच्च। अभेदग्राहिप्रत्यभिज्ञायाश्च संस्कारजनितसादृश्यमात्रविषयतया भ्रान्तित्वादित्यतो वाऽऽह—स्यादिति। वस्तुनो भेदे सति तदुक्तं सत्यं स्यात्। तदेव नास्ति। एकत्वस्य साक्षिप्रत्यक्षेणानुभूयमानत्वात्। साक्षिणो भ्रान्तित्वे सर्वस्य विनाशसाधकस्यापि व्याप्तिग्राहकप्रमाणप्रामाण्यस्य साम्यात् परमाणुपुञ्जपक्षेऽपि निगदितदोषानिस्तारात्। परमाणुभिर्विना पुञ्जाभावेन स्वरूपं न स्यात्[1]। अतो दुर्घटघटकेन केनचिद् भवितव्यम्। स चादृष्टकर्मणोश्चेतनाश्रयत्वेन पृथक्सामर्थ्याभावात् चेतन एव भवेत्। चेतनसामान्यस्य हिताकरणादिना पारतन्त्र्यप्रतीतेः, निरवयवत्वेन प्रवृत्त्यनुपपत्तेश्च[2] तत्प्रवर्तकत्वेनाघटितघटकत्वेन माहात्म्याकरपरमचेतनपरिकल्पनयैव शरीरपदार्थोपादानभूतपृथिव्यादियोगो दृश्यत इति सिद्धम्। 'कार्यकारणवस्तूनां विशेषो न निरूपितः। तथाऽपीशेच्छयैवासौ दृश्यते नियतोऽपि च' इति स्मृतेः। एतादृशो विशेषः कुत्र दृष्ट इति तत्राह—जाग्रदिति[3]। यथा स्वप्ने जाग्रदिदम् अयं स्वप्न इति विशेष ईश्वरेच्छया दृश्यते। 'एष स्वप्नान् दर्शयति' इति श्रुतेः। 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते' इत्यादेः स्वप्ने प्रतीयमानं सर्वमीश्वरेच्छाकर्तृकमिति ज्ञायते। तथा विधिनिषेधविशेषोऽपीश्वरकल्पनयैव प्रवर्तत इत्याह—तथेति। 'अग्निष्टोमेन स्वर्गकामो यजेत' इत्यादिमहाविधित्वम्। '[4]अरुणया पिङ्गाक्ष्या एकहायन्या

---

[1] परमाणुपुञ्जातिरिक्तावयवी यथा नाङ्गीक्रियते तथा परमाणवतिरिक्तपुञ्जोऽपि नाङ्गीक्रियताम्, तथा च परमाणुपुञ्जरूपावयविस्वरूपं न सिध्येदिति भावः।

[2] कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति सूत्रोक्तदिशेत्यर्थः।

[3] एवं दुर्घटोऽपि कार्यकारणभावः अवयव्यवयवभावश्च ईश्वराचिन्त्यशक्त्यैवोपपद्यत इत्येतद् दृष्टान्तेन प्रादयति—जाग्रदिति। यथा कश्चन सुप्तः स्वप्नं पश्यति, स्वप्ने एव शेते। शयित्वा स्वप्नं पश्यति। स्वप्ने एवोद्बुध्य जाग्रदवस्थां प्राप्तोऽहमिति मन्यते, स्वप्ने एवैतादृशं स्वप्नमपश्यमित्यपि क्वचिद् व्यवहरति। तत्र यथा स्वप्नेऽनुभूयमानस्वप्नजाग्रतोरुभयोरपि स्वाप्नत्वाविशेषेपि ईश्वराचिन्त्यशक्त्यैव कश्चन विशेषो यमालम्ब्याबाधितव्यवहारः प्रवर्तते, तथा कार्यकारणभावादीनां निर्वक्तुमशक्यत्वेप्यचिन्त्येशशक्त्यैव सर्वमुपपद्यत इत्यर्थः।

[4] तृतीयाश्रुत्या 'क्रीणाति' इत्युक्तक्रयं प्रति अवगतकरणभावस्याऽऽरुण्यगुणस्यामूर्तत्वेन साक्षात्क्रियासाधनत्वायोगेऽपि द्रव्यपरिच्छेदमुखेन तत् संभवति। 'आरुण्यगुणपरिच्छिन्नेन द्रव्येण क्रयं कुर्यात्' इत्येवं श्रुत्यैव गुणस्य क्रयैकवाक्यत्वे संभवति वाक्यभेदस्य लक्षणाश्रयणस्य वाऽयोगात्। एवं च गुणस्य क्रयार्थत्वे सिद्धे तस्य तदीयैकहायनीद्रव्ये निवेशः। न वासःप्रभृतिद्रव्ये निवेशः। तेषां क्रयान्तरसाधनत्वादिति। .... एकहायनी गोरेवेति।—श्रीराघवेन्द्रतीर्थाः (भाट्टसङ्ग्रहे)

भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथाऽऽत्मनः ।
वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ६२ ॥

कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत् ।
अवस्तुत्वाद् विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥

यद् ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् ।
मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥

---

सोमं क्रीणाति' इत्याद्यवान्तरविधित्वं तथा 'ब्राह्मणो न हन्तव्यः' इत्यादिमहानिषेधत्वं 'न मृषा वदेत्' इत्याद्यवान्तरनिषेधत्वं चेश्वरेच्छाक्लृप्तमित्यन्वयः । 'स इदं सर्वमसृजत' इत्यादेः सङ्कोचे कारणाभावान्मुख्यार्थ एवाङ्गीकर्तव्यः । अत्र तत्तद्विशेषस्य परमेश्वरक्लृप्तत्वनिश्चयाय मिथ्याभूतजाग्रत्स्वप्नग्रहणम्[2] । न तु तद्वत् स्वप्नस्यापि मिथ्यात्वनिश्चयाय । तस्यार्थक्रियाकारित्वेन सत्यत्वनिश्चयात् । अनेन सर्वस्यापि मिथ्यात्वे रज्जुसर्पस्य मिथ्यात्वं रज्जुखण्डः सत्य इतीयं व्यवस्था कुत इत्याशङ्क्य मिथ्याभूतस्वप्नेऽपि जाग्रत्स्वप्नव्यवहारवत् व्यवहारमात्रमत्र चेत्यादिश्रुत्योच्यत इति[3] ॥६१॥

एवं सर्वस्मादात्मन उपकारकत्वेन प्रेष्ठत्वाद् येन विना तत्प्रसादो न भवेद् यस्मिन् सति संजाघटीति भगवति तत्समर्पणसमये, तं भावनाप्रकारं दर्शयति—भावेति । मुनिः शास्त्रतत्त्वज्ञानी आत्मनो भावाद्वैतं क्रियाद्वैतं तथा द्रव्याद्वैतं च वर्तयन् स्मरणं कुर्वन् स्वानुभूत्याऽऽविर्भूतस्वरूपज्ञानेन इह जगति । सतस्त्रीन् स्वप्नान् जाग्रदाद्यवस्थानुभवनिमित्ताज्ञानशब्दवाच्यानर्थान् धुनुते निरस्यतीत्यन्वयः[4] ॥ ६२ ॥

किं तद् भावाद्वैतादिकं येन तदवश्यमनुध्येयमिति तत्राह—कार्यकारणेति । महदादिकार्येषु प्रकृतितद्गुणाख्यकारणेषु च स्थितस्य वस्तुनो नित्याप्रतिहतस्य हरेरेकत्वदर्शनम् । तत् कथमिव ?—पटतन्तुवत् । पटस्य तन्तूनां चाभेदलक्षणैकत्वं यथा प्रामाणिकं तथेत्यर्थः । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः' इत्यादेः । मृद् घट इति सामानाधिकरण्येन कार्यकारणयोरभेदोक्त्या श्रीहरिसंबन्धाप्रतीतेः प्रकृतासङ्गतं स्यात्, निदर्शनं चैकत्वप्रदर्शनपरमित्युक्त एवार्थः[5] । प्रतीतार्थं परित्यज्याप्रतीतार्थकथने किं कारणम् ? अत्राह—अवस्तुत्वादिति । घटादिप्रपञ्चस्यानित्यत्वेन प्रतिहतत्वात्

---

टी [1] मृषं—ग [2] असाष्टमिदम् ।
[3] असाष्टमिदम् । नावगं नापूर्णम् । [4] त्रीन् स्वप्नान् स्वप्नावस्थात्रयम्, संसारमिति यावत्, धुनुते—व्या. स्वप्नजाग्रत्सुषुप्तिनिमित्तकाज्ञानप्राप्यानर्थान् धुनुते—स. भावाद्वैतादित्रयमपि धुनुते इत्यपि सुवचम् ।
[5] असङ्गतं निदर्शनमिति चेन्न । हरिरूपेण्वैकत्वरूपाभेदप्रदर्शनपरत्वान्निदर्शनस्येत्याशयः स्यात् ।

आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ।
यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥

यद् यस्य वाऽनिषिद्धं स्याद् येन यत्र यतो नृप ।
स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥

एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ।
गृहेऽप्यस्य गतिं यायाद् राजन् तद्भक्तिभाङ् नरः ॥ ६७ ॥

यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरिता ननु प्रभो ।
यत्पादपङ्केरुहसेवया भवानहार्षीन्निर्जितदिग्गजः क्रतुः ॥ ६८ ॥

---

स्वत एव कार्योत्पादनसामर्थ्याभावात् । अवस्तुत्वाद् असमर्थत्वाद् विश्लिष्टत्वात् मिलितत्वात्[1] कार्यजनन-शक्त्यभावाद् वा । इदं च भगवन्माहात्म्यप्रकटनम् । 'गणं युगपदाविशत्' इति स्वोक्तेः कार्यकारणानु-विष्टानां भगवद्रूपाणां मत्यैक्यगेकत्वम् । 'तत् सृष्ट्वा तदेवानुप्राविशत्' 'समधिगतोऽस्मि विधूतभेद-मोहः' इत्यादिश्रुतिस्मृतिभिरुच्यत इति ज्ञानपूर्वकमुपासनं कार्यमिति शेषः । 'न ऋते त्वत् क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' इति क्रियाद्वैतम् । आत्मजायादीनामन्येषां च देवदत्तादीनां भगवदधीनत्वदर्शनं यत् यच्चार्थकामयोरैक्यं भगवद्विषयत्वदर्शनं तत् सर्वं द्रव्याद्वैतं[2] 'मन्ये तदर्पित-मनोवचनात्मगेहप्राणः पुनाति' इत्यादिनोच्यत इत्यन्वयः । अनेन जीवस्य श्रीहरिणा द्वैतमुच्यते । तत्रैव चाद्वैतशब्दार्थग्रहणम्[3] । न स्वरूपैक्यमिति शिक्षा ग्राह्येति ज्ञायत इति ॥ ६३–६५ ॥

उपासनाप्रकारं निरूप्याधुनाऽर्चनादिप्रकारं दर्शयति—**यद्यस्येति** । यस्य पुरुषस्य येन द्रव्येण यत्र यस्मिन् देशे काले वा यतो यस्मादुपात्तम् अनिषिद्धं श्रुतिस्मृतिलोकविहितं स नरः तेन तस्मिन् देशे काले वा तस्मात् पुरुषादासेन कर्माणि पूजालक्षणानि, ईहेत कुर्यात् । अन्यैर्निषिद्धैर्न कुर्यादि-त्यन्वयः । नन्वेवं तर्ह्यापदि उपरम एव प्राप्त इति तत्राह—**अनापदीति** ॥ ६६ ॥

एतैरनापदि विहितैः । अन्यैरापदि विहितैः । अस्य हरेर्गतिं ज्ञानं स्थानं वा, यायादिति लडर्थे लिङ्, आप्नोतीत्यर्थः ॥ ६७ ॥

उक्तमर्थमनुभवसिद्धं करोति—**यथेति** । दिग्गजशब्देन दिक्पालानुपलक्षयति । तस्य सेवा कर्तव्येति शेषः ॥ ६८ ॥

---

[1] असाष्टमिदम् । अमिलितत्वादिति स्याद्वा ? [2] स्वार्थकामयोस्तद्गतभगवद्रूपयोरैक्यं द्रव्याद्वैतमुच्यत इति योजना—व्या. [3] स एव चाद्वैतशब्दार्थ इत्यर्थः ।

अहं पुराऽभवं कश्चिद् गन्धर्व उपबर्हणः ।
नाम्नाऽतीते महाकल्पे गन्धर्वाणां सुसम्मतः ॥ ६९ ॥

रूपपेशलमाधुर्यसौगन्ध्यप्रियदर्शनः ।
स्त्रीणां प्रियतमो नित्यं मत्तस्तत्पुरलम्पटः ॥ ७० ॥

एकदा देवसत्रे तु गन्धर्वाप्सरसां गणाः ।
उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥

अगायन् तद् विदित्वाऽहं स्त्रीभिः परिवृतो गतः ।
ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ ७२ ॥

याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ।
तावद् दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम्
शुश्रूषयाऽनुसङ्गेन प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥

धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ।
गृहस्थो येन पदवीमञ्जसा न्यासिनामियात् ॥ ७४ ॥

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियान्ति ।
येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिङ्गम् ॥ ७५ ॥

---

ममाप्यनुभवसिद्धमिति दर्शयितुं स्वचरितमाह—अहमिति । कश्चिदित्यात्मानं निन्दयति । अथ नाम्ना उपबर्हणो, गन्धर्व इति । पूर्वम् अतीते महाकल्पे अतीतब्रह्मकाले 'ब्राह्मकालः परश्चेति महाकल्पश्च कीर्तितः' इति ॥६९॥ तत्पुरलम्पटः[1] तासां पुरे गेहे लम्पटः स्थातुमुत्सुकमनाः ॥७०॥

गन्धर्वादिगणा अगायन् । तद्विदित्वा गतः स्त्रीभिः परिवृतोऽगायन् । हेलनं विश्वसृजां पुरतः म स्त्रीभिः सम्भूय मदोपरक्तगानलक्षणम् ॥ ७१—७२ ॥

तावत् तदानीमेव । अनुसङ्गेन निरन्तरसेवालक्षणसङ्गेन भक्त्या वा । 'तीव्रस्नेहोऽनुषङ्गोऽथ नैरन्तर्यानुसेवनम्' इत्यभिधानात् ॥ ७३ ॥

अत इत्येतदपास्तं निगमयति—धर्म इति[2] । न्यासिनां पदवीं निवृत्तिमार्गम् । अर्चिरादिमार्गेण वैकुण्ठं वा ॥ ७४ ॥ यूयमित्यादिपद्यमुक्तार्थम् ॥ ७५ ॥

---

[1] तत्पुरलम्पटस्तासां पुराण्यङ्गानि तेषु लम्पटस्तदालिङ्गनाद्यासक्तमनाः—स.

[2] अस्मद्ध्येयमवतारिका । उपवर्णितगृहस्थाश्रमधर्ममुपसंहरति–धर्म इति—व्या.

स वा अयं ब्रह्म महद् विमृग्यं
कैवल्यनिर्वाणसुखानुभूतिः ।
प्रियः सुहृद् वः खलु मातुलेय
आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ७६ ॥

न यस्य साक्षाद् भवपद्मजादिभी
रूपं धिया वस्तुतयोपवर्णितम् ।
मौनेन भक्त्योपशमेन पूजितः
प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥

श्रीशुक उवाच —

इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ।
पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥

कृष्णपार्थावुपामन्त्र्य पूजितः प्रययौ मुनिः ।
श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥

इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ।
देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥

इति श्रीमद्भागवते सप्तमस्कन्धे षोडशोऽध्यायः ।

---

कैवल्येन प्रकृतिप्राकृतमिश्रराहित्येन आप्तं यत् निर्वाणसुखं | तस्य अनुभूतिः अनुभवो यस्य स तथा । यत्र यस्य प्रेमरसः तत्र स स्नातः[1] ॥ ७६–७७ ॥ स्वरूपसुखं

परमप्रमेयमुपसंहरति—इतीति । दाक्षायिणीवंशस्य शाखोपशाखाभेदेन वर्णितत्वादिति शब्दः समाप्तिवचनः । यत्र येषु वंशेषु । ज्ञानमात्रं विहाय स्थावरसङ्ग्रहणाय चराचरा इति ॥ ८० ॥

[2]भुजविलसितशौर्यं भुजङ्गदमजितं विष्णुम् । मद ( दम )
वन्दे भुजगशयनं भुजयुगकल्पितग्रीवम् ।

---

[1] असाम्प्रमिदम् ।

[2] अत्र मन इति कर्तृपदमध्याहृत्यान्वेतव्यम् । तथा च हे मनः । विष्णुं विष्लृ व्याप्तावित्यतः सर्वत्र व्याप्तश्रीनृहरिं भजेत्यन्वयः । अनेन सत्यं विधातुं निजभृत्यभाषितमित्याद्युक्तव्याप्तिः प्रकटिता । अथवा उत्तमपुरुषपदप्रयोगादहमिति लभ्यते । तेनाहं वन्द इत्यन्वयः । कीदृशं विष्णुम् । विलसितशौर्यं विलसितं प्रकाशितं शौर्यं शत्रु-

।

पदरत्नावलिर्ह्येषा सप्तमस्कन्धसङ्गता ।
तुलसीव हरेः प्रीत्यै भूयाद् विभववारिधेः ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थमुनीन्द्रकृतायां पदरत्नावल्यां
श्रीमद्भागवतटीकायां सप्तमस्कन्धस्य षोडशोऽध्यायः

॥ श्रीकृष्णार्पणमस्तु ॥

---

विषये येन स तथोक्तस्तम् । अथवा भुजाभ्यां प्रकाशितं शौर्यं येन स तथोक्तस्तम् । भुजगमदजितं भुजाभ्यां गम्यते पराजयः प्राप्यते जगदनेनेति भुजगो हिरण्यकशिपुस्तस्य मदं जेतेति तथोक्तस्तम् । भुजगशयनं भुजाभ्यां गच्छति नृहरिपादाविति भुजगः प्रह्लादस्तस्य शिरसि शयो न्यस्तो हस्तो नीयते प्राप्यते स्थाप्यतेऽनेनेति भुजगशयनस्तम् । अथवा भुजगशयनमनन्तमन्तत्रयविधुरम् । भुजयुगकल्पितग्रीवं भुजयुगमध्ये कल्पितो ग्रीवः सिंहग्रीवो येन स तथा तम् । तथा च हे मनस्त्वं नानावतारभिन्नं भक्तदुरितदूरीकरं दुर्जनमदहरं भक्तोत्तमाङ्गस्थापितकरं नरहरिरूपधरं भजेति भावः—अहोबलनृसिंहाचार्याः ।

भगवद्बादरायणप्रणीतम्

# श्रीमद्भागवतम्

## अष्टमस्कन्धः

### अथ प्रथमोऽध्यायः

राजोवाच —

स्वायम्भुवस्येह मनोर्वंशोऽयं विस्तराच्छ्रुतः ।
यत्र विश्वसृजां सर्गो मनूनन्यान् वदस्व नः ॥ १ ॥
यत्र धर्मा हि विविधाश्चतुर्वर्णाश्रिताः शुभाः ।
मन्वन्तरे हरेर्जन्म कर्माणि च महीयसः ॥ २ ॥

---

### श्रीमद्विजयध्वजतीर्थविरचिता पदरत्नावली

॥ अथ प्रथमोऽध्यायः ॥

अस्तावि श्रुतिमस्तकेन मनुना स्वायम्भुवेनापि यो
येनारक्षि जगत्त्रयं च मुनिभिः स्वात्मानुविद्धात्मभिः ।
येनामोचि गजाधिपः क्रकचवच्चक्रेण नक्राननात्
क्षीराम्भोधिरमन्थि येन घृतभूः सोऽयं हरिः पातु नः ॥ १ ॥
येनाधारि गिरिः पपे च विबुधैः येनामृतं प्रेरितैः
येनातापि सुरद्विषां च हृदयं शर्वोऽप्यमोहि स्त्रिया ।
येनामायि जगन्त्यबन्धि च बलिः येनाप्यदायि श्रुतिः
धात्रे येन निहत्य मत्स्यवपुषा दैत्यं तमीडे हरिम् ॥ २ ॥
सप्तमस्कन्धवाराशौ निमज्योन्मज्य शुद्धधीः ।
अष्टमस्कन्धसव्याख्यामृतं पातुमुपक्रमे ॥ ३ ॥

अत्रापि हरिभक्तिरेव भगवन्मनःकर्षणनिपुणेति विधातुम् अनन्तोपनिषदर्थभूतस्य हरेः जगद्रक्षणादिमाहात्म्यं निरूप्यते। तत्रापि विमलतरमुरहमथनदुरितहरचरितामृतपानाप्यायितप्राणो विस्मृतानशनक्लेशः परीक्षित् शुकम् अच्युतकथानुवादपूर्वकम् अभिलषितात्यन्तश्रोतव्यकथां प्रार्थयते—राजेति[1] ।

---

[1] इतः परं 'इत्याह सूतः' इति पदद्वयाध्याहारेऽन्वयस्सुलभः । सत्यधर्मतीर्थास्तु 'सार्वभौमोऽर्थयते इति वक्ति राजेति' इति अवतारमामासुः ।

गृणन्ति कवयो ब्रह्मन् तानि नो वद शृण्वताम् ।
यद्यस्मिन्नन्तरे ब्रह्मन् भगवान् विश्वभावनः
कृतवान् कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥

ऋषिरुवाच —

मनवोऽस्मिन्[1] व्यतीताः षट् कल्पे स्वायम्भुवादयः ।
आद्यस्ते[2] कथितो यत्र देवादीनां च सम्भवः ॥ ४ ॥

आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ।
धर्मज्ञानोपदेशार्थं भगवान् पुत्रतां गतः । ॥ ५ ॥

कृतं पुरा भगवतः कपिलस्यानुवर्णितम् ।
आख्यास्ये भगवान् यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥

विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ।
विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥

सुनन्दायां वर्षशतं पदैकेन भुवं स्पृशन् ।
तप्यमानस्तपो घोरं इदमन्वाह भारत ॥ ८ ॥

---

अन्यान् स्वायम्भुवव्यतिरिक्तान् । तत्रापि तत्प्रसङ्गे विशेषकथापि वक्तव्येत्याह — यत्रेति । महीयसः महत्तमस्य हरेः ॥ १–२ ॥

अस्मिन्[3] वैवस्वतान्तरे स्वायम्भुवप्रभृतिवैवस्वतान्ताः सप्तमनवो व्यतीतप्राया उच्यन्ते[4] । अत्र सप्तसु आद्यः कथित इत्यन्वयः ॥ ४ ॥

अत्रापि शतरूपापतिपालनादिविषयमनुदितं यज्ञमूर्तिचरितं वक्तुमाह — आकूत्यामिति । कपिलस्य हरेः कृतं चरितम् । पुरा तृतीयस्कन्धे ॥ ६–७ ॥

सुनन्दायां त्रिधा भिन्नायां विष्णुपद्याम्[5] । एतस्याम् अन्वाह स्तुतिरूपाम् उपनिषद्माह ॥८॥

---

[1] मनवोऽत्र–इत्यपि स । [2] आद्यस्तु–इत्यपि स.

[3] अस्मिन् कल्पे—स. अस्मिन् ब्रह्मदिनकल्पे–छलारीशेषाचार्याः (शे)। अस्मिन् वैवस्वतमन्वन्तरे वर्तमाने (सति)। लिङ्घेरी श्रीनिवाचार्याः (लि) ।

[4] असाध्विदम् । शेषाचार्यास्तु एवं व्याचकुः–स्वायम्भुवस्वारोचिषोत्तमतापसरैवतचाक्षुषाख्याः षण्मनवो व्यतीता इति ।

[5] सीताऽलकनन्दा चक्षुर्भद्रेति चतुर्धा भिन्नायामलकनन्दाख्यायाम् । तस्या एव सुनन्देति नामान्तरम्—स. सुनन्दायां स्रोतसि भागीरथ्याम्—लि.

मनुरुवाच —

येनायं तपते विश्वं विश्ववीर्यं यतस्तपः ।
यो जागर्ति शयानेऽस्मिन् नायं तं वेद वेद सः ॥ ९ ॥
आत्मावास्यमिदं विश्वं यज्जगत्यां जगन्मनः ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यचिद् धनम् ॥ १० ॥

---

कीदृशीत्यतोऽर्थतस्तामुपलक्षयति—येनेति । अयमादित्यो येन हरिणा प्रेरितो विश्वं तपते प्रकाशयति, विश्वस्य वीर्यं वीर्यप्रदं तपो यतो भवति, अस्मिन् सूर्ये शयाने निद्रामाचरति सति यो हरिर्जागर्ति अयं सूर्यः तं हरिं न वेद स हरिस्तम् आदित्यं वेद इत्यन्वयः । 'भयात् तपति सूर्यः' 'भीषोदेति सूर्यः' इति श्रुतेः । 'यो न वेदेति वेद च' 'अनेन आप्रा द्यावा पृथिवी अन्तरिक्षम्' इत्यादिश्रुतिप्रतीतसर्वाधिपत्यादित्यस्य श्रीहर्यधीनत्ववर्णनेन निरतिशयमाहात्म्यं युक्तं हरेरिति ज्ञातव्यम् । अयं जीवो येन नियतो विश्वं सुखदुःखादिकं तपते अनुभवति, तप आलोचन इति धातुः, आलोचनं ज्ञानं' स एव अनुभवः[1], 'स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इति श्रुतेः । हरिनियतोऽनुभवतीति कुत इति तत्राह—विश्ववीर्यमिति । विश्वस्य वीर्यभूतं तपोऽनुभवो यस्माद् भवति । 'एष ह्येवानन्दयति' इति श्रुतेः। आनन्दयति सुखयति, जीवमिति शेषः, तस्मादित्यर्थः । अस्मिन् जीवे शयाने सति, 'सता सोम्येति श्रुतेः', 'यो जागर्ति' 'न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः' इति श्रुतेः, 'तस्मादेनं स्वपितीत्याचक्षते' इति च । अयं जीवस्तं न वेद 'न तत्र चक्षुर्गच्छति न वाग् गच्छति न मनो न विद्म न विजानीमः' इति श्रुतेः । स हरिः सर्वं वेद, 'यः सर्वज्ञः' इति श्रुतेः इति वा ॥ ९ ॥

न राजादिवत् सूर्यप्रेरकत्वं हरेः किन्तु तदन्तःस्थितत्वेनापीत्यभिप्रेत्याह—आत्मेति । इदं सूर्यादिविश्वम् आत्मन आवास्यम् आवासयोग्यं स्वसृष्टत्वात् । इदमित्यनेन कियत् कवलीक्रियत इति तत्राह—यज्जगत्यामिति । जगत्यां प्रकृतौ यज्जगत् स्थावरजङ्गमलक्षणं प्रकृतावित्युक्त्योत्पन्नमनुत्पन्नं च यत् (तत्) सर्वं स्वव्यतिरिक्तं कवलीक्रियते । प्रकृतिरावासयोग्येति कैमुत्यन्यायेन सिद्धा 'प्रकृतिं पुरुषं च' इति वचनाच्च । अस्तु आवासयोग्यत्वम् । ततः किम् ? तत्राह—मन इति । हे मनः यत इदमीशस्य विद्यमानं तेन कारणेन तेन ईशेन, त्यक्तेन दत्तेन धनेन भुञ्जीथाः स्वीकुरु, शरीरयात्रामिति शेषः । यतस्त्वं तदधीनसत्ताक अत एवं न कुर्वित्याह—मा गृध इति । कस्य परमानन्दरूपस्य हरेश्चिदानन्दस्वरूपलक्षणं धनं मा गृधः तेनैक्यमाप्नुवानीत्याकाङ्क्षां न कुर्वतोऽनर्थहेतुत्वादित्यर्थः[2] ।
ज्ञान

---

[1] तच्चात्रानुभवात्मकम् इति पाठेन भाव्यमिति भाति । [2] न कुरु अनर्थहेतुत्वादिति स्वरसम् ।

यं न पश्यन्ति पश्यन्तं चक्षुर्यस्य न रिष्यति ।
तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥

यस्याद्यन्तौ न मध्यं च न परो नान्तरं बहिः ।
विश्वस्यामूनि यद् यस्माद् विश्वं च तद् ऋतं महत् ॥ १२ ॥

स विश्वकायः पुरुहूत ईशः सत्यं परंज्योतिरजः पुराणः ।
धत्तेऽस्य जन्माद्यजयाऽऽत्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥

---

भगवता दत्तं कस्यचिद् धनं मदीयमिति श्रद्धां न कुरु इति वा । ईशावास्यमिति श्रुतिः ॥ १० ॥

ननु किमस्य लक्षणं येन तत्सद्भावेन इदं तदावास्यं स्यादिति तत्राह—**यन्नेति** । स्वप्रसादमन्तरेणाज्ञेयत्वं सर्वज्ञत्वं नित्याविनष्टचक्षुष्ट्वं च तस्यैव लक्षणं मुख्यम् । 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' 'यच्चक्षुर्न पश्यति येन चक्षूंषि पश्यति' इति श्रुतेः, न रिष्यति न नश्यति । सुपर्णं[1] पूर्णानन्दम् उपधावत भजत ॥ ११ ॥

लक्षणान्तरमाह—**यस्येति** । पर इत्युपलक्षणम् अपरोपि परोपि च । अत्र परापरवस्तुनोः स्वातन्त्र्यं निषिध्यते न तु शून्यत्वम् (उच्यते) । तद् ऋतं महद् ब्रह्मेत्यर्थः[2] । तदेवर्तं तदु सत्यमाहुः इति श्रुतिः ॥ १२ ॥

इदं च ब्रह्मलक्षणमित्याह—**स विश्वेति** । आत्मशक्त्या आत्ममायया प्रकृत्या अस्य जगतो जन्मादि धत्ते, यश्च तां प्रकृतिं विद्ययोदस्य निरस्य निरीहः सृष्ट्यादिशून्य आस्ते स ब्रह्म नाम परमात्मा इत्यन्वयः । प्रलये विश्वकाय उदरान्तर्गतप्रपञ्च इत्यर्थः । सृष्टौ विश्वमेव कायः शरीरं यस्य स तथा, प्रतिमास्थानीयप्रपञ्च इत्यर्थः । अतः पुरुहूतः पुरूणि बहूनि हूतानि नामानि यस्य स तथा । 'सर्वनामा सर्वकर्मा' इति श्रुतिः । सर्वनामवाच्यत्वे हेतुः—**ईश इति** । तत्तच्छब्दप्रवृत्तिनिमित्तसामर्थ्योपेत इत्यर्थः । नैतदौपचारिकमित्यभिप्रेत्याह—**सत्यमिति** । तत्तन्नामवाच्यत्वे तत्साधुगुणसद्भावसामर्थ्यमस्तीति वक्तुमुचितं स एव कथमित्यतो वाह[3]—**सत्यमिति** । साधुगुणपूर्णम् । इदं च लक्षणान्तरम् । 'परंज्योतिरुपसंपद्य' इति श्रुत्या मुक्तप्राप्यत्वम् उच्यते तदेवानेनोच्यत इति[4] । परंज्योतिः सूर्याद्यन्यतमः किं न स्यादित्यतः—**अजः पुराण इति** ॥ १३ ॥

---

[1] सु शोभनं पर्णं वटपत्रं शय्यात्वेन यस्य तमिति वा—स.

[2] विश्वस्यामून्याद्यन्तादीनि यस्माद् भवन्ति विश्वं च यद् यदधीनसत्ताकं तद् ब्रह्म ऋतं सत्यं महद् गुणपूर्णम्—शे.

[3] तत्तत्साधुगुणपूर्णत्वे तत्तन्नामवाच्यत्वमस्तीति वक्तुमुचितम्, तदेव कथमित्यतो वाहेति स्वरसम् ।

[4] अत्रापि परंज्योतिश्शब्देन तदेव मुक्त(क्ति)प्राप्यं ब्रह्मोच्यत इत्यर्थः ।

अथाग्र ऋषयः कर्माणीहन्ते कर्महन्तवे ।
ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥

ईहते भगवानीशो न हि तत्र विषज्जते ।
आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥ १५ ॥

तमीहमानं निरहङ्कृतं [1]बुधैर्निराशिषं पूर्णमनन्यचोदितम् ।
तच्छिक्षयन्तं निजवर्त्ममूढान् प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥

श्रीशुक उवाच —

इति मन्त्रोपनिषदं व्याहरन्तं समाहितम् ।
दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन् क्रुधा[2] ॥ १७ ॥

---

एवं सिद्धे वस्तुनि तत्साधनज्ञाने साधनमाह—अथेति ? यतो ज्ञानप्रतिबन्धके दुष्कर्मणि-सति सर्वे दुःसाधनं स्यादिति । अथ लोकसंग्रहार्थम् ऋषयोऽग्रे कर्महन्तवे दुष्कर्मपरिहाराय यागादि-कर्माणि ईहन्ते कुर्वन्ति इति विज्ञाय ज्ञानार्थी पुरुषः ईहमानः कर्म कुर्वाणो विधूतदुष्कर्माऽनीहां निवृत्तिपदवीं प्राप्य प्रायो बहुलं ज्ञानं प्रपद्यत इत्यन्वयः । कश्चित् फलार्थी अन्यथाऽपि भवतीति प्राय इत्युक्तम् । अनेन ‘ कुर्वन्नेवेह कर्माणि ’ इति श्रुतिर्गृहीता, ‘ आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्माणि रतिविशेषेण समावृत्य कुटुम्बी शुचौ देशे स्वाध्यायमधीयानो धार्मिको[3] विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिंसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः स खल्वेवं वेदं वर्तयन् यावदायुषम् ’ इति श्रुतिर्हिंशब्देन गृहीता ॥ १४ ॥

न केवलम् ऋषय एव लोकसंग्रहार्थं कर्माण्याचरन्ति अपि तु श्रीहरिरपीति भावेन आह— ईहते इति । कर्मानभिषंगे कैमुत्यन्यायमाह — नावसीदन्तीति । ये तमनुवर्तन्ते तेऽपि नावसीदन्ति किमुत श्रीहरिरित्यन्वयः ॥ १५ ॥

पुरुषेण फलानिच्छया कर्म कर्तव्यमात्मविदेति भावेन स्तौतीत्याह— तमीहमानमिति । बुधैरीहमानं निजवर्त्ममूढान् तत्कर्म शिक्षयन्तं प्रभुं प्रपद्य इत्यन्वयः ॥ १६ ॥

मन्त्रवर्णेन युक्तोपनिषदम्[4] ॥ १७ ॥

---

[1] बुधमित्यपि पठन्ति-स.। ईहमानं तथापि निरहङ्कृतं स्वयं बुधैश्च निजवर्त्म शिक्षयन्तं प्रभुं प्रपद्य इत्यन्वयः-स

[2] क्षुधा-इत्यपि स.शं.

[3] धार्मिकान् विदधदिति सूत्रभाष्योदाहृता श्रुतिः

[4] मन्त्रोपनिषदं मन्त्ररहस्यम्—स.

तांस्तथाऽवसितान् वीक्ष्य यज्ञः सर्वगतो हरिः ।
यामैः परिवृतो देवैर्हत्वाऽशासत् त्रिविष्टपम्[1] ॥ १८ ॥

स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ।
द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥

तत्रेन्द्रो रोचनश्चासीत् देवाश्च तुषितादयः ।
[2]ओजःस्तम्भादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥

ऋषेस्तु वेदशिरसस्तुषिता नाम पत्न्यभूत् ।
तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥

अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ।
अन्वशिक्षन् व्रतं तस्य कौमारब्रह्मचारिणः ॥ २२ ॥

तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ।
पवनः सृञ्जयो यज्ञहोत्राद्यास्तत्सुता नृप ॥ २३ ॥

वसिष्ठतनयाः सप्त ऋषयः प्रमदादयः ।
सत्या वेदश्रुता भद्रा देवा इन्द्रस्तु सत्यजित्[3] ॥ २४ ॥

धर्मस्य सूनृतायां तु भगवान् पुरुषोत्तमः ।
सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥

सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ।
भूतद्रुहो भूतगणांस्त्ववधीत् सत्यजित्स्तुतः ॥ २६ ॥

---

तस्य स्वारोचिषस्य ॥१९॥ नाम्ना रोचनः ॥२०॥ नाम्ना विभुः ॥२१॥ तस्य विभोः ॥२२॥ सत्यजितेन्द्रेण स्तुतः ॥ २६ ॥

---

[1] मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वराः । ऋषयोंऽशावतारश्च हरेः षड्विधमुच्यत इति षड्विधं वक्ष्यति सूतः । तथाऽपि क्वचिद्धर्यवतार एव यदेन्द्रस्तदा पञ्चविधं तदिति मन्तव्यम्—स.
अयमभिप्रायः । स्वायम्भुवमन्वन्तरे यज्ञनाम्नो हरेरेवेन्द्रत्वात् तत्रेन्द्रसाहाय्यकृद् भगवदवतारो नास्तीति पञ्चविधत्वं यज्ञकपिलावतारयोः सतोरपि । तथा तापसमन्वन्तरेऽपि हरिरेव तापसमनुरिति तत्रापि प्रत्येकावतारो नास्तीति पञ्चविधत्वम् । अतः षड्विधमित्युत्सर्ग इति ।

[2] ऊर्जस्तम्भादयः—शे.लि.

[3] अत्र यज्ञधर्मा नाम्ना सत्यजित् इन्द्र आसीत्—शे.

चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तापसः
हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात्[1] ।
वृषः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥
सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः[2] ।
ज्योति[3]र्धामादयः सप्त ऋषयस्तापसेऽन्तरे ॥ २८ ॥
देवा वैधृतयो नाम विधृतेस्तनया नृप ।
नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥

राजोवाच —

बादरायण एतत् ते श्रोतुमिच्छामहे वयम् ।
हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३० ॥
तत् कथासु[4] महापुण्यं[5] धन्यं स्वस्त्ययनं शुभम् ।
यत्र यत्रोत्तमश्लोको भगवान् गीयते हरिः ॥ ३१ ॥

सूत उवाच —

परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ।
उवाच विप्राः प्रतिनन्द्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥

इति श्रीमद्भागवते अष्टमस्कन्धे प्रथमोऽध्यायः ।

---

तः आहुतः आहूतः ॥ २७ ॥ हे विप्राः इति सूतः शौनकादीन् संबोधयति ॥ ३२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य प्रथमोऽध्यायः ।

---

[1] क्वचित् कोशेषु 'नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा' इत्यस्यानन्तरं 'तत्रापि जज्ञे भगवान् हरिण्यां हरिमेधसः । हरिरित्याहुतो येन गजेन्द्रो मोचितो ग्रहात्' इति पठ्यते । व्याख्यातश्च यथानिवेशं सत्याभिनवतीर्थैः लिङ्गेरीआचार्यैश्च । परं सत्यधर्मतीर्था विरोधोद्धारकर्तारः पाङ्गीश्रीनिवासाचार्याश्च तदेतन्नाभ्युपयन्ति । 'तत्रापि जज्ञे इत्याद्यर्धस्य प्रक्षिप्तत्वमुक्त्वा हरिरित्याहुतः' इत्याद्युत्तरार्धस्य 'चतुर्थ उत्तमभ्राता' इत्येतस्मिन्नेव श्लोके निवेशमिच्छन्ति । गीताभाष्यप्रमेयदीपिकायां दशमाध्याये जयतीर्थवर्यैरेवमेव श्लोकोदाहरणात् । विजयध्वजतीर्थानामभिप्रायोऽस्मिन् विषये स्पष्टं न ज्ञायते । तथापि दुर्गमार्थस्यापि हरिणीति पदस्य हरिमेधस इत्यस्यापि पदस्याव्याख्यानाद् आहुत इत्यस्यैव सुगमार्थस्य पदस्य व्याख्यानाच्च तेषामपि न सम्मतं तदर्धं तदुत्तरार्धस्य तत्र निवेशश्चेति कृत्वा जयतीर्थीयसरण्याऽयं श्लोको निवेशितः । [2] अश्विनोर्मध्ये नासत्यो नाम्ना त्रिशिख इति ईश्वर इन्द्रो बभूव–लि. [3] धाम–स. धर्म–लि. [4] तत तद् ग्रन्थप्रस्थानं कथासु कथासङ्गे महापुण्यं पुण्याधायकम्—स. तत्कथासु श्रुतासु महापुण्यादिकं भवतीति—लि. [5] महत् पुण्यम् इत्यपि—स.

॥ अथ द्वितीयोऽध्यायः ॥

श्रीशुक उवाच —

आसीद् गिरिवरो राजन् त्रिकूट इति विश्रुतः ।
क्षीरोदेनावृतः श्रीमान् योजनायुतमुच्छ्रितः ॥ १ ॥

तावता विस्तृतः पर्यक् त्रिभिः शृङ्गैः पयोनिधिम् ।
दिशश्च रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ २ ॥

अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ।
नानाद्रुमलतागुल्मैः निर्घोषैर्निर्झराम्भसाम् ॥ ३ ॥

सदा निर्णिज्यमानाङ्घ्रिः समन्तात् पयऊर्मिभिः ।
करोति श्यामलां भूमिं शुभैर्मरकतादिभिः ॥ ४ ॥

सिद्धचारणगन्धर्वविद्याधरमहोरगैः ।
किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकन्धरः न्द ॥ ५ ॥

यत्र सङ्गीतसन्नादैर्नदद्गुहममर्षया ।
अभिगर्जन्ति हरयः श्लाघिनः परशङ्कया ॥ ६ ॥

---

अत्र शरण्येषु शश्वदप्रतिहतशरण्यः श्रीभगवानेवेति दर्शनाय गजेन्द्रविषय इतिहासः कथ्यते । क्षीरोदेन क्षीरसमुद्रेण ॥ १ ॥

पर्यक् परिवृतः[1] । रौप्यायसहिरण्मयैः रजतायोहेममयैः त्रिभिः शृङ्गैः पयोनिधिं दिशश्च रोचयन् विद्योतयन् । अन्यैर्नानाधातुमयैः शृङ्गैश्च, रोचयन्निति शेषः ॥ २–३ ॥

निर्णिज्यमानाङ्घ्रिः प्रक्षाल्यमानप्रत्यन्तपर्वतः । शुभैरन्याश्मनाऽविद्धैर्मरकताश्मभिः इन्द्रनीलरत्नैः भूमिं श्यामलां नीलां करोतीति ॥ ४ ॥

यश्च सिद्धादिभिर्नित्यनिषेवितगुहः ॥ ५ ॥

किन्नरादिसङ्गीतसन्नादैः नदद्गुहं प्रति ध्वनितगुहं स्थलमभि उद्दिश्य प्रतिगजशङ्कयाऽमर्षया असह्यमानबुद्ध्या श्लाघिनः प्रशस्या हरयः सिंहाः गर्जन्ति ॥ ६ ॥

---

[1] पर्यक् परितः — स.

नानारण्यपशुव्रातसङ्कुलद्रोण्यलङ्कृतः ।
चित्रद्रुमसुरोद्यानकलकण्ठविहङ्गमः ॥ ७ ॥
सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ।
देवस्त्रीमज्जनामोदसौरभाक्तानिलैर्युतः ॥ ८ ॥
तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः ।
उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥
सर्वतोऽलंकृतं दिव्यैर्नित्यं पुष्पफलद्रुमैः ।
मन्दारैः पारिजातैश्च पाटलाशोकचम्पकैः ॥ १० ॥
चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ।
क्रमुकैर्नारिकेलैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥
मधुकैः सालतालैश्च तमालै रसनार्जुनैः ।
अरिष्टोदुम्बरप्लक्षैर्वटैः किंशुकचन्दनैः ॥ १२ ॥
पिचुमन्दैः कोविदारैः सरलैः सुरदारुभिः ।
द्राक्षेक्षुरम्भाजम्बूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥

---

चित्रद्रुमसुरोद्यानानि । कल

चित्रा द्रुमा येषु तथा तानि च सुराणामुद्यानानि । तेषु कण्ठाख्याः कलाख्या विहङ्गमा यत्र स कल तथा[1] ॥ ७ ॥ अच्छोदैः निर्मलजलैः । मणिलक्षणानि वालुकानि येषु तानि तथा तैः । देवस्त्रीणां मज्जनादुत्पन्नो य आमोदः[2] तस्माद् उद्भूतं यत् सौरभं परिमललक्षणं तेन आक्ता भविता अनिला यैस्ते । आमोदोत्थः परिमल इत्यमरः ॥ ८ ॥ आक्रीडं क्रीडारङ्गम् ॥ ९ ॥

चूतोऽङ्गनाप्रियः । प्रियालः स्फुटो नाम वृक्षः, द्रुमिलदेशभवः चूतो वा । आम्रः पिकोदरो माकन्दनामा । स चूतः[3] । आम्रातक आम्रवृक्षः । सालः सर्जविशेषः । अरिष्टो बृहत्पत्रः पिचुमन्द-विशेषः । किंशुकः पलाशः ॥ १०–११ ॥

पिचुमन्दः ह्रस्वपत्रः रोमशनामा वा । सरलः जीरवृक्षो गुग्गुलुर्वा ॥ १३ ॥

---

[1] चित्रद्रुमसुरोद्यानेषु कलकण्ठा मधुरस्वना विहङ्गमाः पक्षिणो यस्मिन् सः—स.

[2] आमोदः प्रधानसौगन्ध्यम्—स. । आमोदो विमर्दः, तस्मादुद्भूतं यत् सौरभं परिमलः—लि. । आमोदः कुंकुमकेसरादिपरिमलाश्रयद्रव्यसूक्ष्मभागः—श्री [3] चूतविशेष इत्यर्थः ।

विल्वैः कपित्थैर्जम्बीरैर्वृतो भल्लातकादिभिः ।
तस्मिन् सरः सुविपुलं लसत्काञ्चनपङ्कजम् ॥ १४ ॥
कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ।
मत्तषट्पदनिर्जुष्टं शकुन्तैः कलनिःस्वनैः ॥ १५ ॥
हंसकारण्डवाकीर्णं चक्राह्वैः सारसैरपि ।
जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ १६ ॥
मत्स्यकच्छपसञ्चारचलत्पद्मरजः पयः ।
कदम्बवेतस[1]नलनीपवञ्जुलकैर्वृतम् ॥ १७ ॥
कुन्दैः कुरबकाशोकैः शिरीषैः कुटजेङ्गुदैः ।
कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥
मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ।
शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥ १९ ॥

तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ।
वेत्र सकण्टकं कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन् वनस्पतीन् ॥ २० ॥
यद्गन्धमात्राद्धरयो गजेन्द्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ।
महोरगाश्चापि भयाद् द्रवन्ति सगौरकृष्णाः शलभाश्चमर्यः ॥ २१ ॥

---

अशोकः सितरक्तभेदेन द्विविधः । कुरबकः कुटजः । कुब्जकं भ्रमरीपुष्पम् । स्वर्णकृतमालः ॥ १८ ॥ कमलात् पृथक्[2] ॥ १८ ॥ –

– शतपत्रं जालकम् । मल्लिकालता । 'अलंद्रुमः स विज्ञेयोऽनित्यपुष्पफले द्रुमः' इत्यभिधानम् । तस्मिन्नुद्याने सरोवरोऽस्ति इत्यन्वयः । तत्रोद्याने तत्सरोवराभ्याशम् अद्रवदित्यन्वयः ॥ १९ ॥

सकण्टकं विशालगुल्मं वनस्पतींश्च प्ररुजन् ॥ २० ॥

हरिप्रभृतिमर्कटान्ता यस्य गन्धमात्रात् [3]अद्भुतभयात् द्रवन्तीत्यन्वयः । खड्गो मृगविशेषः । व्यालमृगः सर्पाकारो मृगः[4] । उक्तेभ्योऽन्ये च क्षुद्रा हरिणादयो मृगविशेषा यदनुग्रहेणाभीताश्चरन्ति[5]

---

[1] नल—स. लि. [2] अस्पष्टमिदम् । स्वर्णयूथीभिः सुवर्णवर्णसेवन्तिका(शावन्ति)पुष्पैः—श्री
[3] उद्भूतभयादिति स्यात् ? सत्यधर्मतीर्था एवं व्याचक्रुः । दूरत आघ्राताद् यद्गन्धमात्रात् केवलगन्धादिति ।
[4] व्यालाश्चतुष्पादाः । 'व्यालो ज्ञेयश्चतुष्पाद' इत्यनेकार्थध्वनिमञ्जरी—स.
[5] यस्य गजराजस्यानुग्रहो दयाविशेषस्तेनाभीताः स्वस्वघातकभीतिरहिताश्चरन्ति—स.

वृषा वराहा महिषर्क्षशल्या गोपुच्छशालावृकमर्कटाश्च ।
अन्ये च क्षुद्रा हरिणाः शशादयश्चरन्त्यभीता यदनुग्रहेण ॥ २२ ॥

स घर्मतप्तः करिभिः करेणुभिर्वृतो मदच्युत् कलभैरनुद्रुतः ।
गिरिं गरिम्णा परितः प्रकम्पयन् निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥

सरोऽनिलं पङ्कजरेणुरूषितं जिघ्रन्नदूरान्मदविह्वलेक्षणः ।
वृतश्च यूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद्[1] द्रुतम् ॥ २४ ॥

विगाह्य तस्मिन्नमृताम्बुनिर्मलं हेमारविन्दोत्पलरेणुवासितम् ।
पपौ निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन् गतक्लमः ॥ २५ ॥

[2]स्वपुष्करेणोद्धृतशीकराम्बुभिर्निपाययन् संस्नपयन् यथा गृही ।
घूर्णन् करेणूः कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥

तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ।
यदृच्छयैवं व्यसनं गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥

तथाऽऽतुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ।
विचुक्रुशुर्दीनधियोऽपरे गजाः पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥

नियुध्यतोरेवमिभेन्द्रनक्रयोर्विकर्षतोरन्तरतो बहिर्मिथः ।
समाः सहस्रं व्यगमन् महीपते सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥

ततो गजेन्द्रस्य सहोबलौजसां कालेन दीर्घेण महानभूद् व्ययः ।
विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत् सकलं जलौकसाम् ॥

---

सिंहादिभयराहित्यात् ॥ २१-२२ ॥ सरः संबन्धिवायुम् ॥ २४ ॥

हे नृप, पादाक्रान्तिनिमित्तरुषा यथाबलं यथाशक्ति विचक्रमे विक्रमं कृतवान् ॥ २७ ॥

इन्द्रियादीनामवसादनप्राप्तावुत्तम्भनशक्तिः सहः । प्राणशक्तिर्बलम् । शरीरसामर्थ्यमोजः ॥३०॥

---

[1] अगमदित्येव स.श्री. पाठः । तथापि १९ तम श्लोकव्याख्यारीत्या अद्रवदिति विपाठः संभाव्यते ।

[2] अयं श्लोकः सत्यधर्मतीर्थैः श्रीनिवासाचार्यैश्च व्याख्यातः । न पठितः श्रीनिवासाचार्यैः । विजयध्वजतीर्थानामयं श्लोकः सम्मतो न वेति निर्णयो दुष्करः । ऋलारि शेषाचार्यैः

इत्थं गजेन्द्रः स यदाप सङ्कटं प्राणस्य देही विवशो यदृच्छया ।
अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥

न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवन्ति मोचितुम् ।
ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३२ ॥

यः कश्चनेशो बलिनोऽन्तकोरगात् प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि[1] ॥ ३३ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

श्रीशुक उवाच —

एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ।
जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥

---

न ग्राहेण

अपारयन् पारं गन्तुमशक्तः ॥ ३१ ॥ कर्मलक्षणपाशेग्रहेण रुद्धः उपद्रवं प्राप्तः । विधातुः त् दैवाद् मोचितुम्[2] ॥ ३२ ॥ कश्चन लोकविलक्षणः य ईशः बलिनोऽन्तकाख्यसर्पाद् भीतं प्रपन्नं प्रपाति, यस्य भयान्मृत्युरन्तको दुर्गा वा प्रधावति, 'मृत्युर्धावति पञ्चम' इति श्रुतेः, तमीशमरणं शरणम् ईमहि प्राप्नुम इत्यन्वयः ॥ ३३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

ध्यानपूर्वकस्तुत्या प्रसन्नाद्धरेर्गजेन्द्रस्य ग्रहापदो मोक्षो यथाऽभूत् तथा संसारग्रहादपि मोक्षो भगवत्प्रसादेन स्यादिति प्रदर्शनाय तन्मोक्षप्रकारो निरूप्यतेऽस्मिन्नध्याये ।

किंप्रकारो गजेन्द्रः शरणमयासीदिति तं प्रकारं दर्शयितुमाह— **एवमिति** । जाप्यं मन्त्रं तिर्यग्योनेरनधिकारिण एतदसंभावितमिति तत्राह— **प्रागिति** ॥ १ ॥

---

[1] तमीमहे इत्यपि स. पाठः । [2] जगतः स्रष्टुः पाशेन कर्मरूपेणान्तः बहिर्ग्राहेण वृतः अहं च अहमपि न शक्तः (मोचने) । अतः परं जगद्विलक्षणं परायणं मुख्याश्रयं यामि, शरणमिति शेषः—स.

गजेन्द्र उवाच —

ओं नमो भगवते तस्मै यत एतच्चिदात्मकम् ।
पुरुषायाऽऽदिबीजाय परेशायहि धीमहि[1] । २ ॥

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ।
योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम् ॥ ३ ॥

यः स्वात्मनीदं निजमाययाऽर्पितं क्वचिद् विभातं क्वच तत् तिरोहितम् ।
अविद्धदृक् साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥ ४ ॥

---

पुरुषादि विशेषणानां

एतच्चिदानन्दात्मकं चेतनजातं यतो यस्मादेवाप्ताभीष्टं तस्मा इति । हिशब्देन ईर्ति 'परात्परं पुरिशयं पुरुषमीक्षते' इति श्रुतिसिद्धिं दर्शयति ॥ २ ॥

मन्त्रोक्तविशेषणविवरणपूर्वकं ध्यानमाह — यस्मिन्निति । इदं जगत् यस्मिन् हरौ प्रलीयते, 'यत् प्रयन्ति' इति श्रुतेः । इदं यतो यस्माच्चैव जायते, 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः । चशब्देनान्यस्मादुत्पादं निवारयति । इदं येन ब्रह्मणा प्रवर्तते 'येन जातानि जीवन्ति' इति श्रुतेः । इदं विश्वं यः स्वयं प्राप्तसत्तादिकः[2] 'सर्वं खल्विदं ब्रह्म' इति श्रुतेः । ननु यः स्वयमित्यनेन तादात्म्यं किं न स्यादिति तत्राह — अस्मादिति । अस्मात् प्रत्यक्षप्रपञ्चात् परस्मात् परोक्षान्मुक्तप्रपञ्चाच्च पर उत्तमो यस्तं स्वयम्भुवं स्वत एव प्राप्तसत्ताकं शरण्यं प्रपद्य इत्यन्वयः । उत्पन्नस्यापि यत् सत्ता हरेस्तत् सत् इतीर्यते । हरेर्विश्वं भिन्नमपि परमोऽसौ यतो विभुः इति वचनान्न तादात्म्यमत्रोच्यते । किन्तु ततः प्राप्तसत्ताकं जगदिति ॥ ३ ॥

पूर्वोक्तार्थं भेदं[3] स्पष्टीकरणाय विवृणोति — यः स्वात्मनीति । यो भवान् क्वचित् जाग्रति विभातं क्व च सुषुप्तौ तिरोहितम् अप्रकाशितं तदुभयं तदिदं जगत् निजमायया स्वेच्छया स्वात्मनि स्वोदरे अर्पितमीक्षत इत्यन्वयः । ननु शरीरे स्थित्वा ईक्षते चेज्जीववल्लुप्तज्ञानत्वेनेक्षणायोगः स्यादिति तत्राह — अविद्धदृगिति । तर्हि कथमीक्षत इति तत्राह — साक्षीति । स मामवतु इत्यन्वयः । आत्मा स्वयमेव मूलं कारणं प्रतिष्ठा च सत्तावांस्तथा । अनेन स्वयम्भूशब्दो विवृतः । 'स्वे महिम्नि' इति श्रुतेः । 'अक्षरात् परतः परः' इति च । क्वचित् चतुर्मुखादौ विभातं क्वचिदसदादौ तिरोहितमिति वा ॥ ४ ॥

---

[1] परेशायाभिधीमहि—ग. [2] अस्य सत्तादिप्रद इते यावत् । 'य इति सत्ताप्रदत्वम्' इति तात्पर्यवचनात् ।
[3] भेदस्पष्टीकरणाय—ग.

कालेन पञ्चत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ।
तमस्तदासीद् गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥

न यस्य देवा ऋषयः पदं विदुर्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् ।
यथा नटस्याकृतिभिर्विचेष्टतो दुरत्ययानुक्रमणः स माऽवतु ॥ ६ ॥

दिदृक्षवो यस्य पदं सुमङ्गलं विमुक्तसङ्गा मुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने सर्वात्मभूतः सुहृदः स मे गतिः ॥ ७ ॥

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ।
तथापि लोकाश्रयसंभवाय यः स्वमायया तान्यनुकूलमृच्छति ॥ ८ ॥

लोकेषु पृथिव्यादिभूतकार्येषु साकल्येन पञ्चत्वं पृथिव्यादिपञ्चभूतात्मतामितेषु, सर्वहेतुषु पृथिव्यादिसर्वकारणेषु चशब्दान्महदादिषु लीनेषु स्वस्वकारणतामाप्तेषु सत्सु यत् तद् गहनं दुर्ज्ञेयं गम्भीरम् अत एवागाधं तम आसीत् । यो विभुः तस्य तमसः पारे तमःसम्पर्करहिते देशेऽभिविराजते । स्वतो नेत्याह[1] — कालेनेति । कालनाम्ना हरिणा ॥ ५ ॥

देवादयो यस्य पदं न विदुरिति यदतः पुनः को जन्तुः तत्पदं गन्तुम् ईरितुं वक्तुमर्हतीत्यन्वयः । हनुमदाद्याकृतिभिः तत्तदाकारानुसारेण विचेष्टमानस्य नटस्य स्वरूपं यथा न ज्ञायते तथेति । सुदुरत्ययानुक्रमणो दुर्ज्ञेयपरिक्रमणो हरिर्मामवत्वित्यन्वयः ॥ ६ ॥

हरेरेवंविधस्वरूपसद्भावे मानमाह — दिदृक्षव इति । अव्रणमक्षतम् अलोकव्रतं लोकैः कर्तुमशक्यं सृष्ट्यादिव्रतं यस्य स तथा तम् ॥ ७ ॥

देवदत्तवज्जन्माद्यभावाद् दुर्ज्ञेयत्वं युक्तमित्यभिप्रेत्याह — न विद्यत इति । आमघटादिश्यामादिगुणवन्नश्वरगुणो नास्ति, दोषः कुत एव ? चशब्देन ' निरनिष्टो निरवद्यः ' इति श्रुतिं सूचयति। सर्गादिनिमित्तदोषश्च नास्तीति वा । दोषो नास्त्येव गुणयुतदोषश्च नास्तीति वा । यद्यपि देवदत्तस्येव हरेर्जन्मादिकं नास्ति तथापि स्वमायया स्वमहिम्ना स्वेच्छया वा लोकस्य तदाश्रयप्राणिनां च संभवाय सुखादिप्राप्तिलक्षणजननाय तानि जन्मादीनि सर्जनादिकालमनुसृत्य ऋच्छति प्राप्नोतीत्यन्वयः । लोकत्रयसंभवायेति केचित् पठन्ति ॥ ८ ॥

---

[1] स्वस्वकारणेषु लयः स्वतो नेत्याहेत्यर्थः ।

तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥

नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥

सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिताम् ।
नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥

नमः शान्ताय घोराय मूढाय गुणकर्मणे ।
निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥

---

अनन्तरातीतश्लोकोक्तार्थविवरणपूर्वकं यच्छब्दविशिष्टं तच्छब्दावच्छिन्नं च नमति—**तस्मा इति** ॥ ९ ॥

अरूपायेत्युक्तं विवृणोति—**नम आत्मेति** । आत्मप्रदीपाय स्वतःप्रकाशाय । आत्मनः जीवस्य स्वरूपज्ञापनप्रकाशाय वा ॥ १० ॥

अरूपप्राप्तिसाधनज्ञानं तत्सद्भावे ज्ञानिप्राप्यत्वलक्षणं मानमित्यभिप्रायेण नमति[1]—**सत्त्वेनेति** । विपश्चितां सत्वेन ज्ञानेन प्रतिलभ्याय प्राप्याय । बलज्ञानसमाहारः सत्त्वं केवलमेव च इत्यभिधानम् । नैष्कर्म्येण निवृत्तिधर्मलब्धेन ॥ ११ ॥

उरुरूपायेत्युक्तरूपविशिष्टं तात्पर्यादरूपविशिष्टं च नमति—**शान्तायेति**। शान्तायेत्यनेन सत्त्व-प्रवर्तकवासुदेवादिरूपं लक्षयति, घोरायेत्यनेन रजःप्रवर्तकजामदग्न्यादिरूपं, मूढायेत्यनेन तमःप्रवर्तक-वराहादिरूपम् । गुणकर्मण इत्यनेन तत्तद्योनिविशिष्टगुणकर्मवते[2] । ज्ञानघनायेत्यनेनारूपस्य शून्यत्वं निवारयति । सत्वेनेत्याद्युक्तविशेषणसमुच्चयार्थश्चकारः ॥ १२ ॥

रूपारूपित्वेन निरूप्यमाणस्य हरेर्मिथो न कोऽपि विशेषोऽस्तीति ज्ञापयितुं उभययोर्म्यविशेषण-विशिष्टत्वेन नमति—**क्षेत्रज्ञायेति** । सर्वाध्यक्षाय सर्वस्वामिने आत्मैव मूलं यस्य तथा तस्मै, आत्मनां मूलाय वा ॥ १३ ॥

---

[1] असङ्गेयमवतारिका । [2] गुणकर्मणे तत्तद्योनिविशिष्टगुणकर्मवते इति विन्यासः सरलः ।

सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ।
असत्याच्च विमुक्ताय सदाभासाय ते नमः ॥ १४ ॥
नमो नमस्तेऽखिलकारणाय नारायणायार्तिविनाशनाय ।
सर्वागमाम्नाय महार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥
गुणारणिच्छन्नचिदुष्मपाय
तत्क्षोभविस्फूर्जितमानसाय ।
युक्तात्मभिः स्वहृदये परिभाविताय
ज्ञानात्मने भगवते नम ईश्वराय ॥ १६ ॥

---

साक्षिशब्दविवरणपूर्वकमस्मदादिज्ञाने हेतुत्वेनास्मदादिप्रपञ्चाद् भिन्नं नमति—सर्वेति । असत्यादस्वतन्त्रात् प्रपञ्चाद् विमुक्ताय । सन्निर्दोष आभासो देहो यस्य स तथा तस्मै । 'सदेहः सुखगन्धश्च' इत्यादेः । अनेन प्राकृतरूपं नास्तीत्युक्तं भवति । सन् आभासः प्रकाशो यस्य स तथा तस्मा इति वा । 'परंज्योतिरूपसम्पद्यते' इति श्रुतेः ॥ १४ ॥

अखिलकारणत्वादिविशिष्टत्वेनोक्तः क इत्याशङ्क्य श्रीनारायण एव नान्य इति तन्नामनिर्देशपूर्वकं पूर्वोक्तानुक्तविशेषणविशिष्टत्वेन नमति—सर्वेति । सर्वैरागमैः पञ्चरात्रादिभिः अम्नायैर्ऋगादिभिर्वेदैश्च समुद्राय[1] ॥ १५ ॥

सर्वप्रत्ययहेतव इत्येतद्विशेषणं विवृण्वन्नाह—गुणेति । गुणारणिच्छन्नं सत्त्वादिगुणलक्षणकाष्ठेन छन्नं चिदुष्मज्ञानाख्यज्योतिर्यत् तत् पाति रक्षतीति सः तस्मै । 'बलमानन्द ओजश्च' इत्यादेः । अन्यथा तद्रक्षणकथनं व्यर्थं स्यात् । शान्तायेत्यादिना यद् गुणलुब्धत्वं तद् विडम्बनमात्रमित्यभिप्रेत्याह—तत्क्षोभेति । तत्क्षोभे गुणक्षोभेऽपि विस्फूर्जितं समुच्छ्वसितं मानसं यस्य स तथा तस्मै । गुणशक्त्युद्रेकावस्थायामपि मनोविकाररहितायेत्यर्थः । स्वतन्त्रोऽपि भक्तवश्यो भवतीत्याह—युक्तात्मभिरिति। वशीकृतमनआदीन्द्रियैः पुरुषैः । ज्ञानघनायेत्यनेन ज्ञानं किं स्वरूपमुत भिन्नमुच्यत इति विकल्पावकाशो नास्तीत्याह—ज्ञानेति । न केवलं ज्ञानं गुणोऽस्य, अन्येऽपि सन्तीत्याशयेनाह— भगवत इति । गुणानां गुणिनो भेदे 'विज्ञानमानन्दं ब्रह्मेति व्यवहारानुपपत्तिरित्याशङ्क्योभयविधव्यवहारघटकत्वशक्तियोगोऽस्यास्तीत्याशयेनाह—ईश्वरायेति ॥ १६ ॥

---

[1] सर्वे चागमाः पौरुषेया आम्नाया वेदास्तेषां महार्णवः, नदीनां तदधिप इव तस्मा इत्यर्थः । नदीनां सागरो गतिः, सर्वे वेदा यत्पदमामनन्तीत्यादेः—स.

यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ति ।
किञ्चाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥१७॥

एकान्तिनो यस्य न किञ्चनार्थं वाञ्छन्ति ते वै भगवत्प्रधानाः । ये
अत्यद्भुतं यच्चरितं सुमङ्गलं गायन्त आनन्दसमुद्रमग्नाः ॥ १८ ॥

तमक्षरं ब्रह्मपरं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवातिदूरमनन्तमाद्यं परिपूर्णमीडे ॥ १९ ॥

यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ।
नामरूपविभेदेन जल्प्या च कलया कृताः ॥ २० ॥

---

र्थी मोक्षादिसर्वपुरुषार्थावाप्तिरप्यस्मादेव स्यात् तदर्थमन्यसेवा न कार्येत्याशयेनाह—**यमिति** । यं भजन्ते तत्प्रसादादिष्टां गतिमाप्नुवन्तीत्यन्वयः । नन्ववान्तरपुत्राद्याशाप्राप्तयेऽन्यसेवाऽपेक्षितेति तत्राह—**किञ्चेति** । पुत्राद्याशिषोऽपि प्राप्नुवन्तीति शेषः । मोक्षं ददातीति न निराकारलक्षणं किन्त्वनाद्यन्तकालीनं साकारं ददातीत्याह रातीति । राति ददाति ।[1]मनोमात्रास्वाशीष्वियमेवाशीः प्रार्थ्यत इत्याह—**करोत्विति** । ॥ १७ ॥

आशीःप्रार्थनमल्पभक्तलक्षणं यत एकान्तभक्तैस्तन्न क्रियत इत्याह— **एकान्तिन इति** । ये एकान्तिनस्ते यस्य सकाशात् कञ्चन पदार्थं न वाञ्छन्ति तं परेशं ईडे इत्यन्वयः एकान्तिन इत्यस्य विवरणं—**भगवत्प्रधाना इति** । अनाकाङ्क्षणे निमित्तमाह—**यच्चरितमिति** ॥ १८ ॥

अक्षरात् संभवतीह विश्वं 'एतस्य वा अक्षरस्य', 'ब्रह्म विदाप्नोति परम्', 'परात् परम्' 'परमः परार्ध्यः', अव्यक्तमचलं शान्तम्' 'अध्यात्मयोगेन सुनिष्ठितेन, मत्वा देवं शोकमोहौ जहाति', विमे कर्णा पतयतः सूक्ष्मात् सूक्ष्मतरं प्रपद्ये' 'तद् दूरे तद्वन्तिके' इत्याद्युपनिषत्प्रतिपाद्यं मया स्तूयत इति द्योतनायाक्षरादिशब्दप्रयोग इति अनेन न पुनरुक्तिः पदानामिति ज्ञायते । न क्षरतीत्यक्षरम् । जीवव्यावृत्त्यर्थं परं ब्रह्मेति । ब्रह्मणि मुक्तव्यावृत्त्यर्थं परेशमिति । आराधनेऽप्यनुग्रहमन्तरेण न व्यज्यत इत्यव्यक्तम् । प्रसादे सति ज्ञायत इत्यध्यात्मयोगगम्यमिति । वागादीन्द्रियमतीत्य वर्तमानत्वादतीन्द्रियम्, 'यतो वाचो निवर्तन्त ' इति श्रुतेः । यथा सूक्ष्मं तथा महांतमिति सूचनाय इव शब्दः । 'अणोरणीयान् ' इति श्रुतेः आनन्त्यघटनाय—**परिपूर्णमिति** ॥ १९ ॥

ब्रह्मादिस्थावरान्तं जगद् यस्य भिन्नांशो न तु स्वरूपांश इति ज्ञानं मुक्तिसाधनं नान्य-

---

[1] मयोक्तासु—ग.

यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यान्ति संयान्त्यसकृत् स्वरोचिषः ।
तथा यतोऽयं गुणसम्प्रवाहो बुद्धिर्मनः खानि शरीरसर्गः ॥ २१ ॥

स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान् न जन्तुः ।
नायं गुणः कर्म न सन् न वासन्[1] निषेधशेषो जयतादशेषः ॥ २२ ॥

जिजीविषे नाहमिहामुया किमन्तर्बहिश्चावृतयेभयोन्या ।
इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षणम् ॥

---

दित्याशयेनाह—**यस्येति** । यस्य कल्या जल्प्या वचसा । वाचेति पाठेऽप्ययमेवार्थः । 'गीर्वाग् वाणी भारती च ब्राह्मीला गौः सरस्वती' इत्यभिधानम् ॥ २० ॥

गुणसम्प्रवाह इत्यस्य विवरणं बुद्धिरित्यादि । अनेन जगत्प्रवाहस्य नित्यत्वं ज्ञापितमिति ज्ञातव्यम् ॥ २१ ॥

अधुना श्रीनारायणसद्भावे प्रमाणदर्शनपूर्वकं स्तौति—**स इति** । यस्मात् गुणसम्प्रवाहः स देवासुरमर्त्यतिर्यग्जातिर्न वै यस्मादित्यन्वयः । यतो[2] बहुव्यक्त्यभावाद् विशेषतो निषेधति—**न स्त्रीति** । नियतक्रियाद्याकाराभावान्न जन्तुः कृमिलक्षणः । अमूर्ताकारोऽपि नास्तीत्याह—**नायमिति** । देवादिशरीरकारणपृथिव्याद्यन्यतमोऽपि न स्यादित्याह—**न सन्निति** । इति मूर्तामूर्तनिषेधेन शेषो यस्य स निषेधशेषः[3], ततो विलक्षणत्वेन परिशेषप्रमाणसिद्धः । स जयतान्ममानर्थभूतसंसारमभिभूय वर्तता-मित्यन्वयः । तत्स्वरूपमाह—**अशेष इति** । परिपूर्णत्वेन सिद्धः । निषेधशिष्टश्चेदुच्छिष्टवत् त्यागयोग्य इत्यतो वाह—**अशेष इति** । परिपूर्णत्वेन सिद्धः 'स एष आत्मा नेति नेतीत्यादिश्रुतेः ॥ २२ ॥

ज्ञानसाधनमन्तरेणानेन शरीरेण चिरं रक्षितेन किं प्रयोजनमित्याशयेनाह—**जिजीविष इति** । अहं शरीरेऽन्तर्बहिश्चावृतयामुयेभयोन्या प्रकृत्या किं न किमपि इति यस्मात् तस्मादिह तन्निर्मिते शरीरे चिरं न जिजीविषे न जीवितुमिच्छामीत्यन्वयः । स्वारम्भककर्मक्षये स्वयं नाशात् किमर्थं न जिजीविष इत्यर्थ्यत इत्यतो लिङ्गशरीरनाश एव प्रार्थ्यत इत्याह—**इच्छामीति** । तस्यात्मलोकावरणस्य स्वज्ञानावरकस्य लिङ्गशरीरस्य मोक्षणं नाशमिच्छामीत्यन्वयः । अस्यापि कालेन नाशः किं न स्याद् ? अत्राह—**कालेनेति** । विप्लवो नाशः अनेनात्मज्ञानमन्तरेण लिङ्गशरीरस्य नाशो नास्ति, सति तस्मिन् तत् स्यादित्युक्तं भवति । 'तस्मिन् दृष्टे परावरे' इति श्रुतेः ॥ २३ ॥

---

[1] न सन् न चासन्—ग. [2] यत इत्यस्यान्वयो न ज्ञायते ।

[3] निषेधेन शिष्यत इति निषेधशेषः । सर्वविलक्षण इत्यर्थः । स एष आत्मा नेति नेतीति श्रुतेः—स.

सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ।
विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २४ ॥

योगरन्धितकर्माणो हृदि योगविभाविते ।
योगिनो यं प्रपश्यन्ति योगेशं[1] तं नतोऽस्म्यहम् ॥ २५ ॥

नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधीगुणाय ।
प्रपन्नपालाय दुरन्तशक्तये बुद्धीन्द्रियाणामनवाप्यवर्त्मने ॥२६॥

---

ननु गुणोपसंहारलक्षणोपासनावेदान्तज्ञानेन सम्भवेत् तिर्यग्योनित्वेन तदनधिकारादात्मज्ञानासम्भवाल्लिङ्गशरीरनाशे आशामात्रं तव स्यादित्याशङ्क्यासज्जातिविहितप्रणामेनापि प्रसन्नेश्वरप्रसादादुत्पन्नज्ञानेन तत् स्यादित्यतस्तमाचरति— **सोऽहमिति** । योऽहं लिङ्गशरीरमोक्षमाकाङ्क्षे सोऽहं परं पदं प्राप्यं उत्तमं प्रणतोऽस्मीत्यन्वयः । सर्वस्मादस्योत्तमत्वं कुत इत्यतस्तदुपपादकविशेषणैः सिद्धमित्याह— **विश्वसृजमित्यादिना** । विश्वसृजत्वाद् विश्वम् । तर्हि मृद्घटवत् तदात्मकत्वमापन्नमिति। नेत्याह— **अविश्वमिति** । जगतो विलक्षणम् । स्वसृष्टपदार्थप्रविष्टत्वाद् विश्वं बहिष्ठत्वादविश्वमिति वा । दुर्भगशरीरस्थत्वेपि ज्ञानलोपो नेत्याह— **विश्ववेदसमिति** । विश्वं वेत्तीति, सर्वज्ञमित्यर्थः । सर्वज्ञत्वं चास्यैव सुलभमित्याह— **विश्वेति** । विश्वं व्याप्य वर्तमानम् । विश्वमादत्त इति वा, विश्वस्य स्वामीति वा विश्वात्मानम् । जगत्स्रष्टुरस्य जगदाकारेण परिणामः किम् ? नेत्याह— **अजमिति** । (अजशब्देन) अहङ्कारात्मा रुद्रोप्युच्यत इति नेत्याह— **ब्रह्मेति** । वेदो नेत्याह— **परमिति** । मुक्तो नेत्याह— **पदमिति** ॥ २४ ॥

ज्ञानिप्रत्यक्षमीश्वरसद्भावे प्रमाणमित्याशयेन नमति— **योगेति** । योगेन रन्धितानि दग्धानि कर्माणि येषां ते तथा ॥ २५ ॥

ननु तत्तच्छक्तिमतस्तत्तत्कर्म दृष्टं हरेस्तु सृष्ट्यादिकर्म कथमित्याशङ्क्य तत्तच्छक्तिविशिष्टत्वेन तं नमति— **नम इति** । असह्यो वेगो यासां ताः तथा तादृशीनां शक्तीनाम् उत्पत्तिस्थितिसंहारविषयाणाम् उत्साहमन्त्रप्रभुविषयाणां वा त्रयं यस्य स तथा तस्मै । उत्पत्त्यादिशक्तयश्च ज्ञानवत एव युक्ता इत्याह— **अखिलेति** । न चैताः शक्तयो देवदत्तशक्तिवत् परिमिता इत्याशयवानाह— **दुरन्तेति** । परिच्छिन्नत्वमनुमानेन साध्यत इति चेत् तत्राह— **बुद्धीति** । हेतोराश्रयासिद्धत्वेनानुमानानुदयात् ॥ २६ ॥

---

[1] योगीशम् इत्यपि—म.

नायं वेद स्वमात्मानं यच्छक्त्याऽहं धिया हतः ।
तं दुरत्ययमाहात्म्यं भगवन्तं नतोऽस्म्यहम् ॥ २७ ॥

श्रीशुक उवाच —

एवं गजेन्द्रमुपवर्णितनिर्विशेषं
ब्रह्मादयो विविधलिङ्गभिदाभिमानाः ।
नैते यदोपससृपुर्निखिलात्मकत्वात्
तत्राखिलामरवरो हरिराविरासीत् ॥ २८ ॥

तं तद्वदार्तमुपलभ्य जगन्निवासः
स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ।
छन्दोमयेन गरुडेन समुह्यमान-
श्चक्रायुधो ह्यगमदाशु यतो गजेन्द्रः ॥ २९ ॥

---

हरेः स्तुतिफलं दर्शयति[1]—नायमिति । यः स्वमात्मानं न वेद न जानाति, पूर्वमिति शेषः[2] ॥२७॥

अनन्तरं किमभूद् अत्राह—एवमिति । उपवर्णितं निर्विशेषं समं ब्रह्म येन स तथा तम् । पृथिव्यादिविलक्षणं ब्रह्म येन स तथा तमिति वा[3] । अवतारमूलरूपयोर्विशेषो नास्तीति वा निर्विशेषम्, तदिति(तमिति ?) वा । 'पूर्णमदः पूर्णमिदम्' इति श्रुतेः । विविधानि लिङ्गानि पद्मवज्रादीनि वा हंसवृषभादीनि वा । एवं भिदया भेदेन जातोऽभिमानोऽहं पद्मपाणिरहं वज्रपाणिरित्यादिलक्षणो येषां तथा, स्रष्टृत्वसंहर्तृत्वादिलक्षणो वा, ये ब्रह्मादय एते यदा गजेन्द्रं नोपससृपुः तदा सकलदेवनाथो हरिः यत्र गजेन्द्रस्तत्राविरासीत् । तत्स्थ एव तत्र प्रत्यक्षीभूतो न तु दूरादागत्य । कुत इति तत्राह-निखिलेति । सर्वव्यापकत्वात् । यद्वा ब्रह्मादीनामनागमे निमित्तमाह — निखिलेति । न हि गुरोराज्ञामन्तरेण गच्छन्ति सन्तः । हरेः सर्वस्वामित्वाद्धरेः पूर्वमागमने प्रयोजनासिद्धेरित्यर्थः ॥ २८ ॥

तद् यथा दर्शनकृपोदेति तथा तम् ॥ २९ ॥

---

[1] इयमवतारिकाऽव्यवहितोत्तरपद्य एव सङ्गच्छते ।

[2] अयमहं यच्छक्त्या यस्य मायया धिया वा हतो रहितः सन् स्वं माम् आत्मानं परमात्मानं(च) न वेद । प्रागिति शेषः । 'दध्याविमां बुद्धिमथाभ्यपद्यत, इत्युक्तेः । यच्छक्त्या एवंविधया धियाऽहतः सहितः । इदानीमिति शेषः । अहं दुरत्ययं दुरतिक्रमं माहात्म्यं यस्य तं नतोऽस्मि । अयं जनो यच्छक्त्या अहंधिया, अहमित्यव्ययम्, अहन्ताधिया हतः सन् स्वमात्मानं च न वेद तं भगवन्तं नतोऽस्मीति वा । भगवन्तमितोऽस्मीति पाठे इतः प्राप्तः, आश्रित इति यावदित्यर्थः—स.

[3] 'ततो विशेषं प्रतिपद्य' (भागवत २-२-३१) इत्यादौ पृथिव्यां विशेषशब्दश्रवणादेवं व्याख्यातम् ।

सोऽन्तः सरस्युरुबलेन गृहीत आर्तो
दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ।
उत्क्षिप्य साम्बुजकरं गिरमाह कृच्छ्रा-
न्नारायणाखिलगुरो भगवन् नमस्ते ॥ ३० ॥

तं वीक्ष्य पीडितमजः सहसाऽवतीर्य
सग्राहमाशु सरसः कृपयोज्जहार ।
ग्राहाद् विपाटितमुखादरिणा गजेन्द्रं
सम्पश्यतां हरिरमूमुचदुस्रियाणाम् मु ॥ ३१ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

श्री शुक उवाच —

दा तदा देवर्षिगन्धर्वा ब्रह्मेशानपुरोगमाः ।
मुमुचुः कुसुमासारं शंसन्तः कर्म तद्धरेः ॥ १ ॥
नेदुर्दुन्दुभयो दिव्या गन्धर्वा ननृतुर्जगुः ।
ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥

---

अखिलगुरोर्न हि परिच्छिन्नस्य सर्वेगुरुत्वं घटत इति नारायणेत्यादिहेतुगर्भविशेषणम् ॥ ३० ॥

ततः फलितमाह—तं वीक्ष्येति । उस्रियाणां देवानाम् 'उस्रिया विजया देवा आदित्या अमराः सुराः' इत्यभिधानम् ॥ ३१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य तृतीयोऽध्यायः

॥ अथ चतुर्थोऽध्यायः ॥

प्रणष्टदुरितस्य हरौ निरतिशयभक्तिः स्यादिति तन्नाशसाधनादि निरूप्यतेऽस्मिन्नध्याये ।

तत्र प्रथमं देवादीनां पुष्पवर्षादिकं भगवत्प्रीतिसाधनमाह—तदेति । यदा गजेन्द्रममूमुचत् तदा स पश्चात् पूर्वचीर्णपुण्योदयेनाविर्भूतज्ञानो हरिं स्तुत्वा तत्प्रसादेन देवलशापेन, तृतीया पञ्चम्यर्थे, तस्माच्छापान्मुक्तः परमाश्चर्यरूपधृक् हरिं शिरसा प्रणम्य यशोधामागायतेत्यन्वयः । कीर्तनीया गुण-

योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ।
मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः ॥ ३ ॥

प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ।
अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ४ ॥

सोऽनुकम्पित ईशेन परिक्रम्य प्रणम्य तम् ।
लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥

गजेन्द्रो भगवत्स्पर्शाद् विमुक्तोऽज्ञानबन्धनात् ।
प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥

स वै पूर्वमभूद्राजा पाण्ड्यो द्रविडसत्तमः ।
इन्द्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥

स एकदाऽऽराधनकाल आत्मवान् गृहीतमौनव्रत ईश्वरं हरिम् ।
जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रयः ॥ ८ ॥

यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ।
तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥

तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ।
मद्धेलनात् प्राग् विशतां तमिस्रं यथा गजः स्तब्धमतिः सदोषः ॥ १० ॥

श्री शुक उवाच —

एवं शप्त्वा गतोऽगस्त्यो भगवान् नृप सानुगः ।
इन्द्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥

---

... सत्यः कथा यस्य स तथा तम् । यस्मिंस्तथेति वा । अनेन हरिगुणकीर्तनरूपं गानं गायकशापादि- ...र्थमित्युक्तं भवति ॥ १–५ ॥

ननु किमनेनान्यगुणकीर्तनेनेदानीं गजेन्द्रस्य भगवत्स्तुत्या किमभूदित्याशङ्क्य स्तुत्या प्रसन्नस्य ...नेन मुक्तकिल्बिषस्य तत्सारूप्यं फलमभूदित्याह — गजेन्द्र इति ॥ ६ ॥

हरेर्नाममात्रतोऽवाप्तविष्णुप्रसादः पूर्वं क इति तत्राह — स वा इति ॥ ७ ॥

गजेन्द्रयोनिप्राप्तिनिमित्तं वक्तुमुपोद्घातं रचयति — स एकदेति ॥ ८ ॥

आपन्नः कौञ्जरीं योनिमात्मस्मृतिविनाशिनीम् ।
हर्यर्चनानुभावेन न भक्त्या न धिया हतः[1] ॥ १२ ॥

एवं विमोक्ष्य गजयूथपमब्जनाभ-
स्तेनापि पार्षदगतिं गमितेन युक्तः ।
गन्धर्वसिद्धविबुधैरुपगीयमान-
कर्माऽद्भुतं स्वभुवनं गरुडासनोऽगात् ॥ १३ ॥

एवं महाराज तवेरितो मया
कृष्णानुभावो गजराजमोक्षणम् ।
स्वर्ग्यं यशस्यं कलिकल्मषापहं
दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥

अथानुकीर्तयन्त्येतच्छ्रेयस्कामा द्विजातयः ।
शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशान्तये ॥ १५ ॥

इदमाह हरिः प्रीतो गजेन्द्रं कुरुसत्तम ।
शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥

श्रीभगवानुवाच —

ये मां त्वां च सरश्चेदं गिरिकन्दरकाननम् ।
वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥

शृङ्गाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ।
क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥

श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ।
सुदर्शनं पाञ्चजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥

शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ।
ब्रह्माणं नारदमृषिं भवं प्रह्लादमेव च ॥ २० ॥

---

उपगीयमानानि कर्माणि यस्य स तथा । अगाल्लोकदृष्ट्या । तत्त्वं तु तत्रैवांतर्दध इति ॥१३॥
दुःस्वप्नस्य नाशो यस्माद् गजेन्द्रमोक्षणात् तत् तथा तम् ॥ १४ ॥ स

---

[1] यद् गजत्वेऽप्यनुस्मृतिः इति बहुकोशेषु, स. पाठे शे. पाठे च ।

मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ।
कर्माण्यनन्तपुण्यानि सूर्यसोमहुताशनान् ॥ २१ ॥
प्रणवं सत्यमव्यक्तं गोविप्रान् धर्ममक्षयम् ।
दाक्षायणीं धर्मपत्नीं सोमकश्यपयोरपि ॥ २२ ॥
गङ्गां सरस्वतीं नन्दां कालिन्दीं सितवारणम् ।
ध्रुवं ब्रह्मऋषीन् सप्त पुण्यश्लोकांश्च मानवान् ॥ २३ ॥
उत्थायापररात्रान्ते प्रयताः सुसमाहिताः ।
स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात् ॥ २५ ॥
ये मां स्तुवन्त्यनेनाङ्ग प्रतिबुद्धय निशात्यये ।
तेषां प्राणात्यये चाहं ददामि विमलां गतिम् ॥ २४ ॥

श्रीशुक उवाच —

इत्यादिश्य हृषीकेशः प्राध्माय जलजोत्तमम् ।
हर्षयन् विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्थोऽध्यायः ।

॥ अथ पञ्चमोऽध्यायः ॥

श्रीशुक उवाच —

राजन्नुदितमेतत् ते हरेः कर्माघनाशनम् ।
गजेन्द्रमोक्षणं पुण्यं रैवतं त्वन्तरं शृणु ॥ १ ॥

---

अपररात्रान्ते अरुणोदयप्रारम्भे उत्थाय त्वां मां चेत्यादिकं स्मरन्ति ते सर्वस्मादंहसो मुच्यन्त त्वे इत्यन्वयः ॥ २४ ॥ नन्वस्तु पापक्षयोऽस्मात् तद्विषयज्ञानं कस्मादित्यतस्तत्साधनमाह— ये मामिति। प्राणात्यये देहोत्क्रमणे ॥ २५ ॥ जलजोत्तमं शङ्खोत्तमम् ॥ २६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य चतुर्थोऽध्यायः ।

॥ अथ पञ्चमोऽध्यायः ॥

भक्त्या स्तुवतः पुरुषस्यापि प्रसन्नो भवति हरिरित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये । तत्रादौ क्रमप्राप्तमन्वन्तराधिपकथां प्रसञ्जयति—राजन्निति । रेवतस्य विद्यमानं रैवतम् ॥ १ ॥

पञ्चमो रैवतो नाम मनुस्तापससोदरः ।
[1]बलविन्ध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥

विभुरिन्द्रः सुरगणा राजन् भूतरयादयः ।
हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥

पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ।
तयोः स्वकलया जज्ञे वैकुण्ठो भगवान् स्वयम् ॥ ४ ॥

वैकुण्ठः कल्पितो येन लोको लोकनमस्कृतः ।
रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥

तस्यानुभावः कथितो गुणाश्च परमोदयाः ।
भौमान् रेणून् स विममे यो विष्णोर्वर्णयेद् गुणान् ॥ ६ ॥

षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ।
पुत्राः पुरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥

इन्द्रो [2]मन्द्रद्रुतस्तत्र देवा आप्यादयो गणाः ।
मुनयस्तत्र वैराजहविष्मद्वीरकादयः[3] ॥ ८ ॥

तत्रापि देवः सम्भूत्यां वैराजस्याभवत् सुतः ।
अजितो नाम भगवान् अंशेन जगतः पतिः ॥ ९ ॥

पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ।
भ्रममाणोऽम्भसि धृतः कूर्मरूपेण मन्दरः ॥ १० ॥

---

बलविन्ध्यावादी येषां ते तथा । अर्जुनः पूर्वः प्रधानो येषां ते तथा ॥ २ ॥

विभुर्विभुनामा हरिः, द्विजाः सप्तर्षयः ॥ ३ ॥

विकुण्ठायाः पुत्रो वैकुण्ठः । तयोर्विकुण्ठाशुभ्रयोः । कलया अंशेन ॥ ४ ॥

भौमान् रेणून् पृथ्वीरजांसि । विममे मानं संख्यां करोति ॥ ६ ॥

पुत्राः, उच्यन्त इति शेषः । चाक्षुषात्मजा पुरुषादय इत्यन्वयः ॥ ७ ॥

अत्रादिशब्दार्थो ग्रन्थान्तरादवगन्तव्यः ॥ ८ ॥

---

[1] बलिविन्ध्यादयः इत्यपि स. पाठः । [2] मन्द्रद्युमः—स. [3] वैराजहविष्मद्वीरकादयः—स. । वै राजभिति लेखकप्रमादः—स. । वैराजस्येत्यनुवादस्वारस्यात्-स. अतो वै राजन्निति पाठः कोशेषु स्थितस्त्यक्तः ।

राजोवाच —

यथा भगवता ब्रह्मन् मथितः क्षीरसागरः ।
यदर्थं वा यतश्चाद्रिं दधाराम्बुचरात्मना ॥ ११ ॥

यथाऽमृतं सुरैः प्राप्तं किमन्यदभवत् ततः ।
एतद् भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥

त्वयेत्थं कथ्यमानेन महिम्ना सात्वतां पतेः ।
नातितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥

सूत उवाच —

सम्पृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ।
अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥

श्रीशुक उवाच —

यदा युद्धेऽसुरैर्देवा बाध्यमानाः शितायुधैः ।
गतासवो निपतिता नोत्तिष्ठेरन् स्म भूयशः ॥ १५ ॥

यदा दुर्वाससशापेन[1] सेन्द्रा लोकास्त्रयो नृप ।
निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः ॥ १६ ॥

---

यथा कथम्, यतः कुतः । अम्बुचरात्मना कूर्मरूपेण ॥ ११ ॥

तापैराध्यात्मिकादिदुःखैः तापितं क्लेशितम् ॥ १३ ॥

सूतशौनकादिसंवादाविस्मरणार्थं राज्ञा पृष्टः श्रीशुकस्तस्य चोद्यं परिहर्तुमुपक्रमत इत्याह — सूत इति ॥ १४ ॥

कथमुपक्रान्तवानिति तत्राह — यदेति । गतासवः प्राणबलरहिताः, यदा च नोत्तिष्ठेरन्, यदा च निःश्रीका अभवन् तत्र तदा इज्यादयः क्रिया नेशुरित्यन्वयः ॥ १५–१६ ॥

---

[1] शापप्रकारस्त्वित्थम् । दुर्वाससा हि कदाचिन्मार्गे गच्छन्तमिन्द्रं दृष्ट्वा स्वकण्ठस्थमालेन्द्राय दत्ता । तेन च श्रीमदेनानादृत्यैरावतस्य कुम्भस्थले निक्षिप्ता । स च गजराट् भूमौ पातयामास । ततः कुपितो दुर्वासास्तमिन्द्रं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति — शे. । तदेतदुक्तमाचार्यैः ' स्वदत्तमाला भुवि पातकोपतो दुर्वाससः शापत आशु हि श्रिया । शक्रे विहीने दितिजैः पराजितः ' इति महाभारततात्पर्यनिर्णये ।

निशाम्यैतत् सुरगणा महेन्द्रवरुणादयः ।
नाध्यगच्छन् स्वयं मन्त्रैर्मन्त्रयन्तो विनिश्चयम् ॥ १७ ॥

ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्द्धनि सर्वशः ।
सर्वं विज्ञापयाञ्चक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥

स विलोक्येन्द्रवाय्वादीन् निःसत्वान् विगतप्रभान् ।
लोकानमङ्गलप्रायान् सुरांश्चैव यथा विभुः ॥ १९ ॥

समाहितेन मनसा संस्मरन् पुरुषं परम् ।
उवाचोत्फुल्लवदनो देवान् स भगवान् परः ॥ २० ॥

अहं भवो यूयमथो सुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः ।
यस्यावतारांशकलाविसर्जिता[1] व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयादरणीयपक्षः ।
अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्वतमांसि काले ॥ २२ ॥

अयं तु तस्य स्थितिपालनक्षणः सत्वं जुषाणस्य भवाय देहिनाम् ।
तस्माद् व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः ॥

---

यदा देवा निश्चयं नाध्यगच्छन् ततस्तदा ब्रह्मसभां जग्मुरित्यन्वयः ॥ १७–१८ ॥

परः पूरकः, सृष्ट्येति शेषः ॥ २० ॥ घर्मजातयः स्वेदजाः ॥ २१ ॥

यस्य वध्यादयो न सन्ति । नन्वादरणीयपक्षो नास्तीति कथं सङ्गच्छते ? 'परा पूर्वेषां' इति श्रुतेः देवानां भगवत्पक्षत्वावगमादत्रापि देवार्थममृतमथनादिति चेन्न । भक्तिवशः पुरुषः । 'यमेवैष वृणुते तेन लभ्यः' इत्यादिश्रुतेः । 'देवानामनुग्राह्यत्वात् तत्पक्षत्वं स्वार्थं नेति विवेकात् । 'अनुग्राह्यतया पक्षा देवा नात्मार्थतो हरेः' इति वचनात् ॥ २२ ॥

तस्य हरेरयं कालः स्थितिपालनावसरः । धास्यति ददाति । शं सुखम् ॥ २३ ॥

---

[1] यस्य नारायणस्यावतारः पुरुषो वा पद्मनाभो वा तस्यांशो मात्रा तस्य कला भिन्नोंऽशस्तया विसर्जिता उत्पादिताः—स. । यस्यावतारः पुरुषनामा, तस्यांशो भिन्नांशो ब्रह्मा, तस्य कला मरीच्यादयस्ताभिर्विसर्जिता पुत्रपौत्रद्वारा जनिताः । यद्वा तस्यावतारः पुरुषस्तस्यांशः सामर्थ्यं तस्य कलयैकांशेन विसर्जिता उत्पन्नाः–शे. यस्य हरेरवतारूपांशस्य पुरुषादेः कलया विसर्जिताः संसृष्टाः—लि.

श्रीशुक उवाच —

इत्याभाष्य सुरान् वेधाः सहदेवैररिन्दम ।
अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥

तत्रादृष्टस्वरूपाय श्रुतपूर्वाय चाभ्यधात् ।
स्तुतिमद्भुतदेवीभिर्गीर्भिस्त्ववहितेन्द्रियः ॥ २५ ॥

ब्रह्मोवाच —

अविक्रियं सत्यमनन्तमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ।
मनोऽग्रयाणं वचसाऽनिरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥

विपश्चितं प्राणमनोधियात्मनामर्थेन्द्रियाभासमनिद्रमव्रणम् ।
छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥

---

अजितस्य हरेः ॥ २४ ॥

नित्यत्वेन अद्भुताभिः, देवस्य हरेः विद्यमानाभिः, हरिगुणगणान् प्रतिपादिकाभिः ॥ २५ ॥

वेदशिरो विशारदानामस्मिन् स्तोत्रेऽधिकार इति ज्ञापयन् ब्रह्मा वेदान्तोक्तविशेषणविशिष्टत्वेन ...आह–ब्रह्मेति । 'निष्कलं निष्क्रियं शान्तम्' 'सत्यं ज्ञानमनन्तम्' 'आत्मा वा इदमेक एवाग्र ...' 'हृदय आहितं यद्' 'नैषा तर्केण मतिरापनेया' 'न हि सुज्ञेयमणुरेष धर्मः' 'महतो ...स्य निःश्वसितमेतदृग्वेदः' 'विद्यानां प्रथमो वक्ता' 'यद्वाचाऽनभ्युदितं' 'यो देवानां नामधा ...' 'तत्सवितुर्वरेण्यम्' इत्यादिश्रुतयः प्रतीकतो ग्राह्याः । बहुश्रुतिसंग्रहरूपत्वात् पूर्वोत्तर-...न्धोऽत्र नान्वेषणीयः ॥ २६ ॥

'प्राणमनोधियात्मनां विपश्चितं वेदितारम्'[1] 'यः प्राणे तिष्ठन्' 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः ...दि । 'य आत्मनि तिष्ठन्' इत्यादि । अर्थानिन्द्रियाणि चाभासयति दीपयतीत्यर्थेन्द्रियाभासः । ...न्द्रियाणां सन्निकर्षमुत्पाद्य तद्विषयं ज्ञानं जनयतीत्यर्थः । ''यस्य भासा सर्वमिदं विभाति' 'यस्त-...यविच्छेदः' 'एतमस्यामेतं दिवि' 'अजमनिद्रमस्वप्नम्' 'अकायमव्रणम्' अकायं लिङ्गशरीर-...तम् अव्रणम् अक्षतं यत्र यस्मिन् हरौ गृध्रस्य सर्वं काङ्क्षमाणस्य जीवस्य पक्षौ पतत्रवद् वर्तमानौ पृथ-...र्ध्वमार्गहेतू छायातपौ अविद्याशास्त्रजन्यविद्यालक्षणौ न स्तः । 'छाया त्वविद्या सम्प्रोक्ता जन्य-...ऽऽतपः स्मृतः । जीवगृध्रस्य तौ पक्षावध ऊर्ध्वपथोः पृथक् । तौ विष्णोस्तु न विद्येते नित्यविद्या-

औ

---

[1] अत्र सर्वत्रान्ते इति हि श्रुतिरिति योजनीयम् ।

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पञ्चदशारमाशु ।
त्रिणाभि विद्युद्बलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥
यदेकवर्णं तमसः परं सदलोकमव्यक्तमनन्तपारम् ।
आसाञ्चकारोपसुपर्णपत्रमुपासते योगरथेन धीराः ॥ २९ ॥

---

स्वरूपिणः' इति वचनादुक्त एवार्थ इति । तं त्रियुगं व्रजामह इत्यन्वयः । त्रीणि युगानि यस्य स तथा तम्, तेष्ववतारादिति । 'स्वयम्भूस्त्रियुगः कृष्णः शार्ङ्गी दामोदरस्तथा' इत्यभिधानम् । 'अक्षरात् सम्भवतीह विश्वम्' 'एतद्ध्येवाक्षरं ब्रह्म' । खं सुखरूपं ज्ञानरूपं वा । कं ब्रह्म खं ब्रह्म' ॥ २७ ॥

अजस्य विष्णोरधीनं चक्रं पुनः (पुनः) प्रवाहरूपेण परिवर्तमानत्वाच्चक्रसंज्ञं जगत् यः केशवोऽक्षमक्षस्थानीयो यस्य तद्, यदक्षमाहुः, तमृतं प्रपद्य इत्यन्वयः । 'चक्रं न वृत्तम्' 'तदेवर्तम्' । चक्रं चेत् केनचिदीर्यमाणं परिवर्तते । अस्य किं प्रेरकमित्यत उक्तम्—**अजयेति** । 'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः' इति । अस्य वैलक्षण्यमाह—**मनोमयमिति** । कान्यस्याराणीत्यत्राह—**पञ्चदशारमिति** । श्रोत्रादीनि दश, शब्दादयः पञ्च, पृथिव्यादीनि वा, प्राणादयो वा, पञ्च । एत एवाराणि दलानि यस्य तत् तथा, तत् । आशु शीघ्रभ्रमं व्याप्तं वा । त्रिणाभि त्रयो गुणाः सत्वादयो नाभिर्यस्य तत् तथा । यदक्षमित्यनेनोक्तं केशवाधारत्वं स्पष्टयति—**विद्युदिति** । विद्युद् विशेषेण द्योतमानत्वाद् ब्रह्म बलमाधारो यस्य तत् तथा तत् । 'विद्युद्ब्रह्मेत्युपासीत' 'जगच्चक्रस्याक्षभूतो बलरूपश्च केशवः' इति च । देवासुरमनुष्यादयोऽष्टौ नेमिर्यस्य तत् तथा तत् ॥ २८ ॥

इदानीं तुरीयमूर्तिं नमति—**यदिति** । एको वर्णो यस्य तदेकवर्णम् । स्वरव्यञ्जनविभागविवक्षामन्तरेण व्यक्तेरेकत्वम् । अन्यथा षोडशस्वरा इति संख्यानुपपत्तिः । 'ओमित्येतदक्षरमिदं सर्वम्' 'प्रणवं हीश्वरं विद्यात् सर्वस्य हृदये स्थितम्' 'सर्वव्यापिनमोंकारम्' । तमसोऽज्ञानात् परं तद्रहितमित्यर्थः । 'तुरीयं तत् सर्वदृक् सदा' प्रकृतेः परं वा । 'अक्षरात् परतः परः' 'कूटस्थोऽक्षर उच्यते' 'उत्तमपुरुषः' । सत् सत्यं ज्ञानं अवसादयति नाशयत्यज्ञानमिति । 'न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः' । निर्दोषज्ञानं वा । 'ऐकात्म्यप्रत्ययसारम्' । षद्लृ गताविति धातुः । अलोकं लोकव्यवहाराविषयम् । 'अदृष्टमव्यवहार्यमलक्षणमचिन्त्यमव्यपदेश्यम्' अत एवाव्यक्तम्, अनन्तपारम् अन्तपारवर्जितम् । पारं पूरणं समुदायः, मात्राणामिति शेषः । अनन्तमात्रमित्यर्थ इति वा । 'अमात्रोनन्तमात्रश्च' । धीरा योगरथेन भक्तिपूर्वकध्यानलक्षणरथेन यदुपासते भजन्ति । 'ॐकार-

न यस्य कश्चातिपिपर्ति मायां यया जनो मुह्यति वेदनार्थम्[1] ।
तं निर्जितात्मात्मगुणं परेशं नमामि भूतेषु समं चरन्तम् ॥ ३० ॥

इमे वयं यत्कृपयैव तन्वा सत्वेन सृष्टा बहिरन्तरं विभो ।
गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ॥ ३१ ॥

पादौ महीयं स्वकृतेव[2] यस्य चतुर्विधो यत्र हि भूतसर्गः ।
स वै महापूरुष आत्मतन्त्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥

---

मात्मैव संविशत्यात्मनाऽऽत्मानं य एवं वेद' । यश्चोपसुपर्णपत्रं सुपर्णपक्षसमीपे जीवाख्यवाहनपृष्ठे आसाञ्चकार उपविवेश सर्वस्य हृदयस्थितः[3] । 'य आत्मनि तिष्ठन्' 'द्वा सुपर्णा सयुजा' ॥ २९ ॥

जनो यया मायया वेदनार्थे ज्ञानविषयं हरिं प्रति, ज्ञानाख्यपुरुषार्थे वा (प्रति) मुह्यति । 'अनीशया शोचति मुह्यमानः' । कश्चन तामसप्रकृतिर्यस्य तां मायां नातिपिपर्ति नातिक्रामति अत्येतुं समर्थो न भवति । सात्विकश्चेदस्य प्रसादेन जानाति । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' 'यमेवैष वृणुते' । तं नमामीत्यन्वयः । नितरां जित आत्मा, आत्मगुणाश्च येन स तथा तम्[4] । 'निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः' । 'एको देवः सर्वभूतेषु गूढः' 'स एष सर्वेश्वरः' एष सर्वः एषोन्तर्याम्येष योनिः सर्वस्य' ॥ ३० ॥

सात्विकानामपि भगवत्कटाक्षवीक्षामन्तरेण तज्ज्ञानं दुरापमित्यर्थादुक्तम् । तत् स्पष्टमाह—इम इति । विभो यत्कृपयैव ये तु येन सत्वेन गुणेन सृष्टा, येन बहिरन्तरं च सृष्टाश्चेमे वयं यस्य तव सूक्ष्मां गतिं विश्वव्यापिनीं सच्चिदानन्दाकृतिं न विद्महे, यदनुग्रहमन्तरेणेति शेषः । न च ज्ञानाभावात् तज्ज्ञानाभाव इत्याह--ऋषयश्चेति । ज्ञानिनोऽपि । अन्यथा ब्रह्मादीनामप्राधान्यं स्यात् । कैमुत्यन्यायमाह—कुत इति । हेतुगर्भविशेषणमाह—इतरेति । इतरस्तमोगुणः प्रधानो येषां ते तथा ॥३१॥

स्वकृतेयं मही यस्य पादाविव न स्वरूपपादौ, यत्र यस्यां मह्यां जरायुजादिचतुर्विधः भूतसर्गः, स वै स एव प्रसीदतामित्यन्वयः । महापूरुषः पुरुषोत्तमः महद् विविधं भवनं यस्य स तथा । विविधभवनमेकस्य कथमुपपद्यत इति तत्राह—ब्रह्म । अपरिच्छिन्नगुणपूर्णत्वात् । 'अथ कस्मादुच्यते

---

[1] सत्यधर्मतीर्थाः वेदनार्थं वेद नार्थमिति पाठद्वयमपि स्वीचक्रुः । वेद नार्थमिति—लि.शे.

[2] स्वकृतैव—शे.लि.

[3] यदेकवर्णमित्यादि न देवतान्तरपरं किन्तु श्रीहरिविषयकमेवेति उपसुपर्णपत्रमासाञ्चकारेत्यनेन ध्वनयति । तस्यैव गरुडारूढत्वादि मुख्यमिति विख्यातेः—स.

[4] निर्जिता आत्मा प्रकृतिः आत्मगुणा दुःखाज्ञानादयो येन स तथा । आत्मा (आत्मानः) जीवा आत्मगुणा दुःखादयो निर्जिता येन स तं वा—स.

अम्भस्तु यद्रेत उदारवीर्यं सिध्यन्ति जीवन्त्युत वर्धमानाः ।
लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥
सोमं मनो यस्य समामनन्ति दिवौकसां वै बलमन्ध आयुः ।
ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥

---

ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः । पादावित्यनेन पादोऽस्य विश्वा भूतानीति श्रुत्युक्तार्थः पातालमेतस्य हि पादमूलमिति स्मृत्युक्तार्थश्चेत्युभयं वक्ष्यत[1] इति ज्ञातव्यम् ॥ ३२ ॥

इदं चैकं महाविभूतित्वं हरेर्युक्तमित्याह—**अम्भ इति** । त्रयो लोका, अथाखिललोकपालाश्चोदारवीर्यं[2] उत्कृष्टबलं यदम्भो यस्य रेतो भवति तेन वर्धमानाः सिध्यन्ति सिद्धा अवाप्तफला भवन्ति, जीवन्त्युत अन्तरमपि तृप्तिलक्षणं जीवनमाप्नुवन्त्यपि । 'सोऽर्चन्नचरत् तस्यार्चत आपोऽजायन्त' 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः' 'तद् यत् प्रथमममृतं तद्वसव उपजीवन्ति' इत्यादि । सूर्यसोममहेन्द्रादीन् विनाऽन्येऽखिललोकपाला अद्भिर्जीवन्ति । किञ्चापां सोमस्य च जीवनप्रदा इन्द्राद्या इतीमं विशेषं तुशब्दो ज्ञापयति । इममेव विशेषं तुशब्दो ज्ञापयतीति कुतः अन्यत् किं न स्यादितीयं शङ्का, 'सूर्यसोमयमेन्द्रादीनृतेऽन्ये लोकपा अपि । अद्भिर्जीवन्ति सोमाच्च महेन्द्रादीनृतेऽखिलाः । अपां सोमस्य चेन्द्राद्याः सर्वे वै जीवनप्रदाः' इत्यनया परिहृतेति ज्ञायते । महती विभूतिः सूर्यसोमविधिविशेषकल्पकैश्वर्यलक्षणा यस्य स तथा । एवंविधः क इति तत्राह—**ब्रह्मेति** ॥ ३३ ॥

यो दिवौकसां बलमन्ध आयुर्वै बलाद्यभिवृद्धिहेतुः, यश्च नगानां वृक्षाणां अङ्कुरजननसामर्थ्यप्रदत्वेनेशः, यश्च प्रजानां प्रजनः सुरतानन्दगर्भलक्षणहेतुस्तं सोमं यस्य मनः समामनन्तीत्यन्वयः । तं देवानाम् (अन्धः) अन्नम्, इन्द्रादीन् ऋत इति शेषः । 'अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन' इति । सोमं यस्य मनः समामनन्ति, यो देवानां बलादिहेतुः यश्च नगानामीशो, यश्च प्रजानां प्रजनः स हरिः प्रसीदतां इति वा । सोमेन देवादिबलप्रदत्वेन महाविभूतिः । 'सोमोऽददद् गन्धर्वाय' 'सोमः प्रथमः' 'ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणां स्वधितिर्वनानां, सोमः पवित्रमत्येति रेभन्' अथवा देवादिबलप्रदमहाविभूतिः ॥ ३४ ॥

---

[1] उच्यत इति स्यात् । [2] उदारमुत्कृष्टं वीर्यं शक्तिर्यस्य तदुदारवीर्यमम्भो यद्रेतो यस्य रेतसो जातम् । सप्तमु प्रथमा इति सूत्रात् रेत इति प्रथमा पञ्चम्यर्थे । उदारवीर्यं वक्ष्यमाणोत्कृष्टसामर्थ्यमम्भो जलं यस्य हरे रेतो वीर्यस्थानीयम् । यद्रेतः कर्म त्रयो लोकास्त्रिलोकस्था जना जीवन्त्युपजीवन्ति—लि.

अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकाण्डनिमित्तजन्मा ।
अन्तः समुद्रे पचतः स्वधातून् प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥
यच्चक्षुरासीत् तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ।
द्वारं च मुक्तेरमृतस्य मृत्योः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥

---

अग्निर्यस्य मुखं मुखाज्जातः । 'सप्तसु प्रथमा' इति पञ्चम्यर्थे प्रथमा । मुखमाश्रित्य वर्तते च । अग्रणीत्वादग्निरित्यग्निशब्दस्यान्यत्र प्रवृत्तिसम्भवात् कथं निर्णयः स्यादिति तत्राह—**जातवेदा इति** । 'अग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मि' इति । जातं सर्वं वेत्तीति जातवेदश्शब्दस्यापि सावकाशत्वेन पूर्वोक्तसंशयानिस्तारः स्यादिति तत्राह—**क्रियेति** । क्रियाकाण्डमेव निमित्तं तत् तथा तेन जन्म यस्य स तथा[1] । 'अग्निर्वै देवानां मुखं हृदयतमः' इति श्रुतेरग्निमुखेनेन्द्रादिदेवानां स्वहविर्भागप्राप्त्यर्थमग्निहोत्रादौ मथनादिना अग्नेः प्रसिद्धस्य जन्मोपपत्तिरिति । 'तद् वसव उपजीवन्ति अग्निनैव मुखेनेति च' । अग्नेः पाचकत्वशक्तिरपि श्रीहरिनियतेत्यभिप्रायेणाह—**अन्तःसमुद्रेति** । उदरान्तः स्थित्वा स्वधातून् स्वाधीनानि चतुर्विधान्यन्नानि पचतः जरयतः । 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुः तत् पुरीषं भवति यो मध्यमस्तन्मांसं, योऽणुस्तन्मनः' इति । 'पचाम्यन्नं चतुर्विधम्' इति । सर्वोपकारकाग्निजनकत्वलक्षणमहाविभूतिः । तुना वाचोऽपि हरेर्मुखंक्षेत्रमिति सूचयति 'वाचो वह्नेर्मुखं क्षेत्रम्' इति स्वोक्तेः ॥ ३५ ॥

तरणिः सूर्यः यस्य चक्षुष आसीदित्यन्वयः । 'चक्षोः सूर्यो अजायत' । तरन्त्यनेन संसारं पुरुषा इति तरणिरिति नामसूचितमर्थं स्पष्टमाह—**देवेति** । देवानां संसारं मुक्त्वा गतानां यानं मार्गः उत्तरायणमार्गदेवतेत्यर्थः । 'अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिज्ञायते' । जा त्रय्या मीयत इति त्रयीमयः, वेदप्रतिपाद्येषु प्रधानं वा । 'त्रयीमयाय त्रिगुणात्मधारिणे' । एष तरणिर्ब्रह्मणः परमात्मनो धिष्ण्यमभिव्यक्तिस्थानम् । 'यश्चासावादित्ये' 'ध्येयः सदा सवितृमण्डलमध्यवर्ती' मृत्योः संसारान्मुक्तेर्द्वारम् । द्वयोः मुक्त्योः[2] कस्या इति तत्राह—**अमृतस्येति** । विदुषां विषयस्येत्यर्थः । 'स यावत् क्षिपेन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्' । नि [3]विषयस्यामृतस्य मुक्तेर्मृत्योश्च प्राप्तिहेतुरिति वा । एवंविधमाहात्म्योपेतसूर्यजनकमहाविभूतिः ॥ ३६ ॥

---

[1] क्रियाणां यज्ञादीनां काण्डं वर्गः, तदेव तन्निष्पत्तिरेव निमित्तं यस्य तत्, (तादृशं) जन्म यस्य, क्रियाकाण्डस्य क्रियाकलापस्य निमित्तं जन्म यस्य स वा—स [2] सदसन्मुक्त्योरित्यर्थः ।

[3] ग पाठे 'विषयस्य' इति नास्ति ।

प्राणादभूद् यस्य चराचराणां प्राणः सहो वै बलमोजश्च वायुः ।
अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥
श्रोत्राद् दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभेः ।
प्राणेन्द्रियात्मा स्वशरीरबन्धुः प्रसीदतां नः स महाविभूतिः ॥ ३८ ॥
बलान्महेन्द्रस्त्रिदशाः प्रसादान्मन्योर्गिरीशोऽशरणाद् विरिञ्चः ।
खेभ्यश्च छन्दांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥३९॥

---

चराचराणां सहो बलौजो हेतुः, स्वयं च तादृग्गुणः, आधिभौतिकं वायुरध्यात्मं प्राणो यस्य हरेः प्राणात् सहआदिगुणवदात्मनोऽभूत् । 'आत्मत एष प्राणो जायते' । 'तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथ । अहमेवैतत् पञ्चधाऽऽत्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामीति' । 'ते प्रीताः प्राणं स्तुवन्त्येषोऽग्निस्तपत्येष सूर्यः प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः वयमाद्यस्य दातारः पिता त्वं मातरिश्व नः' । वयं यं च सम्राजमन्वास्म । वयं प्राणनामानं चक्रवर्तिनम् अनुवर्तामहे इव । प्राणचतुर्मुखयोरेकत्वादिवेति, अन्यत्रावधारणार्थम्[2] । 'यथा सम्राडेवाधिकृतान् विनियुङ्क्ते एतान् ग्रामानधितिष्ठस्वैतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते' इति शेषः । सम्राजं यं भगवन्तमन्वास्मैवेति वा । सर्वोत्तमप्राणजनकमहाविभूतिः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' ॥ ३७ ॥

यस्य श्रोत्राद्दिशो, यस्य हृदयाच्च खानीन्द्रियाणि यस्य पुरुषस्य नाभेश्च खमाकाश इत्येते प्रजज्ञिरे इत्यन्वयः । अत्र 'चन्द्रमा मनसो जातः' इत्यारभ्य दिशः श्रोत्रादित्यन्तं वाक्यं प्रमाणं दर्शयति । तैजसाहङ्कारगुणव्यञ्जकहृदयादीन्द्रियाणीत्यर्थः । तैजसानीन्द्रियाणीत्युक्तेः । सहस्रशीर्षा पुरुषः प्रसन्नो भवत्वित्यन्वयः । प्राणेन्द्रियाणि व्याप्य तिष्ठतीति प्राणेन्द्रियात्मा । 'ब्रह्मणो वा एतानि करणानि' 'एवं ह वै तत् सर्वं परे आत्मनि सम्प्रतिष्ठते । 'पृथिवी च' इत्यारभ्य 'प्राणश्च विधारयितव्यं च' इत्यनेन षट्प्रश्नोपनिषद्गतेन वाक्येन (एतत्सर्वं) सविस्तरमुच्यते । स्वशरीरभूतायाः पृथिव्या बन्धुः । 'यस्य पृथिवी शरीरम्' । दिङ्नामदेवतादिसर्जनप्रतीतमहाविभूतिः ॥ ३८ ॥

गुणगुणिनोरभेदाभिप्रायेणाह—**बलादिति** । बलादिगुणेभ्य इन्द्रादीनामुद्भवः । निर्दोषत्वेन मन्युरहितस्य न मन्युस्वभावः[3] तादृक् स्वभावरूपीति सर्जनाभिप्रायाद्दर्शितम्[4] । कारणगुणः कार्येषु सम-

---

[1] धिषणत् इत्यपि वि स पाठः । लिङ्गमात्रमतन्त्रम्—स । [2] चतुर्मुखः प्राणमनुवर्तत इव, अन्ये देवादयोऽनुवर्तन्त एवेत्यर्थः । [3] मन्योः क्षमारूपात् । क्रोधः क्षमात्मकस्तस्य चिदानन्दात्मकस्तथेत्यादेः—स.
[4] मन्योः कोपसदृशाच्छत्रुनिग्रहेच्छाया गिरिशः (जातः)—लि.

श्रीर्वक्षसः पितरश्छायया॥सन् धर्मः स्तनादितरः पृष्ठतोऽभूत् ।
द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात् प्रसीदतां नः स महाविभूतिः ॥
विप्रो मुखाद् ब्रह्म च यस्य गुह्यं राजन्य आसीद् भुजयोर्बलं च ।
ऊर्वोर्विशोऽङ्घ्रेरभवंश्च शूद्राः प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥
लोभोऽधरात् प्रीतिरुपर्यभूद् द्युतिर्नस्तः पशव्यं स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥
द्रव्यं वयः कर्मगुणाश्च शेषं यद्योगमायाविहताः पतन्ति ।
यद् दुर्विभाव्यं प्रबुधाऽवबोधं प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥

---

वेतीति न्यायरक्षणार्थं च । अशरणात् स्वाधिष्ठानात् लयोदधौ पृथिव्याद्यधिष्ठानाभावात् स्वमहिम्न एवेत्यर्थः। 'किंस्विदासीदधिष्ठानमारम्भणम्' 'स्वे महिम्नि'। धिवणादिति केचित् पठन्ति । सप्तेन्द्रियैः सप्तछन्दांसि । ऋषयः प्रजापतयः । कस्तस्य मेढ्रादित्युक्तेः । विरिञ्चादिदेवजनकमहाविभूतिः ॥ ३९ ॥

उपरि उत्तरोष्ठात् प्रीतिः, द्युतिः कान्तिश्च । पशव्यं पशुजीवनं नस्तो नासिकायाः । स्पर्शेन गुणेन जातः कामः स्त्रीविषयः । कालो मृत्युः ॥ ४२ ॥

द्रव्यं भूतपञ्चकम्, वयः आयुर्लक्षणम्, कर्म त्रिविधम्, गुणा भक्त्यादयः शुक्लादयो वा, शेषं स्वभावजीवकालादयः, यस्य हरेर्योगमायया स्वरूपभूतेच्छया विहता उपेक्षिताः पतन्ति प्रच्युता भवन्तीत्यर्थः । 'द्रव्यं कर्म च कालश्च' इति । किञ्च यद् दुर्विभाव्यमेवंविधमिति भावयितुमशक्यम् । 'स वा एष आत्मा नेति'। किञ्च (प्रबुधानां) प्रबुद्धज्ञानिनाम् अवबोधो ज्ञानं यस्मात् तत् तथा । अनेन स्वानुग्रहेण स्वविषयज्ञानं सुशकमित्युक्तं भवति । 'अज्ञानां ज्ञानदो विष्णुः' 'यमेवैष वृणुते' इत्यादि । द्रव्यादिसत्ताप्रदत्वेन ब्रह्माद्यचिन्त्यमहिमत्वेन ज्ञानदातृत्वेन परिपूर्णैश्वर्यः प्रसीदतामित्यन्वयः । नवत्वसंख्याविशिष्टं द्रव्यं, वयगताविति धातोः वयत्यवगच्छत्यनेन नीलोत्पलमित्यादिव्यवहारं पुरुष इति समवायः, उत्क्षेपणादीनि पञ्च कर्माणि, शब्दस्पर्शरूपरसगन्धादिचतुर्विंशति गुणाः, सामान्यविशेषौ शेषमित्यनेनोच्यते, एते यद्योगमायया विहताः अहितीकृताः पतन्ति पातयन्त्यधः, पुरुषमिति शेषः । नरकहेतव इत्यर्थः । 'विषकण्ठकणभक्षशङ्करत्रिदशबलपञ्चशिखाक्षपादवादान् । महदपि सुविचार्य लोकतन्त्रं भगवदुपास्तिमृते न सिद्धिरस्ति'[1] ' इति प्रमितेनायमुक्तार्थ इति सिद्धम् । कणादाक्षपादमतज्ञानात् सिद्धिर्मा भूदद्वैतज्ञानेन सा स्यादिति तत्राह—**यदिति** । अद्वैतमतोक्तविधया भावयितुमशक्यम् ।

---

([1] शोधनीयमिदं पद्यम् ।)

नमोऽस्तु तस्मा उपशान्तशक्तये स्वाराज्यलाभपरिपूरितात्मने[1] ।
गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नमः स्वभूतये ॥ ४४ ॥

स त्वं नो दर्शयात्मानमस्मत्करणगोचरः ।
प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखाम्बुजम् ॥ ४५ ॥

तैस्तैः स्वेच्छाकृतै रूपैः काले काले स्वयं विभो ।
कर्म दुर्विषहं यन्नो भगवान् वै करोति हि ॥ ४६ ॥

क्लेशभूर्यल्पसाराणि कर्माणि विफलानि च ।
देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥

---

अनेनान्येऽपि दुर्वादिवादा अपि निरस्ता इति ज्ञातव्यम् । कर्मणा पुरुषार्थसिद्धिः स्यात् तर्हि इति नेत्याह—**प्रबुधेति** । अनेन भाट्टादिमतमपि प्रत्युक्तम् ॥ ४३ ॥

उपात् सर्वाधिकाद् विष्णोः शान्ता आनन्दमूर्तयो यासां ताः तादृश्यः शक्तयो भार्या यस्य स तथा तस्मै[2] । निवृत्तस्पष्टशक्तय इति च (वा) । स्वाराज्यलाभः स्वयं प्रकाशमानानन्दस्तेन परिपूरित आत्मा यस्य स तथा तस्मै । नित्याविर्भूतानन्दस्वरूपायेत्यर्थः । मायया स्वाधीनप्रकृत्या रचितेषु निर्मितेषु गुणेषु विषयेषु वा प्रवर्तमानायापि तद्योग्याभिर्वृत्तिभिर्दुःखलक्षणाभिर्न सज्जमानाय निरवद्यत्वेन दुःखानुभूतिरहितायेत्यर्थः । स्वभूतये स्वयम्भुवे स्वरूपपूर्णैश्वर्यायेति वा ॥ ४४ ॥

अस्मत्करणगोचरोऽस्मदिन्द्रियविषयो भूत्वा ॥ ४५ ॥

भक्तानुकम्पामन्तरेण तवान्यत् कृत्यं न विद्यत इत्याशयेनाह—**तैस्तैरिति** । हे विभो यद् यदा नोऽस्माकं दुर्विषहं सोढुमशक्यं कर्म दुःखलक्षणम् असुरादेः स्यादिति शेषः । तदा भगवान् स्वयमसुरादेर्दुर्विषहं कर्म पराक्रमलक्षणं करोति वा इत्यन्वयः । कथम् ? स्वेच्छाकृतैस्तैस्तै रूपैः । 'यदा यदा हि धर्मस्य' इति स्मृतिर्हिशब्देन गृहीता ॥ ४६ ॥

ज्ञानमेव मुक्तिसाधनं न कर्म, तन्मतदूषणादित्यभिप्रायो यदि तर्हि कर्मकरणं व्यर्थमित्याशङ्क्य सत्यं भगवदर्पणाख्यचिकित्साभावे, साऽस्ति चेत् फलवदित्याशयेनाह—**क्लेशेति** । विषयार्तानां देहिनां कर्माणि विफलानि विरुद्धफलान्यनभीष्टफलानीत्यन्वयः । कथम् ? भूरिक्लेशानि अल्पसाराणि च । ईश्वरार्पित कर्म तथाऽनर्पितवद् विफलं न स्यादित्यन्वयः ॥ ४७ ॥

---

[1] प्रतिपूरितात्मने इति पाठस्तु वृत्तविच्छित्तिमीत्या कल्पित इति ज्ञेयम् । अनेकेषु मूलकोशेष्वदर्शनात्—स.

[2] उपशान्ता अकार्यकालेऽव्यक्ताः शक्तयो जगत्सर्जनादिसामर्थ्यानि यस्य—स.

नाधमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ।
कल्पते पुरुषस्यैव स ह्यात्मा दयितो हितः ॥ ४८ ॥

यथाहि स्कन्धशाखानां तरोर्मूलावसेचनम् ।
एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥

नमस्तुभ्यमनन्ताय दुर्वितर्क्यात्मकर्मणे ।
निर्गुणाय गुणेशाय सत्वस्थाय च साम्प्रतम् ॥ ५० ॥

इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चमोऽध्यायः ।

---

साङ्गं कर्म ईश्वरार्पितं सफलमस्तु, अनङ्गं कथमिति तत्राह—नेति । पुरुषस्य कर्मकल्पः कर्माभासः अङ्गसाकल्येन रहितः अत एवाधमोऽपि यदीश्वरार्पितः तर्हि विफलाय न कल्पते किन्तु फलवानेव स्यादित्यन्वयः । तत्र किं कारणम् ? अत्राह—स इति । यत्प्रीत्यै कर्म करोति स आत्मा परमात्मा हि सः प्रेक्ष्येष्टकारी दयितोऽनिमित्तबन्धुः हि यस्मात्, तस्मादिति शेषः । नाधर्म इति केचित् पठन्ति[1] । स्मृत्यविहितः[2] । 'सर्वधर्मान् परित्यज्य' इत्युक्तेः ॥ ४८ ॥

ननु यजेतेत्यादिविहितकर्म परित्यज्य भगवदेकाराधनायां तृप्त्यभावेन पुरुषार्थः स्यादिति तत्राह —यथेति । स्कन्धानां शाखानाम्, तृप्तिं जनयतीति शेषः । तेनांकुरफलपुष्पसमृद्धिलक्षणपुरुषार्थो यथा भवति तथा सर्वेषामिन्द्रादीनामात्मनः स्वस्यापि तृप्त्याऽऽनन्दानुभवलक्षणपुरुषार्थः स्यादिति भावः । यस्मादिन्द्रश्चाग्निश्चेत्यादिवाक्यं हिशब्देन दर्शयति । तेनेन्द्रादीनां श्रीनारायणशाखिशाखात्वं दर्शितं भवति । तथाहीतिवद् यथाहीत्येकं वाक्यम् ॥ ४९ ॥

अनन्तायेत्यनेन मुखाम्बुजमिति परिच्छिन्नत्वशङ्कां निवारयति। दुर्वितर्क्येत्यादिना न स्वरूपस्यानन्त्यमपि तु तत्कर्मणामपीत्युच्यते । निर्गुणायेत्यनेन शबलत्वं निवारयति । गुणेशायेत्यनेन गुणैः प्रवर्तमानस्यापि गुणसम्पर्कप्राप्तं दोषं निरुणद्धि । सत्वस्थायेत्यनेन गुणैर्यौगपद्यप्रतीतिं निवारयति । साम्प्रतमित्यनेन सत्वगुणयुक्तत्वं स्थितिकालं च दर्शयति । यतस्त्वं सत्वगुणप्रवर्तकोऽधुना तस्मादस्मान् आपदः पालयेति चार्थः ॥ ५० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य पञ्चमोऽध्यायः ।

---

[1] नाधर्म इति पाठे तत्तुल्योपीत्यर्थः-स. [2] अस्याभिप्रायो न स्पष्टः । अधर्म इत्यस्य व्याख्यानं स्यात् ?

|| अथ षष्ठोऽध्यायः ||

श्रीशुक उवाच —

एवं स्तुतः सुरगणैर्भगवान् हरिरीश्वरः ।
तेषामाविरभूद् राजन् सहस्रार्कोदयद्युतिः || १ ||

तेनैव सहसा सर्वे देवाः प्रतिहतेक्षणाः ।
नापश्यन् खं दिशः क्षोणीमात्मानं चाग्रतो विभुम्[1] || २ ||

विरिञ्चो भगवान् दृष्ट्वा सह शर्वेण भारत[2]
स्वच्छं मरकतश्यामं कञ्जगर्भारुणेक्षणम् || ३ ||

तप्तहेमावदातेन लसत्कौशेयवाससा ।
प्रसन्नचारुसर्वाङ्गं सुमुखं सुन्दरभ्रुवम् || ४ ||

महामणिकिरीटेन केयूराभ्यां च भूषितम् ।
कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजम् || ५ ||

काञ्चीकलापवलयहारनूपुरशोभितम्[3] ।
कौस्तुभाभरणं लक्ष्म बिभ्रतं वनमालिनम् || ६ ||

सुदर्शनादिभिश्चास्त्रैर्मूर्तिमद्भिरुपासितम् ।
तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ।
सर्वामरगणैः सार्धं सर्वाङ्गैरवनिं गतैः || ७ ||

---

ज्ञानवत् ज्ञानपूर्वकं यथातत्वस्तुतिरपि हरेः प्रीतिजननीत्येतमर्थं प्रपञ्चयत्यस्मिन्नध्याये ।
तत्रादौ हरेराविर्भावप्रकारं वक्ति—एवमित्यादिना । ब्रह्माणं पुरस्कृत्येति शेषः || १ ||
आत्मानं स्वान्, जातावेकवचनम् । अग्रतः स्थितम् || २ ||
अवदातेन पीतेन । 'अवदातोऽरुणे पीते श्वेते श्यामे च कथ्यते' इति । वाससोपलक्षितम् ||३-४||
कपोलश्रिया युक्तमुखाम्बुजम् || ५ ||
कलापो भूषणम् । लक्ष्म लाञ्छनं श्रीवत्सनाम || ६ || देवप्रवरो ब्रह्मा || ७ ||

---

[1] कुतो विभुम्–इत्यपि स पाठः । [2] तां तनुम्—ग.

ब्रह्मोवाच —
अजाय जन्मस्थितिसंयमाय गुणाय निर्वाणसुखार्णवाय ।
अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमो नमस्ते ॥ ८ ॥
रूपं तवैतत् पुरुषर्षभेज्यं श्रेयोऽर्थिभिर्वैदिकतान्त्रिकैश्च ।
योगेन धातः सह नस्त्रिलोकान् पश्याम्यमुष्मिन् भव[1] विश्वमूर्ते ॥
त्वय्यग्र आसीदिदमात्मतन्त्रे त्वमादिरन्तो जगतोऽस्य मध्यम् ।
घटस्य मृत्स्नेव परः परस्मात् त्वमेव चाशेषमशेषनामा ॥ १० ॥
त्वं माययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः ।
पश्यन्ति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चितः ॥

---

अजाय विष्णवे । 'अजा विष्णुहरच्छागाः' इत्यतोऽजशब्दस्योभयत्र वृत्तावप्यत्र विष्णुरेवो-च्यते । सर्वेति सर्वकारणत्वेन निर्देशात्ततो परत्वप्रतीतेः, जन्मस्थितिसंयमाय जन्मादीनां तदेकाधीन-त्वात्तथोक्तिः । गुणाय, 'विज्ञानमानन्दं ब्रह्म' इति श्रुतेरभिप्रायाद्गुणत्वोक्तिः । निर्वाणसुखार्णवाय शरी-राभिमानानुत्थसुखसमुद्राय अपरिगण्यमहिम्ने ॥ ८ ॥

हे पुरुषर्षभ मोक्षादिपुरुषार्थाकाङ्क्षिभिः वैदिकैस्तान्त्रिकैश्च यदेतत् तव रूपम्, हे धातः, अमुष्मिन् रूपे योगेन सह त्रिलोकान् पश्यामि[2] । हे विश्वमूर्ते त्वं नः शरणं भवेत्यन्वयः । भुवीति पाठे आधार इत्यर्थः ॥ ९ ॥

इव यथा घटस्यादिरन्तो मध्यं च मृत्स्ना प्रशस्ता मृदेवोत्तमकारणं सलिलादि अवान्तरम्(कारणं), तथा त्वमप्यस्य जगतः आद्यादिः[3], परस्मात् पर उत्तमहेतुः[4] । अत्र मृद्वदुपादानकारणं न ब्रह्म किन्तु तदधीनसत्ताकत्वाद् दृष्टान्तोपादानमित्याशयेनाह— **त्वमेवेति** । चशब्देन ब्रह्मोपादानकत्वे सर्वस्य चेतन-त्वापत्तिप्रसङ्गं सूचयति । अयमर्थोऽत्र विवक्षित इति कुतोऽवगतमिति तत्राह— **अशेषेति** ॥ १० ॥

ननु सृष्टिसंहृतिकर्तृत्वात् तदाद्यन्तत्वमस्तु, मध्यत्वं कथमिति तत्राह— **त्वमिति** । आत्मैव आश्रयो यस्याः सा तथा तया, अत एव स्वया स्वकीयत्वेनाभिमतया मायया प्रकृत्या इदं विश्वं निर्माय

---

[1] भुवि—स.शे. [2] भुवि आधारभूते अमुष्मिन् तस्मिन् रूपे योगेन समाध्याद्युपायेन नोऽस्मान् त्रिलोकांश्च सह युगपत् पश्यामि—स. अमुष्मिन् तस्मिन् तव शरीरे त्रिलोकान् त्रिलोकस्थितजनैः सह नोऽस्मान् अहं योगेन त्वध्यानादिजपुण्येन पश्यामि—लि. [3] आदिः सृष्टिकर्ता, अन्तो विनाशकर्ता, मध्यं पालनकर्तेत्यर्थः ।
[4] सति कुलालकीलालादौ मृदोऽभावे यथा न घटघटना तथेश्वर त्वद्व्यतिरेकेण जगज्जननं दुर्घटमिति भावः—स.

यथाऽग्निमेधस्यमृतं च गोषु भुव्यन्नमम्बूत्खनने तथोर्व्याः ।
योगैर्मनुष्या अधियन्ति हित्वा गुणेषु बुध्या कवयोऽवयन्ति ॥ १२ ॥

तं त्वा वयं नाथ समुज्जिहानं सरोजनाभातिचिरेप्सितार्थम् ।
दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गाङ्गमम्भः ॥ १३ ॥

स त्वं विधत्स्वाऽखिललोकपाला वयं यदर्थास्तव पादमूलम् ।
समागतास्ते बहिरन्तरात्मन् किं वाऽन्य विज्ञाप्यमशेषसाक्षिणः ॥१४॥

---

त्वं तदनुप्रविष्टः इति यस्मात् , (तस्मात्) त्वां मध्यं वदन्तीति शेषः । 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतिः । अत्र किं मानमिति तत्राह—**पश्यन्तीति** । मनीषिणो बुद्धिमन्तो मनसा मननलक्षण-विचारेण युक्ता एवं पश्यन्तीति यत् तद्दर्शनं मानमित्यन्वयः । नन्वेवं तर्हि गुणसम्पर्किणो गुणदोषलेपः स्यात् ? न स्यात् । अत्रापीदमेव मानमित्याह—**गुणेति** । विपश्चितो गुणव्यवाये गुणकार्यसमूहे स्थित-मप्यगुणं गुणनिमित्तदोषरहितं त्वां पश्यन्तीति शेषः । इतोऽपि ब्रह्मोपादानकारणं न, किन्तु निमित्तमेवे-त्याशयेनाह—**त्वमिति** । माययेदं विश्वं निर्माय तदनुप्रविष्ट इति मनसा युक्ता मनीषिणो गुणकार्ये जगति विषये अगुणं गुणव्यतिरिक्तं कारणं निमित्तमेव त्वां पश्यन्तीत्यन्वयः । विपश्चितः पण्डिता दर्शनपटव इत्यर्थः । अनेन विद्वद्दर्शनमत्र प्रमाणमिति दर्शितम् ॥ ११ ॥

गुणकार्ये स्थितं गुणदोषरहितं पश्यन्तीत्युक्तम् । कथं तत्र पश्यन्तीति तत्राह—**यथेति** । यथा एधआदिष्वग्न्यादीनधियन्ति अधिगच्छन्ति तथा कवयो बुध्या गुणेषु त्वामवयन्ति जानन्तीत्यन्वयः । उर्व्या उत्खनने सति अम्बु यथा । तथाशब्दः समुच्चये । अमृतं क्षीरं घृतं वा । भेदस्य दोषलेपराहि-त्यस्य च ज्ञापनायाग्निनिदर्शनम् । सर्वस्मात् सारः स्वभक्तमुक्तिद इति ज्ञापनायामृतदृष्टान्तः । उपजी-व्यत्वज्ञापनायान्नं यथेति । भूयस्त्वतापहरत्वदर्शनायाऽम्बु यथेति ॥ १२ ॥

यस्त्वं सर्वोत्तमत्वोपजीव्यत्वादिगुणसंपन्नो वयं तं त्वां दृष्ट्वा अद्य निर्वृतिं गता इत्यन्वयः । अति-चिरेण कालेन वाञ्छितार्थं समुज्जिहानम् । विचार्यमाणे सति सर्वोत्तमं भगवन्तम् उन्नतीकुर्वाणम् । दवार्ता वनवह्निक्लिष्टाः गाङ्गं गङ्गासम्बन्धि ॥ १३ ॥

योऽर्थो येषां ते यदर्था यत्प्रयोजना अखिललोकपाला वयं तव पादमूलं समागता स त्वं तमर्थ-मस्मभ्यं विधत्स्वेत्यन्वयः । तर्हि सोऽर्थः क इति तत्राह—**ते बहिरिति** । हे आत्मन् स्वात्मन् बहिरन्तःसाक्षिणः ते तवाद्य विज्ञाप्यं किं चास्ति न किमपीत्यन्वयः । अतोऽस्मदभीष्टं भवतः सिद्ध-मित्यर्थः ॥ १४ ॥

अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ।
किं वा विधेमेश पृथग्विभाविता विधत्स्व शं नो द्विजदेवमित्र ॥१५॥

श्रीशुक उवाच —
एवं विरिञ्चयादिभिरीडितस्तद् विज्ञाय तेषां हृदयं यथैव ।
जगाद जीमूतगभीरया गिरा बद्धाञ्जलीन् संवृतसर्वकामान् ॥ १६ ॥

एक एवेश्वरस्तस्मिन् सुरकार्ये सुरेश्वरः ।
विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥ १७ ॥

श्रीभगवानुवाच —
हन्त ब्रह्मन्नहो शम्भो हे देवा मम भाषितम् ।
शृणुतावहिताः सर्वे श्रेयो वः स्याद् यथा पुरा ॥ १८ ॥

यातुधानैश्च दैतेयैस्तावत् सन्धिर्विधीयताम् ।
कालेनानुगृहीतैस्तैर्यावद् वो भव आत्मनः ॥ १९ ॥

---

इतोऽप्यस्माभिर्विज्ञाप्यं नास्ति यतो वयं किङ्करा इति भावेनाह — अहमिति । यथा केतवः ज्वाला अग्नेरुत्पद्यन्ते तमेवाश्रिताः, एवं मदादयः सर्वे त्वदुत्पन्नत्वात् त्वत्किङ्करा इत्यर्थः । किङ्करत्वं विशदयति - किं वेति । ईश ! सृष्ट्यादिकर्तृत्वेन पृथक् पृथग् विभाविताः प्रख्याता वयं किं वा विधेम कां तवाज्ञां कुर्मः ? हे द्विजदेवमित्र नोऽस्माकं तवाज्ञाकरणलक्षणं शं विधत्स्व इदं कुरुध्वमित्याज्ञापय । गिरित्रः सदाशिवः ॥ १५ ॥

हृदयमभिप्रायम् । जीमूतो मेघः । संवृतसर्वकामान् अप्रकाशितस्वाभिप्रायान् ॥ १६ ॥

यतो ब्रह्मादयः श्रीनारायणं शरणं प्रापुः तस्मादेक एवेश्वरः सुरकार्यविषये ईश्वरः समर्थः ॥१७॥

आरम्भे यथा येन विधिना युष्माकं श्रेयः स्यात् तं विधिम्[1] । यातुधानैः राक्षसैः अनुगृहीतैः ऐकमत्येन गृहीतैर्वा[2] । आत्मनो युष्मदात्मनो भवः श्रेयः, वृद्धिर्वा ॥ १८–१९ ॥

---

[1] शृणुतेत्यन्वयः । [2] कालेनानुगृहीतैः मयैवानुगृहीतैः । इदानीं बलकालस्तेषामितिभावः । तैर्यातुधानै राक्षसैः दैतेयैः बल्यादिभिश्च व आत्मनो मम सकाशाद् यावद् मङ्गलं भवेत् तावत्कालपर्यन्तं सन्धिः सन्धानं विधीयताम्—स.

अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे ।
अहिमूषकवद् देवा ह्यर्थस्य पदवीं गतैः ॥ २० ॥

अमृतोत्पादने यत्नः क्रियतामविलम्बितम् ।
यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥

क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥

सहायेन मया देवा निर्मन्थध्वमतन्द्रिताः ।
क्लेशभाजो भविष्यन्ति दैत्या यूयं फलग्रहाः ॥ २३ ॥

यूयं तदनुमोदध्वं यदिच्छन्त्यसुराः सुराः ।
न संरम्भेण सिद्ध्यन्ति सर्वेऽर्थाः सान्त्वया यथा ॥ २४ ॥

न भेतव्यं कालकूटाद् विषाज्जलधिसम्भवात् ।
लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥

---

हे देवाः कार्यार्थगौरवे कर्तव्यस्य प्रयोजनस्य गुरुत्वे सति अर्थस्य प्रयोजनस्य पदवीं गतैर्भवद्भिरसुरा अरयोऽपि सन्धेया हीत्यन्वयः । कथमिव ? अहिमूषकयोरिव । 'यावन्मयूरसंत्रस्तः सर्पो मूषकवेश्मनि । निलीय निर्भयः पश्चाद् भक्षित्वा मूषकं गतः' इति तान्त्रिकायाम् । सन्ति कार्यार्थगौरवादिति पाठे कार्यार्थगौरवादरयोऽपि सन्धेया इति न्यायाः सन्तीत्यन्वयः । अहिमूषकसंधानमिव । सर्पग्राहिणा सर्पमूषकौ गृहीत्वा फलकोर्ध्वद्वारखर्वमञ्जूषायां निहितौ । तत्रोपोषितः सर्पो मनुत एकमूषिकादनाद्वरमनेन सन्धिं कृत्वेतो निर्याणमिति । मूषकमभाषत । हे मूषकोन्नतीभूतमत्फणाग्रे स्थित्वा त्वत्कृतफलकरन्ध्रेणावां निर्गच्छाव, ततः स्वस्थौ स्यावेति । तेन तौ निर्गत्य, स्थितं मार्जारभीतं मूषकं भक्षयित्वा सर्पोऽप्ययासीदिति किंवदन्ती ॥ २० ॥

अविलम्बितं शीघ्रम् । यस्य शक्त्या । वैशब्देन योग्यतां सूचयति ॥ २१ ॥

नेत्रं रज्जुम् । 'रज्जौ चक्षुषि नेत्रं स्याज्जटायामपि नेतरत्' इत्यभिधानम् ॥ २२—२३ ॥

इच्छन्ति, कार्यसिद्धिमिति शेषः । सन्धानं वा । संरम्भेण द्वेषेण कोपेन वा । सान्त्वया[1] श्रिया ॥ २४ ॥ वो युष्माभिः ॥ २५ ॥

---

[1] सामप्रयोगेणेति भावः ।

श्रीशुक उवाच —

इति देवान् समादिश्य भगवान् पुरुषोत्तमः ।
तेषामन्तर्दधे राजन् स्वच्छन्दगतिरीश्वरः ॥ २६ ॥

अथ तस्मै भगवते नमस्कृत्य पितामहः ।
भवश्च जग्मतुः स्वं स्वं धाम चेयुर्बलिं सुराः ॥ २७ ॥

दृष्ट्वाऽरीनथ सम्पन्नान्[1] जातक्ष्वेलान् स्वनायकान् ।
न्यषेधद् दैत्यराडुच्चैः सन्धिविग्रहकालवित् ॥ २८ ॥

ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ।
श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥

महेन्द्रः श्लक्ष्णया वाचा सान्त्वयित्वा महामतिः ।
अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥

तेऽन्वरोचन्त[2] दैत्यस्य तत्रान्ये येऽसुराधिपाः ।
शम्बरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥

ततो देवासुराः कृत्वा संविदं कृतसौहृदाः ।
उद्यमं परमं चक्रुरमृतार्थे परन्तप ॥ ३२ ॥

ततस्ते मन्दरगिरिमञ्जसोत्पाट्य दुर्मदाः ।
नदन्त उदधिं निन्युः शक्ता परिघबाहवः ॥ ३३ ॥

---

तेषां पश्यताम् ॥ २६–२७ ॥ क्ष्वेलो दर्पः सिंहनादो वा । स्वो नायको येषां ते तथा ॥ २८ ॥ तेऽसुराः । दैत्यस्य भृत्याः ॥ ३१ ॥ संविदं सन्धिलक्षणवार्ताम् ॥ ३२ ॥ दुर्मदाः दुःसहमदाः[3] ॥ ३३ ॥

---

[1] दृष्ट्वाऽरीनथ संयत्तानिति पाठः स्फुटार्थः—स. । [2] तदरोचतेति पाकृतः पाठः—स.

[3] तमुद्धर्तुमशक्ता वै सर्वे देवगणास्तदा । विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् । भवन्तावत्र कुरुतां बुद्धिं नः-श्रेयसीं पराम् । मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः । तथेति चाब्रवीद्विष्णुर्ब्रह्मणा परिनोदितः । नारायणेन चाप्युक्तस्तस्मिन् कर्मणि वीर्यवान् । अथ पर्वतराजानं तमनन्तो महाबलः । उज्जहार बलाद् ब्रह्मन् सवनं सवनौकसम्, इत्यादिपर्वोक्तेः—स. टि. आर्. कृष्णाचार्यैर्मुद्रिते महाभारते तु ईषत्पाठभेदो दृश्यते —तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव । अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः । ततोऽनन्तः समुत्थाय

चो

दूरभारोद्वहश्रान्ताः शक्रवैरोचनादयः ।
अपारयन्तस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥

निपतन् स गिरिस्तावद्[1] बहूनमरदानवान् ।
चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥

तांस्तथा भग्नमनसो भग्नबाहूरुकन्धरान् ।
विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ३६ ॥

गिरिपातविनिष्पिष्टान् विलोक्यामरदानवान् ।
ईक्षया जीवयामास निर्जरान् निर्व्रणान् यथा ॥ ३७ ॥

गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ।
आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥

अवरोप्य गिरिं स्कन्धात् सुपर्णः पततां वरः ।
ययौ जलान्त उत्सृज्य हरिणा स विवर्जितः स ॥ ३९ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे षष्ठोऽध्यायः ।

---

दूरदेशं प्रति भारो भरणं यस्य स दूरभारो गिरिस्तस्योद्वहो वहनं तेन श्रान्ताः । अपारयन्तः पारं गन्तुमशक्नुवन्तः ॥ ३४–३५ ॥ नाम्ना गरुडध्वज इति रूपधारी बभूव ॥ ३६ ॥

सुपर्णो गरुडः जलान्ते जलमध्ये । अत्र सुपर्ण इति कथनेनेदं तात्पर्यमवबोद्धव्यम् । वैवस्वत-रैवतमन्वोरन्तरयोरमृतमथनमस्ति तत्र वैवस्वतमन्वन्तरेऽनन्तनाम्ना गरुडेनोढो गिरिः, सुपर्णनाम्नोढो रैवत-मन्वन्तरे । 'अनन्तोढो मन्दरस्तु यदा वैवस्वतान्तरम् । अमृतार्थे सुपर्णोढो रैवतस्यान्तरे मनोः' इत्यनेन निश्चयोक्तेरिति ॥ ३९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य षष्ठोऽध्यायः ।

---

ब्रह्मणा परिचोदितः । नारायणेन चाप्युक्तः .... .... इति ।
(आदिपर्वणि आस्तीकपर्वणि १८ अध्याये, श्लोकाः ४–८)

[1] तत्र—ग.

॥ अथ सप्तमोऽध्यायः ॥

श्रीशुक उवाच —

ते नागराजमामन्त्र्य फलभागेन वासुकिम् ।
परिधाय गिरौ तस्मिन् नेत्रमब्धिं मुदान्विताः ॥ १ ॥

आरेभिरे[1] सुरा यत्ता अमृतार्थे कुरूद्वह ।
हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥

तन्नैच्छन् दैत्यपतयो महापुरुषचेष्टितम् ।
न गृह्णीमो वयं पुच्छमहेरङ्गममङ्गलम् ॥ ३ ॥

स्वाध्यायश्रुतसम्पन्नाः प्रख्याता जन्मकर्मभिः ।
इति तूष्णीं स्थितान् दैत्यान् विलोक्य पुरुषोत्तमः ॥ ४ ॥

स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ।
कृतस्थानविभागास्ते एवं कश्यपनन्दनाः ॥ ५ ॥

ममन्थुः परमायत्ता अमृतार्थे पयोनिधिम् ।
मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ६ ॥

ध्रियमाणोऽपि बलिभिर्गौरवात् पाण्डुनन्दन ।
ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ।
आसन् स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥

---

॥ अथ सप्तमोऽध्यायः ॥

हालाहलं नाम तमोगुणजन्यमन्यथाज्ञानलक्षणम्, सुरा नाम राजसा[2] अज्ञानलक्षणा, अमृतं नाम सात्त्विकं ज्ञानलक्षणं मुक्तिसाधनमित्यादि[3] उत्पत्तिकथनेन माहात्म्यं स्पष्टयतेऽत्राध्यायद्वये ।

तत्रादौ मथनप्रकारं शास्त्रश्रवणलक्षणं कथयति—ते नागराजमिति । परिधाय वेष्टयित्वा ॥१॥ देवास्ततः पूर्वमभवन्नित्यन्वयः ॥ २ ॥ अर्थवादेनामङ्गलत्वमुपपादयति[4]—स्वाध्यायेति ॥४॥ अपोऽविशज्जलमध्यं प्रविष्टः ॥ ६ ॥

---

[1] मथितुमिति शेषः—स.लि. [2] राजसीति पाठेन भाव्यमिति भाति ।
[3] अमृताद्युत्पत्तिकथनेनेत्यर्थः स्यात् ? [4] असष्टमिदम् ।

विलोक्य विघ्नेशगतिं तदेश्वरो दुरन्तवीर्योऽवितथाभिसन्धिः ।
कृत्वा वपुः काच्छपमद्भुतं महत् प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥

तमुत्थितं वीक्ष्य कुलाचलं पुनः समुद्यता[1] निर्मथितुं सुरासुराः ।
दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥

सुरासुरेन्द्रैर्भुजवीर्यवेपितं परिभ्रमन्तं गिरिमङ्ग पृष्ठतः ।
बिभ्रत् तदावर्तनमादिकच्छपो मेनेऽङ्गकण्डूयनमप्रमेयः ॥ १० ॥

तथाऽसुरानाविशदासुरेण[2] रूपेण तेषां बलवीर्यमीरयन् ।
उद्दीपयन् देवगणांश्च विष्णुर्देवेन[3] नागेन्द्रमबोधरूपः ॥ ११ ॥

उपर्यगेन्द्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ।
तस्थौ दिवि ब्रह्मभवेन्द्रमुख्यैरभिष्टुवद्भिः सुमनोभिवृष्टया ॥ १२ ॥

उपर्यधश्चात्मनि नेत्रगोत्रयोः परेण ते प्राविशता समेधिताः ।
ममन्थुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥

अहीन्द्रसाहस्रकरालदिङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ।
पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः[4] सरला[5] इवापतन् ॥ १४ ॥

देवांश्च तच्छ्वासशिखाहतप्रभान् धूम्राम्बरस्रग्वरकञ्चुकाननान् ।
समभ्यवर्षन् भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥

---

विघ्नेशेनाऽधोगतिर्यस्य स तथा तं गिरिम्[6] । काच्छपं कच्छपस्य विद्यमानम् ॥ ८ ॥
तस्य गिरेरावर्तनं परिभ्रमणं[7] कण्डूयनं मेन इत्यन्वयः ॥ १० ॥
तमोगुणप्रवर्तकं रूपं यस्य स अबोधरूपः । तिर्यग्रूप इति वा ॥ ११ ॥
आत्मनि[8] अन्तः ॥ १३ ॥ अहीन्द्रस्य साहस्रसंख्यां गतानि करालानि च दिश इव विस्तृतानि च मुखान्यहीन्द्रसाहस्रकरालदिङ्मुखानि, तेषां निश्वासा एवाग्नयः निःश्वासाग्नयस्तेषां धूमैराहतं वर्चो येषां ते तथा ॥ १४ ॥ अम्बरं वस्त्रम् । कञ्चुकः कूर्पासकम् ॥ १५–१६ ॥

---

[1] समुत्थिता—ग. [2] आसुरेण घोरतराकारेण—स. [3] दैवेन सत्त्वगुणप्रवर्तकेन—स.
[4] दाव—स.लि. । दवदावौ वनारण्यवह्नीत्यमरः ।
[5] सरलाः पूतिकाष्ठानि । शलभा इति पाठे पतङ्गा इत्यर्थः—स. । सरला द्रुमविशेषाः—शे.
[6] विघ्नेशगतिम् अपूजितगजवक्त्रव्यापारम्—स. [7] परिवर्तनं—ग. [8] आत्मनि मध्ये मनसि यत्ने वा—स.

मथ्यमानात् तदा सिन्धोर्देवासुरवरूथपैः ।
यदा सुधा न जायेत निर्ममन्थाजितः स्वयम् ॥ १६ ॥

मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्-
-मूर्ध्नि भ्राजद्विलुलितवनस्रग्धरो[1] रक्तनेत्रः ।
जैत्रैर्दोर्भिर्जगदभयदैर्दन्दशूकं गृहीत्वा
मथ्नन् मथ्ना प्रतिगिरिरिवाऽशोभताऽथो धृताद्रिः ॥ १७ ॥

निर्मथ्यमानादुदधेरभूद् विषं महोल्बणं [2]हालहलाह्वमग्रतः ।
संभ्रान्तमीनोन्मकराहिकच्छपोत्तिमिद्विपग्राहतिमिङ्गिलाकुलात् ॥ १८ ॥

तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यवीर्यम् ।
भीताः प्रजा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥

विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभियुतं मुनीनाम् ।
आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥

प्रजा ऊचुः —

देवदेव महादेव भूतात्मन् भूतभावन[3] ।
त्राहि नः शरणापन्नान् त्रैलोक्यदहनाद् विषात् ॥ २१ ॥

---

कनकपरिधिः कनककाञ्चीकः । कर्णविद्योतविद्युदिति लुप्तोपमेयमिति । कर्णशब्दप्रयोगेण कुण्डलद्वयमुपलक्ष्यते । तेनैवं योजनीयम् । विशिष्टो द्योतो ययोस्ते विद्योते, कर्णयोर्विद्योते विशिष्टदीप्तिनी, विद्युद्रूपे इव कुण्डले यस्य स तथा । मूर्ध्नि (भ्राजन्ती)शोभमाना विलुलिता विचलिता वनस्रग् वनमाला तां धरतीति भ्राजद्विलुलितवनस्रग्धरः । दन्दशूकं नागेन्द्रम् । मथ्ना मन्दराख्येन ॥ १७ ॥

उन्मकरा उन्मुखमकराः । उत्तिमयः उत्पतिततिमिमत्स्याः । संभ्रान्तैर्मीनादिभिः आकुलादब्धेः ॥ १८ ॥ दुद्रुवुः शीघ्रं जग्मुः ॥ १९ ॥

---

[1] भ्राजद्विलुलितकचस्रग्धरः—स । भ्राजन् विलुलितो यः कचः केशपाशः तत्र स्रजो मालाया धरतीति धरः । भ्राजद्विलुलितेति स्रग्विशेषणं वा । कस्मिन् ? मूर्ध्नि शिरसि । वनस्रग्धर इति पाठे गले माला चेन्मथनकाले बहुविलोला भवेदिति शिरोधारणमिति ज्ञेयम्—स.

[2] हालाहलाह्वम्—स.लि.शे. । हालाहलं हालहलं वदन्त्यपि हलाहलमिति द्विरूपकोश इति भानुः—स.

[3] भूतात्मन् प्रमथनाथ । (भूतभावनः) भूतानि स्वाधमानि भावयतीति स तथा । नैरवध्यं भगवद्विषयं ज्ञेयम् । एवमुत्तरत्रार्थोऽनुसन्धेयः—स.

त्वमेकः सर्वजगत ईश्वरो बन्धमोक्षयोः ।
तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥

गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान् विभो ।
धत्से यदा स्वदृग् भूमन् ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥

त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनम् ।
नानाशक्तिभिराभासस्त्वमात्मा जगदीश्वरः ॥ २४ ॥

त्वं शब्दयोनिर्जगदादिरात्मा प्राणेन्द्रियद्रव्यगुणस्वभावः ।
कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत् त्रिवृदामनन्ति ॥ २५ ॥

अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवाङ्घ्रिपङ्कजम् ।
कालो गतिस्तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशः ॥ २६ ॥

नाभिर्नभस्ते श्वसनं नभस्वान् सूर्यश्च चक्षूंषि जलं स्म रेतः ।
परावरात्मा द्रुहिणस्तवात्मा सोमो मनो द्यौर्भगवन् शिरस्ते ॥ २७ ॥

कुक्षिः समुद्रा गिरयोऽस्थिसङ्घा रोमाणि सर्वौषधिवीरुधस्ते ।
छन्दांसि साक्षात् तव सप्तधातवस्त्रयीमयात्मन् हृदयं स धर्मः ॥ २८ ॥

---

यदा सर्गादीन् धत्से तदा ब्रह्माद्यभिधां धत्से ॥ २३ ॥ भावनम् ।

सदसद्भावा देवासुरतिर्यगादयस्तान् भावयत्युत्पादयति वर्धयति वशीकरोति चेति सदसद्भावनम् । अनेन ब्रह्मशिवयोरन्तर्यामित्वेन स्थितमेव जगदुत्पत्त्यादि करोतीति निरणायि । नानाशक्तिभिः आभासः आ समन्ताद् भासो भासनं यस्य स तथा ॥ २४ ॥

शब्दो योनिर्ज्ञप्तिकारणं यस्य स तथा । प्राणादिसत्ताप्रदः, तत्तत्स्वभावप्रवर्तकः । क्रतुः सत्यकामः, सङ्कल्पप्रवर्तको वा । सत्यं सच्चिदानन्दरूपम् । ऋतमेकप्रकारम् । धारकत्वाद् धर्मः । यत् त्रिवृदकारादिवर्णत्रयात्मकं तदक्षरं प्रणवलक्षणं त्वयि त्वद्वाचकत्वेन प्रवर्तत इत्यामनन्ति, ओमित्येकाक्षरमित्यादि वेदान्ताः ॥ २५ ॥ अखिलदेवतात्मा[1] अखिलदेवताभ्यो हविर्भागदाता, हे लोकभव[2] जगत्कर्तः । अखिलदेवतान्तर्यामिणः ॥ २६ ॥ द्रुहिणस्तवात्मा सत्वलक्षणं चित्तम् ॥ २७–२८ ॥

---

[1] हविर्भागदातेति आत्मपदफलितोऽर्थः । अखिलदेवतानां हविर्भक्षयतीति अखिलदेवतात्मा । अद भक्षण इति धातुर्णिजन्तोऽयम्—गूढार्थविचारिणी । [2] हे लोकभव जगन्मङ्गल । कालस्ते गतिर्गमनम्—स.

मुखानि पञ्चोपनिषद्[1] तवेश यैस्त्रिंशदष्टोत्तरमन्त्रवर्गः ।
यत् तच्छिवाख्यं परमात्मतत्त्वं देव स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥
छाया त्वधर्मो मृड यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ।
साक्षान्मनुः शास्त्रकृतस्तवेक्षा छन्दोमयो देवऋषिः पुराणः ॥ ३० ॥
न ते गिरित्राखिललोकपाल विरिञ्चवैरिञ्च[2]सुरेन्द्रगम्यम् ।
ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद् ब्रह्म निरस्तभेदम् ॥ ३१ ॥
कामाध्वरत्रिपुरकालहराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत् ते ।

---

ईशानः सर्वविद्यानामित्यादिपञ्चमन्त्राः । यैर्मन्त्रैस्त्रिंशदष्टोत्तरमन्त्रवर्गः अष्टत्रिंशत्कलालक्षणो मन्त्रसमूहः, उत्पन्न इति शेषः । यच्छिवाख्यं तद्वस्तु तेऽवस्थितिरवस्थानम्, तदनुग्रहादिति शेषः ॥ २९ ॥

त्व

यैः सत्वादिभिः सर्गो भवति तानि सत्वादीनि तव नेत्रत्रयम् । साक्षान्मनुः शास्त्रकृतस्तवेक्षा ततो जातः । देवर्षिस्तव छन्दोमय इच्छातो जातः[3] ॥ ३० ॥ तेतव परंज्योतिः रूपं तद्विरिञ्चादिभिर्गम्यं न, सर्वात्मनेति शेषः । निरस्तभेदं 'नेह नानास्ति किञ्चन' इति श्रुतेः ॥ ३१ ॥

कामाद्यनेकभूतहिंसकस्य क्षपयतः संहरतस्तव स्तुतये तत् जगत् न शक्तम् । कुत इति तत्राह यदिति । हे ईश प्रलयकाले तव स्वस्य नेत्रस्य नेत्रवह्नेः स्फुलिङ्गशिखया भसितं भक्षितमिदमात्मकृतं

---

[1] उपनिषत् उपनिषदः । समुदायविवक्षयैकवचनम्—गू.

[2] श्रीविजयध्वजतीर्थकृतपदरत्नावल्याः गूढार्थविचारिण्याख्यटिप्पण्याम् एतच्छ्लोकव्याख्यावसरे 'विरिञ्चस्यायं वैरिञ्चो रुद्रः' इति वैरिञ्चशब्दो व्याख्यातः । तस्मात् विरिञ्चवैरिञ्चसुरेन्द्रगम्यमिति पाठो विजयध्वजतीर्थसम्मत इति संभाव्यते । किन्तु विरिञ्चवैकुण्ठसुरेन्द्रगम्यमिति पाठ एव बहुकोशेभ्यः प्रथिततरः । एतत्पाठानुरोधेन तु शिवमहिमा विष्ण्वगम्य इति श्लोकाभिप्रायो भवति । स च भागवतविरुद्धः । शिवापेक्षया विष्णोराधिक्यप्रतिपादकवाक्यानामत्रैव शतशः सत्वात् । यद्यपि अन्तर्यामिविवक्षयाऽपि स्तुतयः प्रवर्तन्ते । यथोक्तमाचार्यैः 'जाने त्वामीश विश्वस्य .... .... (भागवत ४-६-४२) इति श्लोकावसरे—'क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गताः' इति ब्राह्मे इति । तथाप्यन्तर्यामिविवक्षाप्यत्र न युज्यते । न हि शिवान्तर्यामिणो विष्णोर्महिमा विष्णोरेवागम्यः । अतः प्रयासेन व्याख्यातोऽयं श्लोकः सर्वैः । सत्यधर्मतीर्थास्तु वैकुण्ठशब्दस्य मुक्त इत्यर्थं स्वीकृत्य काकाक्षिन्यायेन विरिञ्चस्य सुरेन्द्रस्य च विशेषणमभिप्रयन्ति । लिङ्गेरीआचार्याः शुभ्राख्यद्विजाद् विकुण्ठायां जातः सुरेन्द्र एव वैकुण्ठ इति मन्वते । छलारी आचार्यास्तु वैकुण्ठशब्दस्य वैकुण्ठलोकस्थितेति लक्षणां स्वीकुर्वते । विरिञ्च वैकुण्ठेति शिवान्तर्यामिणः सम्बुद्धिरिति सत्याभिनवतीर्थाः । अतो वैकुण्ठशब्दस्य प्रक्षिप्तत्वं संभाव्यते ।

'मूलकोशे प्राचीने पद्यमेवेदं न पठ्यते । तेन प्रक्षिप्तमित्येव सुवचमिति भाति' इति गोविन्दाचार्याः ।

3 [3] पुराणो देवऋषिर्गायत्र्याद्यभिमानी छन्दोमय इच्छाजातः—स. । देवर्षिर्नारदस्ते छन्दोमय इच्छानुसारी–लि. पुराणोऽपौरुषेयः छन्दोमयो गायत्र्यादिच्छन्दोरूपो ऋषिः वेदशास्त्रकर्तुस्तवेक्षा ईक्षणेनाभिव्यक्त इति—शे.

यत् त्वन्तकाल इदमात्मकृतं स्वनेत्र-
वह्निस्फुलिङ्गशिखया भसितं तवेश ॥ ३२ ॥

ये त्वात्मरामगुरुभिर्हृदि चिन्तिताङ्घ्रि-
द्वन्द्वं चरन्तमुमया तपसेऽभितप्तम् ।
कत्थन्त उग्रवपुषं निरतं श्मशाने
ते भूतभूतिमविदस्तव हीनलज्जाः ॥ ३३ ॥

तत् तस्य ते सदसतोः परतः परस्य
नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः ।
ब्रह्मादयः किमुत संस्तवने वयं तु
तत्सर्गसर्गविषया अपि भक्तिमात्रम् ॥ ३४ ॥

एतत् परं प्रपश्यामो न परं ते महेश्वर ।
मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥

श्रीशुक उवाच —
तद् वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ।
सर्वभूतसुहृद् देव इदमाह सतीं प्रियाम् ॥ ३६ ॥

---

जगदिति यत् तस्मादित्यन्वयः। अत्र हरेति पदोपादानादियं स्तुतिः श्रीहरिविषयेति ज्ञायते । 'सर्वात्मा प्रीयते हरिः' इति वक्ष्यमाणवाक्याच्च । 'तत्र तत्र स्तुतिपदैर्हरिरेव तु तद्गतः । स्तूयतेऽतो युक्तमेव गुणाधिक्यवचोऽपि तु' इति वचनाच्च ॥ ३२ ॥

ये त्वामुमयोमाया अर्थे तपसे चरन्तमत एवाभितप्तम्, श्मशाने निरतमत एवोग्रवपुषं घोराकारं कत्थन्ते भाषन्ते ते तव भूतभूतिं पूर्णैश्वर्यम् अविदो न जानन्तोऽत एव निर्लज्जाः ॥ ३३ ॥

यतस्तव चर्या दुर्बोधा तत् तस्मात्सदसतोः परतः प्रकृतेः परस्य तस्य भूम्नः ते स्वरूपगमने ब्रह्मादयोऽन्तर्यामिविषये विरिञ्च्यादयः, अन्यत्र सनकादयो, नाञ्जः प्रभवन्ति । वयं ब्रह्मपुत्राः स्तवने न प्रभवाम इति किमुत ? वयं न तन्निकटवर्तिनोपीत्याह— तत्सर्गेति । तस्य ब्रह्मणः सृष्टिप्रवाहे निपतिताः । तर्हि क्रियमाणा केयमिति तत्राह — भक्तिमात्रमिति । अस्मत्स्तुतिर्भक्तिप्रकटनमात्रमित्यर्थः। तुशब्दोऽर्चनाद्योतकः ॥ ३४ ॥

अव्यक्तकर्मणस्ते व्यक्तिर्लोकस्य मृडनाय पालनायेत्येतत् परं केवलं प्रपश्यामः, परमन्यत् तव

शिव उवाच —

अहो बत भवान्येतत् प्रजानां पश्य वैशसम् ।
क्षीरोदमथनोद्भूतात् कालकूटादुपस्थितम् ॥ ३७ ॥

आसां प्राणपरीप्सूनां विधेयमभयं हि मे ।
एतावान् हि प्रभोरर्थो यद् दीनपरिपालनम् ॥ ३८ ॥

प्राणैः स्वैः प्राणिनः पान्ति साधवः क्षणभङ्गुरैः ।
बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥

पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ।
प्रीते हरौ भगवति प्रीयेऽहं सचराचरः
तस्मादिदं गरं भुञ्जे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥

श्रीशुक उवाच —

एवमामन्त्र्य भगवान् भवानीं विश्वभावनः ।
तद् विषं जग्धुमारेमे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥

ततः करतलीकृत्य व्यापि हालाहलं विषम् ।
अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥

तस्यापि दर्शयामास स्ववीर्यं गलकल्मषः ।
यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥

तप्यन्ते लोकतापेन साधवः प्रायशो जनाः ।
परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥

---

प्रयोजनं न प्रपश्याम इत्यन्वयः । हे महेश्वर, परं तवैतद् रूपं पश्यामः, तवान्तर्यामिरूपं परं हरिं न पश्यामः । एतद्रूपप्रयोजनमाह—मृडनायेति । व्यक्तित्रिनेत्रादिलक्षणाकृतिः ॥ ३५ ॥ वैशसं नाशलक्षणम् ॥ ३७ ॥ पान्ति रक्षन्ति ॥ ३९ ॥ कृपयतः कृपां कुर्वतः । गरं विषम् ॥ ४० ॥

भवान्यास्तदात्मार्धत्वाद् विषभोजनं किं न निवारितमिति तत्राह—प्रभावज्ञेति ॥ ४१ ॥

गले कण्ठे कल्मषं यस्य स तथा, तस्य विषस्य स्ववीर्यं स्वरूपभूतवीर्यम् । किं तद्वीर्यमिति तत्राह—यदिति । साधोर्देवस्य भूषणमभून्न दूषणमित्यर्थः ॥ ४३ ॥

लोकोपकारार्थमेव विषपानमित्याशयेनाह—तप्यन्त इति । अनेन किमस्य प्रयोजनमिति तत्राह—परमेति ॥ ४४ ॥

निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः ।
प्रजा दाक्षायणी ब्रह्मा वैकुण्ठश्च शशंसिरे ॥ ४५ ॥
प्रस्कन्नं पिबतः पाणेर्यत् किञ्चिज्जगृहुः स्म तत् ।
वृश्चिकाहिविषौषध्यो दन्दशूकाश्च ये परे ॥ ४६ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे सप्तमोऽध्यायः ।

॥ अथ अष्टमोऽध्यायः ॥

श्रीशुक उवाच —

पीते गरे वृषाङ्केण प्रीतास्तेऽमरदानवाः ।
ममन्थुस्तरसा सिन्धुं हविर्धानी[1] ततोऽभवत् ॥ १ ॥
तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ।
यज्ञस्य देवपानस्य[2] मेध्याय हविषे नृप ॥ २ ॥
तत उच्चैःश्रवा नाम हयोऽभूच्चन्द्रपाण्डुरः ।
तस्मिन् बलिः स्पृहां चक्रे नेन्द्र ईश्वरशिक्षया ॥ ३ ॥
तत ऐरावतो नाम वारणेन्द्रो विनिर्गतः ।
दन्तैश्चतुर्भिः श्वेताभो हरिस्तं तु समग्रहीत् ॥ ४ ॥

---

शशंसिरे इत्यनेन रुद्रस्य यशोऽर्थं हरिणा विषं न पीतमिति ज्ञायते । 'रुद्रस्य यशसोऽर्थाय स्वयं विष्णुर्विषं विभुः[3] । न सञ्जह्रे समर्थोऽपि वायुं चोचे प्रशान्तये[4] ' इति वचनाच्च ॥ ४५ ॥

विषौषध्यः लाङ्गलीप्रभृतयः ॥ ४६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य सप्तमोऽध्यायः ।

॥ अथ अष्टमोऽध्यायः ॥

किमर्थं जगृहुरिति तत्राह—यज्ञस्येति । यज्ञस्य हविषे देवानां सोमपानस्य च मेध्याय । देवानां सोमपानं यस्मिंस्तथा तस्येति[5] ॥ २ ॥

---

[1] हविर्धानी कामधेनुः—स. शे.  [2] सोमपानस्य—स.  [3] प्रभुः—ह्.

[4] अत्र वायुं चोचे प्रशान्तय इति तात्पर्येण वायुदत्तमेव किञ्चिद् विषं हरेण पीतमिति ज्ञेयम्—गू.

[5] देवानां पानं यस्मिंस्तस्य यज्ञस्य मेध्याय पवित्राय हविषे हविरर्थमित्यर्थः ।

ततोऽभवत् पारिजातः सुरलोकविभूषणः ।
पूरयत्यर्थिनो योऽर्थैः शश्वद् भुवि यथा भवान् ॥ ५ ॥
ततश्चाप्सरसो जाता निष्ककण्ठ्यः सुवाससः ।
रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ६ ॥
ततश्चाऽऽविरभूत् साक्षाच्छ्रीरमा भगवत्प्रिया ।
रञ्जयन्ती दिशः कान्त्या विद्युत्सौदामनी[1] यथा ॥ ७ ॥
तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ।
रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः[2] ॥ ८ ॥
तस्याश्चासनमानिन्ये महेन्द्रो महदद्भुतम् ।
मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुम्भैर्जलं शुचि ॥ ९ ॥
अभिषेचनिका भूमिराहरत् सकलौषधीः ।
गावः पञ्चपवित्राणि वसन्तो मधु माधवम् ॥ १० ॥
ऋषयः कल्पयाञ्चक्रुरभिषेकं यथाविधि ।
जगुर्भद्राणि गन्धर्वा नार्यश्च ननृतुर्जगुः ॥ ११ ॥
मेघा मृदङ्गपणवमुरुजानकगोमुखान् ।
व्यनादयन् शङ्खवेणुवीणातुमुलनिःस्वनान् ॥ १२ ॥
ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ।
दिगिभाः पूर्णकलशैः सूक्तवाकैर्द्विजेरितैः ॥ १३ ॥

---

सुरलोकं विभूषयतीति सुरलोकविभूषणः ॥ ५ ॥ निष्कमाभरणविशेषः । रमण्यो रमणीयाः ॥ ६ ॥ रुच्या विशिष्टं द्योतयतीति विद्युत् सा च सौदामनी[3] ॥ ७ ॥ रूपादिमहिम्ना ॥ ८ ॥ अभिषेचनिका अभिषेकयोग्यसाधनानि । पञ्चपवित्राणि गोमयादीनि । माधवं स्वकालसम्भवम् ॥ १० ॥ शङ्खादीनां तुमुलः निःस्वनो येषु ते तथा ॥ ११ ॥

---

नी [1] सौदामिनि—ग. [2] मूले तत्तत्सात्त्विकादिस्वभावभेदेन स्पृहाभेदो ज्ञेयः । अयं मूलार्थः—सुरास्तस्यां भगवत्प्रीतिसाधनरमाप्रीत्यां स्पृहां चक्रुः । तमोगा असुरास्तस्यां रमायामेव स्पृहां चक्रुः । मानवास्तु तस्यां रमाप्रसादसाध्यसंपदि स्पृहां चक्रुः । सुरविषये अक्षिप्तचेतस इति, असुरविषये आक्षिप्तचेतस इति, मानवविषये हिरण्यवर्णां हरिणीमित्यादिश्रुत्युक्तरूपादिश्रवणेन क्षिप्तचेतस इति पदच्छेदः—गू.

[3] अत्र साक्षाच्छ्रीरित्यनेन स्वर्गाभिमानिनी श्रीर्निवारिता । आविरभूदित्यनेन लक्ष्म्या ज्ञानानन्दात्मकदेहतया नारायणवत् प्रादुर्भाव एव, न तु देहोत्पत्तिरित्यसूचि—लि.

समुद्रः पीतकौशेयवाससी समुपाहरत् ।
वरुणः स्रजं वैजयन्तीं मधुना मत्तषट्पदाम् ॥ १४ ॥

भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ।
हारं सरस्वती पद्ममजो नागश्च कुण्डले ॥ १५ ॥

ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ।
चचाल वक्त्रं सुकपोलकुण्डलं सव्रीडहासं दधती सुशोभनम् ॥

स्तनद्वयं चातिकृशोदरी समं निरन्तरं चन्दनकुङ्कुमोक्षितम् ।
ततस्ततो नूपुरवल्गुसिञ्जितैर्विसर्पती हेमलतेव सा बभौ ॥ १७ ॥

विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ।
गन्धर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविन्दत ॥ १८ ॥

नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित् तच्च न सङ्गवर्जितम् ।
कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥

---

वक्त्रं समं स्तनद्वयं च दधती ॥ १६-१७ ॥ आत्मनः स्वस्य निर्दोषं गन्धर्वादिषु पदं स्थानं पतिलक्षणं स्थानं नान्वविन्दतेत्यन्वयः ॥ १८ ॥

ननु पदमनुपलभ्य किं पुंश्चली जातेत्याशङ्क्यां श्लोकद्वयेन परिहरति — नूनमिति । यस्य तपोऽस्ति तस्य मन्युनिर्जयो नास्ति नूनं निश्चये । 'नूनं तर्केऽर्थनिश्चये' इत्यभिधानात् । इति तर्कयामि (इति) वा । 'विधिनोक्तेन मार्गेण कृच्छ्रचान्द्रायणादिभिः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्' इति । अनेन ऋषितया नारदादयः प्रतिषिद्धाः[1] । क्वचित् पुंसि ज्ञानमस्ति तस्य ज्ञानं सङ्ग वर्जितं फलस्नेह-रहितं न स्यात् । नूनमित्यत्राप्यनुकृष्यते । अनेन बृहस्पत्यादयो निषिद्धाः[2] । कश्चिद् ब्रह्मा तत्र महा-नस्ति तस्य ब्रह्मणः कामनिर्जयो नास्ति । 'प्रजापतिः स्वां दुहितरमभ्यध्यायत्[3]' इति श्रुतेः । 'कस्मै देवाय हविषा विधेम' इति च । यः परतो व्यपाश्रयः, परमन्यमाश्रयत इति स ईश्वरः किम् ? नैव । अनेन रुद्रादिर्निवारितः ॥ १९ ॥

---

[1] अनेनाम्बरीषादिभ्यः कुप्यन्तो दुर्वासादयः प्रतिषिद्धाः—स.

[2] बृहस्पत्यादौ ज्ञानं वर्तते । तच्च सङ्गवर्जितम् । स्वभर्तृभार्यां गर्भिणीं बलादयच्छदिति (हेतोः)—स.

[3] अभ्यधावत्—स.

धर्मः क्वचित् तत्र न भूतसौहृदं त्यागः क्वचित् तत्र न मुक्तिकारणम् ।
वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः ॥२०॥

क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित् तदप्यस्ति न वेद्यमायुषः ।
यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्चन कांक्षते हि माम् ॥

श्रीशुक उवाच —
एवं विमृश्याव्यभिचारिसद्गुणं परं निजैकाश्रयिसद्गुणाश्रयम् ।
वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् ॥ २२ ॥

---

तर्हि दण्डपाणिः स्यादिति तत्राह — धर्म इति । क्वचित् संयमिन्यां धर्मोऽस्ति । तस्य धर्मस्य भूतेषु दया नास्ति, निरनुक्रोशाधिकारप्रवृत्तत्वात् । क्वचित् कस्मिंश्चित् पुंसि पुण्यलक्षणो धर्मोऽस्ति, तस्य प्राणिषु सौहृदं दुर्लभमिति सामान्यनिषेधो वा । तत्र त्यजनं च अर्थिभ्यो देवतादिभ्यो वा । न्यायार्जितधनादिदानं त्यागः । तच्च मुक्तिकारणं न भवति, भगवदर्पणबुद्ध्या नानुष्ठितत्वात् । हानोपादानाद्विलक्षणत्यागाधिकारित्वाद् वायुरपि मुक्तिकारणं न । 'मोक्षदस्तु जनार्दनः' इति वचनाद्वा । अनेन वायुर्लक्ष्यते[1] । क्वचित् पुंसो वीर्यं तापादिदुःखनिवारकमस्ति तदजवेगनिष्कृतं न, कालचक्रविजयि न भवति[2] । अनेन चन्द्रो निवारितः । 'क्षीणः क्षीणः प्रविशति' इति वचनात् । गुणसङ्गवर्जितो द्वितीयो न हि, हरिं विनेति शेषः ॥ २० ॥

क्वचिद् वस्तुनि चिरायुरस्ति चेत् तस्य शीलमङ्गलं न हि[3] । चिरजीविवत्[4] । क्वचिद् वस्तुनि[5] तच्छीलमप्यस्ति तर्ह्यायुषो न वेद्यम् आयुर्ज्ञानं दुःशकमित्यर्थः । कुत्र च[6] क्वापि यत्र यस्मिन् पुंसि उभयमायुः शीलं च सोऽपि पुमानमङ्गलः गर्वितः । सुमङ्गलः कश्चन लोकविलक्षणो मुक्तजातीयो मां काङ्क्षते यदि, सोऽपि न भवतीति शेषः[7] ॥ २१ ॥

एवमिन्द्रादीनपि विमृश्य दोषानुक्त्वा रमा मुकुन्दं परं पदं वव्र इत्यन्वयः । अव्यभिचारिणो नातिव्याप्ताः सन्तः अव्याप्त्यसम्भवाख्यदोषरहिता गुणा लक्षणानि यस्य स तथा तम् । निजाश्र-

---

[1] असमग्रमिदम् । .... क्वचिद् धनद त्यागो वित्तावितरणमात्रमस्ति । तत् सत्पात्रेभ्यो नेति मुक्तिकारणं न—स.

[2] क्वचित् कार्तवीर्यादिः पुंसो वीर्यमस्ति । (तदपि) अजवेगस्य कालचक्रवीर्यस्य प्रतीकाररूपं न—स.

[3] दीर्घमायुरस्त्यश्वत्थाग्नि । शीलेन स्वाचारेण मङ्गलं न हि । पूतिगन्धत्वादिनाऽमङ्गलत्वादिति भावः—स.

[4] 'चिरजीवी चैकदृष्टिर्मौकुलिः पिकवर्धनः' इति कोशात् काक इवेति भावः । [5] मनुष्योत्तमादौ—स.

[6] यत्रोभयं शीलमायुश्च मार्कण्डेयादौ सोऽप्यमङ्गलः, बद्धत्वात्—गो.

[7] मम पतिर्न भवति, आकांक्षावत्वेनापूर्णत्वादिति भावः ।

तस्यांसदेश उशतीं नवकञ्जमालां
माघ्रान्मधुव्रतवरूथगिरोपघुष्टाम् ।
तस्थौ निवीय निकटे तदुरः स्वधाम
सव्रीडहासविकसन्नयनेन भीता ॥ २३ ॥

स्वस्याः स्त्रियस्त्रिजगतो जनको जनन्या ।
वक्षो निवासमकरोत् परमं विभूतेः ।
श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन
यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २४ ॥

शङ्खतूर्यमृदङ्गानां वादित्राणां पृथक् स्वनः ।
देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २५ ॥

---

काश्रयिणश्चैकस्मिन्नेव वर्तमानाश्च, सन्तश्च, तुपश्चादिगुणा येषां ते तथा, तेषां पुंसामाश्रयम् । निज-त्वादेकाश्रयित्वम्[1] । 'निजमात्मीयनित्ययोः' इति तत्तत्सत्ताप्रदत्वेन तदाश्रयत्वं युक्तम् । भक्त्यादि-सर्वगुणैरपेक्षितत्वं नत्वन्यथा । सौशील्यादिगुणैर्वा । कश्चन काङ्क्षत इत्यस्यापवादमाह—**निरपेक्ष-मिति** । तर्हि न कश्चन तस्मिन्नादरं करोतीति तत्राह—**ईप्सितमिति** । 'एष ब्रह्माऽतिवृद्धस्तपति दिनपतिश्चञ्चलो मातरिश्वा दिग्वासा नीलकण्ठस्त्रिदशपतिरसौ गर्वितः क्षीयतेऽब्जः । इत्थं देव्या विचिन्त्य भ्रमरकुलकलागीतशब्दप्रफुल्ला दत्ता माला मुरारेः सुरतरुकुसुमाऽलङ्कृता पातु युष्मान्' इति पुराणज्ञा व्याचक्षते[2] ॥ २२ ॥

तस्य हरेरंसे मालां निवीय निधाय तस्थावित्यन्वयः । उशतीमिष्टसाधनीभूतां कान्तां वा । व्रीडया सह वर्तमानः सव्रीडः स चासौ हासश्च सव्रीडहासः । तेन विकसितनयनेन स्वस्या धाम तस्य हरेः उरः, पश्यन्तीति शेषः । भीता शरीरकम्पोपेता । अयं च शृङ्गारविशेषः । 'अनाद्यनन्तकालं विष्णु-मेवाश्रिता रमा । अन्येषां ज्ञापनार्थाय दोषानुक्त्वेतरान् जहौ' इति वचनाद् अधुना हरेर्लक्ष्मीप्राप्तिः, न पूर्वमिति शङ्का परिहर्तव्या । स्वस्याः स्त्रियः इत्युत्तरश्लोकविशेषणसामर्थ्याच्च ॥ २३ ॥

ऐधयत अवर्धयत् ॥ २४ ॥ 'काहले गोमुखे तूर्यं दुन्दुभौ च प्रचक्षते' इति च ॥ २५ ॥

---

[1] अस्पष्टार्थमेतदादिवाक्यत्रयम् ।

[2] एवं गुणान् दोषांश्चेतरेषु विमृश्य तांस्त्यक्त्वा रमा अव्यभिचारिणः क्वचिच्चाव्यभिचीर्णाः सन्तो गुणा यस्य तम् । निजः स्वयम् । तेनैवैको (स एवैको ?) मुख्यश्चासावाश्रयश्च । स एषामस्ति ते निजैकाश्रयिणस्तेषां सन्तो गुणास्तेषां तत्तद्योग्यतानुसारेणाश्रयत्वम् । सर्वगुणैः दोषासमानाधिकरणैः अपेक्षितम्, वस्त्विति शेषः । गुणा

ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् ।
ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः ॥ २६ ॥

श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ।
शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥ २७ ॥

निस्सत्वा लोलुपा राजन् निरुद्योगा गतत्रपाः ।
यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २८ ॥

अथासीद् वारुणी देवी कन्या कमललोचना ।
असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ २९ ॥

अथोदधेर्मथ्यमानात् काश्यपैरमृतार्थिभिः ।
उदतिष्ठन् महाराज पुरुषः परमाद्भुतः ॥ ३० ॥

दीर्घपीवरदोर्दण्डः कम्बुग्रीवोऽरुणेक्षणः ।
श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३१ ॥

पीतवासा महोरस्कः सुमृष्टमणिकुण्डलः ।
नीलकुञ्चितकेशान्तः सुभगः सिंहविक्रमः ॥ ३२ ॥

अमृतस्य पूर्णकलशं बिभ्रद् वलयभूषितः ।
स वै भगवतः साक्षाद् विष्णोरंशांशसम्भवः ॥ ३३ ॥

धन्वन्तरिरिति ख्यातो आयुर्वेददृगिज्यभाक् ।
तमालोक्यासुराः सर्वे कलशं चामृताहृतम् ॥ ३४ ॥

---

तल्लिङ्गैः श्रीलक्षणोपेतैः श्रीसूक्तैरित्यर्थः ॥ २६ ॥ वारुणी सुराभिमानिनी देवता च ॥ २९ ॥ काश्यपैर्देवासुरैः परममुत्तमम् अद्भुतमाश्चर्यमाहात्म्यं[1] यस्य स तथा ॥ ३० ॥

कम्बुग्रीवः रेखात्रयाङ्कितगलः ॥ ३१ ॥ नीलकुञ्चितकेशान्तः नीलकुञ्चितकेशस्वभावः । 'अन्तस्त्ववसिते मृत्यौ स्वभावे परमात्मनि' इति ॥३२॥ अमृतस्येति षष्ठी तृतीयार्थे, अमृतेन पूर्णं कलशमित्यर्थः ॥ ३३ ॥ इज्यभाक् यज्ञभागभोक्ता । अमृतलक्षणमाहृतमाहारो यस्मिन् स तथा ।

---

एव तमपेक्षन्त इति भावः । मुकुन्दं पदं तद्रूपं वव्रे । ईप्सितं स्वकांक्षितम् । सोऽपि स्वकांक्षश्चेदपूर्णः स्यादित्यत आह–निरपेक्षमिति । रमाया रतिपात्रदेहादेः—स. [1] आश्चर्यलक्षणं माहात्म्यम्—गू.

लिप्सन्तः सर्ववस्तूनि कलशं तरसाऽहरन् ।
नीयमानेऽसुरैस्तस्मिन् कलशेऽमृतभाजने ॥ ३५ ॥

विषण्णमनसो देवा हरिं शरणमाययुः ।
इति तद्दैन्यमालोक्य भगवान् भृत्यकामभृत् ।
मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३६ ॥

मिथः कलिरभूत् तेषां तदर्थे तर्षचेतसाम् ।
अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३७ ॥

देवाः स्वभागमर्हन्ति ये तुल्यायासहेतवः ।
सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३८ ॥

इति स्वान् प्रत्यषेधन् वै दैतेया जातमत्सराः ।
दुर्बलाः प्रबलान् राजन् गृहीतकलशान् मुहुः ॥ ३९ ॥

एतस्मिन्नन्तरे विष्णुः सर्वोपायविदीश्वरः ।
योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४० ॥

प्रेक्षणीयोत्पलश्यामं सर्वावयवसुन्दरम् ।
समानकर्णाभरणं सुकपोलोन्नसाननम् ॥ ४१ ॥

नवयौवननिष्पन्दत्स्तनभारकृशोदरम् ।
मुखामोदानुरक्तालिझङ्कारोद्विग्नलोचनम् ॥ ४२ ॥

बिभ्रत् स्वकेशभारेण मालामुत्फुल्लमल्लिकाम् ।
सुग्रीवकण्ठाभरणं सुभुजाङ्गदभूषणम् ॥ ४३ ॥

---

'तेषां सत्याचालनार्थं हरिर्धन्वन्तरिर्विभुः । समर्थोऽप्यसुराणां च स्वहस्तादमुचत् सुधाम्' इति वचनात् (हरीच्छया) दैत्यैर्हरिहस्तादमृतं हृतं न त्वशक्तत्वादिति दर्शनरहस्यम् ॥ ३४–३५ ॥

तर्षचेतसां तृष्णायुक्तमनसाम् ॥ ३७ ॥ यथा सत्रयागे सर्वेषां समानं फलम् ॥ ३८ ॥

सुकपोलेनोन्नतनासिकया युक्तमाननं यस्य तत् तथा ॥४१॥ नवयौवनेन निष्पन्दतोर्निश्चलतोः स्तनयोर्भारेण कृशं तनुतरम् उदरं यस्य तत् तथा । मुखपरिमलेनानुरक्तानां निरतानाम् अलीनां भृङ्गाणां हुङ्कारेण झङ्कारेणोद्विग्ने भ्रान्ते लोचने यस्य तत् तथा । सुष्ठु शोभना ग्रीवा यस्य तत् तथा । शोभनं कण्ठाभरणं यस्य तत् तथा । शोभनैर्भुजाङ्गदैर्विभूषितम् ॥ ४२–४३ ॥

विरजाम्बरसंवीतं चित्रं वध्वीयशोभया[1] ।
काञ्च्या प्रविलसद् वल्गुस्फुटच्चरणनूपुरम् ॥ ४४ ॥
सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ।
दैत्ययूथपचेतस्सु काममुद्दीपयन् मुहुः ॥ ४५ ॥
तेऽन्योन्यतः सुधापात्रं हरन्तस्त्यक्तसौहृदाः ।
क्षिपन्तो दस्युधर्माण[2] आयान्तीं ददृशुः स्त्रियम् ॥ ४६ ॥
अहो रूपमहो धाम अहो अस्या नवं वयः ।
इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः ॥ ४७ ॥
का त्वं कञ्जपलाशाक्षि कुतो वा किं चिकीर्षसि ।
कस्यासि वद वामोरु मथ्नतीव मनांसि नः ॥ ४८ ॥
न वयं त्वाऽमरैर्दैत्यैः सिद्धगन्धर्वचारणैः ।
स्पृष्टपूर्वां तु जानीमो लोकेशैश्च कुतो नृभिः ॥ ४९ ॥
नूनं त्वं विधिना सुभ्रु प्रेषितासि शरीरिणाम् ।
सर्वेन्द्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥ ५० ॥
सा त्वं नः स्पर्धमानानामेकवस्तुनि भामिनि ।
ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ५१ ॥
वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ।
विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ५२ ॥

---

वधूनां विद्यमाना वध्वीया तया शोभया चित्रम् । काञ्च्या च चित्रम् । प्रविलसच्छोभमानं वा । यथा वल्गु कर्णरमणीयं तथा स्फुटन्ती शब्दं कुर्वती चरणनूपुरे यस्य तत् तथा ॥ ४४ ॥

सव्रीडस्मितेन विक्षिप्तैर्भ्रूविलासैर्युक्तैरवलोकनैः उद्दीपयन् ज्वलयन् ॥ ४५ ॥

त्वा त्वाम् ॥ ४९ ॥ विधिना विरिञ्चेन ॥ ५० ॥

शं विधत्स्व[3] शंविधानं मनःसन्तोषकरणम् ॥ ५१ ॥

---

[1] विरजाम्बरसंवीतनितम्बवद्वीपशोभया—शे. [2] 'धर्मादनिच् केवलात्' इति सूत्रेण दस्युधर्माण इति रूपम् । दस्योश्चोरस्य धर्मो येषां ते दस्युधर्माणः—गू. । दस्युधर्मेण—स.लि.शे.

[3] शं विधत्स्व यथाभागं विभजनेन सुखं कुरु—स.

इत्युपामन्त्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ।
प्रहस्य रुचिरापाङ्गैर्निरीक्षन्निदमब्रवीत् ॥ ५३ ॥

श्रीभगवानुवाच —

कथं कश्यपदायादाः पुंश्चल्यां मयि सङ्गताः ।
विश्वासं पण्डिता जातु कामिनीषु न यान्ति हि ॥ ५४ ॥
सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः ।
सख्यान्याहुरनित्यानि नूत्नंनूत्नं[1] विचिन्वताम् ॥ ५५ ॥

श्रीशुक उवाच —

इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः ।
जहसुर्भावगम्भीरं ददुश्चामृतभाजनम् ॥ ५६ ॥

ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ।
यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥

इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुङ्गवाः ।
अप्रमाणविदस्तस्यास्तत् तथेत्यन्वमंसत ॥ ५८ ॥

अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ।
दत्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥ ५९ ॥

यथोपजोषं वासांसि परिधायाहतानि ते ।
कुशेषु प्राविशन् सर्वे प्रागग्रेष्वभिभूषिताः ॥ ६० ॥
प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ।
धूपामोदितशालायां जुष्टायां माल्यधूपकैः ॥ ६१ ॥

तस्यां नरेन्द्रकलभोरुलसद्दुकूलश्रोणीतटालसगतिर्मदविह्वलाक्षी ।
सा कूजती कनकनूपुरसिञ्जितेन कुम्भस्तनी कलशपाणिरथाविवेश ॥

---

मायया इच्छया अङ्गीकृतस्त्रीदेहः ॥ ५३ ॥ पुंश्चल्यां पुंश्चलीशीलगुणवत्याम् ॥ ५४ ॥ नूत्नं नूतनम् ॥ ५५ ॥ क्ष्वेलितैः छलमिश्रवचनैः ॥ ५६ ॥ अभ्युपेतम् अङ्गीकृतम् ॥ ५७ ॥ प्रमाणमियत्ता ॥ ५८ ॥ कलभो गजपोतः, तत्करवच्छोभमानयोरूर्वोः लसता दुकूलेन युतं श्रोणीतटं

---

[1] नूत्नंनूत्नमित्येकं पदम् । वीप्सायां द्विर्भावः—गू.

तां श्रीमुखीं कनककुण्डलचारुकर्ण-
नासाकपोलवदनां परदेवताख्याम् ।
संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन
देवासुरा विगलितस्तनपट्टिकान्ताम्[1] ॥ ६३ ॥

असुराणां सुधादानं सर्पाणामिव दुर्नयम् ।
मत्वा जातिनृशंसानां न तान् व्यभजदच्युतः ॥ ६४ ॥

कल्पयित्वा पृथक् पङ्क्तीरुभयेषां जगत्पतिः ।
तांश्चोपवेशयामास स्वासु स्वासु[2] च पङ्क्तिषु ॥ ६५ ॥

दैत्यान् गृहीतकलशो वञ्चयन्नुपसञ्चरैः ।
दूरस्थान् पाययामास जरामृत्युहरं सुरान्[3] ॥ ६६ ॥

ते पालयन्तः समयमसुराः स्वकृतं नृप ।
तूष्णीमासन् कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ ६७ ॥

तस्यां कृतातिप्रणयाः प्रणयापायकातराः ।
बहुमानेन चाबद्धा नोचुः किञ्चन विप्रियम् ॥ ६८ ॥

---

यस्याः सा । कलभो वंशांकुरस्तद्वद् वर्तमानयोर्वा । अलसगतिः असला मन्दा गतिर्यस्याः सा तथा । सिञ्जितेन शब्दितेन । शिजि अव्यक्ते शब्दे इति धातुः ॥ ६२ ॥

कनककुण्डलचारुकर्णाभ्यां नासाकपोलाभ्यां च युक्तं वदनं यस्याः सा तथा ताम् ॥ ६३ ॥

'सुधा पयसि देवान्ने गुणपक्वपयोमृदि' इति वचनात् सर्पाणां पयोदानमिव । तानुद्दिश्य ॥ ६४॥

'आली श्रेणी स्त्रियां पङ्क्तिरुभयोस्ततिरुच्यते' इति ॥ ६५ ॥

उपसञ्चरैः समीपगमनादिनर्मव्यवहारैः ॥ ६६ ॥ कृतस्नेहाः[4] छिन्नस्नेहाः । कृत् छेदने इति धातुः । पूर्वं सम्पन्नस्नेहा अधुना नष्टस्नेहा इत्यर्थः ॥ ६७ ॥

प्रणयस्यापाय उपशमनं सम्भवतीति कातराः भीताः ॥ ६८ ॥

---

[1] स्तनपट्टिकाया अन्तोऽन्तभागो विगलितः स्खलितो यस्याः सा ताम् । विगलिता स्तनपट्टिका यस्याः सा तां वा—स. [2] स्त्रेषु स्त्रेष्विति क्वाचित्कः पाठोऽपि शुद्धिमर्हति—स. [3] जरामृत्युहरां सुधाम्—स. लि.
[4] कृतेन हसितेन सह स्नेहश्च येषां ते । 'कृतं युतोऽपि पर्याप्ते विहिते हसिते फले' इति विश्वः—स । एवं व्याख्यान एवोत्तरश्लोकानुगुण्यं भवतीति तेषामभिप्रायः । नारायण्यां कृतस्नेहाः कामुकत्वात्—लि.

देवलिङ्गप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ।
प्रविश्य सोममपिबच्चन्द्रार्काभ्यां च सूचितः ॥ ६९ ॥

चक्रेण क्षुरधारेण जहार पिबतः शिरः ।
हरिस्तस्य कबन्धस्तु सुधया प्लावितोऽपतत्[1] ॥ ७० ॥

शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ।
यस्तु पर्वणि चन्द्रार्कावभिधावति वैरधीः ॥ ७१ ॥

पीतप्रायेऽमृते देवैर्भगवाल्लोकभावनः ।
पश्यतामसुरेन्द्राणां स्वरूपं जगृहे विभुः ॥ ७२ ॥

एवं सुरासुरगणाः समदेशकाल-
हेत्वर्थयोगगतयोऽपि फले विकल्पाः ।
तत्रामृतं सुरगणाः फलमञ्जसापुः
यत्पादपङ्कजरजःश्रयणान्न दैत्याः य ॥ ७३ ॥

यद्युद्यतेषु च सुकर्ममनोवचोभि-
र्देवात्मजादिषु नृभिस्तदसत् पुरस्तात् ।

---

समा देशादयो येषां ते । तथापि विफलैर्विशिष्टफलैः[2] विकल्पाः विकल्पयोग्या[3] अभूवन् । कथम् ? तत्राह — तत्रेति । तत्रापि हेतुमाह — यत्पादेति । फलवैकल्पे विशेषणविशिष्टकल्पनार्हा[4] इति ॥ ७३ ॥

नन्वसुरादीनामपि शिवादिदेवार्चनादिसद्भावात् कथं तैर्विशिष्टफलं नावाप्तमित्याशङ्क्य श्रीहरिचरणारविन्दप्रणामाभावान्नावाप्तमित्याशयेनाह — यदीति । नृभिः पुरुषैः पुरस्तादुद्यतेषु फलदानाभिमुखेषु देवात्मजादिषु यदर्चनादिकं वित्तादिभिः क्रियते यदि तद्यपि तदसत्कर्म विशिष्टफलं न भवति ।

---

[1] सुधया प्लावितः कबन्धः तत्सम्बन्धमात्रादजरामरोऽपतत् पतितः । शुद्धोदोदधौ । यथोक्तं भगवत्पादैः— 'क्षिप्तः कबन्धोऽस्य शुभोदसागरे त्वया स्थितोऽद्यापि हि तत्र सामृतः' इति (महाभारततात्पर्यनिर्णयः २०-३१)

[2] विफले विशिष्टफले इति विन्यासः स्यात् । सत्यधर्मतीर्था अपि 'विफले फलानुपलम्भके लक्ष्मीशे सति, विपरीत इति यावत्, विकल्पा असमर्थाः सन्तो दैत्याः (अमृतं) नापुः' इति व्याचकुः । अतः 'हेत्वर्थयोगगतयो विफले विकल्पाः' इति पाठः संभाव्यते ।

समो देशः क्षीरनिधितीरादिः, कालश्च मथनकालः, हेतुर्मन्दरादिः, अर्थाश्च कामधेनुप्रभृतयः, तैर्योगः संबन्धः, तदर्थं गतिश्च येषां ते तथा—स. [3] विकल्पयोग्याः फलवैचित्र्ययोग्याः—गू.

[4] अस्पष्टमिदम् ।

तैरेव सद् भवति यत् क्रियते च तस्मिन्
सर्वस्य तद् भवति मूलनिषेचनं यत् ॥ ७४ ॥

इति श्रीमद्भागवते अष्टमस्कन्धेऽष्टमोऽध्यायः ।

---

कुत इति तत्राह—उद्यतेष्विति । उत्कृष्टफलमुद्दिश्य यतेषूपरतेषु, विशिष्टशक्त्यभावादिति द्विरावृत्त्या योजनीयम् । तर्हि कथङ्कारं तद् भवतीति तत्राह—तैरिति । यदीत्यनुवर्तते । यदि तैः पूर्वोक्तैर्वित्तादिभिरेव चास्मिन् हरौ यत् कर्म क्रियते तर्हि तत् पूर्णफलं भवति । हरिभक्तिमात्रेण देवाद्युद्दिष्टद्रव्यैस्तदर्चनाभावे[1] कथं तत् पूर्णफलं स्यादिति तत्राह—सर्वस्येति । यन्मूलभूतस्य हरेरर्चनलक्षणं निषेचनं तत् सर्वस्य देवतादेः । तन्निषेचनफलं भवति । हरिभक्तिमन्तरेण शिवाद्यर्चनेनासुराणां विशिष्टफलं नाभूत् तस्मात् तद्भक्त्या भाव्यमितीदं मुक्तितमसोर्निदर्शनायोक्तमिति ज्ञातव्यम् । देहात्मजादिष्वेव महादराद्धरौ तदभावादात्मा महनीय[2] इति वचनादित्यतो[2] वाह—यदीति । देहात्मजादिष्विति केचित् पठन्ति[3], तत्रैवं योजनिका । पुरस्ताद् देहान्तरावाप्तेः पूर्वमेवासन् वित्तादिव्यय एव नान्य इत्यर्थ इति । शेषं समम्[4] ॥ ७४ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्याऽष्टमोऽध्यायः ।

---

[1] तदर्चनाभावे देवाद्यर्चनाभावे—गू. [2] आत्मा परमात्मा महनीयः पूजनीय इति वचनात् । हरौ क्रियमाणो य आदरस्तदभावाद् दैत्यानां फलाभाव इत्यतो वाऽऽहेति योज्यम्—गू.

[3] देहात्मजादिष्विति पाठो ललितः सुलभार्थश्च—स.

[4] यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत् पृथक्त्वात् । तैरेव सद् भवति यत् क्रियतेऽपृथक्त्वात् सर्वस्य तद् भवति मूलनिषेचनं यत् । इति 'शे' पाठोऽपि सत्यधर्मतीर्थसम्मतः ।

एतदेवोपपादयति–यदिति । असुः प्राणो वसु धनम् । प्राणादिभिर्देहात्मजादिषु देहापत्यकलत्रादिषु यद् युज्यते प्रयुज्यते; केवलं देहाद्युद्देशेन वित्तादिना पोषणादिरूपं यत्कर्म क्रियत इत्यर्थः । तदसद् अल्पफलं भवति । कुतः ? पृथक्त्वात् । पोषणादेः केवलं देहादिमात्रविषयत्वेन हरिविषयत्वाभावात् । तथा तैरेव वित्तादिसाधनैरीश्वरोद्देशेन यत् कर्म क्रियते तत् सत् महाफलं भवति । कुतः ? अपृथक्त्वात् । तत्कर्मण ईश्वरं विनाऽकृतत्वात् । ईश्वरभक्त्यैव कृतत्वादिति यावत् । तर्हीतो देवताद्यर्चनाभावात् कथं महाफलं स्यादित्यत आह–सर्वस्येति । यन्मूलस्य प्रधानस्य हरेरर्चनं तत् सर्वस्य इतरदेवतादेरपि भवति । कुतः ? अपृथक्त्वात् । परिवारतया स्थितत्वादित्यप्यर्थो ग्राह्यः । यस्य कस्यापि पूजा ईश्वरप्रीत्युद्देशेन कृता चेत् सफला नान्यथा । अतो देवानां तादृशत्वात् फलप्राप्तिः, न दैत्यानामभक्तत्वादिति भावः—शे.

## ॥ अथ नवमोऽध्यायः ॥

श्रीशुक उवाच —

इति दानवदैतेया नाविन्दन्नमृतं नृप ।
युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ॥ १ ॥

साधयित्वाऽमृतं राजन् पाययित्वाऽमृतं सुरान् ।
पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥

सपत्नानां परामृद्धिं दृष्ट्वा च दितिनन्दनाः ।
अमृष्यमाणा उत्पेतुर्देवान् प्रत्युद्यतायुधाः ॥ ३ ॥

ततः सुरगणाः सर्वे सुधया पीतयैधिताः ।
प्रतिसंयुयुधुः शस्त्रैर्नारायणपरायणाः ॥ ४ ॥

तत्र देवासुरो नाम रणः परमदारुणः ।
रोधस्युदन्वतो राजन् तुमुलो रोमहर्षणः ॥ ५ ॥

तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ।
समासाद्यासिभिर्बाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥

शङ्खतूर्यमृदङ्गानां भेरीडमरिणां महान् ।
हस्त्यश्वरथपत्तीनां नदतां निस्वनोऽभवत् ॥ ७ ॥

रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ।
हया हयैरिभैश्चेभाः समसज्जन्त संयुगे ॥ ८ ॥

उष्ट्रैः केचिद् द्विजैः केचिदपरेऽभिययुः खरैः ।
केचिद् गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥

---

॥ अथ नवमोऽध्यायः ॥

भगवत्प्रसादजातेन ज्ञानेन पापप्रणाशो भवत्येव नान्येनेत्येतन्निदर्शनाय देवासुरयुद्धं वर्णयत्यध्यायद्वयेन ।

तत्रादौ हरेरदर्शनप्रकारमाह इति, यथावदश्योऽभूदिति ॥ २ ॥

एधिता वर्धिताः ॥ ४ ॥ उदन्वतः समुद्रस्य रोधसि तीरे ॥ ५ ॥

तेषामारोहसाधनान्याह—उष्ट्रैरित्यादिना । द्विजैः पक्षिभिः ॥ ९ ॥

गृध्रैः कङ्कैर्बकैरन्ये श्येनभासैस्तिमिङ्गलैः ।
शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥

शिवाभिराखुभिः केचित् कृकलासैः शशैर्नरैः ।
बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥

अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ।
सेनयोरुभयो राजन् विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥

चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ।
महाधनैर्वज्रदण्डैर्विभ्राजद्बर्हचामरैः ॥ १३ ॥

वातोद्धूततरोष्णीषैः[1] सत्कृतैर्वर्मभूषणैः ।
स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥

देवदानववीराणां ध्वजिन्यौ[2] पाण्डुनन्दन ।
रेजतुर्वीचिमालाभिर्यादसामिव सागरे ॥ १५ ॥

वैरोचनबलिः सङ्ख्ये सोऽसुराणां चमूपतिः ।
यानं वैहायसं[3] नाम कामगं मयनिर्मितम् ॥ १६ ॥

सर्वसाङ्ग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ।
अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥

आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ।
बालव्यजनछत्राग्र्यै रेजे चन्द्र इवोदये[4] ॥ १८ ॥

तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः ।
नमुचिः शम्बरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥

---

खड्गैर्मृगविशेषैः । अरुणैर्वनसत्वविशेषैः ॥ १० ॥
बर्हचामरैः पिच्छविरचितचामरैः ॥ १३–१४ ॥
ज वीचिमालाभिः यादसां जलजन्तूनां वरूथिन्यौ यथा ॥१५॥ साङ्ग्रामिकं युद्धसाधनम् ॥१७॥

---

[1] वातोद्धूतैस्तत्कम्पितैरुत्तरैरुत्तरीयैरुष्णीषैः शिरोवेष्टनैः—स.  [2] ध्वजस्तम्भसमेतसेने—गू.
[3] व्योममार्गेण गच्छत्—गू.  [4] उदयाचले—गू.

द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ।
शकुनिर्भूतसन्तापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥

हयग्रीवः शङ्कुशिराः कपिलो मेघदुन्दुभिः ।
तारकश्चक्रदृक् शुम्भो निशुम्भो जम्भ उत्कलः ॥ २१ ॥

अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ।
अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥

अलब्धभागाः सोमस्य केवलं क्लेशभागिनः ।
सर्व एते रणमुखे बहुशो निर्जितामराः ॥ २३ ॥

सिंहनादं विमुञ्चन्तः शङ्खान् दध्मुर्महारवान् ।
दृष्ट्वा सपत्नानुत्सिक्तान् बलभित्[1] कुपितो भृशम् ॥ २४ ॥

ऐरावतं दिक्करिणमारूढो वियति स्वराट् ।
यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥

तस्यासन् सर्वतो देवा नानावाहध्वजायुधाः ।
लोकपालाः सह गणैर्वाय्वग्निवरुणादयः ॥ २६ ॥

तेऽन्योन्यमभिसंसृत्य क्षिपन्तो नामभिर्मिथः ।
आह्वयन्तो विशन्तोऽग्रे युयुधुर्द्वन्द्वयोधिनः ॥ २७ ॥

युयुधे बलिरिन्द्रेण तारकेण गुहोऽस्यत[2] ।
वरुणो हेतिनाऽयुध्यन्मित्रो राजन् प्रहेतिना ॥ २८ ॥

यमस्तु कालनाभेन विश्वकर्मा मयेन वै ।
शम्बरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥

अपराजितेन नमुचिरश्विनौ वृषपर्वणा ।
सूर्यो बलिसुतैर्देवो बाणज्येष्ठशतेन सः ॥ ३० ॥

---

सोमस्य अमृतस्य ॥ २३ ॥ उत्सिक्तान् बलगर्वितान् ॥ २४ ॥ स्रवत्प्रस्रवणं च्योतत्प्रस्रावणं, च्योतन्मदजलम् । अन्यत्र निरन्तरस्यन्दमाननिर्झरम् । अहर्पतिः सूर्यः ॥ २५ ॥

---

[1] इन्द्रः । [2] 'युयोध बलिरिन्द्रेण तारकेण दिवस्पतिः'—स.लि.

राहुणा च तथा सोमः पुलोम्ना युयुधेऽनलः[1] ।
निशुम्भशुम्भयोर्देवी भद्रकाली नराशनी ॥ ३१ ॥

वृषाकपिस्तु[2] जम्भेन महिषेण विभावसुः ।
इल्वलः सहवातापिर्ब्रह्मपुत्रैररिन्दम ॥ ३२ ॥

कामदेवेन दुर्मर्ष उत्कलो मातृभिः सह ।
बृहस्पतिस्तूशनसा नरकेण शनैश्चरः ॥ ३३ ॥

मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ।
विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥

त एवमाजावसुराः सुरेन्द्रा द्वन्द्वेन संहत्य च युध्यमानाः ।
अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरांश्च चिक्षिपुः ॥

[3]भुशुण्डिभिश्चक्रगदार्ष्टिपट्टिशैः शक्त्युल्मुखैः प्रासपरश्वधैरपि ।
निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिण्डिपालैश्च शिरांसि चिच्छिदुः ॥

गजास्तुरङ्गाः सरथाः पदातयः सारोहवाहा विविधा विखण्डिताः ।
निकृत्तबाहूरुशिरोधराङ्घ्रयश्छिन्नध्वजज्यासतनुत्रभूषणाः[4] ॥ ३७ ॥

तेषां पदाघातरथाङ्गचूर्णितादायोधनादुल्बण उत्थितस्तदा ।
रेणुर्दिशः खं द्युमणिं च छादयन् न्यवर्ततासृक्स्रुतिभिः परिप्लुतः ॥

शिरोभिरुद्धूतकिरीटकुण्डलैः संरम्भदृग्भिः परिदष्टदच्छदैः ।
महाभुजैः साभरणैः सहायुधैः संप्रस्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥

कबन्धास्तत्र चोत्पेतुः पतितैः स्वशिरोऽक्षिभिः ।
उद्यतायुधदोर्दण्डैराधावन्तो भटान् मृधे ॥ ४० ॥

बलिर्महेन्द्रं दशभिस्त्रिभिरैरावतं शरैः ।
चतुर्भिश्चतुरो वाहानेकेनारोहमार्च्छयत् ॥ ४१ ॥

---

ज्यया मौर्व्या आसम्[5] आसनं यत् तद् धनुः । तनुत्रं कवचम् ॥ ३७ ॥ उद्वृत्तं विपर्यस्तं रहितं वा । दच्छदैरोष्ठैः । संप्रास्तृता संछादिता ॥ ३९ ॥ कबन्धाः शिरोरहितदेहाः ॥ ४० ॥

---

[1] अनिलः—स.शे.लि. । अनिलो भूतवायुः—स.

[2] वृषाकपी रुद्रः । 'वृषाकपिः शिवे कृष्णे' इति विश्वः—स. [3] भुशुण्डिभिः—स. [4] ध्वजेष्वासतनुत्रभूषणाः—स.लि । इष्वासो धनुः । [5] आ समन्तादस्यतेऽनेनेति आसं धनुरिति वा—गू.

स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ।
चिच्छेद निशितैर्भल्लैरसंप्राप्तान् हसन्निव ॥ ४२ ॥

तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ।
तां ज्वलन्तीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥

ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ।
यद्यच्छस्त्रं समादद्यात् सर्वं तदच्छिनद् विभुः ॥ ४४ ॥

ससर्जाथासुरीं मायामन्तर्धानगतोऽसुरः ।
ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ४५ ॥

ततो निपेतुस्तरवो दह्यमाना दवाग्निना ।
शिला विटङ्कशिखराश्चूर्णयन्तो[1] द्विषद्बलम् ॥ ४६ ॥

महोरगाः समुत्पेतुर्दन्दशूकाः सवृश्चिकाः ।
सिंहव्याघ्रवराहाश्च मर्दयन्तो महासुरान्[2] ॥ ४७ ॥

यातुधान्यश्च शतशः शूलहस्ता विवाससः ।
छिन्धि भिन्धीति वादिन्यस्तथा रक्षोगणा विभो ॥ ४८ ॥

ततो महाघना व्योम्नि गम्भीरपरुषस्वनाः ।
अङ्गारान् मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥

सृष्टो दैत्येन सुमहान् वह्निः श्वसनसारथिः ।
सांवर्तक इवात्युग्रो विबुधध्वजनीमधाक् ॥ ५० ॥

ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत ।
प्रचण्डवातैरुद्भूततरङ्गावर्तभीषणः ॥ ५१ ॥

---

हरिरिन्द्रः ॥ ४३ ॥ ऋष्टयः ऋष्टीः ॥ ४४ ॥ विटङ्कशिखराः उन्नतशृङ्गाः विस्तृतप्राग्रा वा ॥ ४६ ॥ महोरगा अजगराः । दन्दशूकाः दंशनशीलाः सर्पाः ॥ ४७ ॥

स्तनयित्नवः सनिर्घाता मेघाः ॥ ४९ ॥ सांवर्तकः प्रलयाग्निः । अधाक् अदहत् ॥ ५० ॥

उद्वेलः तीरमतिक्रान्तः ॥ ५१ ॥

---

[1] चूर्णयन्त्यः—ग. । तरवश्चूर्णयन्तः, शिलाश्चूर्णयन्त्य इति विवेकः—स. [2] महान्तश्च ते सुराश्च तान्—स.

एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ।
सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥

न तत्प्रतिनिधिं यत्र विदुरिन्द्रादयो नृप ।
ध्यातः प्रादुरभूत् तत्र भगवान् विश्वभावनः ॥ ५३ ॥

ततः सुपर्णांसकृताङ्घ्रिपल्लवः पिशङ्गवासा नवकञ्जलोचनः ।
अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घकिरीटकुण्डलः ॥ ५४ ॥

तस्मिन् प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महतां महीयसि ।
'स्वाप्नो[1] यथाऽहिः प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विनाशिनी[2] ॥

दृष्ट्वा मृधे गरुडवाहमिहारिवाह[3]
आविध्य शूलमहिनोदथ कालनेमिः ।
तल्लीलया गरुडमूर्ध्नि पतद् गृहीत्वा ।
तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥

माली सुमाल्यतिबलौ युधि पेततुर्य-
च्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ।
आहृत्य तिग्मगदयाऽहनदण्डजेन्द्रं
तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥ ५७ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे नवमोऽध्यायः ।

---

यत्र यदा तदा ध्यातः ॥ ५३ ॥ असुरकूटकर्मजाः असुरकपटकर्मजाताः । अत्र कैमुत्यन्यायमाह — **हरिस्मृति** । हरिस्मृतिरेव सर्वविपद्विनाशिनी किमुत हरिरितीति ॥ ५५ ॥

अहिनोत् अहितान् (प्रति) अमुञ्चत् । अरीनसुरान् वहतीत्यरिवाहः[4], कुम्भकारशब्दवदण्प्रत्ययान्तः । अरिः सिंहो वाहो यस्य स तथा । इभारिवाह इति पाठे स्पष्टोऽर्थः ॥ ५६ ॥

आहत्य संघट्य अण्डजेन्द्रो गरुडः । आद्यो हरिररिणा चक्रेण नदतोऽरेः कालनेमेः शिरोऽच्छिनदित्यन्वयः । [5]अच्छिनदिति क्रियापदशक्तेर्द्विवारं कालनेम्यादीन् हतवान् हरिरित्येषोऽर्थोऽभिविज्ञायते । छिदिर् द्वैधीभाव इति द्वैधीभावश्रवणात्, उशना जीवयामासेत्युत्तरवाक्याच्च द्विवारं

---

[1] 'स्वप्नो यथा हि' इति क्वचित् । [2] विमोक्षिणी-लि. । विमोक्षणीति क्वचित् कोशेषु ।
[3] इभारिवाहः—स.लि.शे. [4] अरिवाहः कालनेमिरिति यावत् । [5] द्वैधीभाव इत्यस्य द्वित्वप्रकारवानित्यर्थः । न तु द्विवारबोधकत्वम् । तस्मादुत्तरवाक्यानि शोधनीयानि ।

॥ अथ दशमोऽध्यायः ॥

श्रीशुक उवाच —

अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयाऽनुकम्पया ।
जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तान् रणे यैरभिसंहताः पुरा ॥ १ ॥

वैरोचनाय संरब्धो भगवान् पाकशासनः ।
उदयच्छद् यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥

वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरः स्थितम् ।
मनस्विनं सुसम्पन्नं विचरन्तं महामृधे ॥ ३ ॥

नटवन्मूढ मायाभिर्मायेशान् नो जिगीषसि ।
जित्वा बालान् निबद्धाक्षान् नभो हरति तद्धनम् ॥ ४ ॥

आरुरुक्षन्ति मायाभिरुत्सिसृक्ष्यन्ति[1] ये दिवम् ।
तान् दस्यून् विधुनोम्यज्ञान् पूर्वस्माच्च पदादधः ॥ ५ ॥

---

हतिरस्ति । 'कालनेम्यादयः सर्वे हरिणा निहता अपि । शुक्रेणोज्जीविताः सन्तः पुनस्ते वै निपातिता ' इति वचनाच्च निश्चितोऽयमर्थ इति ॥ ५७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्

अष्टमस्कन्धस्य नवमोऽध्यायः

॥ अथ दशमोऽध्यायः ॥

देवासुरयुद्धमुपक्रम्य हरिररिणा कालनेमेः शिरोऽच्छिनदित्युपसंहृतम् । तत्रामरा मृता उत पलायिताः, विनष्टमरणधर्माणां तेषां विनाशायोगात् पलायनमेव प्राप्तम् । भगवताऽनुगृहीतबलानां तदप्ययुक्तम् । अतस्तैः किमकारीति तत्राह— **अथो** इति । अनेन हरेरनुग्रहेणैव जयोऽन्यथा पराजय इत्ययमर्थः स्पष्टित इति ध्वनयति ॥ १ ॥

तत्र बलिवासवयोः प्रसक्तं युद्धं किमभूत् ? अत्राह— **वैरोचनायेति** ॥ २ ॥

तत्र शत्रुं प्रहरिष्यता योधेन स्वपौरुषं प्रकाश्य प्रहर्तव्यमिति न्यायमनुसन्दधानो वज्रमुद्धृत्य वज्रपाणिस्तं वक्ति (इत्याह) — **वज्रपाणिरिति** । स्वपौरुषप्रकटनमपि प्रतिभटनिन्दापूर्वकमित्यतस्तं[2]

---

[1] उत्सिसृक्षन्ति—स. [2] इत्यत इति हेतोः, तं बलिं—गू.

सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ।
शिरो हरिष्ये मन्दात्मन् घटस्व ज्ञातिभिः सह ॥ ६ ॥

बलिरुवाच —

सङ्ग्रामे वर्तमानानां कालनोदितकर्मणाम्[1] । णा
कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥

तमिमं कालरशनं जनाः पश्यन्ति सूरयः ।
न हृष्यन्ति न शोचन्ति तत्र यूयमपण्डिताः[2] ॥ ८ ॥

न वयं मन्यमानानामात्मानं तत्र साधनम् ।
गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥

श्रीशुक उवाच —

इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः ।
आकर्णपूर्णैरहनदाशुगैराहतं पुनः ॥ १० ॥

एवं निराकृतो देवो वैरिणा तथ्यवादिना ।
नामृष्यत् तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥

---

निन्दति—जित्वेति । कश्चित् खल इन्द्रजालादिना निबद्धाक्षान् बालान् जित्वा नभ आकाशं चाच्छाद्य तेषां धनं यथा हरति तथा ये मायाभिः कपटमिश्रव्रतैः दिवं परलोकं आरुरुक्षन्ति, ततोप्युत्सिसृक्ष्यन्ति ऊर्ध्वं गन्तुमिच्छन्ति, अहं तान् दस्यून् पूर्वस्माच्चक्रवर्तिपदादधो विधुनोमि । चशब्दात् ततस्ततो विधूयाधो निक्षिपामि कदाप्यूर्ध्वदर्शनरहितान् करोमीत्यर्थः । 'यत्र नार्यपच्यवमुपच्यवं च शिक्षते' इत्यत्र यथोपमा लुप्ता तथाऽत्रापि[3] । 'मायाभिस्तूत्सिसृप्सत इन्द्राद्यामारुरुक्षतः । अवदस्यूँरधूनुथाः' इत्यृचं प्रमाणयति ॥ ४–५ ॥ रशनं रज्जुः ॥ ८ ॥

तत्र जयादौ आत्मानं स्वं कारणं मन्यमानानां वो गिरः साध्विति न गृह्णीमः । मर्मण्येव ताडनं यासां तास्तथोक्ताः ॥ ९ ॥

---

[1] कालचोदितकर्मणां कालनोदितकर्मणामिति स्फुटार्थौ पाठौ । कालेनोदितकर्मणामिति पाठे कालेन उदितम् उत्कर्षेण दितं खण्डितं फलानर्पकं कर्मैषामिति व्याख्येयम्—स. [2] अकारवाच्ये वासुदेवे या पण्डा बुद्धिस्तमिताः प्राप्ता अपण्डिताः । इण् गताविति धातुः—गू. [3] अत्रापि विधुनोमीत्यत्रापि—गू.

प्राहरत् कुलिशं तस्मा अमोघं परमर्दनम् ।
सयानो न्यपतद् भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥
सखायं पतितं दृष्ट्वा जम्भो बलिसखः सुहृत् ।
अभ्ययात् सौहृदं सख्युर्हतस्यापि समाचरन् ॥ १३ ॥
स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ।
जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥
गदाप्रहारव्यथितो भृशं विह्वलितो गजः ।
जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥
ततो रथो मातलिना हरिर्दशशतैर्वृतः[1] ।
आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥
तस्य तत् पूजयन् कर्म शत्रोर्दानवसत्तमः ।
शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥
सेहे रुजं सुदुर्मर्षं सत्वमालम्ब्य मातलिः ।
इन्द्रो जम्भस्य संक्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥
जम्भं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ।
नमुचिश्च बलः पाकस्तत्रोपेयुस्त्वरान्विताः ॥ १९ ॥
वचोभिः परुषैरिन्द्रमर्दयन्तोऽस्य मर्मसु ।
शरैरवाकिरन् मेघा धाराभिरिव पर्वतम् ॥ २० ॥
हरीन् दशशतान्याजौ हर्यश्वस्य बलः शरैः ।
तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥
शताभ्यां मातलिं पाको रथं सावयवं पृथक् ।
सकृत्सन्धानमोक्षेण[2] तदद्भुतमभूद् रणे ॥ २२ ॥
नमुचिः पञ्चदशभिः स्वर्णपुङ्खैर्महेषुभिः ।
आहत्य व्यनदत् सङ्ख्ये सतोय इव तोयदः ॥ २३ ॥

---

शताभ्यां शतद्वयेन । सन्धानयुक्तमोक्षेण मौर्व्यां सन्धानं ततो मोक्षणं च सकृद्युगपदिति । तत्कर्मकरणं पश्यतामिति शेषः ॥ २२ ॥

---

[1] दशशतैरश्वैर्युतः—गू.  [2] अर्दयामासेत्यनुषञ्जनीयम् । तत् मर्दनम्—स.

सर्वतः शरकूटेन शक्रं सरथसारथिम् ।
छादयामासुरसुराः प्रावृट्सूर्यमिवाम्बुदाः ॥ २४ ॥

अलक्षयन्तस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः ।
अनायकाः शत्रुबलेन निर्जिता वणिक्पथा[1] भिन्ननवो यथार्णवे ॥ २५ ॥

ततस्तुराषाडिषुबद्धपञ्जराद् विनिर्गतः साश्वरथध्वजाग्रणीः[2] ।
बभौ दिशः खं पृथिवीं विरोचयन् स्वतेजसा सूर्य इव क्षपात्यये ॥

निरीक्ष्य पृतनां देवः परैरभ्यर्दितां रणे ।
उदयच्छद् रिपुं हन्तुं वज्रं वज्रधरो रुषा ॥ २७ ॥

स तेनैवाष्टधारेण शिरसी बलपाकयोः ।
ज्ञातीनां पश्यतां राजन् जहार जनयन् भयम् ॥ २८ ॥

नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषाऽन्वितः ।
जिघांसुरिन्द्रं नृपते चकार परमोद्यमम् ॥ २९ ॥

अश्मसारमयं शूलं घण्टावद्धेमभूषणम् ।
प्रगृह्याभ्यद्रवत् क्रुद्धो नमुचिर्दानवोत्तमः ॥ ३० ॥

तदाविध्य महावीर्यो हतोऽसीति विसर्जयन् ।
प्राहिणोद् देवराजाय निनदन् मृगराडिव ॥ ३१ ॥

तदापतद् गगनतले महाजवं निचिच्छिदे हरिरिषुभिः सहस्रधा ।
तमाहनन् नृप कुलिशेन कन्धरे रुषाऽन्वितस्त्रिदशपतिः शिरो हरन् ॥

ततोऽस्य न त्वचमपि वज्र ऊर्जितो बिभेद यः सुरपतिनौजसेरितः ।
तदद्भुतं परमतिवीर्यवृत्रभित् तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३३ ॥

---

भिन्ननवः भिन्ननावः ॥ २५ ॥ तुराषाडिन्द्रः । आखण्डलस्तुराषाडिति हलायुधः ॥ २६ ॥

हरिरिन्द्रः आकाशतले आपतन्महावेगं शूलमिषुभिः सहस्रधा निचिच्छिदे नितरामच्छिनत् । कन्धरे कण्ठे, शिरो हरन् छिन्दन् तमाहनदित्यन्वयः ॥ ३२ ॥

ततः किमभूत् ? तत्राह—**तत इति** । तिरस्कृतो धिक्कृतः ॥ ३३ ॥

---

[1] वणिजां पन्था येषां ते । प्राचीनवणिजां पथा गच्छन्तो नूतनवणिज इत्यर्थः—स. [2] अग्रणीः सारथिः—स.

तस्मादिन्द्रो बिभेच्छत्रोर्वज्रः प्रतिहतो यतः[1] ।
किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३४ ॥
येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ।
कृतो निविशतां भारैः पतत्त्रैः पततां भुवि ॥ ३५ ॥
तपःसारमयं[2] त्वाष्ट्रं[3] वृत्रो येन विपाटितः ।
अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः ॥ ३६ ॥
सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ।
नाहं तदाददे दण्डं [4]ब्रह्मतेजोऽप्यकारणम् ॥ ३७ ॥
इति शक्रं विषीदन्तमाह वागशरीरिणी ।
नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३८ ॥
मयास्मै यद् वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ।
अतोऽन्यश्चिन्तनीयस्ते उपायो मघवन् रिपोः ॥ ३९ ॥
तां दैवीं गिरमाकर्ण्य मघवान् सुसमाहितः ।
ध्यायन् फेनमथापश्यदुपायमुभयात्मकम् ॥ ४० ॥
नशुष्केण नचार्द्रेण[5] जहार नमुचेः शिरः ।
तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन् विभुम् ॥ ४१ ॥

---

भूतं[6] ग्रहलक्षणम् ॥ ३४ ॥ पतत्त्रैः पततां भारैः भुवि निविशतामद्रीणाम् ॥ ३५ ॥
तपःसारम् अयन्निति पदच्छेदः ॥ ३६ ॥
कुतो नार्हति वधम् ? अत्राह— **मयेति** । कोऽयं वर इति तत्राह— **मृत्युरिति** ॥ ३९ ॥

---

[1] यतो नमुचेः सकाशाद् वज्रः, प्रतिहतस्तस्मान्नमुचेरिन्द्रो बिभेदिति वक्तुः शुकस्य विशेषवाक्यं विधौ लिङ् परस्मैपदम्—गू.

[2] तपःसारमयम्—स । दधीचेः तपःसारात्मकं त्वाष्ट्रम्—स. । सारमयं श्रेष्ठेष्वपि प्रधानम् । रसः मारो वरः श्रेष्ठ इत्यमरः । [3] त्वाष्ट्रं तपस्त्वष्टुस्तपोरूपो वृत्रः—गू. । [4] ब्रह्मतेजो दधीचेस्तेजः—गू.

[5] नशुष्केण अग्निशुष्यत्स्वजनकसमुद्रजलान्येन, नचार्द्रेण आर्द्रीकृतः सोदरो यश्चन्द्रमास्तदन्येन फेनेनेत्यर्थः । नकुलनखशब्दवदिमौ शब्दौ । यद्वा शुष्केण नमुचेः शिरो न जहार आर्द्रेण च नमुचेः शिरो न जहार। किन्तु परिशिष्टफेनेन जहारेति शेषेणान्वयः । [6] भूतं जातमित्यर्थः—स.

गन्धर्वमुख्यौ जगतुर्विश्वावसुपरावसू ।
देवदुन्दुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४२ ॥

अन्येऽप्येवं प्रतिद्वन्द्वान् वाय्वग्निवरुणादयः ।
सूदयामासुरस्त्रौघैर्मृगान् केसरिणो यथा ॥ ४३ ॥

ब्रह्मणा प्रेषितो देवान् देवर्षिर्नारदो नृप ।
वारयामास विबुधान् दृष्ट्वा दानवसङ्क्षयम् ॥ ४४ ॥

नारद उवाच —

भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ।
श्रिया समेधिताः सर्वे उपारमत विग्रहात् ॥ ४५ ॥

श्रीशुक उवाच —

येऽवशिष्टा रणे तस्मिन् नारदानुमतेन ते ।
बलिं विपन्नमादाय अस्तंगिरिमुपागमन् ॥ ४६ ॥

संयम्य मन्युसंरम्भं मानयन्तो मुनेर्वचः ।
संगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४७ ॥

तत्रापि नष्टावयवान् विद्यमानशिरोधरान् ।
उशना जीवयामास सञ्जीविन्या स्वविद्यया ॥ ४८ ॥

बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेन्द्रियस्मृतिः ।
पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४९ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे दशमोऽध्यायः ।

---

ते च अनुचरैः संगीयमाना[1] इत्यर्थः । संरम्भं द्वेषोद्रेकम् ॥ ४७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य दशमोऽध्यायः ।

## ॥ अथ एकादशोऽध्यायः ॥

श्रीशुक उवाच —

वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ।
मोहयित्वा सुरगणान् हरिः सोममपाययत् ॥ १ ॥

वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ।
सह देव्या ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥

सभाजितो भगवता सादरं सोमया भवः ।
सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन् हरिम् ॥ ३ ॥

देव देव जगद्व्यापिन् जगदीश जगन्मय ।
सर्वेषामेव भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥

तवैव चरणाम्भोजं श्रेयस्कामा निराशिषः ।
विसृज्योभयतः सङ्गं मुनयः समुपासते ॥ ५ ॥

त्वं ब्रह्म पूर्णममृतं विगुणं विशोक-
मानन्दमात्रमविकारमनन्यदन्यत् ।

---

## ॥ अथ एकादशोऽध्यायः ॥

भगवज्ज्ञानसाधनभक्तिविधानार्थं देवोत्तमरुद्रादिसम्भाव्यमहिमा[1] वर्ण्यतेऽस्मिन्नध्याये ।

तत्र विष्णुशिवयोः संवादप्रकारं वक्तुमाह — **वृषध्वज इति** । हरिः सुरगणान् सोममपाययदिति यदिदं निशम्य ॥ १ ॥

सः उमया[2] । 'सोषामविन्दत् सस्वासो अग्निं सोऽर्केण विबबाधे तमांसि सेद्भवो यमवथ यूयमिन्द्रश्च मर्त्यः' इत्यादिवत् ॥ ३ ॥

हेतुर्निमित्तकारणम् । अदृष्टादिवन्नेत्याह — **आत्मेति** । न जीव इत्याह — **ईश्वर इति** ॥ ४ ॥

ईश्वरश्चेत् शिवः किम् ? न । तस्य स्वातन्त्र्येणोपास्यमानत्वासम्भवात् । अस्य मोक्षार्थिभिस्तथात्वादित्याह — **तवेति** ॥ ५ ॥

उपास्यमानमपि शबलं[3] किं न स्यादिति तत्राह — **त्वं ब्रह्मेति** । ब्रह्मपदार्थमाह — **पूर्णमिति** ।

---

[1] रुद्रादिसम्पूज्यमहिमेत्यर्थः । [2] सोषामविन्ददित्यादिश्रुतौ सोषामित्यत्र सः उषामिति छेदो यथा, तथा सोमयेत्यत्र सः उमयेति पदच्छेद इति भावेन टीकायां स उमया सोमयेत्युक्तम् — गू. [3] शबलं सगुणं ब्रह्म — गू.

विश्वस्य हेतुरुदयस्थितिसंयमाना-
मात्मेश्वरश्च तदुपेक्षतयाऽनपेक्षः ॥ ६ ॥

एकस्त्वमेव सदसद्‌द्वयमद्वयं च
स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।
अज्ञानतस्त्वयि जनैर्विहितो विकल्पो
यस्माद्‌गुणव्यतिकरो निरुपाधिकश्च ॥ ७ ॥

---

अविनाशिनः पूर्णत्वं युक्तमित्याह—**अमृतमिति** । अमृतत्वं कुत इति तत्राह—[1]**त्रिगुणमिति** । अत एव विशोकम् । आनन्दमात्रमतोऽपि शोको नास्त्यस्य । षड्विकाररहितम् । एतादृशमन्यन्नास्तीत्याह—**अनन्यदिति** । स्वगतभेदविवर्जितं वा । अन्यत्, जगत इति शेषः । सर्वस्माद्‌भिन्नमित्यर्थः । जगत्-कारणस्य तदुदासीनस्य चैकत्वप्रकटनाय पुनरुक्तमाह[2]—**विश्वस्येति** । एवंविधं ब्रह्म प्रकृत्यादिकमुपेक्ष्यानपेक्षतयाऽपि कर्तुं समर्थ इत्याह—**तदुपेक्षतयेति** ॥ ६ ॥

एतत् कथमिति तत्राह—**एक इति** । यथा कुण्डलाद्यात्मना कृतं प्रकृत्यात्मना[3] त्वकृतं स्वर्णमेकमेव, इह स्वर्णे वस्तुतो भेदो नास्ति, तथा सदादिवस्तुषु स्थित्वा तत्तत्स्वभावप्रवर्तकत्वेन सदादिशब्दवाच्यस्त्वमप्येक एव । इदमपि सामर्थ्यभावेन[4] युक्तमतो निरतिशयसामर्थ्यमस्यावगम्यत इति भावः । स्थानभेदादेकस्य परमात्मनो भेदकल्पनमज्ञानमूलमित्याह—**अज्ञानत इति** । जनैरज्ञानतस्त्वयि विकल्पो भेदो विहितो यस्मात् तस्मादवस्तुभूत[5] इति शेषः । विहत इति पाठे अज्ञानतस्त्वयि विकल्प इति यस्मात् तस्माद् विहतो नष्ट इत्यर्थः । भेदकल्पनायां का प्राप्तिरिति तत्राह—**गुणेति** । गुणानां व्यतिकरो मिथः कार्यार्थसमवायविशेषो यस्मात् स । तत्तत्कार्येषु तत्तत्प्रवर्तकत्वेन तत्स्थत्वात् तदाशङ्केति भावः । ननु स्वतो भेदाभावेप्युपाधिभेदात् स स्यादिति तत्राह—**निरुपाधिक इति** । उपाधिसद्भावे तद्भेदात् सोऽस्तीति शङ्कितुं शक्यते, स[6] एव नास्ति । आनन्दमात्र[7]मिति निर्धारितत्वात् पुनर्वचनं मन्दाशङ्कानिवारणार्थमिति ॥ ७ ॥

---

[1] विगता गुणाः सत्त्वादयो यस्मात् स तथाविधगुणस्त —गू.
[2] विश्वस्य हेतुरात्मेश्वरश्चेत्यत्रैव मूले पुनरुक्तिशङ्का न का इति हृदयम्—गू.
[3] कुण्डलाद्याभरणकरणसमये स्वर्णस्वरूपस्य पृथक् रचना —गू.
[4] सामर्थ्यभावेन-सामर्थ्यसत्त्वेन—गू.
[5] अवस्तुभूतोऽपारमार्थिकः—गू.
[6] स एव उपाधिः —गू.
[7] पूर्वमानन्दमात्रमित्युक्तपदे उपाध्यभावस्य निर्धारितत्वात् —गू.

त्वां ब्रह्म केचिदवयन्त्युत धर्ममेक
एके परं सदसतोः पुरुषं परेशम् ।
अन्ये वदन्ति नवशक्तियुतं परं त्वां
केचिन्महापुरुषमव्ययमात्मतन्त्रम् ॥ ८ ॥

नाहं परायुर्ऋषयो न मरीचिमुख्या
जानन्ति यद्विरचितं खलु सत्वसर्गाः ।
यन्मायया मुषितचेतस ईशदैत्य-
मर्त्यादयः किमुत शश्वदभद्रवृत्ताः ॥ ९ ॥

स त्वं समीहसि ततः स्थितिजन्मनाशान्
भूतेहितं च जगतो भवबन्धमोक्षौ ।
वायुर्यथा विशति खं च चराचराख्यं
सर्वं [1]त्वदात्मकतयाऽवगमो नुतिस्ते ॥ १० ॥

---

एकस्य नानामतविषयत्वं न भिन्नस्येत्याह—त्वामिति । केचिद् वेदान्तिनः त्वां ब्रह्मेत्यवयन्त्यवगच्छन्ति । एके स्मार्ताः धारकत्वाद्धर्मम्, एके पौराणिकाः परेशं त्वां सदसतोः परं पुरुषम्, अन्ये पाञ्चरात्रिकाः त्वां विमलोत्कर्षणीज्ञानेत्यादिनवशक्तियुतं परं वदन्ति । केचिदेकान्तिनः त्वामव्ययमात्मतन्त्रं महापुरुषमभिवदन्तीत्यन्वयः ॥ ८ ॥

म तद्विषयज्ञानसाम्यभावान्नानात्वकल्पना इत्याशयेनाह—**नाहमिति** । सत्वसर्गाः सात्विकाः । अत्रापि निमित्तमाह—**यन्माययेति** ॥ ९ ॥

जन्मस्थित्यादीनां भिन्नकर्तृत्वेन[2] नानात्वं[3] किं न स्यादिति तत्राह—**सत्वमिति** । यो ब्रह्माद्यविज्ञातस्वरूपः स जगतः स्थितिजन्मनाशान् भूतेरीहितं च बन्धमोक्षावपि समीहसि करोषि हि यस्मात् तस्मान्नानात्मकत्वं भ्रान्तिरिति भावः । नन्वासुरकल्पनाऽस्त्वेकविषया ततोऽन्या किं तव स्तुतिरिति तत्राह[4]—**वायुरिति** । यथा वायुः खं चराचराख्यं सर्वं प्रविशति ततो भिन्नश्च तथा सर्वस्य[5]

---

[1] तदात्मकतया–इत्यपि स. पाठः । [2] जन्मस्थित्यादीनां विरुद्धधर्मत्वाद् भिन्नकर्तृत्वेनेत्यर्थः—गू.
[3] हरेर्नानात्वं—गू. [4] नन्वासुरकल्पनाऽसुरसंबन्धिनी हरेर्नानात्वकल्पना भ्रान्तिरस्तु । एकविषया चैतन्यैक्यविषयकल्पना ततो नानात्वकल्पनाया अन्या व्यतिरिक्ता सती दैवी भवतु चेत् तर्हि तव स्तुतिः किंप्रयोजनेति शङ्कायां तत्राहेति योज्यम्—गू. [5] सर्वस्य चेतनजातस्य—गू.

अवतारा मया दृष्टा रममाणस्य ते गुणैः ।
सोऽहं[1] तद् द्रष्टुमिच्छामि यत् ते योषिद्वपुर्धृतम् ॥ ११ ॥

येन सम्मोहिता दैत्याः पायिताश्चामृतं सुराः ।
तद् दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १२ ॥

श्रीशुक उवाच —

एवमभ्यर्थितो विष्णुर्भगवान् शूलपाणिना ।
प्रहस्य भावगम्भीरं गिरिशं प्रत्यभाषत ॥ १३ ॥

श्रीभगवानुवाच —

कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ।
पश्यता सुरकार्याणि हृते पीयूषभाजने ॥ १४ ॥

तत् तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ।
तत् कामिनां[2] च मन्तव्यं सङ्कल्पप्रभवोदयम् ॥ १५ ॥

श्रीशुक उवाच —

इति ब्रुवाणो भगवांस्तत्रैवान्तरधीयत ।
सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया ॥ १६ ॥

ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ।
विक्रीडतीं कन्दुकलीलया लसद्दुकूलपर्यस्तनितम्बमेखलाम् ॥

---

त्वदात्मकतया त्वद्व्याप्तत्वेनावगमो ज्ञानं ते तव नुतिः स्तुतिः स्यादित्यन्वयः । अनेन धर्मादिप्रवर्तकत्वेन तच्छब्दवाच्यत्वावगमः स्तुतिरित्युक्तं भवति ॥ १० ॥

तव स्तुत्या कोऽभिप्राय इति तत्राह—अवतारा इति । अस्तु दृष्टिस्ततः किमिदानीमपेक्षितमिति तत्राह—सोऽहमिति ॥ ११ ॥

सङ्कल्पप्रभवस्य कामस्योदयो यस्माद्वपुषस्तत् तथा । तद्वपुः कामिनां च मन्तव्यमिति प्रयोगो 'गन्तव्या ते वसतिरलका' इतिवत् कृद्योगे[3] षष्ठी । चशब्दादकामिनामिति ग्राह्यम् ॥ १५ ॥

लसन्ती नितम्बे पर्यस्ता परिवृता दुकूलोपरि मेखला यस्याः सा तथा ताम् ॥ १७ ॥

---

[1] येन मया सोऽहमिति योजना—गु. [2] कामिनीनाम्—ग. ।

[3] अनेन मूले कामिनां च कामिभिरकामिभिश्च मन्तव्यमित्यन्वयः सूच्यते—गु.

आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः पदे पदे ।
विभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥ १८ ॥

दिक्षु भ्रमत्कन्दुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ।
स्वकर्णविभ्राजितलोलकुण्डलोल्लसत्कपोलालकमण्डिताननाम् ॥१९ ॥

श्लथद्दुकूलां कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ।
विनिघ्नतीमन्यकरेण कन्दुकं विमोहयन्तीं जगदात्ममायया ॥ २० ॥

तां वीक्ष्य देव इति[1] कन्दुकलीलयेषद्-
व्रीडास्फुटस्मितविसृष्टकटाक्षमूढः ।
स्त्रीप्रेक्षणप्रतिसमीक्षणनिर्वृतात्मा
नात्मानमन्तिक उमां स्वगणांश्च वेद ॥ २१ ॥

तस्याः कराग्रात् स तु कन्दुको यदा गतो विदूरं तमनुव्रजन्त्याः ।
वासः ससूत्रं[2] लघु-मारुतोऽहरद् भवस्य देवस्य किलानुपश्यतः ॥

---

आवर्तनमवाङ्नमनम् उद्वर्तनमुन्नमनं ताभ्यां कम्पितयोरारब्धचञ्चलयोः स्तनयोः गुणतः प्रकृष्टहारस्य चोरुभरैः पदे पदे मध्यप्रदेशे भज्यमानामिव स्थिताम् । ततस्ततस्तत्र चलत्पदपल्लवं नयन्तीं प्रचालयन्तीम् ॥ १८ ॥

भ्रमतः कन्दुकस्य चापलैः चलभावैः प्रोद्विग्ने चञ्चले तारे कनीनिके ययोस्ते प्रोद्विग्नतारे, ते चायते च लोले च लोचने यस्याः सा तथा ताम् । स्वकर्णयोर्विभ्राजिते च लोलकुण्डले च स्वकर्णविभ्राजितलोलकुण्डले ताभ्याम् उल्लसद्भ्यां कपोलाभ्याम् अलकैश्च मण्डितमाननं यस्याः सा तथा ताम् ॥ १९ ॥

सन्नह्यतीं बध्नतीम् । आत्ममायया स्वरूपशोभावैचित्र्येण ॥ २० ॥ न्ती

व्रीडासहितेन स्मितेन स्फुटेन प्रफुल्लेन विसृष्टेन दिक्षु मुक्तेन च कटाक्षेण मूढः । स्त्रीप्रेक्षणसमीक्षणाभ्यां निर्वृत आह्लादित आत्मा यस्य स तथा सः ॥ २१ ॥

स्त्री रुद्रं पश्यति, रुद्रः स्त्रियं पश्यतीति भावेन तं कन्दुकमनुव्रजन्त्याः स्त्रियः ॥ २२ ॥

---

[1] इति एवंभूतया लीलया—गू.  [2] ससूत्रं सकाञ्चि लघु सूक्ष्मं वासो वस्त्रम् । लघुमारुत इति समस्तं वा । लघुश्चासौ मारुतश्च। अनेन लाघवमनिले उक्तम् । वस्त्रे तद्धृतेऽतिलाघवमर्पयतीति ततोऽपि श्लाघ्योऽयमर्थः–स.

एवं तां रुचिरापाङ्गीं दर्शनीयां मनोरमाम् ।
दृष्ट्वा तस्यां मनश्चक्रे विलज्जन्त्यां भवः किल ॥ २३ ॥

तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः ।
भवान्या अपि पश्यन्त्या गतह्रीस्तत्पदं ययौ ॥ २४ ॥

सा तमायान्तमालोक्य विवस्त्रा व्रीडिता भृशम् ।
निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत ॥ २५ ॥

तामन्वगच्छद् भगवान् भवः प्रव्यथितेन्द्रियः ।
कामस्य च वशं नीतः [1]करेणुमिव यूथपः । ॥ २६ ॥

सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ।
केशबन्ध उपानीय बाहुभ्यां परिषस्वजे ॥ २७ ॥

सोपगूढा भगवता करिणा करिणी यथा ।
इतस्ततः प्रसर्पन्ती विप्रकीर्णशिरोरुहा ॥ २८ ॥

आत्मानं मोचयित्वाऽङ्ग सुरर्षभभुजान्तरात् ।
प्राद्रवत् सा पृथुश्रोणी माया देवविनिर्मिता ॥ २९ ॥

तस्यासौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ।
प्रत्यपद्यत कामेन वैरिणेव[2] विनिर्जितः ॥ ३० ॥

---

विलज्जन्त्यां लज्जाभावं कुर्वन्त्याम् ॥ २३ ॥ नान्वतिष्ठत नानुकूलाभूत् ॥ २५ ॥
वैरिणा[3] पुरुषार्थविरोधिना, विरुद्धप्रेरणावता वा ॥ ३० ॥

---

[1] करेणुमिव करिणीमिव । ' करेणुरिभ्यां स्त्री नेभे ' इत्यमरः । इभ्यां हस्तिन्यां करेणुः स्त्रीलिङ्गा, इभे हस्तिनि ना पुल्लिङ्गः—गू. [2] वैंरिणा च—लि.

[3] वैरिणा पुरुषार्थविरोधिनेत्यनेन मूले मोक्षविषयकवैरो विरोधो यस्मादस्ति स वैरी तेनेति योगः सूच्यते । वैरिणा विरुद्धप्रेरणावता वेत्यनेन विरुद्धं च तत् इरं ईरणं च वीरं, वीरमेव वैरम् । तदस्यास्तीति वैरी तेनेति, अथ वा विगत ईरो वायुर्येषां ते वीरा वायुद्वेषिणस्तेषामिदं वैरं प्रेरणमस्यास्तीति वैरी, तेनेति योगः सूच्यते । एतेन कामः कदाचिद् रुद्रान्तःप्रविष्टकलिशत्रुरेव, न रुद्रशत्रुरिति सूच्यते । उभयोर्मुक्तियोग्यत्वाविशेषात् । मूले पदवीं प्रत्यपद्यत इवेति इवशब्दस्य क्रियायामन्वयः । वस्तुतो न प्रत्यपद्यतेत्यर्थः । ' यतो वाचो निवर्तन्ते ' इति श्रुतेः—गू.

तस्यानुधावतो रेतश्चस्कन्दामोघरेतसः ।
शुष्मिणो यूथपस्येव वासितामनुधावतः ॥ ३१ ॥

यत्र यत्रापतन्मह्यां रेतस्तस्य महात्मनः ।
तानि रुद्रस्य हेम्नश्च क्षेत्राण्यासन् महीपते ॥ ३२ ॥

सरित्सरःसु शैलेषु वनेषूपवनेषु च ।
यत्र क्वचासन् ऋषयस्तत्र सन्निहितो हरः ॥ ३३ ॥

स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ।
जडीकृतं नृपश्रेष्ठ सन्न्यवर्तत कश्मलात् ॥ ३४ ॥

अथावगतमाहात्म्य आत्मनो जगदात्मनः ।
अपरिज्ञेयवीर्यस्य न मेने तदुदाहृतम्[1] ॥ ३५ ॥

तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ।
उवाच परमप्रीतो बिभ्रत् स्वां पौरुषीं तनुम् ॥ ३६ ॥

श्रीभगवानुवाच —

दिष्टया त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ।
यतो दुस्तरया स्वैरं मोहितोऽस्यङ्ग मायया ॥ ३७ ॥

---

शुष्मिणो वीर्यवतः । वासितां मैथुनेच्छावतीं करिणीम् ॥ ३१ ॥
रुद्रस्य क्षेत्राणि । हेम्नश्च क्षेत्राणि स्वर्णाकाराण्यासन् ॥ ३२ ॥
क्वच यत्र क्वच सरिदादिषु रेतःक्षेत्रेषु ऋषय आसन्, तत्र भवश्च सन्निहितोऽभवत् ॥ ३३ ॥
बुद्धिभ्रंशकरं कश्मलं निवृत्तमिति यस्माद् तस्माच्चदुदाहृतम् । तां ग्राम्योक्तिम्[2] ॥ ३४–३५ ॥
अविक्लवं स्वस्थाम् । अव्रीडं कामजनकलज्जारहितम्[3] ॥ ३६ ॥
स्वां निष्ठां भक्तिलक्षणाम् । आत्मना मनसा । कुत इति तत्राह — यत इति ॥ ३७ ॥

---

[1] तत् उत् आहृतमिति पदानि । आत्मन इतस्तत आहृतम् आहरणं पारवश्येन नयनं यत् तत् उत् उत्कृष्टं न मेने। अहं कियान् कियदिदमिति मेने । महामाहात्म्यस्य (हरेः) इदं नाद्भुतमिति भावः—स.
तदिहाद्भुतम्–इति छलारीपाठः । इह तत् स्वस्य नारायण्यनुधावनमद्भुतं न मेने इति तेषामाशयः ।

[2] कौतूहलाय दैत्यानामित्यादिभगवदुक्तिं ग्राम्योक्तिं न मेन इत्यर्थः ।

[3] अविक्लवम् अविह्वलम् । अव्रीडं परपारवश्येन भ्रमतो मम किमिदमिति वर्जितलज्जम् ।

को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ।
तांस्तान् विसृजतीं भावान् दुस्तरामकृतात्मभिः ॥ ३८ ॥

सेयं गुणमयी माया न त्वामभिभविष्यति ।
मया समेता कालेन कालरूपेण भागशः ॥ ३९ ॥

श्रीशुक उवाच —

एवं भगवता राजन् श्रीवत्साङ्केन सत्कृतः ।
आमन्त्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४० ॥

आत्मांशभूतां तां मायां भवानीं भगवान् भवः ।
शंसतामृषिमुख्यानां प्रीत्या तुष्टावुवाच ह[1] ॥ ४१ ॥

अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ।
अहं कलानामृषभो विमुह्ये यया वशोऽन्ये किमुतास्वतन्त्राः ॥ ४२ ॥

यं मामपृच्छस्त्वमुपेत्य योगात् समाः सहस्रान्त उपारतं वै ।
स एष साक्षात् पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४३ ॥

श्रीशुक उवाच —

इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः ।
सिन्धोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥ ४४ ॥

एतन्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ।
यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम् ॥ ४५ ॥

---

दुरन्ते जीवराशौ कश्चिन्मायां तरेत्, वैचित्र्यादिति तत्राह—ऋते त्वदिति । विषये विषक्तः । ये ये विषयपाशबन्धकास्तांस्तान् भावान् (कामान्) 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' इति श्रुतेः । मायातरणपटूनां सद्भावात् कथं को न्वित्याक्षिप्यत इति तत्राह— दुस्तरामिति ॥ ३८ ॥

मदनुग्रहवतः सुतरेत्याह— सेऽयमिति । भागश एकदेशेनापि ॥ ३९ ॥

उत्तमश्लोकस्य हरेर्गुणानुवर्णनं समस्तसंसारपरिश्रमविनाशनमिति यद् यस्मात् तस्मान्निरन्तरमेत-

---

[1] शंसतां संस्तुवतामृषिमुख्यानां सतां भगवान् भवो भवानीं विलक्ष्य आत्मांशभूतां परमात्मन एकदेशरूपिणीम् (स्वरूपांशभूतां) तां मायां प्रीत्या मां किमिति स्तुवन्ति भवन्तस्तां स्तुवतेति स्वयं तां मायां तुष्टाव अस्तौषीत्-स.

असदविषयमङ्घ्रिं भावगम्यं प्रपन्ना-
नमृतममरवर्यानाशयत् सिन्धुमध्यम् ।
कपटयुवतिवेषो मोहयन् यः सुरारीं-
स्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥ ४६ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे एकादशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

श्रीशुक उवाच —

मनुर्विवस्वतः पुत्रः श्राद्धदेव[1] इति श्रुतः ।
सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥

इक्ष्वाकुश्च नभश्चैव धृष्टः शर्यातिरेव च ।
नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥

---

दनुशृण्वतः कीर्तयतः पुरुषस्य समुद्यमः समीचीनः प्रयत्नो जातु न रिष्यते न नश्यति । रीङ् क्षये ॥४५॥

निरन्तरमनुस्मरणार्थं पूर्वोक्तगुणविशिष्टत्वेन तं श्रीनारायणं नमति— **असदविषयमिति** । यो भावेन भक्त्या गम्यं प्राप्यं, चासतामभक्तानामविषयमङ्घ्रिं प्रपन्नानमरवर्यान् सिन्धोर्मथनोद्भूतममृत-माशयदपाययत् । कीदृशः ? कपटयुवतिवेषः । सुरारीन् असुरान् मोहयन् उपसृतानां शरणं गतानां पुंसां कामपूरम् अभीष्टदं तमिमं श्रीनारायणं नतोऽस्मीत्यन्वयः । अनेनैवंविधे भगवति भक्तिः कर्तव्येति सिद्धमित्युक्तं भवति ॥ ४६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्यैकादशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

प्रासङ्गिकं समाप्यावशिष्टश्राद्धदेवादिमनुकथाकथनेन हरेर्माहात्म्यमेव वर्णयति कतिपयैरुत्तरैरध्यायैः ।

तत्र श्राद्धदेवः कस्य पुत्र इति तत्राह— **मनुरिति** ॥ १ ॥

श्राद्धदेवस्यापत्यानि, तत्र देवनामानि, सप्त ऋषिनामानि, हरेरवतारविशेषं च वक्ति— **इक्ष्वाकुरित्यादिना** ॥ २ ॥

---

[1] षण्णवतिश्राद्धान्तर्भूतचतुर्दशमन्वादिश्राद्धानां मध्ये एकस्य मन्वादिश्राद्धस्यामिमानिदेवतात्वाच्छ्राद्धदेवनामा । अस्य वर्तमानकालीनमनुत्वात् तथा प्रसिद्धिः न त्वितरेषाम्—गु.

करूषश्च पृषध्रश्च[1] दशमो वसुमान् स्मृतः ।
मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ॥ ३ ॥

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
अश्विनावृभवो राजन्निन्द्रस्तेषां पुरन्दरः ॥ ४ ॥

कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥

अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ।
आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥

संक्षेपतो मयोक्तानि सप्तमन्वन्तराणि ते ।
भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्याऽन्वितानि च ॥ ७ ॥

विवस्वतश्च द्वे भार्ये विश्वकर्मसुते उभे ।
संज्ञा छाया च राजेन्द्र ये प्रागभिहिते तव ॥ ८ ॥

तृतीया वडवा नाम[2] तासां संज्ञासुतास्त्रयः ।
यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु ॥ ९ ॥

सावर्णिस्तपती कन्या भार्या संवरणस्य या ।
शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥ १० ॥

अष्टमे अन्तरे याते सावर्णिर्भविता मनुः ।
निर्मोहविरजस्काद्याः सावर्णेस्तनया नृप ॥ ११ ॥

तत्र देवाः सुतपसो विरजा अमितप्रजाः ।
तेषां विरोचनसुतो बलिरिन्द्रो भविष्यति ॥ १२ ॥

---

मन्दानां प्रमेयविज्ञानार्थं उत्तरमन्वतराणि प्रतिजानीते—**भविष्याणीति** ॥ ७ ॥
तासां संज्ञाछायावडवानां मध्ये संज्ञासुता एत इत्याह—**यम इति** ॥ ९ ॥

---

[1] वृषध्रश्च—स.    [2] तृतीयां वडवामेके—स.दु. । तृतीयां वडवामेक इत्यत्र संज्ञा यथाऽद्या तथा वा वडवाऽप्याद्यैवेत्यपरे आहुरित्यपि द्रष्टव्यम् । सैव भूत्वा तु वडवा नासत्याविति षष्ठस्कन्धे संज्ञयैव वडवारूपं गृहितमित्युक्तत्वात् । भेदाभावाद् उभयोरप्याद्यत्वमिति केषाञ्चित्पक्षः । रूपान्तराद् वडवायास्तृतीयात्वमिति अन्येषां पक्षः । विवक्षाभेदेन पक्षद्वयमपि सम्मतम् । शिष्यप्रसिद्ध्यर्थमेकोऽपर इत्युक्तमिति—दु.

दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ।
राद्धमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥

योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ।
निवेशितोऽधिके स्वर्गादधुनाऽऽस्ते स्वराडिव ॥ १४ ॥

गालवो दीप्तिमान् रामो द्रोणपुत्रः कृपस्तथा ।
ऋष्यशृङ्गः पिताऽस्माकं भगवान् बादरायणः ॥ १५ ॥

इमे सप्तर्षयस्तत्र भविष्यन्ति स्वयोगतः ।
इदानीमासते राजन् स्वे स्वे आश्रममण्डले ॥ १६ ॥

देवगुह्यां[1] सरस्वत्यां सार्वभौमपतिः[2] प्रभुः ।
स्थानं पुरन्दराद् हृत्वा बलये दास्यतीश्वरः ॥ १७ ॥

---

[3]बलेरिन्द्रपदानन्तरं का सिद्धिरिति तत्राह—दत्त्वेमामिति । पदत्रयं[4] याचमानाय विष्णवे इमां पृथिवीं दत्वा राद्धं सिद्धमिन्द्रपदं[5] हित्वा यो बलिस्ततः सिद्धिं मुक्तिमवाप्स्यतीत्यन्वयः ।

इदानीं कुत्रास्त इत्यत आह—य इति । स्वराडिव इन्द्र इव[6] ॥ १४ ॥

स्वयोगतः[7] अच्युतनिष्ठालक्षणयोगात् । इदानीं कुत्रासत इति तत्राह—इदानीमिति ॥ १६ ॥

स्थानं स्वर्गम्[8] ॥ १७ ॥

---

[1] देवगुह्यामिधब्राह्मणस्येयं देवगुही तस्याम् । सरस्वत्यां तन्नाम्न्यां, नाम्ना सार्वभौमपतिरित्यष्टमे मन्वन्तरे जातः । देवगुह्यात् सरस्वत्यामित्यपि पाठः । पूर्वमष्टममनुऋषिदेवादिकथनावसरे, भगवदवतारस्यानुक्तत्वादत्रैवोक्त इति हृदयम्—गू. [2] सार्वभौम इति—स.

[3] बलेरष्टमे मन्वन्तरे यदिन्द्रपदप्राप्तिस्तदनन्तरं तत्पदप्राप्त्यनन्तरं, का सिद्धिः कस्मादाप्तासिद्धिरिति शङ्कायां तत्राऽऽहेति टीकायोजना—गू. [4] सप्तममन्वन्तरे पदत्रयं याचमानाय—स.

[5] इन्द्रपदमष्टममन्वन्तरे हित्वा यो बलिस्ततः सिद्धिमवाप्स्यतीति च टीका योजनीया । एवं मूलं च योज्यम् । अन्यथा बलेरेककालावच्छेदेन भूदानकरणे इन्द्रपदानुभवतत्परित्यागपूर्वकसिद्ध्यनुपपत्तिः प्रसज्येत । बलिरिन्द्रो भविष्यतीति श्लोकविरोधश्च स्यात्—गू.

[6] अधुना वैवस्वतमन्वन्तरे । वैवस्वतेऽन्तरेऽमृतमथनकाले इन्द्रेण पातितः शुक्रस्पर्शात उपलब्धेन्द्रिय इन्द्रं जित्वा त्रैलोक्याधिपतिरभूत् । तदा स्वक्रतुमागत्य याचमानाय वामनाय सर्वस्वं वितीर्य तत्पुण्येनैव पुनरष्टमे मन्वन्तरे पुनरिन्द्रपदमनुभूयान्ते मुक्तिमेष्यति स इति वर्णयन्ति । तावत्पर्यन्तं सुतले वासस्तस्येति च—स.

[7] स्वयोगतः स्वसमाध्यादिना—स. [8] देवगुह्यात् तन्नाम्न ऋषेः सरस्वत्यां तत्सत्यां सार्वभौम इति नामवान् (हरिरीश्वरः) पुरन्दरात् स्वर्गं हृत्वा बलये दास्यति—स.

नवमो दक्षसावर्णिर्मनुर्वरुणसम्भवः ।
भूतकेतुर्दीप्तकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥

परा मरीचिगर्भाद्या देवा इन्द्रोऽद्भुतः स्मृतः ।
द्युतिमत्प्रमुखास्तत्र भविष्यन्त्यृषयस्ततः ॥ १९ ॥

आयुष्मतोऽम्बुधारायामृषभो भगवान् किल ।
भविता येन संत्रातो त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥

दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ।
तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥

तत्रापि जन्म भविता हरेर्विश्वसृजां गृहे ।
श्रीमूर्तिरिति विख्यातो येनाप्यायेत वै जगत्[1] ॥ २२ ॥

[2]हविष्मान् सुकृतः सत्यो जयो मूर्तिस्तदा द्विजाः ।
सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः ॥ २३ ॥

विश्वक्सेनो विषूच्यां तु शम्भोः सख्यं करिष्यति ।
जातः शान्तस्तु भगवान् गृहे विश्वसृजां विभुः ॥ २४ ॥

मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ।
अनागतस्तत्सुताश्च सत्यधर्मादयो दश ॥ २५ ॥

विहङ्गमाः कामगमा निर्वाणरुचयः सुराः ।
इन्द्रश्च वैधृतिस्तेषामृषयश्चारुणादयः ॥ २६ ॥

---

अम्बुधारायां स्त्रियाम् । येन ऋषभेण संत्रातोऽद्भुतो नामेन्द्रः ॥ २० ॥
शम्भोरिन्द्रस्य । शान्तः शान्ताख्यः[3] ॥ २४ ॥ अनागतो भविष्यन् ॥ २५ ॥

---

[1] श्लोकेऽस्मिन् श्रीमूर्त्याख्यहर्यवतारो वर्ण्यते । किन्त्वयं श्लोकः सत्यधर्मतीर्थप्रभृतिभिर्न परिगणितः । सर्वैरपि टिप्पणीकारैः, परैः श्रीधरादिभिश्च न व्याख्यायि । न दृश्यते च क्वचित् कोशेषु ।

[2] केषांचित्क्रमामान्याह–हविष्मानिति—स.

[3] विश्वसृजां गृहे विषूच्यां पत्न्यां भगवान् विभुर्विश्वक्सेनो हरिः शान्तनामाऽवतीर्य शम्भोरिन्द्रस्य सख्यं करिष्यतीति सत्यधर्मतीर्था लिङ्गेरीश्रीनिवासाचार्याश्चाभिप्रयन्ति । शेषाचार्यास्तु विश्वक्सेनाद् विषूच्यामिति पाठमाद्रियन्ते ।

आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः ।
वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥ २७ ॥

भविता मेरुसावर्णी राजन् द्वादशमो मनुः ।
देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २८ ॥

ऋतधामा च तत्रेन्द्रो देवाश्च हरितादयः ।
ऋषयश्च तपोमूर्तितपश्चाग्नीध्रकादयः[1] ॥ २९ ॥

स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ।
अन्तरं सत्यमहसः सूनृतायाः सुतो विभुः[2] ॥ ३० ॥

मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ।
चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३१ ॥

देवाः सुकर्मसुत्रामसंज्ञा इन्द्रो दिवस्पतिः ।
निर्मोकतत्त्वदर्शाद्या भविष्यन्त्यृषयस्तदा ॥ ३२ ॥

देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ।
योगेश्वरो हरेरंशो बृहत्यां सम्भविष्यति[3] ॥ ३३ ॥

मनुर्वा इन्द्रसावर्णिश्चतुर्दशम एष्यते ।
जन्तुभीरववर्याद्या इन्द्रसावर्णिवीर्यजाः ॥ ३४ ॥

विचित्राश्चाक्षुषा देवाः शुचिरिन्द्रो भविष्यति ।
अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ॥ ३५ ॥

सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ।
वितानायां महाराज क्रियातन्तून् वितायिता[4] ॥ ३६ ॥

---

दिवस्पतिः नाम्ना ॥३२॥ क्रियातन्तून् क्रियासमुदायान् । वितायिता विस्तारं कारयिता ॥३६॥

---

[1] द्वादशमे रुद्रसावर्णिमन्वन्तरे ऋतधामाख्येन्द्रो हरितादिनामानश्च देवास्तपोमूर्तितपश्चाग्नीध्रकादिनामानो रुद्रसावर्णिसप्तर्षयः—लि.

[2] स्वधामाख्यो हरेरंशः । तन्मनोरन्तरम् । सत्यमहसः पुंसः सूनृतायाः सुतः—स.

[3] देवहोत्रस्य बृहत्यां हरेरंशो योगेश्वरस्तन्नामा तनयो दिवस्पतेरिन्द्रस्य उपहर्ता उपकर्ता भविष्यति—स.

[4] सत्रायणस्य वितानायां वनितायाम् । हरिर्बृहद्भानुरिति नामा तनयः सन् । क्रियातन्तून् क्रियाकलापान् वितायिता—स.

राजन् चतुर्दशैतानि त्रिकालानुगतानि ते ।
प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः[1] ॥ ३७ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

राजोवाच —

मन्वन्तरेषु भगवान् यथा मन्वादयस्त्विमे ।
यस्मिन् कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥

ऋषिरुवाच —

मनवो मनुपुत्राश्च मुनयश्च महीपते ।
इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥

यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ।
मन्वादयो जगद्यात्रां नयन्त्याभिः प्रचोदिताः ॥ ३ ॥

---

त्रिकालानुगतानि अतीतवर्तमानभविष्यत्संज्ञांस्त्रिकालाननुवर्तमानानीति । 'त्रिलोकानुगतानि' इति पाठे स्पष्टोऽर्थः । ते तव मितः प्रमाणीकृतः ॥ ३७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य द्वादशोऽध्यायः

॥ अथ त्रयोदशोऽध्यायः ॥

यथा कथम् । प्रवृत्त इति शेषः । ये इमे मन्वादयो येन पुरुषेण यस्मिन् कर्मणि नियुक्ताः प्रेरिता वर्तन्ते तत् सर्वम् ॥ १ ॥

कोऽयं पुरुष इति तत्राह—यज्ञादय इति । मन्वादिकालमारभ्य तेन यज्ञनाम्ना हरिणा प्रचोदिता मन्वादयो जगद्यात्रां जगत्स्थितिं नयन्तीत्यन्वयः[2] ॥ ३ ॥

---

[1] महायुगसहस्रेण पर्ययः परिवर्तो यस्य स तथा—गू.

[2] आभिर्यज्ञादिभगवत्तनुभिः प्रचोदिता मन्वादयः स्वायम्भुवादयः जगद्यात्रां जगज्जीवनोपायं कुर्वन्ति—स.

चतुर्युगान्ते कालेन ग्रस्ताञ्छ्रुतिगणान् यथा ।
तपसा ऋषयोऽपश्यन् यतो धर्मः सनातनः ॥ ४ ॥

ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ।
युक्ताः सञ्चारयन्त्यद्धा स्वे स्वे काले महीं नृपाः ॥ ५ ॥

पालयन्ति प्रजापाला यावदन्तं विभागशः ।
यज्ञभागभुजो देवा ये च तत्रानुकीर्तिताः ॥ ६ ॥

इन्द्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ।
भुञ्जानः पाति लोकांस्त्रीन् कामं लोके प्रवर्षति ॥ ७ ॥

ज्ञानं चातुर्युगं ब्रूते हरिः सिद्धस्वरूपधृक् ।
ऋषिरूपधरः कर्म योगं योगेशरूपधृक् ॥ ८ ॥

सर्गं प्रजेशरूपेण दस्यून् हन्ति स्वराड्वपुः ।
कालरूपेण सर्वेषामभवाय पृथग्गुणः ॥ ९ ॥

स्तूयमानो जनैरेभिर्मायया नामरूपया ।
विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥

---

यतः श्रुतिगणेभ्यः सनातनो धर्मः सिद्धः ऋषयस्तांञ्छ्रुतिगणान् यथावत् तपसा, पश्यन् ॥ ४ ॥

ततस्तद्युक्तविधिना हरिणा चोक्ता मनवस्तं चतुष्पादं धर्ममद्धा सञ्चारयन्ति ॥ ५ ॥

प्रजापाला नृपाश्च स्वस्वकाले विभागशो यावदन्तं कर्मक्षयपर्यन्तं महीं पालयन्तीत्यन्वयः ॥६॥

सिद्धस्वरूपः ज्ञानमुपदिशति, ऋषिरूपधरो हरिः कर्म योगेश्वररूपधृग् योगम् ॥ ८ ॥

प्रजापतिरूपेण सर्गं करोति । स्वराड्वपुः क्षत्रवपुः दस्यून् हन्ति । पृथग्गुणः[1] अयथार्थज्ञान-जनकतमोगुणप्रवर्तकः ॥ ९ ॥

एभिर्ऋष्यादिभिः स्तूयमानो दृश्यते । नामरूपरहिततया अदृश्यत्वादिस्वभावविशिष्टया मायया अव्यक्तशब्दवाच्यया मोहितात्मभिः जनैः कल्पितैर्नानादर्शनैरद्वैतादिनानाविधशास्त्रैर्न दृश्यते न ज्ञायते[2] । चशब्दादद्वैतज्ञानेन दृश्यत इति ग्राह्यम् । 'अन्यमीशमस्य महिमानमिति वीतशोकः' इति श्रुतेः ॥१०॥

---

[1] पृथग्गुणः कार्यार्थमुपात्तसत्वादिगुणः, अयथार्थज्ञानजनकतमोगुणप्रवर्तको वा—स.

[2] अनामरूपया मायया स्वशक्त्या विमोहितात्मभिर्नानादर्शनैः नानाविधदुर्दर्शनवद्भिः न दृश्यते न ज्ञायते । चशब्दः (सद्दर्शनेन) दृश्यत इति समुच्चायकः—स.

एतत् कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ।
यत्र मन्वन्तराण्याहुश्चतुर्दश पुराविदः ॥ ११ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

राजोवाच —

बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ।
भूत्वेश्वरः कृपणवल्लब्धार्थोऽपि बबन्ध तम् ॥ १ ॥

एतद् वेदितुमिच्छामो महत् कौतूहलं हि नः ।
याञ्चेश्वरस्य पूर्णस्य बन्धनं चाऽप्यनागसः ॥ २ ॥

श्रीशुक उवाच —

पराजितश्रीरसुभिश्च हापितो इन्द्रेण राजन् भृगुभिः स जीवितः ।
सर्वात्मना तानभजद् भृगून् बलिः शिष्यो महान् स्वार्थनिवेदनेन ॥

---

उपसंहरति — एतदिति । पुराविदो यत्र यस्मिन् कल्पे[1] चतुर्दशमन्वन्तराण्याहुस्तस्य कल्पस्यैतत् प्रमाणमुक्तम् । यस्मिन् अवान्तरमन्वन्तराण्याहुस्तस्य विकल्पस्यैतत्प्रमाणं परिकीर्तितम्, शास्त्रान्तर इति शेषः[2] । इति कल्पविकल्पस्य कल्पभेदस्येति वा ॥ ११ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

लब्धार्थः स्वीकृतत्रैलोक्यः ॥ १ ॥ पूर्णस्य ईश्वरस्य याञ्चा, अनागसो बलेर्बन्धनं यद् एतत् ॥ २ ॥ असुभिः प्राणैर्हापितो विजितः, स्वार्थनिवेदनेन सर्वस्वसमर्पणेन अभीष्टार्थविज्ञापनेन वा तान् भृगून् सर्वात्मना अभजत् ॥ ३ ॥

---

[1] ब्रह्मणो दिनकल्प इत्यर्थः । [2] कल्पविकल्पस्य कल्पस्यावान्तरकल्पस्य — स. विकल्पो मन्वन्तरम् । यत्र विकल्पे मन्वन्तरे मन्वन्तराण्याहुरित्यसङ्गतं भवति । अतो यत्र विकल्पे मन्वन्तरे मन्वन्तराणि अवान्तर-मन्वन्तराणि, मनुपुत्राद्युपभुक्तयुगानि अन्तर्भवन्तीत्याहुः तस्य विकल्पस्यैतत् प्रमाणं परिकीर्तितमिति गूढार्थ-विचारिणीकारा योजयामासुः ।

तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन् विश्वजितं त्रिलोकम् ।
जिगीषमाणं विधिनाऽभिषिच्य महाभिषेकेण महानुभावाः ॥ ४ ॥

ततो रथः काञ्चनपट्टनद्धो हयाश्च हर्यश्वतुरङ्गवर्णाः ।
ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥ ५ ॥

धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ।
[1]पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥ ६ ॥

एवं स विप्रार्जितयोधनार्थस्तैः कल्पितस्वस्त्ययनोऽथ विप्रान् ।
प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥

अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ।
सुस्रग्धरोऽथ सन्नद्धः धन्वी खड्गी धृतेषुधिः ॥ ८ ॥

हेमाङ्गदलसद्बाहुः स्फुरन्मकरकुण्डलः ।
रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥

तुल्यैश्वर्यवयःश्रीभिः स्वयूथैर्दैत्ययूथपैः ।
पिबद्भिरिव खं दृग्भिर्दहद्भिः [2]परिधीनिव ॥ १० ॥

वृतो विकर्षन् महतीमासुरीं ध्वजिनीं विभुः ।
ययाविन्द्रपुरीमृद्धां कम्पयन्निव रोदसीम् ॥ ११ ॥

रम्यामुपवनोद्यानैः श्रीमद्भिर्नन्दनादिभिः ।
कूजद्विहङ्गमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥

---

विश्वजिता सर्वस्वदक्षिणात्मना यागेन । महाभिषेकेण मन्त्रपूतस्नानविशेषेण ॥ ४ ॥

हर्यश्वस्य इन्द्रस्य तुरङ्गाणां वर्णो येषां ते तथा इन्द्राश्ववर्णसदृशवर्णा इत्यर्थः । इद्धाद् दीप्तात् ॥ ५ ॥ पुरटोपनद्धं सुवर्णबद्धम् । अरिक्तौ बाणैरशून्यौ, अक्षयसायकावित्यर्थः । जलजं शङ्खम् ॥६॥ योधनार्थो युद्धसाधनम् । विप्राद् भृगोः[3] ॥ ७ ॥ सुस्रग्धरो शोभनमालाधरः ॥ ८ ॥ धिष्ण्यस्थः आहवनीयादिस्थाने स्थितः । हव्यवाडग्निः ॥ ९ ॥

---

[1] पितामहः प्रह्लादः । [2] परिधीन् दिशः । [3] विप्रैः शुक्रादिभिः—शे. लि.

प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ।
हंससारसचक्राह्वकारण्डवकुलाकुलाः ॥ १३ ॥

नलिन्यो यत्र क्रीडन्ति प्रमदाः सुरसेविताः ।
आकाशगङ्गया देव्या वृतां परिखभूतया ॥ १४ ॥

प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ।
रुक्मपट्टकपाटैश्च द्वारैः स्फाटिकगोपुरैः ॥ १५ ॥

जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ।
सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ १६ ॥

शृङ्गाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ।
यत्र नित्यवयोरूपाः श्यामा विरजवाससः ।
भ्राजन्ते रूपवन्नार्य अर्चिर्भिरिव वह्नयः ॥ १७ ॥

सुरस्त्रीकेशविभ्रष्टनवसौगन्धिकस्रजाम् ।
यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥ १८ ॥

हेमजालाक्षनिर्गच्छद्धूमेनागुरुगन्धिना ।
पाण्डुरेण प्रतिच्छन्नमार्गे यान्ति सुरस्त्रियः ॥ १९ ॥

मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलिभीभिरावृताम् ।
शिखण्डिपारावतभृङ्गनादितां वैमानिकस्त्रीकलगीतमङ्गलाम् ॥ २० ॥

---

यत्र इन्द्रपुर्याम् । यत्र नलिनीषु । परिखाभूतया दीर्घिकावद् वर्तमानया ॥ १४ ॥
पट्टसुपरिबन्धः ॥ १५ ॥ [1]न्यर्बुदैरित्युपलक्षणम्, [2]अनेकैरित्यर्थः ॥ १६ ॥
शृङ्गाटकैश्चत्वरमण्डपैः । वज्ररत्नविद्रुमखचितवेदिभिः । श्यामाः षोडशवर्षाः ॥ १७ ॥
सौगन्धिकैः स्थलचम्पकैः रचिताः स्रजः, तासामामोदं परिमलमुपादाय ॥ १८ ॥
जालाक्षं गवाक्षम् ॥ १९ ॥

---

[1] लक्षं च नियुतं चैव कोटिरर्बुदमेव च । वृन्दं च न्यर्बुदं चैव शङ्खपद्मौ च सागरः । इत्यभिधानात् सहस्रकोटिसंख्याकैरित्यर्थः । [2] न्यर्बुदेभ्योऽप्यधिकैरिति भावः ।

मृदङ्गशङ्खानकदुन्दुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ।
नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितग्रहाम् ॥ २१ ॥

यां न व्रजन्त्यधर्मिष्ठाः खला भूतद्रुहः शठाः ।
मानिनः कामिनो लुब्धा एभिर्हीना व्रजन्त्युत ॥ २२ ॥

तां देवधानीं स वरूथिनीपतिर्बहिः समन्ताद् रुरुधे पृतन्यया ।
आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुञ्जन् भयमिन्द्रयोषिताम् ॥

मघवांस्तदभिप्रेत्य बलेः परममुद्यमम् ।
सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥

भगवन्नुद्यमो भूयान् बलेर्नः पूर्ववैरिणः ।
अविषह्यमिदं[1] मन्ये केनासीत् तेजसा समः ॥ २५ ॥

नैनं कश्चित् कुतो वापि प्रतिवोढुमधीश्वरः ।
पिबन्निव मुखेनेदं लिहन्निव दिशो दश ।
दहन्निव दिशो[2] दृग्भिः संवर्ताग्निरिवोत्थितः ॥ २६ ॥

ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः ।
ओजः सहो बलं तेजो यत एष समुद्यमः ॥ २७ ॥

---

जितग्रहां निर्जितसूर्यादिग्रहाम् ॥ २१ ॥ एभिरधर्मादिभिः ॥ २२ ॥ पृतन्यया पृतनया ॥ २३ ॥ असौ बलिस्तेजसा केन ब्रह्मणा समः[3] । केन केनापीति वा ॥ २५ ॥

प्रतिवोढुं प्रतियोद्धुं वारयितुं वा । इदं जगद् यतः[4] ॥ २६ ॥

ओजआदय एष समुद्यमश्च यतः मद्रिपोः एतस्य दुर्धर्षत्वस्य कारणं ब्रूहीत्यन्वयः[5] ॥ २७ ॥

---

[1] इमम्—लि.शे. [2] नभो—शे.लि. । [3] अयं बलिः केन तेजसा तपआदिरूपेण असमः समानरहितः आसीत्—लि. । केनासीत् तेजसोर्जित इति शे पाठः स्फुटार्थः ।

[4] यतो बलिर्मुखेनेदं जगत् पिबन्निव, जिह्वया दशदिशो लिहन्निव दृष्टिभिरन्तरिक्षं दहन्निव प्रलयाग्निरिवोत्थितः, अत एनं बलिं कश्चिदपि वीरः कस्मादपि साधनाद् प्रतियोद्धुं न समर्थ इत्यन्वयः ।

[5] यतो दुर्धर्षत्वान्मद्रिपोरेष समुद्यमस्तस्यैतस्य दुर्धर्षत्वस्य कारणं यदोजः सहो बलं तेजस्तस्यौजआदेः कारणं ब्रूहीति । एतेन दुर्धर्षत्वस्य कारणमोजआदिकमिति सिद्धत्वात् दुर्धर्षत्वस्य कारणं ब्रूहीत्यनुपपन्नम् । यत ओजआदेः समुद्यमस्तदोजआदिकं ब्रूहीति चानुपपन्नम् । ओजआदिकं कारणं समुद्यमः कार्यमिति वक्तव्यार्थस्य स्वेनैवोक्तत्वादिति दूषणं परास्तम् । कारणमित्यस्यावृत्तिमङ्गीकृत्य तस्येत्यस्य द्विवारं शेषमङ्गीकृत्य यदित्यस्य शेषमङ्गी-

गुरुरुवाच —

जानामि मघवन् शत्रोरुन्नतेरस्य कारणम् ।
शिष्यायोपभृतं तेजो गुरुभिर्ब्रह्मवादिभिः[1] ॥ २८ ॥

भवद्विधो[2] भवान् वापि वर्जयित्वेश्वरं हरिम् ।
नास्य शक्तः पुरः स्थातुं कृतान्तस्य यथा जनाः ॥ २९ ॥

तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् ।
यात कालं प्रतीच्छन्तो[3] यतः शत्रोर्विपर्ययः ॥ ३० ॥

एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रमः ।
एषामेवावमानेन सानुबन्धो विनङ्क्ष्यति ॥ ३१ ॥

एवं सुमन्त्रितार्थास्ते गुरुणाऽर्थानुदर्शिना ।
हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥ ३२ ॥

देवेष्वतिविलीनेषु बलिर्वैरोचनः पुरीम् ।
देवधानीमधिष्ठाय वशं निन्ये जगत्त्रयम् ॥ ३३ ॥

तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः
शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥

ततस्तदनुभावेन भुवनत्रयविश्रुताम् ।
कीर्तिं दिक्षु वितन्वानः स रेज उरुराडिव ॥ ३५ ॥

---

गुरुभिर्भृगुभिर्यतः कारणात् ॥ २८ ॥ त्रीणि विष्टपानि महरादिस्थानानि यस्मिन् तत् तथा ॥ ३० ॥ एष बलिर्विप्राणां भृगूणां सकाशाद् उत्तरोत्तरबलं, यस्य स तथा । कुत इति तत्राह— **सम्प्रतीति** ॥ ३१ ॥

---

कृत्य समुच्चये दुर्धर्षत्वं कारणं, दुर्धर्षत्वे ओजआदिकं कारणं मया न ज्ञायते । अत ओजआदिकारणं ब्रूहीत्यर्थं इत्यभ्युपगमात्—दु. [1] ब्रह्मवादिभिर्गुरुभिरुपभृतं पूर्वतेज ओजः सहो बलं शिष्याय दत्तमिति—दु.

[2] भवद्विधो भवतां विशेषेण धारको वा । एतेन भवत्सदृश इत्यर्थकेन भवद्विध इत्यनेन हरिप्राप्तेरभावात् , ईश्वरं हरिं वर्जयित्वेति कथनमनुपपन्नमिति दूषणं परिहृतम् । भवद्विध इत्यस्य भवतां विशेषधारकार्थकत्वेन हरिप्राप्ते-स्सत्त्वात । यद्यपि ब्रह्मादयो बल्यपेक्षया बलाढ्याः । तथाऽपि हर्याज्ञाभावेन बलेः पुरः स्थित्वा बलिनिग्रहस्य कर्तुमशक्यत्वाद् भवतां विशेषेण धारका ब्रह्मादयोऽपि बलेः पुरः स्थातुं शक्ता नेत्युक्तम्—दु.

[3] प्रतीक्षन्त—स.लि.

बुभुजे च श्रियं ऋद्धां द्विजदेवोपलम्भिताम् ।
कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३६ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे चतुर्दशोऽध्यायः ॥

॥ अथ पञ्चदशोऽध्यायः ॥

श्रीशुक उवाच —

एवं पुत्रेषु नष्टेषु[1] देवमाताऽदितिस्तदा ।
हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥
एकदा कश्यपस्तस्या आश्रमं भगवानगात् ।
निरुत्सवं निरानन्दं समाधेर्विरतश्चिरात् ॥ २ ॥
स पत्नीं दीनवदनां कृतासनपरिग्रहः ।
सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥
[2]अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनाऽऽगतम् ।
न धर्मस्य न लोकस्य मृत्योश्छन्दानुवर्तिनः ॥ ४ ॥
अपि वाऽकुशलं किं वा गृहेषु गृहमेधिनि[3] ।
धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥

---

द्विजाः भृगवस्त एवमभीष्टदातृत्वेन देवास्तैः उपलम्भितां प्रापिताम् ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

तस्या अदित्याः ॥१॥ हे अदिते, लोके विप्राणामभद्रं नागतमपि किम् ? धर्मस्याभद्रं नागतमपि किम् ? अर्थस्याभद्रं नागतमपि किम् ? छन्दानुवर्तिनो मृत्योः सकाशादभद्रं लोकस्य नागतं किम् ? अयोगिनां संसारिणां यत्र येषु धर्मादियोगोऽस्ति, तेषु किञ्चिदप्यकुशलं नहीति[4] तत्रानुकर्षः कर्तव्यः ॥ ४—५ ॥

---

[1] अदृष्टेष्वित्यर्थः—गू.  [2] नागतमपि किम् , इत्यनेनात्र सर्वत्र अपिशब्दः प्रश्नार्थक इति सूच्यते—गू.
[3] गृहमेधिनाम्—शे.  [4] संसारिणामपि यत्र गृहेषु स्वधर्मानुष्ठानेन धर्मार्थकामसिद्धिर्भवति, तेषु गृहेषु किञ्चिदप्यनिष्टं न हीत्यनुकर्षः ।

अपि वाऽतिथयोऽभ्येत्य कुटुम्बासक्तया त्वया ।
गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित्[1] ॥ ६ ॥

गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ।
यदि निर्यान्ति ते नूनं प्रेतराजगृहोपमाः ॥ ७ ॥

अथाग्नयस्तु वेलायां न हुता हविषा सति ।
त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥

यत्पूजया कामदुघान् यान्ति लोकान् गृहान्विताः ।
ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥ ९ ॥

अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि ।
लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥

अदितिरुवाच —

भद्रं द्विजगवां ब्रह्मन् धर्मस्यास्य जनस्य च ।
त्रिवर्गस्य परं क्षेत्रं गृहमेधिन् गृहा इमे ॥ ११ ॥

अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः ।
सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥

को नु मे भगवन् कामो न सम्पद्येत मानसः ।
यस्या भवान् प्रजाध्यक्ष एवं धर्मान् प्रभाषते ॥ १३ ॥

---

प्रेतराजगृहोपमाः श्मशानतुल्याः ॥ ७ ॥ वेलायां योग्यकाले । प्रोषिते गृहादन्यत्र स्थिते ॥ ८ ॥ सर्वदेवात्मनो विष्णोर्मुखं ब्राह्मणोऽग्निश्चेति द्वयम् ॥९॥ अस्वस्थम् अप्रकृतिस्थम्[2] ॥ १० ॥

इमे गृहा अग्नयश्चेत्यादि सर्वं भगवतोऽनुध्यानान्न रिष्यति न क्षिणोति ॥ १२ ॥

यस्या मम प्रजानां कुशलाकुशलयोरध्यक्षः साक्षित्वेन द्रष्टा भवानेवंविधान् धर्मान् प्रवक्तीति यत्[3] ॥ १३ ॥

---

[1] कुटुम्बे पुत्रादिपोषणे आसक्तया अतिथयो गृहमभ्युपेत्य प्रत्युत्थानादिना अपूजिता इव गृहाद् याता न हि—श्री.

[2] भवत्यास्तव लक्षणैश्चिन्हैरात्मानं मनोऽस्वस्थं लक्षये—स.

[3] यत् यस्या मम प्रजानां कुशलाकुशलयोरध्यक्षः साक्षित्वेन द्रष्टा भवान् एवंविधान् धर्मान् प्रवक्ति, तत् तस्या मे मानसो मनस्यपेक्षितः को नु कामो न संपद्येत, इति योज्यम् ।

तथैव मारीच मनःशरीरजाः प्रजा इमाः सत्वरजस्तमोजुषः ।
मनोरथं तासु सुरादिषु प्रभो यथाविभागं भजते महेश्वरः ॥ १४ ॥

तस्मादंशं[1] भजन्त्या मे श्रेयश्चिन्तय सुव्रत ।
हृतश्रियो हृतस्थानाः सपत्नैः पाहि नः प्रभो ॥ १५ ॥

परैर्विवासिता साऽहं मग्ना व्यसनसागरे ।
ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥

यथा तानि पुनः साधो प्रपद्येरन् ममात्मजाः ।
तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥

श्रीशुक उवाच —

एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ।
अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ १८ ॥

[2]क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः ।
कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९ ॥

उपतिष्ठस्व पुरुषं भगवन्तं जनार्दनम् ।
सर्वभूतगुहावासं वासुदेवं जगद्गुरुम् ॥ २० ॥

स विधास्यति ते कामान् हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्मम ॥ २१ ॥

---

यथाविभागं सत्वादिगुणानुकूल्येन । अद्य दैत्यानां मनोरथं साधयतीत्यभिप्रायः[3] ॥ १४ ॥
अंशं देवताभागं तव देहार्धं व्यवहारार्धं वा[4] । हृतस्थानाः हृतस्वर्गस्थानाः ॥ १५ ॥
पुनरुक्तमेव विशिनष्टि—परैरिति । मम पुत्राणामिति शेषः ॥ १६ ॥
अनात्मा जडात्मकः । मोहोऽज्ञानम् ॥ १९ ॥ इतरा देवादिविषया ॥ २१ ॥

---

[1] अंशं भजन्त्या इत्यस्य वामांशत्वं भजन्त्या प्राप्ताया इत्यर्थः—दु. [2] भौतिकोऽत एवानात्मा देहः क्व । प्रकृतेः प्रकृतिकार्यभूतेभ्यः परो विलक्षणः आत्मा जीवश्च क्व—दु । आत्मानात्मनोर्बहन्तरमिति क्वशब्दार्थः—गू.
[3] तासु सुरादिषु प्रजासु यथाविभागं गुणानुकूल्येन महेश्वरो भगवान् मनोरथमभिलाषं भजते विभज्य ददाति । एतेन दैतेयाभिवृद्धिकालोऽयमिति तत् कटाक्षयत्यदितिरिति भावः—स.
[4] तव यो व्यवहारस्तदर्धं वा अंशपदार्थः—गू.

अदितिरुवाच —

केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ।
यथा मे सत्यसङ्कल्पो विदधाति मनोरथम् ॥ २२ ॥

आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ।
आशु तुष्यति मे देवः सीदन्त्याः सह पुत्रकैः ॥ २३ ॥

कश्यप उवाच —

एतन्मे भगवन् पृष्टः प्रजाकामस्य पद्मजः ।
यदाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥

फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ।
अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ।
सिनीवाल्यां[1] मृदालिप्य स्नायात् क्रोडविदीर्णया ॥ २५ ॥

यदि लभ्येत वै स्रोतस्येतं मन्त्रमुदीरयेत् ।
त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ २६ ॥

उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ।
निर्वर्तितात्मनियमो देवमर्चेत् समाहितः ॥ २७ ॥

अर्चायां स्थण्डिले सूर्ये जले वह्नौ गुरावपि ।
नमस्तुभ्यं भगवते पुरुषाय महीयसे ।
सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २८ ॥

नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ।
चतुर्विंशद्गुणज्ञाय गुणसंस्थानहेतवे ॥ २९ ॥

---

सत्यसङ्कल्पो हरिः ॥ २२ ॥ तदुपधावनं तस्य हरेः सेवाविषयम् । आशु तुष्यति, येनेति शेषः ॥ २३ ॥ यदेतद् व्रतं तद् वक्ष्यामि ॥ २४ ॥ पयोव्रत इति पुल्लिङ्गप्रयोगः सर्वसाधनत्वज्ञापनार्थः । मृदो विशेषमाह— क्रोडेति । वराहखातया ॥ २५ ॥ स्रोतः स्यन्दमानं जलम् । तत्र स्नानं कुर्यादित्यर्थः । रसायाः रसातलात् । स्थानमिच्छता, भूतानामिति शेषः ॥ २६ ॥ निर्वर्तितात्मनियमः कृतसन्ध्योपासनादिकः ॥ २७ ॥ [2]गुणसंस्थानहेतवे कपिलात्मने ॥ २९ ॥

---

[1] फाल्गुनशुद्धप्रतिपदि । सा दृष्टेन्दुः सिनीवालीत्यमरः—गु.    [2] अत्र तत्त्वानाममुख्यत्वाद् गुणशब्दवाच्यत्वम्—गु.

नमो द्विशीर्षे त्रिपदे चतुःशृङ्गाय तन्तवे ।
सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३० ॥

नमः शिवाय रुद्राय नमः साधारणाय च[1] ।
सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३१ ॥

नमो हिरण्यगर्भाय प्राणाय जगदात्मने ।
योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३२ ॥

नमस्ते आदिदेवाय देवदेवाय ते नमः ।
नारायणाय ऋषये नराय हरये नमः ॥ ३३ ॥

नमो मरकतश्यामवपुषेऽधिगतश्रिये ॥
केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३४ ॥

त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ।
अतस्ते तपसा धीराः पादरेणुमुपासते ॥ ३५ ॥

अन्ववर्तन्त यं देवाः श्रीविनिर्जितपद्मयोः ।
स्पृहयन्त इवामोदं भगवान् मे प्रसीदताम् ॥ ३६ ॥

एतैर्मन्त्रैर्हृषीकेशमावाहनपुरस्सरम् ।
अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३७ ॥

---

द्वे शीर्षे, चत्वारिशृङ्गेति श्रुतेः । 'चत्वारिशृङ्गा वेदास्तु पादास्त्रिसवनानि च । प्रायणीयं शिरस्त्वेकमन्यच्चोदयनीयकम् । हस्तास्तु सप्त छन्दांसि तैर्गृह्णाति फलान्यसौ । मन्त्रब्राह्मणकल्पैस्तु त्रिधा बद्ध इतीर्यते । शस्त्रोद्गातृस्तुतिरवै रोरवीत्यृत्विजो मुखात् । वृषभो महान् स्वधर्मत्वाद् देवस्तु फलभावनात्' इति । तन्तवे व्याप्ताय, सन्ततिहेतवे च त्रयी विद्यानां सोमपानामात्मने अन्तर्यामिणे[2] ॥ ३० ॥ हिनोति दुःखं, राति सुखमिति हिरण्यं रेतोलक्षणं गर्भ यस्य स तथा तस्मै ॥ ३२ ॥

यतो वरदर्षभः, अतः श्रिया[3] विनिर्जिते पद्मे ययोस्तौ तथा तयोः पादयोरामोदं स्पृहयन्तो देवा यमन्ववर्तन्त स भगवान् (मे प्रसीदताम्) ॥ ३६ ॥ उपस्पर्शनम् आचमनम् ॥ ३७ ॥

---

[1] शक्तिधराय च, इति शे. पाठः । [2] त्रयीविद्यात्मने वेदविद्याप्रतिपाद्याय—स. [3] शोभया ।

अर्चितं गन्धमाल्याद्यैः पयसा स्नापयेद् विभुम् ।
वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ ३८ ॥

गन्धधूपादिभिश्चार्चेत् द्वादशाक्षरविद्यया ।
शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ३९ ॥

ससर्पिः सगुडं दत्वा जुहुयान्मूलविद्यया ।
निवेदितं तद्भक्ताय दद्याद् भुञ्जीत वा स्वयम् ॥ ४० ॥

दत्वाऽऽचमनमर्चित्वा ताम्बूलं च निवेदयेत् ।
जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥ ४१ ॥

कृत्वा प्रदक्षिणां भूमौ प्रणमेद् दण्डवन्मुदा ।
कृत्वा शिरसि तच्छेषं देवमुद्वासयेत् ततः ॥ ४२ ॥

द्व्यवरान् भोजयेद् विप्रान् पायसेन यथोचितम् ।
भुञ्जीत तैरनुज्ञातो हुतशेषं सभाजितैः ॥ ४३ ॥

ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ।
प्रातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ ४४ ॥

पयसा स्नापयित्वाऽर्चेद् यावद् व्रतसमापनम् ।
पयोभक्षो व्रतमिदं चरेद् विष्ण्वर्चनादृतः ॥ ४५ ॥

पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ।
एवं त्वहरहः कुर्याद् द्वादशाहं पयोव्रतम् ॥ ४६ ॥

हरेराराधनं होममर्हणं द्विजतर्पणम् ।
प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी[1] ॥ ४७ ॥

ब्रह्मचर्यमधःस्वापं स्नानं त्रिषवणं[2] चरेत् ।
वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ ४८ ॥

---

द्वादशाक्षरविद्यया ॐ नमो भगवते वासुदेवायेति । पयसि शृतं पायसान्नम् ॥ ३९ ॥

तच्छेषं पुष्पं द्रवमाणम्[3] ॥ ४२ ॥ द्व्यवरान् अवरपक्षेऽपि द्वावपेक्षितौ मुख्यपक्षस्तु द्वादशेति ॥ ४३ ॥

---

[1] यावच्छुक्लत्रयोदशि इत्यपि स पाठः [2] प्रातर्मध्याह्नसायंकालीनं स्नानम्—शे. । [3] द्रवमाणं तीर्थमित्यर्थः—गु.

अहिंस्रः सर्वभूतानां वासुदेवपरायणः ।
त्रयोदश्यामथो विष्णोः स्नापनं स्नापकैर्विभोः ॥ ४९ ॥

कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ।
पूजां च महतीं कुर्याद् वित्तशाठ्यविवर्जितः ॥ ५० ॥

चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ।
शृतेन तेन पुरुषं यजेत सुसमाहितः ॥ ५१ ॥

नैवेद्यं चापि गुणवद् दद्यात् पुरुषतुष्टिदम् ॥ ५२ ॥

आचार्यं ज्ञानसम्पन्नं वस्त्राभरणधेनुभिः ।
तोषयेद् ऋत्विजश्चैव तद् विद्ध्याराधनं हरेः ॥ ५३ ॥

भोजयेत् तान् गुणवता सदन्नेन शुचिस्मिते ।
अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ॥ ५४ ॥

दक्षिणां गुरवे दद्याद् ऋत्विग्भ्यश्च यथेऽर्हतः । था
अन्नाद्येनाश्वपाकांश्च प्रीणयेत् समुपागतान् ॥ ५५ ॥

भुक्तवत्सु च विप्रेषु दीनान्धकृपणादिषु ।
विष्णोस्तत्प्रीणनं विद्वान् सह भुञ्जीत बन्धुभिः ॥ ५६ ॥

नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ।
कारयेत् तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५७ ॥

एतत् पयोव्रतं नाम पुरुषाराधनं परम् ।
पितामहेनाभिहितं मम ते समुदाहृतम् ॥ ५८ ॥

त्वं चानेन महाभागे सम्यक् चीर्णेन केशवम् ।
आत्मना शुद्धभावेन भजनीयं भजाव्ययम् ॥ ५९ ॥

अयं वै सर्वयज्ञाख्यो सर्वव्रतमिदं श्रुतम् ।
तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् ॥ ६० ॥

---

स्नापकैः स्नानसाधनैः[1] ॥ ४९ ॥ शिपिषु रश्मिषु विष्टः शिपिविष्टः, शिपौ गरुडे विष्टः तस्मै वा ॥ ५१ ॥ मधुरादिगुणवत् ॥ ५२ ॥

---

[1] स्नापकैः द्विजैः—स.

त एव नियमाः साक्षात् त एव च यमोत्तमाः ।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६१ ॥

तस्मादेवं व्रतं भद्रे प्रयता श्रद्धया चर ।
भगवान् परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे पञ्चदशोऽध्यायः ।

॥ अथ षोडशोऽध्यायः ॥

श्रीशुक उवाच —

इत्युक्ता साऽदिती राजन् स्वभर्त्रा कश्यपेन वै ।
अन्वतिष्ठद् व्रतमिदं द्वादशाहमतन्द्रिता ॥ १ ॥

चिन्तयन्त्येकया बुद्ध्या भगवन्तमधोक्षजम् ।
प्रगृह्येन्द्रियदुष्टाश्वान् मनसा बुद्धिसारथिः ॥ २ ॥

मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ।
वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥

तस्याः प्रादुरभूत् तात भगवानादिपूरुषः ।
पीतवासाश्चतुर्बाहुः शङ्खचक्रगदाधरः ॥ ४ ॥

तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ।
ननाम भुवि कायेन दण्डवत् प्रीतिविह्वला ॥ ५ ॥

---

'तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम् । सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् । एते तु नियमाः प्रोक्तास्तांश्च सर्वान् पृथक् शृणु । अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽर्जवम् । क्षमा धृतिर्मिताहारः शौचं चैते यमाः स्मृताः ' इति ॥ ६२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य षोडशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

अव्यक्तस्वभावोऽपि भक्त्या भजमानस्य पुंसः प्रत्यक्षो भवति भगवानित्येतमर्थं दर्शयत्यध्यायद्वयेन । तत्र अदित्याः भक्त्या व्रताचरणप्रकारं वक्ति–इत्युक्तेति ॥१॥ तद्व्रताचरणफलमाह–तस्या इति॥४॥

सोत्थाय बद्धाञ्जलिरीडितुं स्थिता नोत्सेह आनन्दजलाकुलेक्षणा ।
बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥

प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ।
उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥

अदितिरुवाच —

यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद
तीर्थश्रवःश्रवणमङ्गलनामधेय ।
आपन्नलोकवृजिनोपशमोदयाद्य
शं नः कृधीश भगवन्नवसन्ननाथ ॥ ८ ॥

विश्वाय विश्वभवनस्थितिसंयमाय
स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ।
स्वस्थाय शश्वदुपबृंहितपूर्णबोध-
व्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥

---

तस्याः भक्तिलक्षणं दर्शयति—**सेति** । पुलकेन रोमाञ्चेनाकुला व्याप्ता आकृतिस्तनुर्यस्याः सा तथा । पुनस्तया किमकारीति तत्राह—**तद्दर्शनेति** । तद्दर्शनमेवात्युत्सवः तन्निमित्तो गात्रवेपथुर्देहकम्पो यस्याः सा तथा ॥ ६ ॥ तस्या मुग्धभावं दर्शयति—**उद्वीक्षतीति** ॥ ७ ॥

स्वाभीष्टोदयकरगुणविशिष्टत्वेन स्तौति—**यज्ञेशेति** । यज्ञपुरुष अच्युत इत्यनेन[1] गुणान्तराणि समुच्चिनोति । तानि कानीति तत्राह—**तीर्थपादेत्यादि** । तीर्थस्य शास्त्रस्य श्रवः श्रवणं याभ्यां ते तीर्थश्रवसी, ते च ते श्रवणे चेति तीर्थश्रवःश्रवणे, ते मङ्गलयतीति तीर्थश्रवःश्रवणमङ्गलम्, तत् नामधेयं यस्य स तथा, तस्य संबुद्धिस्तीर्थश्रवःश्रवणमङ्गलनामधेय । आपन्नस्य लोकस्य वृजिनं दुःखं तस्योपशमनार्थं परिहारार्थमुदयोऽवतारो यस्य स तथा, तस्य सम्बुद्धिस्तथा । कृधि कुरु । अवसन्ननाथ क्षीणजनरक्षक ॥ ८ ॥

विश्वाय विश्वनाम्ने । विश्वस्य भवनस्थितिसंहारा यस्मात् स तथा तस्मै । स्वैरं स्वेच्छया । गुणाः सत्वादयः । व्यापादितात्मतमसे विनाशिताज्ञानाय ॥ ९ ॥

---

[1] अच्युतेत्यनेनेत्यस्यायं भावः । यथाऽच्युतशब्दो विष्णवितरासंभावितगुणान्तरवाचकस्तथा तीर्थपादेत्यादिशब्दा अपि विष्णवितरासंभावितगुणान्तरवाचका इति—गू.

आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः ।
ज्ञानं च केवलमनन्त भवन्ति तुष्टात् त्वत्तो नृणां किमुपसन्नजनाधिनाशः॥

श्रीशुक उवाच —

अदित्यैवं स्तुतो राजन् भगवान् पुष्करेक्षणः ।
क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥ ११ ॥

श्रीभगवानुवाच —

देवमातर्भवत्या मे विज्ञातं चिरकाङ्क्षितम् ।
यत्सपत्नैर्हृतश्रीणां बाधितानां[1] स्वधामतः ॥ १२ ॥

तान् विनिर्जित्य समरे दुर्मदानसुरर्षभान् ।
प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥

इन्द्रज्येष्ठैश्च तनयैर्हतानां युधि विद्विषाम् ।
स्त्रियो रुदन्तीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥

आत्मजान् सुसमृद्धान् स्वान् प्रत्याहृतयशःश्रियः ।
नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥ १५ ॥

प्रायो[2]ऽधुना तेऽसुरयूथनाथा अवारणीया इति देवि मे मतिः ।
यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥

---

परमायुर्द्विपरार्द्धावसानलक्षणं च यच्च तदादयो नृणां तुष्टात् त्वत्तो भवन्ति यत् तस्मादुपसन्नजनाधिनाशः किं शरणागतजनमनोदुःखनाशो भवतीति किं वक्तव्यम्? योगगुणोऽणिमादिः ॥ १० ॥

भवत्याः सपत्नैः स्वर्गाद् बाधितानाम् उच्चाटितानां हृतश्रीणाम् आकृष्टसम्पदां पुत्राणामर्थे यच्चिरं काङ्क्षितं तन्मया विज्ञातमित्यन्वयः ॥ १२ ॥ किं तदिति तत्राह— **तान् विनिर्जित्येति** । उपासितुम्, मामिति शेषः ॥ १३ ॥ इदं चाकाङ्क्षितमित्याह— **इन्द्रेति** । इन्द्रः ज्येष्ठो येषां ते तथा तैः ॥ १४ ॥ नैतत् क्षिप्रसाध्यमित्याह— **प्राय इति** । कुतः? अत्राह — **यत्त इति** । अनुकूलैरीश्वरविप्रैर्गुप्ता रक्षिता इति यत् तस्मात्, तत्र तेषु देवेषु ॥ १६ ॥

---

[1] च्यावितानाम् इत्यपि स पाठः । [2] प्राय इत्यस्य सर्वथेत्यर्थः । एतेनानुकूलेश्वरविप्रगुप्तत्वेन हेतुना अवारणीयत्वस्य सिद्धत्वात् प्रायो अवारणीयेत्यनुपपन्नमिति दूषणं पराकृतम्—दु.

अथाप्युपायो मम देवि चिन्त्यः सन्तोषितस्य व्रतचर्यया ते ।
ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥

त्वयाऽर्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ।
स्वांशेन पुत्रत्वमुपेत्य ते सुतान् पातास्मि मारीचतपस्यवस्थितः[1] ॥

उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ।
मां च भावय तेऽपत्यमेवंरूपमवस्थितम् ॥ १९ ॥

नैतत् परस्मा आख्येयं देवगुह्यं कथञ्चन ।
सर्वं सम्पद्यते देवि देवगुह्यात्[2] सुसंवृतात्[3] ॥ २० ॥

श्रीशुक उवाच —

एतावदुक्त्वा भगवान् तत्रैवान्तरधीयत ।
अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥

उपाधावत् पतिं भक्त्या परया कृतकृत्यवत् ।
स वै समाधियोगेन कश्यपस्तदबुध्यत ॥ २२ ॥

प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः ।
सोऽदित्यां वीर्यमाधत्त तपसा चिरसञ्चितम् ॥ २३ ॥

समाहितमना राजन् दारुण्यग्निं यथाऽनिलः[4] ।
अदित्यां निहितं गर्भं भगवन्तं सनातनम् ।
हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥

---

तर्ह्युपायाभावादुपरम एव श्रेयानिति तत्राह—**अथेति** । मम सकाशान्मम व्रतचर्यया वा । श्रद्धानुरूपमिति क्रियाविशेषणम् । ममार्चनमन्यथा फलराहित्येन गन्तुं नार्हति यथा श्रद्धा तथा फलहेतुकत्वात् । पुरुषार्थलक्षणफलस्य निमित्तत्वात् कप्रत्ययः स्वार्थमिति साधयति[5] ॥१७॥ उपधाव उपास्व । अपत्यम् अपत्यत्वेन ॥१९॥ परस्मै शत्रवे ॥२०॥ किमनवबुद्धमिति तत्राह—**प्रविष्टमिति** ॥२३॥

---

[1] मारीचस्य तपसि अवस्थितः सन्निहितः—स. स्वांशेन स्वरूपभूतांशेन मारीचस्य कश्यपस्य तपस्यवस्थितः सन् ते पुत्रत्वमुपेत्य (पातास्मि)—शे. [2] देवरहस्यात् । [3] सुसंगुप्तात् ।

[4] अनिलो वायुर्ज्येष्ठादिमासि दूरे विद्यमानमग्निमानीय दारुणि काष्ठराशौ यथा निदधातीत्यर्थः । पूर्वं दार्वन्तर्गताग्नेरग्रहणाद्, गर्भस्य निहितत्वे दारुण्यग्निमिवेति दृष्टान्तकथनम्—दु.

[5] कुत्सार्थकः कप्रत्यय इदानीं मदित्याकृतं विष्णवर्चनं स्वार्थं स्वप्रयोजनार्थमिति साधयति निःसंशयं करोतीत्यर्थः—गु.

ब्रह्मोवाच —

जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ।
नमो ब्रह्मण्यदेवाय त्रिगुणाय नमोऽस्तु ते ॥ २५ ॥

पृश्निगर्भाय देवाय वेदगर्भाय[1] वेधसे ।
त्रिगुणाय[2] त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥

त्वमादिरन्तो भुवनस्य मध्यमनन्तशक्तिं पुरुषं यमाहुः ।
कालो भवानाक्षिपतीश विश्वं स्रोतो यथाऽम्भःपतितं[3] गभीरम् ॥

त्वं वै प्रजानां स्थिरजङ्गमानां प्रजापतीनामसि सम्प्रविष्टः ।
दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

श्रीशुक उवाच —

इत्थं विरिञ्चिस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ।
चतुर्भुजः शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षणः ॥ १ ॥

श्यामावदातो झषराजकुण्डलत्विषोल्लसच्छ्रीवदनाम्बुजः पुमान् ।
श्रीवत्सवक्षा [4]वलयाङ्गदोल्लसत्किरीटकाञ्चीगुणचारुनूपुरः ॥ २ ॥

---

पृश्न्यां गर्भो यस्य स तथा तस्मै । वेदगर्भाय सद्योजन्मशक्तये । त्रीणि पृष्ठानि वैकुण्ठादीनि यस्य स तथा तस्मै ॥ २६ ॥ गभीरं स्रोतो नदी । आक्षिपति तीरं प्रतिनयति ॥ २७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

अमृतभूः मुक्ताश्रयो विष्णुः ॥ १ ॥ झषराजो मत्स्यश्रेष्ठः मकरस्तदाकारकुण्डलत्विषा ॥ २ ॥

---

[1] वेदगर्भाय वेदरहस्याय । देवगर्भायेति पाठे देवा गर्भे यस्य स तस्मै—स.

[2] त्रिगुणाभिमानिश्रीभूदुर्गाप्रवर्तकायेत्यर्थः । पूर्वं त्रिगुणाय नमोऽस्तु ते इत्यत्र त्रिगुणप्रवर्तकत्वमित्यर्थः—दु.

[3] अम्भःपतितं तृणादिकमित्यर्थः ।

[4] वलयाङ्गदैरुल्लसन्ति किरीटादीनि यस्य स तथा—गू.

मधुव्रतव्रातविघुष्टया स्वया विराजितश्रीवनमालया हरिः ।
प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन् कण्ठनिविष्टकौस्तुभः ॥ ३ ॥

दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ।
[1]द्यौरन्तरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः सञ्जहृषुर्नगाश्च ॥ ४ ॥

श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ।
सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥ ५ ॥

द्वादश्यां सविता तिष्ठन् मध्यंदिनगतो नृप ।
विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥

शङ्खदुन्दुभयो भेर्यो मृदङ्गपणवानकाः ।
चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥

प्रीताश्चाप्सरसोऽनृत्यन् गन्धर्वपतयो जगुः ।
तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥ ८ ॥

सिद्धविद्याधरगणाः सकिम्पुरुषकिन्नराः ।
चारणा यक्षरक्षांसि सुपर्णभुजगोत्तमाः ॥ ९ ॥

गायन्तोऽभिप्रशंसन्तो नृत्यन्तो विबुधा नराः ।
अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥ १० ॥

---

वेश्मतमः गृहान्धकारम् ॥ ३ ॥ सलिलाशयाः ह्रदाः । [2]अग्निजिह्वा देवाः ॥ ४ ॥
[3]श्रोणायां श्रावणे मासि । अभिजिति मध्यन्दिने । श्रवणद्वादश्यामतिष्ठत् तदा सा द्वादशी विजया नाम । अनेन संज्ञान्तरं विधीयते ॥ ५-६ ॥ शङ्खादयः, नेदुरिति शेषः ॥ ७ ॥

---

[1] स्वर्गः । [2] अग्निर्जिह्वास्थानी येषां ते, इति व्युत्पत्त्या देवा अग्निमुखेन हविर्भुज इति भावः ।

[3] सिंहसौरमासस्य श्रावणत्वाद् वामनावतारकाले सिंहराशौ सूर्यावस्थानाच्च सौरमासविवक्षया टीकायां श्रोणायां श्रावणे मासीत्युक्तम् । पौर्णिमान्तचान्द्रमानगणितभाद्रपदमासविवक्षया टीकायां श्रवणद्वादश्यामित्युक्तम् । अनेन श्रावणे मासि शुक्लद्वादश्यां कदापि श्रवणर्क्षयोगासंभवात्, टीकायां श्रावणे मासि श्रवणद्वादश्यामिति कथनमयुक्तमिति चोद्यं परास्तम् । ततश्चायं गूढार्थः—श्रोणायां सिंहस्थसूर्ये सति श्रोणायां श्रवणनक्षत्रे चन्द्रे सति श्रवणद्वादश्यां भाद्रपदशुक्लद्वादश्यामभिजिति मुहूर्ते विजयसंज्ञके मध्यन्दिने प्रभुर्वामनोऽवततार । नक्षत्राण्यश्विन्यादयस्ताराः कौण्डिन्यादय एताद्या येषां सूर्यादिग्रहाणां ते, तथा तज्जन्म वामनावतारं दक्षिणमुदारं चक्रुरिति । लोकानुकरणार्थमियमुक्तिः । वामनावतारकाले बहवो गुणा बभूवुरिति हृदयम्—गू.

दृष्ट्वाऽदितिस्तं निजगर्भसम्भवं परं पुमांसं मुदमाप विस्मिता ।
गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥

यत् तद् वपुर्भाति विभूषणायुधैरव्यक्तवद् व्यक्तमधारयद्धरिः ।
बभूव तेनैव स वामनो वटुः सम्पश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥

तं वटुं वामनं दृष्ट्वा मोदमाना महर्षयः ।
कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् । ॥ १३ ॥

तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् ।
बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपो ददौ ॥ १४ ॥

ददौ कृष्णाजिनं भूमिर्दण्डं सोमो वनस्पतिः ।
कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥

कमण्डलुं वेदगर्भः कुशान् सप्तर्षयो ददुः ।
अक्षमालां महाराज सरस्वत्यक्षयात्मनः ॥ १६ ॥

तस्मा इत्युपनीताय यक्षराद् पात्रिकामदात् ।
भिक्षां भगवती साक्षादुमाऽदादम्बिका सती ॥ १७ ॥

स ब्रह्मवर्चसेनैव[1] सभां सम्भावितो वटुः ।
ब्रह्मर्षिगणसञ्जुष्टामत्यरोचत मारिषः[2] ॥ १८ ॥

---

सुपर्णः, भुजगोत्तमाश्च ॥ ९ ॥

यत् स्वभावतोऽव्यक्तवदव्यक्तमेव तद् वपुरनुकम्पया विभूषणायुधैर्व्यक्तं भाति, हरिस्तादृशं वपुरधारयत् । यद् वपुरव्यक्तवद् भाति हरिस्तद्वपुर्विभूषणायुधैर्व्यक्तमधारयदिति वा । स एव दिव्यगतिरनभिभूतज्ञानो हरिस्तेन विभूषणायुधविशिष्टेन रूपेण पित्रोः सम्पश्यतोः सतोर्वामनो वटुर्बभूवेत्यन्वयः । मूलरूपावताररूपयोरभेदज्ञापनायैवमुच्यते यथा नट इति तदभिप्रायेण[3] ॥ १२ ॥

पात्रिकां भिक्षापात्रम् । उमा उमेति 'सस्यविशेषव्यावृत्त्यर्थमम्बिकेति ॥ १७ ॥

सभां प्राप्यात्यरोचत सभामरोचयदिति वा । मारिषः पूज्यः ॥ १८ ॥

---

[1] स ब्रह्मवर्चसेनैवम्—शे । एवेति पाठे ब्रह्मवर्चसेनैव सभामत्यरोचत प्रकाशयामासेत्यर्थः । ब्रह्महस्तिभ्यां वर्चसः, इत्यनुशासनेन ब्रह्मवर्चसमिति रूपम् । [2] मारिषेति पाठे परीक्षित्सम्बोधनम्—स.
[3] अभेदाभिप्रायेण । [4] अङ्कुरविशेषव्यावृत्त्यर्थम् । अतसी स्यादुमा क्षुमा इत्यमरः—गु.

समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ।
परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद् द्विजः ॥ १९ ॥

श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ।
जगाम तत्राखिलसारसम्भृतो भारेण गां सन्नमयन् पदे पदे ॥ २० ॥

तं नर्मदायास्तट उत्तरे बलेर्यऋत्विजस्ते भृगुवत्ससंज्ञिके ।
प्रवर्तयन्तो भृगवः क्रतूत्तमं व्यचक्षतारादुदितं यथा रविम् ॥ २१ ॥

तत्रर्त्विजो यजमानः सदस्या हृतत्विषो वामनतेजसा नृप ।
सूर्यः किमायात्यथवा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥

इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान् स वामनः ।
सदण्डछत्रं सजलं कमण्डलुं विवेश बिभ्रद् हयमेधवाटम् ॥ २३ ॥

मौञ्ज्या मेखलयाऽऽवीतमुपवीताजिनोत्तरम्[1] ।
जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥

प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ।
प्रत्यगृह्णन् समुत्थाय संक्षिप्तास्तस्य तेजसा ॥ २५ ॥

यजमानः प्रमुदितो दर्शनीयं मनोरमम् ।
रूपानुरूपावयवं[2] तस्मा आसनमाहरत् ॥ २६ ॥

स्वागतेनाभिनन्द्याथ पादौ भगवतो बलिः ।
अवनिज्यार्चयामास मुक्तसङ्गं मनोरमम् ॥ २७ ॥

---

भृगूणामुपकल्पितैः अश्वमेधैः यजमानं यष्टारं बलिं श्रुत्वा तत्र जगाम । अखिलसारैर्गुणैः सम्भृतः पूर्णः । भारेण गरिम्णा ॥ २० ॥

भृगुवत्सेति संज्ञा यस्य स तथा तस्मिन् ॥ २१ ॥ वाटं शालाम् ॥ २३ ॥

आवीतं परिवीतम् ॥ २४ ॥

---

[1] उपवीतवद् धृतम् अजिनमेव उत्तरम् उत्तरीयं यस्य स तथा—गू.

[2] रूपस्याकृतेरनुरूपा अवयवा यस्य स तथा । तं दृष्ट्वेति शेषः—गू.

तत्पादशौचं कलिकल्मषापहं स धर्मविन्मूर्ध्न्यदधात् सुमङ्गलम् ।
यद् देवदेवो गिरिशश्चन्द्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥

बलिरुवाच —

स्वागतं ते नमस्तुभ्यं ब्रह्मन् किं करवाम ते ।
ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वाऽऽर्य वपुर्धरम् ॥ २९ ॥

अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ।
अद्य स्विष्टः क्रतुरयं यद् भवानागतो गृहान् ॥ ३० ॥

अद्याग्नयो मे सुहुता यथाविधि द्विजात्मज त्वच्चरणावनेजनैः ।
हतांहसो वार्भिरियं च भूमिरह्वा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥

यद् यद् वटो वाञ्छसि तत् प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ।
गां काञ्चनं गुणवद् धाऽथ धाम मृष्टं तथाऽन्नमुत वा विप्रकन्याम् ।
ग्रामान् समृद्धान् तुरगान् गजान् वा रथांस्तथार्हत्तम संप्रतीच्छ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे सप्तदशोऽध्यायः ।

॥ अथ अष्टादशोऽध्यायः ॥

श्रीशुक उवाच —

इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम् ।
निशम्य भगवान् प्रीतः प्रतिनन्द्येदमब्रवीत् ॥ १ ॥

---

तनुभिः रेणुभिः कोमलैर्वा ॥ ३१ ॥ प्रतीच्छ गृहाण ॥ ३२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य सप्तदशोऽध्यायः

॥ अथ अष्टादशोऽध्यायः ॥

अनेनाध्यायद्वयेन बलेर्भक्तिविशेषं दर्शयति —इतीति । इतिशब्देन[1] हरेर्माहात्म्यसूचकं वाक्यमुक्तमिति सूचयति ॥ १ ॥

---

[1] उत्कर्षार्थकेतिशब्देन । इति स्वरूपसान्निध्ये विवक्षानियमेऽपि च । हेतौ प्रकारप्रत्यक्षेऽप्कर्षेऽप्यवधारणे । एवमर्थे समाप्तौ स्यात् , इति हैमः । मूले उत्कर्षसूचकं बलेर्वाक्यमिति योज्यम्—गु.

श्रीभगवानुवाच —

वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ।
यस्य प्रमाणं भृगवः साम्पराये पितामहः कुलवृद्धः प्रशान्तः ॥ २ ॥

न ह्येतस्मिन् कुले कश्चिन्निस्सत्त्वः कृपणः पुमान् ।
प्रत्याख्याता [illegible] यो वाऽदाता द्विजातये ॥ ३ ॥

न सन्ति तीर्थे[1] युधि वाऽर्थिनाऽर्थिताः पराङ्मुखा ये त्वमनस्विनो नृप ।
युष्मत्कुले यद् यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥

[2]यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ।
प्रतिवीरं दिग्विजये नाविन्दत गदायुधः ॥ ५ ॥

यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगते ।
नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥

---

जनदेव नृप । साम्पराये[3] पितामहः प्रमाणम् ॥ २ ॥

सर्वे स्तुतिप्रसन्ना एवाभीष्टं कुर्वन्तीत्यतस्तत्सिद्धिप्रकारं वचनं वक्ति — न हीति । यः पुमानिति प्रत्येकमभिसम्बध्यते । प्रत्याख्याता नास्तीति वक्ता । अदाता ॥ ३ ॥

तीर्थे पात्रे[4] । अर्थिना धनं युद्धं चार्थ्यमानेन । पराङ्मुखा अमनस्विन इत्येतद्विशेषणद्वयं [5]यथायोग्यं सम्बन्धितव्यम् । अमनस्विनो हीनमनस्काः । यद् यस्मात् । उद्भाति उत्कृष्टतया द्योतते । उडुपश्चन्द्रः ॥ ४ ॥

कृच्छ्रेणेति मोहवचनम् । कृतः कृतिनस्तान् श्रयतीति कृच्छ्रः तेन पराक्रमेणेत्यर्थ इति वा[6] । क्ष्मायाः भूमेः उद्धारे उद्धरणकाले कृच्छ्रेणागते प्राप्ते सति भूरि तस्य वीर्यं पराक्रममनुस्मरन्नपि आत्मानं जयिनं तदानीमेवात्मजयं न मेने किन्तु नित्यजयिनं मेन इत्यर्थः । यद्वा क्ष्माया उद्धारो येन स तथा स विष्णुः ना परमपुरुषो यं विनिर्जित्य तत् स्वकीयं वीर्यं भूर्यनन्तमनुस्मरन्नात्मानं जयिनं जयशीलं मेन इति ॥ ६ ॥

---

[1] दानावसरे—शे. । भागीरथ्यादिक्षेत्रे —लि. । [2] यतो यस्मिन् युष्मत्कुले—गू.

[3] साम्पराये पारलौकिके धर्मे । युद्धायत्योः साम्परायः, इत्यमरः । आयतिरुत्तरकालः—गू.

[4] अर्थिनि पात्रे सतीति योज्यम् । [5] यथायोग्यमित्यनेन केषाञ्चित् पराङ्मुखत्वं केषाञ्चिदमनस्वित्वं चेति सूच्यते—गू. [6] कृतिनः शिक्षितधियस्तानाश्रयतीति कृच्छ्रः पराक्रमः, तेनेति—गू.

निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ।
हन्तुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥

तमायान्तं समालोक्य शूलपाणिं कृतान्तवत् ।
चिन्तयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥

यतो यतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ।
अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥

एवं स निश्चित्य रिपोः शरीरं मायावतो निर्विविशेऽसुरेन्द्र ।
श्वासानिलान्तर्हितसूक्ष्मदेहस्तद्घ्राणरन्ध्रेण विविग्नचेताः[1] ॥ १० ॥

स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद ।
क्ष्मां द्यां दिशः खं विवरान् समुद्रान् विष्णुं विचिन्वन् न ददर्श वीरः ॥

अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् ।
भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान्[2] ॥ १२ ॥

वैरानुबन्ध एतावानामृत्योरिह देहिनाम् ।
अज्ञानप्रभवो मन्युरहम्मानोपबृंहितः ॥ १३ ॥

---

मायाविनां[3] ज्ञानिनां वरः मोक्षादिवरदाता ॥ ८ ॥

पराग्दृशः बाह्यदृष्टेः । 'पराञ्चि खानि व्यतृणात्' इति श्रुतेः । परं दूरमञ्चतीति पराक्, पराग् दूरस्थं वस्तु पश्यतीति पराग्दृक् तस्य दूरवस्तुदर्शिन इत्यर्थो वा[4] ॥ ९ ॥

तद्घ्राणरन्ध्रेण तस्य घ्राणद्वारेण ॥ १० ॥ तन्निकेतम्, जगतामिति शेषः । तस्य हरेर्वैकुण्ठं परिमृश्येति वा[5] ॥ ११ ॥ यतो गतस्ततः ॥ १२ ॥

---

[1] विशेषेण भग्नचेता इव स्थित इत्यर्थः—गु.

[2] अत्रेयं योजना–मे भ्रातृहा विष्णुर्यतो यामवस्थां गतः पुमान्नावर्तते न जीवति तामवस्थां गतः । नूनं निश्चये-दु

[3] मया सर्वसाधनेषु प्रधाना संवित् । मयैव माया सा येषामस्तीति मायाविन इति योगः कार्य इति भावेन मायाविनां ज्ञानिनामित्युक्तम्—गु.

[4] अहं यतो यतो यत्र यत्र गमिष्यामि तत्र तत्रासौ हिरण्यकशिपुः प्राणिनां मृत्युरिवायास्यति । अतोऽहं पराग्दृशो बहिर्दृष्टेरस्य हिरण्यकशिपोर्हृदयं प्रवेक्ष्यामीति चिन्तयामास हरिरित्यन्वयः—लि.

[5] वैकुण्ठं शून्यं नारदादिभ्यः परिमृश्येति वेति योजना । अन्यथा हिरण्यकशिपोः सनकादिदत्तशापस्याप्रयोजकता स्यात्—गु.

पिता प्रह्लादपुत्रस्ते तद्विद्वान् द्विजवत्सलः ।
स्वमायुर्द्विजलिङ्गेभ्यो देवेभ्योऽदात् स याचितः ॥ १४ ॥

भवानाचरिता धर्मानास्थितान् गृहमेधिभिः ।
ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥

तस्मात् त्वत्तो महीमीषद् वृणेऽहं वरदर्षभ ।
पदानि त्रीणि दैत्येन्द्र सम्मितानि पदा मम ॥ १६ ॥

नान्यं ते कामये राजन् वदान्याज्जगदीश्वरात् ।
नैनः प्राप्नोति वै विद्वान् यावदर्थप्रतिग्रहात् ॥ १७ ॥

बलिरुवाच —

अहो ब्राह्मणदायाद वाचस्तेऽवृद्धसम्मताः ।
त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १८ ॥

---

क्रोधहेतुको वैरानुबन्ध इत्याह—अज्ञानेति । प्रह्लादस्य यः पुत्रो स तव पिता विरोचनः तान् द्विजरूपिणो देवान् विद्वान्, द्विजानां लिङ्गं वेषो येषां ते तथा, तेभ्यो देवेभ्यः स्वमायुरदादित्यन्वयः ॥ १४ ॥ किञ्च यद् ब्राह्मणैरनुष्ठितं तन्ममाभीष्टमिति[1] प्रकटनाय भवानप्याचरतीत्याह—भवानिति । आचरिताऽनुष्ठाता । अन्यैः राजादिभिः ॥ १५ ॥

यस्मात् त्वं पुण्यवतां कुले जातो धर्मकर्ता तस्मात् । पदानीति बहुवचनोक्त्या भीतिर्मा भूदित्याह—त्रीणीति । तेषां च महत्त्वेन भयशङ्का तदवस्थेति तत्राह—सम्मितानीति ॥ १६ ॥

इतोऽपि महत्तरं कामं वदस्व दास्यामीति तत्राह—नेति । वदान्याद् दानशीलाद् राज्ञः प्रतिग्रहात् तव दोषो न स्यात् किम् ? नेत्याह—नेति । यावता प्रतिग्रहेण स्वप्रयोजनं सिध्यति तावतः प्रतिग्रहाद् आदानात् । 'न वा अजीविप्यमिमानखादन्' इति श्रुतेः[2] । विद्वान् प्रतिग्रहदोपदहनपटुज्ञानवान् ॥ १७ ॥ अवृद्धसम्मताः कुतः ? अत्राह—त्वमिति । बुद्धिवैशद्ये बालत्वमप्रयोजकम्, अत्राह—बालिशेति । जडमतिः । स्वप्रयोजनं ज्ञातुं न शक्त इत्यर्थः ॥ १८ ॥

---

[1] यद् याञ्चायां यजमानस्तवनं तन्ममाभीष्टम्—गू.

[2] विद्वान् याचकज्ञानिपुरुषो यावतैव स्वशरीरयात्रासिद्धिस्तावद्द्रव्यस्य प्रतिग्रहाद् एनः पापं न प्राप्नोति—लि.

मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ।
पदत्रयं वृणीते योऽबुद्धिमानिव दाशुषम्[1] ॥ १९ ॥

न पुमान् मामनुव्रज्य भूयो याचितुमर्हति ।
तस्माद् वृत्तिकरीं भूमिं वटो कामं प्रतीच्छ मे ॥ २० ॥

श्रीभगवानुवाच —

यावन्तो विषयाः प्रेष्ठास्त्रिलोक्यामजितेन्द्रियम् ।
न शक्नुवन्ति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥

त्रिभिः क्रमैरसन्तुष्टो द्वीपेनापि न पूर्यते ।
नववर्षसमेतेन सप्तद्वीपवरेच्छया[2] ॥ २२ ॥

सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः ।
अर्थैः कामैर्गता नान्तं तृष्णाया इति नः श्रुतम् ॥ २३ ॥

यदृच्छयोपपन्नेन सन्तुष्टो वर्तते सुखम् ।
नासन्तुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥

---

कथमेतदवगतम् ? अत्राह—**मां वचोभिरिति** । अबुद्धिमान् दाशुषं दानशीलम् (इव) । बुद्धिमानिति व्यतिरेको[3] वा ॥ १९ ॥ कुतो मामपहससीति तत्राह—**न पुमानिति** ॥ २० ॥

यदुक्तं वृत्तिकरीं भूमिं प्रतिगृहाणेति तदजितेन्द्रियं प्रति व्यर्थमित्याशयेनाह[4]—**श्रीभगवानिति** । अजितेन्द्रियमलम्बुद्धिरहितम्, पुरुषमिति शेषः ॥ २१ ॥

एतदेवोपपादयति—**त्रिभिरिति** । न नदीद्वीपोऽत्र कथ्यत इत्याह— **न वेति** । कुतः ? अत्राह—**सप्तेति** ॥ २२ ॥ नैतावताऽपि पूर्तिरित्याह—**सप्तेति** । अन्तमवसानम् । अर्थैः कामैः । अर्थसम्पादितकामैर्वा ॥ २३ ॥

सन्तोषशब्दाभिप्रायं वदन्नलम्बुद्धिरेव सुखसाधनमित्याह—**यदृच्छयेति** । व्यतिरेकमाह—**नासन्तुष्ट इति** । उपसादितैरवाप्तैः सुखं न वर्तत इति पूर्वेणान्वयः ॥ २४ ॥

---

[1] अबुद्धिमान् द्वीपदाशुषम् इति लि.शे. पाठः । जम्ब्वादिसप्तद्वीपदातारमित्यर्थः ।

[2] सप्तद्वीपवती या धरा भूमिस्तस्येच्छया—स. सप्तद्वीपवरेच्छया—शे. सप्तानां द्वीपवराणामिच्छयेत्यर्थः ।

[3] बुद्धिमानिवेति व्यतिरेको वेत्यनेन, मूले, बुद्धिमान् पदत्रयं यथा न वृणोति तथाऽयं वृणीते इति योज्यम्—गू. ( इदं विवरणं चिन्त्यम् । )

[4] इत्याशयेन भगवान् वक्तीत्याहेति स्वरसम् ।

पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः ।
यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ २५ ॥
यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ।
तत् प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणिः ॥ २६ ॥
तस्मात् त्रीणि पदान्येव वृणे त्वद् वरदर्षभात् ।
एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥

श्रीशुक उवाच —

इत्युक्तः स हसन्नाह वाञ्छितं प्रतिगृह्यताम् ।
वामनाय महीं दातुं जग्राह जलभाजनम्[1] ॥ २८ ॥
विष्णवे क्ष्मां प्रदास्यन्तमुशना असुरेश्वरम् ।
जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः ॥ २९ ॥

उशना उवाच —

एष वैरोचने साक्षाद् भगवान् विष्णुरव्ययः ।
कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥
प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ।
न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥

---

इतोऽपि सन्तोष एवापाद्यः सुखहेतुत्वादन्यस्यानर्थहेतुत्वाच्चेत्याह — पुंस इति । अर्थकामयोरसन्तोषः ॥२५॥ तेजो बलादिकम् । 'तेजो बले प्रभावे च ज्योतिष्यर्चिषि रेतसि । नवनीतेऽनले धर्मे दाने हस्तिमदेऽपि च' इति । तत् तेजः । आशुशुक्षणिः अग्निः । 'आशुशुक्षणिरर्केऽग्नौ यजनेथाश्रुतीवले[2]' इति ॥ २६ ॥ यतः सन्तुष्टोऽहं तस्माद् यावत्प्रयोजनं वित्तम्, स्वीकुर्यामिति शेषः[3] ॥२७॥ उशना विदुषा गुरुणा शिष्याय हितोपदेशः कर्तव्य इति शिक्षयन्नाह[4] — विष्णव इति ॥२९॥

बन्धनाद्यनर्थमजानता त्वया एतस्मै वामनाय प्रतिज्ञातं यत् तत् साधु न मन्य इत्यन्वयः ।

---

[1] उदकपूर्णपात्रम् । [2] अस्पष्टमिदम् ।

[3] याचे पदानि त्रीणि दैत्येन्द्रेत्यारभ्य तस्मात् त्रीणि पदान्येव वृणे त्वद् वरदर्षभादित्यन्तं यत्र यत्राङ्घ्रिवाचकशब्दस्तत्र तत्राङ्घ्रिशब्दमप्रयुञ्जानः प्रयुञ्जानश्च पदपदं वामनस्तत्रापि वामनतां बोधयामासेति चातुरी मन्तव्या । त्रीणि पदा विचक्रमे, त्रेधा निदधे पदमिति श्रुतिरपि शिर आन्दोलयति—स.

[4] इति शिक्षयन् लोकशिक्षां कुर्वन्नाहेत्यनेन मूले शुक्रस्य विदां वरत्वं चेत् तर्हि पात्रतमाय भूदाननिषेधकरणमसङ्गतम् । निषेधे विदां वरत्वमसङ्गतमिति चोद्यं परास्तम् । वामनस्य पात्रत्वमस्तु । अपात्रे दाननिषेधोऽवश्यं कार्य एवेति हृदयम्—गृ.

एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम् ।
दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥

त्रिभिः क्रमैरिमाँल्लोकान् विश्वकायः क्रमिष्यति ।
सर्वस्वं विष्णवे दत्वा मूढ वर्तिष्यसे कथम् ॥ ३३ ॥

क्रमतो गां पदैकेन द्वितीयेन दिवं विभो ।
खं च कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४ ॥

निष्ठान्तं[1] नरकं मन्ये ह्यप्रदातुः प्रतिश्रुतम् ।
प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५ ॥

न तद्दानं प्रशंसन्ति येन वृत्तिर्विपद्यते ।
दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥ ३६ ॥

धर्माय यशसेऽर्थाय कामाय स्वजनाय च ।
पञ्चधा विभजन् वित्तमिहामुत्र च मोदते ॥ ३७ ॥

---

कुतः ? अत्राह— दैत्यानामिति । अनयो दुःखहेतुरनीतिः[2] ॥ ३१ ॥

तदुपपादयति— एष इति । विश्वकायः[3] ॥ ३२ ॥

त्रिपदक्रमणप्रकारं स्पष्टयति— क्रमत इति । तार्तीयस्य तृतीयपदस्य ॥ ३४ ॥

प्रतिश्रुतमदातुः निष्ठान्तं प्रतिश्रुतदानपर्यन्तं नरकं दुःखं मन्ये । नरकमेवोपपादयति— प्रतिश्रुतस्येति ॥ ३५ ॥

तस्य तव दानं कुतो न प्रशंसन्ति इति तत्राह— येनेति । वृत्तिर्जीवनं विपद्यते नश्यतीति येन, तस्मादिति शेषः । 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इति स्मृतेः । वृत्तिर्जीवनसाधनं वा नष्टं स्यात् । तन्नाशे किं छिन्नम् ? अत्राह— दानमिति[4] ॥ ३६ ॥

अर्थाय कोशवृद्धये, क्रियादिव्यवहाराय[5] वा ॥ ३७ ॥

---

[1] निष्ठान्ते इति पाठे मरणानन्तरमित्यर्थः—स. निष्ठां ते नरके मन्ये—शे.

[2] मूले दुःखं नयतीति नयो नीतिस्तद्विरुद्धोऽनय इति नयो विरुद्धार्थत्वेन धर्मविरुद्धोऽधर्म इतिवद्योगः कार्य इति भावेनानयो दुःखहेतुरनीतिरिति—गु. [3] अत्र टीका त्रुटिता स्यात् । विश्वकायः व्याप्तकायः—स.

[4] लोके वृत्तिमत एव दानादिकं सिद्ध्यति । वृत्त्यभावे दानयज्ञादिकमेव न सिद्ध्येत् । तस्मात् सर्वस्वदानं न कर्तव्यमिति भावः—शे. [5] क्रयादिव्यवहारायेति स्यात् ? स्या

अत्रापि बह्वृचैर्गीतं शृणुष्वासुरसत्तम ।
सत्यमोमिति यत् प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥
सत्यं पुष्पफलं विद्यादात्मवृक्षस्य जीवतः ।
वृक्षेऽजीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥
तद् यथा वृक्ष उन्मूलः शुष्यत्युद्वर्ततेऽचिरात् ।
एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥
पराग् रिक्तमपूर्णं वा अक्षरं यत् तदोमिति ।
तद् यत् किञ्चोमिति ब्रूयान्न स रिष्येत वै पुमान्[1] ॥ ४१ ॥

---

किमन्यत् त्वदुक्तेः प्रमाणमित्याशङ्क्य बह्वृचां वाक्यं प्रमाणमित्याह—**अत्रापीति** । **बह्वृचैः** ऋग्वेदिभिः । किं तद् गीतमित्यर्थतः प्रतीकयति—**सत्यमिति** । ओमिति यत् प्रोक्तम् । अर्थिनं प्रति तत् सत्यं तथेति संवेदनीयमित्यर्थः । नेति यदाह अर्थिनं प्रति तदनृतम् । हिशब्द उभयोर्विरोधमाह ॥ ३८ ॥

कुतः ? अत्राह—**सत्यमिति** । पुष्पमेव फलं यस्य तत् पुष्पफलम् । जीवतः प्राणधारकस्यात्माख्यवृक्षस्य सत्यं पुष्पफलं विद्यात् । पुष्पं च फलं च पुष्पफलमिति वा । यथाऽशुष्कस्य वृक्षस्य पुष्पफले स्यातां तथाऽऽत्मनः सत्यलक्षणे पुष्पफले विद्यादित्यर्थः । तदुक्तम्[2]—'पुष्पं हि फलं वाचः सत्यं वदति' इति । आत्मवृक्षेऽजीवति शुष्क(ता)लक्षणमरणे सति तत् सत्यलक्षणपुष्पफलं न स्यात् । आत्मनः आत्मवृक्षस्य अनृतं [3]सर्वस्वादानलक्षणं मूलं स्थितिकारणम् । 'अथैतन्मूलं वाचा यदनृतम्' इति च ॥३९॥ [4]विपक्षे बाधकमाह—**तद् यथेति** । तद् यथा तथोदाहरिष्यामः । उन्मूलः उत्खातशिफः वृक्षः शुष्यति, अचिरादुद्वर्तते नश्यति च । एवं नष्टानृतः नष्टमूलः सद्यस्तत्क्षणमेव शुष्येत् शुष्यति नश्यति । 'तद् यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेत्' इति च प्रमाणवाक्यम् ॥ ४० ॥

यत् तदोमित्यक्षरमेतदपूर्णं सर्वस्वं पराक् परविषयं रिक्तं पृथक्कृतम् अर्थिनं सर्वस्वं दत्तमित्यर्थस्य वाचकं[5] वदेदित्यर्थः । 'पराग् वा एतद् रिक्तमक्षरं यदेतदोमिति' इति च । फलितमाह—**तदिति** ।

---

[1] ब्रूयात् तेन रिच्येत वै पुमान्—स. । न स रिष्येतेति पाठे न नश्येदित्यर्थः । [2] महैतरेयोपनिषदि (२-२-६,७,८,९)
[3] यावद्द्रव्यदानाभावलक्षणम् । [4] सर्वदाने इत्यर्थः—गू. [5] ओमित्यक्षरम्—गू.

भिक्षवे सर्वमोंकुर्वन्नालं कामेभ्य आत्मने ।
अथैतत् पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ ४२ ॥
किञ्चनेत्यर्थिनं[1] ब्रूयात् स दुष्कीर्तिः श्वसन्मृतः[2] ।
स्त्रीषु नर्मे विवाहे च वृत्त्यर्थे प्राणसङ्कटे ।
गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४३ ॥

॥ इति श्रीमद्भागवते अष्टमस्कन्धे अष्टादशोऽध्यायः ॥

तत् तस्मात् पुमान् यत् किञ्च स्वजीवनातिरिक्तं धनं ओं दास्यामीति ब्रूयात् ब्रवीति स न रिच्येत वै न नश्यतीत्यन्वयः । 'तद्यत् किञ्चोमित्याहात्रैवास्मै तद् रिच्यते' इति । रिच्यते सम्पन्नो भवतीत्यर्थः[3] ॥ ४१ ॥

तात्पर्यादुक्तं बाधकान्तरेण द्रढयति[4]—भिक्षव इति । भिक्षवे याचमानाय सर्वमोंकुर्वन् सर्वस्वं ददत् कामेभ्यो विषयाणां दत्तत्वादात्मने नालम् आत्मनो भोज्याभावेन पर्याप्तो न भवति नष्टो भवतीत्यर्थः । अथ तस्मान्नेत्यनृतं यद् वचः एतदभ्यात्मम् आत्मानं प्रति पूर्णम् । सर्वस्वादाने स्वजीवनं सम्पन्नं भवतीत्यर्थः । अतिथिं प्रति सर्वं न दास्यामीति ब्रूयात् तर्हि आत्मानं पूर्णं सर्वस्वं जीवनं समृद्धं भवतीति पूर्वेण सम्बन्धः[5] । पूर्णं सम्पन्नम् ॥ ४२ ॥

किञ्चं नेत्यतिथिं प्रति ब्रूयादिति योगविभागः[6] कर्तव्यः । तथाहि । अतिथिं प्रति किञ्च न दास्यामीति ब्रूयात् तर्हि स दुष्कीर्तिः श्वसन् जीवन् मृतश्च भवति । एतदुक्तं भवति । याचकाय सर्वस्वदाने स्वजीवननाशः । किञ्चिदप्यदाने च अदृष्टविरोधेन[7] दुष्कीर्त्या जीवन्मृतत्वं स्यात् । तस्माद् त्

---

[1] सर्वं नेत्यर्थिनं ब्रूयात्—स.दु.शे.लि. [2] सदुष्कीर्तिश्च सन्मृत इति पाठोऽपि मूले पदरत्नावल्यामुभयत्र क्वचिदुपलभ्यते । श्वसन्मृत इति पाठस्तु सत्यधर्मतीर्थादिभिरप्यादृतः । पाठद्वयेऽपि नार्थभेदः ।

[3] रिच्यते च्युतो भवतीत्यर्थं इति स्वरसम् । असम्पन्न इति वा च्छेदः ।

[4] आत्मवृक्षस्य देहाख्यवृक्षस्यानृतं मूलम् । अनृताभावे आत्मवृक्षो नश्यतीति यद् बाधकमुक्तं तद् बाधकं प्रमाणान्तरेण द्रढयति । कामेभ्यः काम्यन्त इति कामाः इन्द्रियविषयास्तेभ्यो विषयाणां यावद्द्रव्याणां दत्तत्वान्नालम्-गु.

[5] अस्पष्टमिदं वाक्यम् । ओमित्येतद् वचः पराग् रिक्तं च । यदोमिति ब्रूयात् तद् वस्तु परमभवतीति, तेन च दाता रिक्तो भवतीति च हेतोः । यदि सर्वमोमिति ब्रूयात् तदा नष्टसर्वस्वो भवतीति जीवनमेव दुःशकम् । एवं नेत्येतद् वचः पूर्णमभ्यात्मं च । यन्नेति ब्रूयात् तदात्मानमभिवर्तते, तेन सम्पन्न एव भवतीति च हेतोः । यदि सर्वदा नेति ब्रूयात् पापिकाऽस्य कीर्तिर्भवति । अतः काल एव दद्यात् काले न दद्यात् सत्यानृते मिथुनीकरोतीत्याहोपनिषत् ।

[6] मूले किञ्चन इति तन्त्रेणान्वेति । किञ्च अतिथिं किञ्चन न दास्यामीति ब्रूयादिति यावत् ।

[7] अदृष्टं यत् स्वर्गादिफलं तद्विरोधेन—गु.

॥ अथ एकोनविंशोऽध्यायः ॥

**श्रीशुक उवाच —**

**बलिरेवं गृहपतिः कुलाचार्येण भाषितः ।**
**तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥**

**बलिरुवाच —**

**सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ।**
**अर्थं कामं यशो वृत्तं यो न बाधेत कर्हिचित् ॥ २ ॥**

**स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ।**
**प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥**

---

यावद् विहितं कर्तव्यमिति' [1] । तदुक्तम्—'स यत् सर्वमाकुर्याद् रिच्यादात्मानं स कामेभ्यो नालं स्यादथैतत् पूर्णमभ्यात्मं यन्नेति । स यत् सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव हन्यात् तस्मात् काल एव दद्यात् काले न दद्यात् तन् सत्यानृते मिथुनीकरोति तयोर्मिथुनात् प्रजायते भूयान् भवति यो वै तां वाचं वेद' इति । आत्मानं रिच्यात् शून्यं कुर्यात् । ननु प्रतिश्रुताप्रदाने महान् दोषः स्यादित्याशङ्क्यैष न स्यादित्याह—स्त्रीष्विति । नर्मे नर्मणि । हिंसायां त्रैवर्णिकविषयायाम्[2] । 'न स्त्रीषु राजन् न विवाहकाले प्राणात्यये सर्वधनापहारे' इत्यादिसिद्धमेतत् ॥ ४३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य अष्टादशोऽध्यायः ।

॥ अथ एकोनविंशोऽध्यायः ॥

भक्तिविधानार्थं त्रिविक्रमावतारमाहात्म्यं वक्ष्यस्मिन्नध्याये ।

तत्रादौ बलेः [3]सत्यसन्धनिश्चयमाह—बलिरिति ॥ १ ॥ यो दानादिधर्मोऽर्थादिकं स्वजीवनसाधनं न बाधेत न नाशयेत् सोऽयं गृहस्थानां धर्म इति यदुक्तं तत् सत्यमबाधितमित्यन्वयः ॥ २ ॥ तथैवानुष्ठेयो धर्म इति नेत्याह—स इति । यो ददामीति प्रतिज्ञाय स्थितः सोऽहं (कथं) प्रत्याचक्षे न दास्यामीति निषेधं करोमि ? कुतः ? प्राह्लादिः । कितवो धूर्तः ॥ ३ ॥

---

[1] स्वस्य स्वकीयानां च जीवनार्थं किञ्चिद् द्रव्यादिकं स्थापयित्वा अवशिष्टं ब्राह्मणेभ्यो देयं न सर्वस्वमिति भावः—दु,

[2] त्रैवर्णिकानामर्थहिंसायां सर्वार्थिनां (प्राणस्य) च हिंसायां प्रसक्तायां अनृतं जुगुप्सितं न स्यात् , इत्येव न, अपि तु तद् विहितमेव । यथाऽऽह याज्ञवल्क्यः-वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेदिति—स.

[3] सत्यसङ्कल्पविषयकनिश्चयम्—स.

न ह्यसत्यात् परोऽधर्म इति होवाच भूरियम् ।
सर्वं वोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥

नाहं बिभेमि निरयान्नाधर्म्यादसुखार्णवात् ।
न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलोभनात् ॥ ५ ॥

त यद् यद् हास्यति लोकेऽस्मिन् सम्परेतो धरादिकम् ।
तस्यात्यागे निमित्तं किं विप्रस्तुष्येत तेन चेत् ॥ ६ ॥

श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ।
दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥

यैरियं भुज्यते[1] ब्रह्मन् दैत्येन्द्रैरनिवर्तिभिः ।
तेषां कालोऽग्रसील्लोकान् न यशोऽधिगतं भुवि ॥ ८ ॥

सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ।
न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥

---

ननु वित्तलोभाभावे स्वजीवनहानिः स्यादित्याशङ्क्य दानेन[2] विप्रालम्बुद्धिरेव प्रयोजिका नान्येत्याशयेनाह— तस्येति । यत्प्रतिश्रुतं तेन वित्तेन विप्रो यदि तुष्येत तर्हि तस्य वित्तस्यात्यागे अदाने निमित्तं कारणं किम् ? न किमपि ॥ ६ ॥

स्वजीवनं कारणं चेत्तत्राह—श्रेय इति । के ते साधव इति तत्राह— दध्यङिति । दध्यङ्ङाथर्वणो देवेभ्यः स्वदेहम्, शिबिः कपोताय । ततः प्रकृते किम् ? तत्राह—को विकल्प इति । दित्सितेषु धरादिषु विकल्पः दास्यामि न वेति संशयः कः ? न कोऽपीत्यर्थः ॥ ७ ॥

सति विभवेऽर्थिनि च प्राप्ते लोभाददातॄणाम् ऐहिकामुष्मिकसुखं न सेत्स्यतीत्याशयेनाह— यैरियमिति । अनिवर्तिभिः, युद्ध इति शेषः । कालो यमः, स्वर्गादिलोकानग्रसीत् ग्रस्तवान् । 'ये लोका दानशीलानां स तानाप्नोति पुष्कलान्' इति स्मृतिसिद्धलोका न सन्तीत्यर्थः[3] ॥ ८ ॥

पात्राभावान्न दास्यन्ति तस्मिन् सति दातारः सुलभा इति तत्राह—युधीति । यथा युधि युद्धादनिवृत्तास्तनुत्यजः शरीरत्यागिनः सुलभास्तथा तीर्थे पात्रे प्राप्ते श्रद्धया धनत्यजः धनदातारो न

---

[1] यैरियं बुभुजे—स. [2] दाने इति पेशलम् ।

[3] यैर्दैत्येन्द्रैरनिवर्तिभिः युद्धादप्रत्यावर्तनैरियं मही बुभुजे भुक्ता तेषां समितिमृतानां लोकान् ऐहिकानामुष्मिकांश्च क्षीणे पुण्य इत्यादेः, काल ईश्वरोऽग्रसीत् जग्रास । भुव्यधिगतं प्राप्तं यद्यशः तत्तु नाग्रसीत् । अधुनापि तत्यजुर्दुस्त्यजान् कायानिति तत्कीर्तिर्वर्तते । अतः सैव सम्पाद्येति भावः—स.

मनस्विनः कारुणिकस्य शोभनं यदर्थकामोपनयेन[1] दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम् ॥१०॥

यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ।
स एष विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने[2] ॥

यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ।
तथाप्येनं न हिंसिष्ये [3]लीनं ब्रह्मतनुं रिपुम् ॥ १२ ॥

एष वा उत्तमश्लोको न जिहासति यद् यशः ।
हत्वा मैनां हरेद् युद्धे शयीत निहतो मया ॥ १३ ॥

---

सुलभा इत्यन्वयः । 'तीर्थं मन्त्रेऽप्युपाध्याये शास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनि-यज्ञयोः' इति यादवः । 'परा चिच्छीर्षा ववृजुस्त इन्द्रा यज्वानो यज्विभिः स्पर्द्धमानाः' इति (च) ॥ ९ ॥

ननु सर्वस्वदाने स्वजीवनहानिलक्षणः क्लेशः स्यादिति यदुक्तं तत्राह— **मनस्विन इति** । य अर्थकामाम् याचमानाय कामितार्थदानेनोपनयो गृहं प्रति प्रस्थापनं यत् तेन दुर्गतिर्दारिद्र्यलक्षणनाशो भवतीति यत् तत् कारुणिकस्य मनस्विन उदारस्य शोभनमिहामुत्र सुखसाधनं स्यात् । भवादृशां ब्रह्मविदां सर्वस्वदानात् क्लेशः सुखहेतुरिति किं पुनः किमु वक्तव्यम् ? फलितमाह—**तत इति** ॥ १० ॥

अयं वटुरपि यः कश्चन न भवतीति दर्शयन् स्वस्य हरिविषयं ज्ञानं सूचयन्नाह—**यजन्तीति**[4] । क्रतुभिः सङ्कल्पैः सप्ततन्तुसञ्ज्ञैर्वा ॥ ११ ॥ ब्रह्मतनुं ब्राह्मणं वटुम् ॥ १२ ॥

जिहासति त्यक्तुमिच्छति । मा माम्, एनां गाम्[6] ॥ १३ ॥

---

[1] यदर्थिकामोपनयेन—स. अर्थिनो यादृशतादृशस्यापि कामस्याभिलषितस्योपनयः प्रापणं तेन दुर्गतिर्नरको दारिद्र्यं वेति यत् तत् मनस्विनः कारुणिकस्य शोभनं मङ्गलमेव—स.

[2] स एष विष्णुर्वरदो वाऽस्तु परः शत्रुर्वाऽस्तु । अनुग्रहकृद् वाऽस्तु निग्रहकृद् वाऽस्तु । ईप्सितामेतदाकाङ्क्षितां क्षितिं दास्यामि । हे मुने । अनेन मौनमेव तव गुणदमिति सम्बोधयामासैवमिति सूचितं भवति—स.

[3] भीतम्—स.शे.लि. [4] आम्नायानां वेदोक्तानां कर्मणां विधानेऽनुष्ठाने कोविदा भवन्त आदृता आदरवन्तः सन्तो विष्णुं यज्ञैरश्वमेधादिभिः क्रतुभिः सप्तसंस्थज्योतिष्टोमादिभिर्यजन्ति । स एषो विष्णुर्वरदो वाऽस्तु शत्रुर्वाऽस्तु, अमुष्मा ईप्सितां क्षितिं दास्यामि—शे.

[5] ननु तवानिष्टकर्तृत्वादयं वध्य एव किं न स्यादिति चेन् । [इमां] छद्मना राज्यमपहरेत् युद्धादिधर्मेण वा ? तत्राद्यपक्षमाशङ्क्योत्तरमाह—यद्यपीति । अधर्मेण छद्मना । [अनागसं] निरपराधिनं माम् । भीतमत एव ब्रह्मतनुं ब्राह्मणवेषधारिणं रिपुमनिष्टकारिणमप्येनं दातुं न हिंसिष्ये [इति] [illegible]याम् । द्वितीयमाशङ्क्य परिहरति—एष वेति ।

न ह्यसत्यात् परोऽधर्म इति होवाच भूरियम् ।
सर्वं वोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥

नाहं बिभेमि निरयान्नाधर्म्यादसुखार्णवात् ।
न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलोभनात् ॥ ५ ॥

त यद् यद् हास्यति लोकेऽस्मिन् सम्परेतो धरादिकम् ।
तस्यात्यागे निमित्तं किं विप्रस्तुष्येत तेन चेत् ॥ ६ ॥

श्रेयः कुर्वन्ति भूतानां साधवो दुस्त्यजासुभिः ।
दध्यङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥

यैरियं भुज्यते[1] ब्रह्मन् दैत्येन्द्रैरनिवर्तिभिः ।
तेषां कालोऽग्रसील्लोकान् न यशोऽधिगतं भुवि ॥ ८ ॥

सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ।
न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥

---

ननु वित्तलोभाभावे स्वजीवनहानिः स्यादित्याशङ्क्य दानेन[2] विप्रालम्बुद्धिरेव प्रयोजिका नान्येत्याशयेनाह — तस्येति । यत्प्रतिश्रुतं तेन वित्तेन विप्रो यदि तुष्येत तर्हि तस्य वित्तस्यात्यागे अदाने निमित्तं कारणं किम् ? न किमपि ॥ ६ ॥

स्वजीवनं कारणं चेन्नेत्याह — श्रेय इति । के ते साधव इति तत्राह — दध्यङिति । दध्यङाथर्वणो देवेभ्यः स्वदेहम्, शिबिः कपोताय । ततः प्रकृते किम् ? तत्राह — को विकल्प इति । दित्सितेषु धरादिषु विकल्पः दास्यामि न वेति संशयः कः ? न कोऽपीत्यर्थः ॥ ७ ॥

सति विभवेऽर्थिनि च प्राप्ते लोभाददातॄणाम् ऐहिकामुष्मिकसुखं न सेत्स्यतीत्याशयेनाह — यैरियमिति । अनिवर्तिभिः, युद्ध इति शेषः । कालो यमः, स्वर्गादिलोकानग्रसीत् ग्रस्तवान् । 'ये लोका दानशीलानां स तानाप्नोति पुष्कलान्' इति स्मृतिसिद्धलोका न सन्तीत्यर्थः[3] ॥ ८ ॥

पात्राभावान्न दास्यन्ति तस्मिन् सति दातारः सुलभा इति तत्राह — युधीति । यथा युधि युद्धादनिवृत्तास्तनुत्यजः शरीरत्यागिनः सुलभास्तथा तीर्थे पात्रे प्राप्ते श्रद्धया धनत्यजः धनदातारो न

---

[1] यैरियं बुभुजे—स. [2] दाने इति पेशलम् ।

[3] यैर्दैत्येन्द्रैरनिवर्तिभिः युद्धादप्रत्यावर्तनैरियं मही बुभुजे भुक्ता तेषां समितिमृतानां लोकान् ऐहिकानामुष्मिकांश्च क्षीणे पुण्य इत्यादेः, काल ईश्वरोऽग्रसीत् जग्रास । भुव्यधिगतं प्राप्तं यद् यशः तत्तु नाग्रसीत् । अधुनापि तत्यजुर्दुस्त्यजान् कायानिति तत्कीर्तिर्वर्तते । अतः सैव सम्पाद्येति भावः—स.

मनस्विनः कारुणिकस्य शोभनं यदर्थकामोपनयेन[1] दुर्गतिः ।
कुतः पुनर्ब्रह्मविदां भवादृशां ततो वटोरस्य ददामि वाञ्छितम् ॥१०॥
यजन्ति यज्ञक्रतुभिर्यमादृता भवन्त आम्नायविधानकोविदाः ।
स एष विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने[2] ॥
यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ।
तथाप्येनं न हिंसिष्ये [3]भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥
एष वा उत्तमश्लोको न जिहासति यद् यशः ।
हत्वा मैनां हरेद् युद्धे शयीत निहतो मया ॥ १३ ॥

---

सुलभा इत्यन्वयः । 'तीर्थं मन्त्रेऽप्युपाध्याये शास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनि-यज्ञयोः' इति यादवः । 'परा चिच्छीर्षा ववृजुस्त इन्द्रा यज्वानो यज्विभिः स्पर्द्धमानाः' इति (च) ॥ ९ ॥

ननु सर्वस्वदाने स्वजीवनहानिलक्षणः क्लेशः स्यादिति यदुक्तं तत्राह—**मनस्विन इति** । य अर्थकामाम् याचमानाय कामितार्थदानेनोपनयो गृहं प्रति प्रस्थापनं यत् तेन दुर्गतिर्दारिद्र्यलक्षणनाशो भवतीति यत् तत् कारुणिकस्य मनस्विन उदारस्य शोभनमिहामुत्र सुखसाधनं स्यात् । भवादृशां ब्रह्मविदां सर्वस्वदानात् क्लेशः सुखहेतुरिति किं पुनः किमु वक्तव्यम् ? फलितमाह—**तत इति** ॥ १० ॥

अयं वटुरपि यः कश्चन न भवतीति दर्शयन् स्वस्य हरिविषयं ज्ञानं सूचयन्नाह—**यजन्तीति**[4] । क्रतुभिः सङ्कल्पैः सप्ततन्तुसञ्ज्ञैर्वा ॥ ११ ॥ ब्रह्मतनुं ब्राह्मणं वटुम् ॥ १२ ॥

जिहासति त्यक्तुमिच्छति । मा माम्, एनां गाम्[5] ॥ १३ ॥

---

[1] यदर्थिकामोपनयेन—स. अर्थिनो यादृशतादृशस्यापि कामस्याभिलषितस्योपनयः प्रापणं तेन दुर्गतिर्नरको दारिद्र्यं वेति यत् तत् मनस्विनः कारुणिकस्य शोभनं मङ्गलमेव—स.

[2] स एष विष्णुर्वरदो वाऽस्तु परः शत्रुर्वाऽस्तु । अनुग्रहकृद् वाऽस्तु निग्रहकृद् वाऽस्तु । ईप्सितामेतदाकाङ्क्षितां क्षितिं दास्यामि । हे मुने । अनेन मौनमेव तव गुणदमिति सम्बोधयामासैवमिति सूचितं भवति—स.

[3] भीतम्—स.शे.लि. [4] आम्नायानां वेदोक्तानां कर्मणां विधानेऽनुष्ठाने कोविदा भवन्त आदृता आदरवन्तः सन्तो विष्णुं यज्ञैरश्वमेधादिभिः क्रतुभिः सप्तसंस्थज्योतिष्टोमादिभिर्यजन्ति । स एषो विष्णुर्वरदो वाऽस्तु शत्रु-र्वाऽस्तु, अमुष्मा ईप्सितां क्षितिं दास्यामि—शे.

[5] ननु तवानिष्टकर्तृत्वादयं वध्य एव किं न स्यादिति चेत् । [इमां] छद्मना राज्यमपहरेत् युद्धादिधर्मेण वा ? तत्राद्यपक्षमाशङ्क्योत्तरमाह—यद्यपीति । अधर्मेण छद्मना । [अना]गसं निरपराधिनं माम् । भीतमत एव ब्रह्मतनुं ब्राह्मणवेषधारिणं रिपुमनिष्टकारिणमप्येनं दत्तुं न हिंसिष्ये [इत्याह] यद्याम् । द्वितीयमाशङ्क्य परिहरति—एष वेति ।

श्रीशुक उवाच —

एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ।
शशाप दैवप्रहितः सत्यसन्धं मनस्विनम् ॥ १४ ॥

दृढं पण्डितमान्यज्ञ स्तब्धोऽस्यस्मदुपेक्षया ।
मच्छासनातिगो यस्त्वमचिराद् भ्रश्यसे श्रियः ॥ १५ ॥

एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ।
वामनाय ददावेतामर्चित्वोदकपूर्वकम् ॥ १६ ॥

विन्ध्यावलिस्तदागत्य पत्नी जालकमालिनी ।
आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥

यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा ।
अवनिज्यावहन्मूर्ध्नि तदापो[1] विश्वपावनीः ॥ १८ ॥

तदाऽसुरेन्द्रं दिवि देवतागणा गन्धर्वविद्याधरसिद्धचारणाः ।
तत्कर्म सर्वेऽपि [2]गृणन्त [3]आर्यं प्रसूनवर्षैः ववृषुर्मुदाऽन्विताः ॥ १९ ॥

---

अश्रद्धितम् अश्रद्धयोपेतम् । प्रहितः प्रेरितः । सत्यसन्धं सत्यप्रतिज्ञम् ॥ १४ ॥

जालकैः कुड्मलैः कृता मालाऽस्या अस्तीति जालकमालिनी । 'जालककोरककलिका-कुड्मलमुकुलानि तुल्यानि' इति हलायुधः । अपामद्भिः भृतं पूर्णम् । जलैरवनेजयन्ती[4] प्रक्षालनमिच्छन्ती ॥ १७ ॥

आर्यं ज्ञानिनमसुरेन्द्रम् ॥ १९ ॥

---

एष उत्तमश्लोको महाकीर्तिर्हरिः यद् यदि यशो न जिहासति त्यक्तुं नेच्छति । युद्धं कृत्वैव राज्यमपहरिष्यामीति कीर्तिकामुकश्चेदिति यावत् । तर्हि युद्धे मां हत्वा एनां भूमिं हरेत् । मया निहतो वा भूमौ शयीत न चायं युद्धं कृत्वा राज्यमपहर्तुं समागतः । किन्तु भीतः सन् छद्मनैव ब्राह्मणवेषं धृत्वा समागतः । अतः कथमपि वध्यः स्यादिति भावः — शे.

[1] तदपो — लि.　[2] अभिगृणन्त इति क्वचित् कोशेषु ।　[3] आर्जवम् इति स पाठः ।

[4] अवनेजयन्तीत्यत्र अवनेजितुमिच्छन्तीति णिजिर् शौचपोषणयोरिति धातोः शतृ प्रत्ययान्ते स्त्रियां ङीप् नुमागमश्च — गृ. अवनेजनस्येमा अवनेजन्यस्ताश्च ता आपश्च आवनेजन्यापस्तासां भृतम् । समासान्तविधेरनित्यतया नाप्रत्ययः — स.

नेदुर्मुहुर्दुन्दुभयः सहस्रशो गन्धर्वकिम्पूरुषकिन्नरा जगुः ।
मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद् यद् रिपवे जगत्त्रयम् । २०॥

तद् वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम् ।
भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासन् ॥२१॥

काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ।
ददर्श विश्वं त्रिगुणं गुणात्मके भूतेन्द्रियार्थाशयजीवयुक्तम् ॥ २२ ॥

रसामचष्टाङ्घ्रितलेऽथ पादयोः महीं महीध्रान् पुरुषस्य जङ्घयोः ।
पतत्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं [1]मरुतामिन्द्रसेनः ॥ २३ ॥

सन्ध्यां विभोर्वाससि गुह्य ऐक्षत् प्रजापतीन् जघने स्वात्ममुख्यम्[2] ।
नाभ्यां नभः कुक्षिषु सप्तसिन्धूनुरुक्रमस्योरसि ऋक्षमालाम् ॥ २४ ॥

हृद्यङ्ग धर्मं स्तनयोर्मुरारेर्ऋष्यं[3] च सत्यं च मनस्यथेन्दुम् ।
श्रियं च वक्षस्यरविन्दहस्तां कण्ठे च सामानि समस्तरेफान्[4] ॥ २५ ॥

---

विद्वान् दानफलं शत्रुरिति वा, स्वजातिरिपवे वामनाय जगत्त्रयमदादिति यत् तस्मादनेन मनस्विना बलिना सुदुष्करं कृतमित्युक्त्वा जगुः ॥ २० ॥

भूखादयो यस्मिन् रूपे आसन् सावकाशं स्थिताः तद् वामनमणुतरं रूपमवर्द्धतेत्यन्वयः । गुणत्रयस्यात्मा कृतिर्येन तत् तथा तत्[5] । 'आत्मा जीवे कृतौ देहे स्वभावे परमात्मनि । यक्षेऽर्केऽग्नौ मतौ वातेऽप्याखुः सूकरमूषकौ' इति यादवः ॥२१॥ अर्थाः शब्दादयः । आशयो मनो बुद्धिर्वा ॥२२॥

महीध्रान् पर्वतान् । इन्द्रसेनो बलिः ॥ २३ ॥ स्वात्ममुख्यं भृत्येषु[6] मुख्यम् । ऋक्षमालां नक्षत्रपङ्क्तिम् ॥ २४ ॥ समस्तरेफान् सर्वशब्दान् ॥ २५ ॥

---

[1] मारुतम्—शे. [2] स्वात्ममुख्यान्—स । स्वात्मा बलिर्मुख्यो येषां ते । स्वभृत्यसङ्घानित्यर्थः । स्वात्ममुख्यमिति पाठे दाससङ्घमित्यर्थः—स.

[3] ऋषिषु भवं ऋष्यं ज्ञानम्—गू. ऋतं—स,शे,लि, पाठः ।

[4] समस्तवर्णानित्यर्थः । साकल्येन कण्ठे वर्णा वर्तन्त इति ज्ञापनार्थं रेफानिति लाक्षणिकशब्दप्रयोगः । अनेन भगवत्कण्ठस्य व्याप्तसर्ववर्णाश्रयत्वरूपं माहात्म्यमुक्तं भवति । समस्तवर्णानित्युक्ते समस्तवर्णानां कण्ठे एकदेशेऽवस्थानं प्रतीयेत—दु.

[5] गुणत्रयमात्मनि काये यस्य तत् । गुणत्रयात्मनः कं सुखं तदुपलक्षितं योऽयं दुःखादिकं येन तदिति वा । गुणत्रयाणामात्मा स्वामी च तत् कं सुखात्मकं चेति वा—स. [6] नृपेषु—ग.

इन्द्रप्रधानानमरान् भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि ।
केशेषु मेघान् श्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥
वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ।
अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥ २७ ॥
स्पर्शे च कामं नृप रेतसम्भः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ।
छायासु[1] मृत्युं हसिते च मायां तनूरुहेष्वौषधिजातयश्च[2] ॥ २८ ॥
नदाश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ।
प्राणेषु गात्रे स्थिरजङ्गमानि क्षणार्धमात्रेण विवृद्धमूर्तेः ॥ २९ ॥
सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरङ्ग ।
सुदर्शनं चक्रमसह्यतेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥
पर्जन्यघोषो जलजः पाञ्चजन्यः कौमोदकी विष्णुगदा तरस्विनी ।
वैद्याधरोऽसिः शतचन्द्रयुक्तस्तूणोत्तमावक्षयसायकौ च ।
सुनन्दनन्दा[3] उपतस्थुरीशं स्वपार्षदमुख्याः[4] सहलोकपालाः ॥ ३१ ॥
स्फुरत्किरीटाङ्गदमीनकुण्डलश्रीवत्सरत्नोत्तममेखलाम्बरैः ।
मधुव्रतस्रग्वनमालया वृतो रराज राजन् भगवानुरुक्रमः ॥ ३२ ॥
क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ।
पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयस्य तदीयमण्वपि ।
उरुक्रमस्याङ्घ्रिरुपर्यधो दिवो महर्जनाभ्यां तपसः परं गतः ॥ ३३ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे एकोनविंशोऽध्यायः ।

---

रसे रसनायाम् । मन्युं क्रोधाभिमानिनं देवम् ॥ २७ ॥
रेतस्यं रेतस उद्भूतम् ॥ २८ ॥ वैद्याधरो विद्याधरसम्बन्धी ॥ ३१ ॥ कियत्पर्यन्त-

---

[1] छयासु सृष्टासु मृत्युं—स. [2] जातयो ज्ञातीः—गु. शे. लि.

[3] सुनन्देन युक्तो नन्दो येषु ते सुनन्दनन्दाः स्वपार्षदमुख्याः कुमुदकुमुदेक्षणादय ईशमुपतस्थुरिति योज्यम्—गु. सुनन्दनन्दौ इति स पाठः ।

[4] स्वपार्षमुख्या इति स पाठः स्यात् । तथा हि । पार्षदा एव पार्षाः । अपि माषमित्यादेः—स.

॥ अथ विंशोऽध्यायः ॥

श्रीशुक उवाच —

स तं समीक्ष्याब्जभवो नखेन्दुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ।
मरीचिमिश्रा ऋषयो बृहद्व्रताः सनन्दनाद्या नरदेव योगिनः ॥ १ ॥

वेदोपवेदा नियमा यमान्वितास्तर्केतिहासाङ्ग[1]पुराणसंहिताः ।
ये चापरे योगसमीरदीपितज्ञानाग्निना रन्धितकर्मकल्मषाः ॥ २ ॥

ववन्दिरे यत्स्मरणानुभावतः स्वायम्भुवं धाम गता अकर्मकम् ।
अथाङ्घ्रये प्रोन्नमिताय विष्णोरुपाहरत् पद्मभवोऽर्हणादिकम् ॥ ३ ॥

---

मवर्धतेति तत्राह — **क्षितिमिति**[2] ॥ ३३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य एकोनविंशोऽध्यायः ।

॥ अथ विंशोऽध्यायः ॥

सर्वस्वापहरणेऽपि भगवद्भक्तस्याण्वपि मनोदुःखं न स्यादिति दर्शयितुमुत्तराध्यायारम्भः । तत्रादौ ब्रह्मणोऽतिथेरागमने पादार्चनादिगार्हस्थ्यधर्मप्रदर्शनप्रकारं वक्ति — **स तमिति** । हता स्वधाम्नः सत्यनाम्नो द्युतिर्यस्य स तथा । नखेन्दुभिः, हरेरिति शेषः । आवृतः, परिवारैरिति शेषः । अभ्यगात्, पादप्रदेशमिति शेषः ॥ १ ॥

यस्य हरेः स्मरणानुभावः निरन्तरोपास्तिप्रभावस्तस्मात् । ‘अनुभावः प्रभावे स्यान्निश्चये भावसूचके’ इति यादवः । स्वायम्भुवं स्वयम्भुवो ब्रह्मणो विद्यमानं धाम गृहं सत्यलोकं गताः मरीचिप्रधानास्तस्य अकर्मणा[3] ज्ञानेन प्राप्यं यत् तत्पदं ववन्दिर इत्यन्वयः ॥ ३ ॥

---

[1] अङ्गानि शिक्षादीनीति यावत् ।

[2] एकेन पदा बलेः क्षितिं विचक्रमे । शरीरेण नभो बाहुभिर्दिशश्च विचक्रमे । त्रिविष्टपं प्रति द्वितीयं पदं क्रमतः क्षिपतस्त्रिविक्रमस्य तृतीयस्य संकल्पिततृतीयस्य पदस्य तदीयं बलिसम्बन्धि अण्वल्पमपि पदं स्थानं न नावर्तत । वै प्रसिद्धम् । तर्हि स द्वितीयः कियत्पर्यन्तमङ्घ्रिर्गत इत्यत आह — उरुक्रमस्येति । दिवः स्वर्गादुपरि । अथो महर्जनाभ्याम् । तथा तपसस्तपोलोकादपि परं सत्यलोकं गतः । महर्जनोभ्यामिति पाठोऽपि प्राङ्क्तः — स.

[3] अकर्मकं कर्मप्राप्यं न, ज्ञानप्राप्योऽयं पादस्तम् — स.

समर्च्य भक्त्याऽभ्यगृणाच्छुचिश्रवा यन्नाभिपङ्केरुहसम्भवः स्वयम्[1] ॥४॥

धातुः कमण्डलुजलं तदुरुक्रमस्य
पादावनेजनपवित्रतया[2] नरेन्द्र ।
स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि
लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ५ ॥

ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ।
सानुगा बलिमाजह्रुरसङ्क्षिप्तात्मभूतये ॥ ६ ॥

तोयैः समर्हणैः स्रग्भिर्दिव्यगन्धानुलेपनैः ।
धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलाङ्कुरैः ॥ ७ ॥

स्तवनैर्जयशब्दैश्च कीर्तिभिर्नियमाङ्कितैः ।
नृत्तवादित्रगीतैश्च शङ्खदुन्दुभिनिःस्वनैः ॥ ८ ॥

जाम्बवान् ऋक्षराजस्तु भेरीशब्दैर्मनोजवः ।
विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ९ ॥

महीं सर्वां हृतां दृष्ट्वा त्रिपदव्याजयाञ्चया[3] ।
ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ १० ॥

---

यस्य हरेः, तस्य विष्णोः[1] ॥ ४ ॥

तत् कमण्डलुजलं स्वर्धुनी स्वर्गङ्गा नदी अभूत् । निमार्ष्टि शुद्धं करोति ॥ ५ ॥

असङ्क्षिप्ता सङ्कोचरहिता अपरिमिता आत्मभूतिः स्वरूपश्रीर्येन स तथा तस्मै । 'भूतिः श्रीजन्मभस्मनि ' इति च ॥ ६ ॥

---

[1] शुचिश्रवा शुद्धकीर्तिः स्वयं ब्रह्मा यस्य हरेर्नाभिपङ्केरुहसम्भवः, तस्य विष्णोरङ्घ्रिं समर्च्य प्रक्षालनादिभिः पूजयित्वाऽभ्यगृणादस्तौदिति योज्यम् ।

[2] पादावनेजनेन पादप्रक्षालनेन प्राप्ता या पवित्रता तया—गू.

[3] त्रिपदविषया या व्याजयाञ्चा तया बलेर्महीं हृतां दृष्ट्वाऽमर्षिताः सन्त ऊचुः—गू.

न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां[1] वरः ।
द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ ११ ॥

अनेन याचमानेन शत्रुणा वटुरूपिणा ।
सर्वस्वं नो हृतं भर्तुर्न्यस्तदण्डस्य बर्हिषि ॥ १२ ॥

सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ।
नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १३ ॥

तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ।
इत्यायुधानि जगृहुर्बलेरनुचरासुराः[2] ॥ १४ ॥

ते सर्वे वामनं हन्तुं शूलपट्टिशपाणयः ।
अनिच्छतो बले राजन् प्राद्रवञ्जातमन्यवः ॥ १५ ॥

तानभिद्रवतो दृष्ट्वा दितिजानीकपान् नृप ।
प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १६ ॥

नन्दः सुनन्दोऽथ जयो विजयः प्रबलो बलः ।
कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १७ ॥

जयन्तः श्रुतदेवश्च पुष्पदन्तोऽथ सात्वतः ।
सर्वे नागायुतप्राणाः स्वां स्वां ते जघ्नुरासुरीम् ॥ १८ ॥

हन्यमानान् स्वकान् दृष्ट्वा पुरुषानुचरैर्बलिः ।
वारयामास संरब्धान् काव्यशापमनुस्मरन् ॥ १९ ॥

हे विप्रचित्ते हे राहो, हे हेते श्रूयतां वचः ।
मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ २० ॥

---

अयं [3]ब्रह्मबन्धुर्न वै, किंस्विद् विष्णुः ॥११॥ स्वां स्वां स्वस्य प्राप्ताम् असुरसेनाम् ॥१८॥

---

[1] माया कापट्यमेषामस्तीति मायाविनस्तेषाम्—गू. [2] अनुचरासुरा इत्येकं पदम्—गू.

[3] न वाऽयं ब्रह्मबन्धुरित्यस्य ब्रह्मबन्धुर्वै ब्राह्मणाभासोऽपि नेत्यर्थः—दु. ब्रह्मबन्धुर्यौगिकः शब्दो ब्रह्मणो ब्राह्मणस्य बन्धुर्बान्धवः पुत्र इति यावत् । अतद्धर्मेतीयमुक्तिः । ब्राह्मणपुत्रो न वै नैव । मायाविनां वरः विष्णुः । ननु दृश्यते श्रूयते च कश्यपस्य पुत्र इतीयत आह–ब्रह्मबन्धुर्ब्राह्मणाभास इति । तत्र हेतुमाहुः द्विजरूपप्रतिच्छन्न इति । विपरीतो वा हेतुमद्भावः—स.

यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ।
तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २१ ॥

यो नो भवाय प्रागासीदभवाय दिवौकसाम् ।
स एव भगवानद्य वर्तते तद्विपर्ययम्[1] ॥ २२ ॥

बलेन सचिवैर्बुध्या दुर्गमन्त्रौषधादिभिः ।
सामादिभिरुपायैश्च कालं नात्येति वै जनः ॥ २३ ॥

भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ।
दैवरुद्धास्त एवाद्य युधि जित्वा नदन्ति नः ॥ २४ ॥

एतान् वयं विजेष्यामो यदि दैवं प्रसीदति ।
तस्मात् कालं प्रतीक्षध्वं यो नोऽर्थत्वाय[2] कल्पते ॥ २५ ॥

श्रीशुक उवाच —

पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ।
रसां निविविशू राजन् विष्णुपार्षदताडिताः ॥ २६ ॥

अथ तार्क्ष्यसुतो ज्ञात्वा विराड् विभुचिकीर्षितम् ।
बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतोः ॥ २७ ॥

हाहाकारो महानासीद् रोदस्योः[3] सर्वतो दिशम् ।
गृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २८ ॥

तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ।
नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २९ ॥

पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ।
द्वाभ्यां क्रान्ता मही सर्वा[4] तृतीयमुपकल्पय ॥ ३० ॥

---

पौरुषैः पुरुषकारैः ॥ २२ ॥ रसां रसातलम् ॥ २६ ॥
विराट् पक्षिराट् । क्रतोः सौत्येऽहनि क्रतोः [5]सोमपानदिवसे ॥ २७ ॥

---

[1] तस्य भवस्य विपर्ययं देवानां भवाय नोऽभवायेत्येवंरूपं विपरीतं यथा स्यात् तथा वर्तते—गू. तद्विपर्ययः–लि पाठः । [2] अर्थशब्दस्य मत्वर्थीयार्श आद्यजन्तत्वमङ्गीकृत्य अर्थत्वायेत्यस्य अर्थवत्त्वायेत्यर्थः–दु. [3] द्यावापृथिव्योः । [4] मही सर्वा द्यौश्चेति द्वाभ्यामिति योज्यम्—गू. [5] सोमाभिषवदिवसे—स.

यावत् तपत्यसौ गोभिर्यावदिन्दुः सहोडुभिः ।
यावद् वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३१ ॥

पदैकेन मया क्रान्तो भूर्लोको विवरैः सह ।
स्वर्लोकस्तु द्वितीयेन पश्यतस्ते मयाऽऽत्मना[1] ॥ ३२ ॥

प्रतिश्रुतमदातुस्ते निरये वास इष्यते ।
विश त्वं निरयं तस्माद् गुरुणा चानुमोदितः ॥ ३३ ॥

विप्राय प्रति यो श्रुत्य न तदर्पयते क्वचित्[2] ।
वृथा मनोरथस्तस्य दूरं स्वर्गात् पतत्यधः[3] ॥ ३४ ॥

विप्रलब्धो ददामीति त्वयाऽहं चाढ्यमानिना ।
तद् व्यलीकफलं भुङ्क्ष्व निरयं कतिचित् समाः ॥ ३५ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे विंशोऽध्यायः ।

---

पदत्रयं मितं[4] [5]भूरमिताऽतः कथं तृतीयगुपकल्पयेत्युच्यत इति तत्राह—यावदिति ॥३१॥

अस्तु भूमेरियत्ता तथापि लक्षणशास्त्रलक्षितपदस्याणुत्वेन तन्मितत्वेन किमनुपपन्नमित्याशङ्क्येदं पदमलौकिकमित्याशयेनापूर्तिमाह[6]—पदेति ॥ ३२ ॥

आत्मना प्रतिश्रुतं स्ववित्तमदातुस्तव । यतो नष्टप्रतिज्ञस्तस्मात् ॥ ३३ ॥

किञ्च यः प्रतिश्रुतं न पूरयति तस्य स्वर्गमाप्नवानीति मनोरथो मृषा भवति । प्रतिश्रुतैकदेशदानेनापि मनोरथः स्यादिति चेत् । सत्यम् । तत्फलं स्वर्गं प्राप्नोति पुनस्ततोऽदानदोषेण निकृष्टां तिरश्चां योनिमाप्नोतीत्याह—दूरमिति । (स्वर्गात्) अधः पतित्वा दूरं यातीत्यर्थः ॥ ३४ ॥

प्रतिश्रुतैकदेशदानात् फलप्राप्तिः स्यादित्यभ्युपगम्य चेदमुक्तम् । तव तदपि न स्यात् किन्तु निरयनिवास एव विप्रलम्भनदोषादित्याह—विप्रलब्ध इति । तत् तस्माद् व्यलीकफलमनृतफलम् ॥ ३५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य विंशोऽध्यायः

---

[1] आत्मना व्याप्तेन मयेति योज्यम्—गू.   [2] प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलंभते—शे.

[3] दूरस्वर्गः पतत्यधः—स । दूरे स्वर्गो यस्य स तथा सन् अधः पतति—स. दूरे स्वर्गः—शे.

[4] परिमितम् ।   [5] पञ्चाशत्कोटिविस्तीर्णा ।

[6] सप्तपादश्चतुर्हस्त इत्यादिलक्षणशास्त्रे लक्षितं सप्तपादत्वं च पादगणनया सप्तपादपरिमितदैर्घ्यमित्यादिलक्षणवत्तयोक्त

## ॥ अथ एकविंशोऽध्यायः ॥

श्रीशुक उवाच —

एवं विप्रकृतो राजन् बलिर्भगवताऽसुरः ।
भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥ १ ॥

बलिरुवाच —

यद्युत्तमश्लोक भवान् ममेरितं वचो व्यलीकं सुरवर्य[1] मन्यसे ।
करोम्यृतं तन्न भवेत् प्रलम्भनं पदं तृतीयं कुरु शिर्ष्णि मे निजम् ॥

बिभेमि नाहं निरयात् पदच्युतो न पाशबन्धाद् व्यसनाद् दुरत्ययात् ।
नैवार्थकृच्छ्राद् भवतो विनिग्रहादसाधुवादाद् भृशमुद्विजे यथा ॥ ३ ॥

पुंसां श्लाघ्यतमं मन्ये दण्डमर्हत्तमार्पितम् ।
यं न माता पिता भ्राता सुहृदश्चादिशन्ति हि ॥ ४ ॥

त्वं नूनमसुराणां नः पारोक्ष्यं परमो गुरुः ।
यो नोऽनेकमदान्धानां तद्भ्रंशं चक्षुरादिशः ॥ ५ ॥

---

## ॥ अथ एकविंशोऽध्यायः ॥

बलिः स्वात्मनोऽलीकं प्रकारान्तरेण परिहर्तुमाह[2]—एवमिति ॥ १ ॥

प्रलम्भनं वञ्चनम् । विप्रलम्भनं कथं न भवेदिति तत्राह—[3]पदमिति ॥ २ ॥

स्वात्मनो ह्रीलक्षणसामग्रीमाह—बिभेमीति ॥ ३ ॥ अभिन्नात्मत्वं[4] दर्शयति—पुंसामिति ॥ ४ ॥ पारोक्ष्यं साक्षात्कारमन्तरेण । तस्य मदस्य भ्रंशो येन तत् तथा ॥ ५ ॥

---

यत्पदं तस्याणुत्वेन भूमेस्तु तन्मितत्वेन लक्षणशास्त्रोक्तपादपरिमितत्वेन यथा प्रतिश्रुतं तथा दत्ते दाने किमनुपपन्नं का वाऽनुपपत्तिरित्याशङ्क्य पूर्णमदः पूर्णमिदमिति श्रुतेरिदं प्रतीयमानपदं लोकावलक्षणमित्याशयेन प्रतिश्रुत-दानस्यापूर्तिमाहेति टीकार्थः । न च लक्षणशास्त्रोक्तपादस्याणुत्वशङ्कायां नेदमुत्तरमिति वाच्यम् । स्वपादगणनया सप्तपादपरिमितदैर्घ्यस्यैवोक्तत्वादिति—गू.

1 सुरर्षभ—लि. कोशान्तरेंष्वप्ययं पाठो दृश्यते । 2 परिहर्तुमाहेति वक्ति श्रीशुक इति यावत् ।

3 हरेः पादद्वयेन यावद्विश्वस्य क्रान्तत्वेन, बलेः शीर्षस्यापि विश्वान्तःपातित्वेन हरिपादद्वयेनैवाक्रान्तत्वात् कुरु शीर्ष्णीति वचनमनुपपन्नम् । किञ्च बलेः शिरश्च विश्वं क्रान्तवतो हरेस्तृतीयपादपर्याप्तमिति यत् तदप्यनुपपन्नमिति चेन्न—आत्मानं विनैव द्रव्यदानस्य प्रतिश्रुतत्वेन दातुरधिकत्वेनावशिष्टत्वात्—गू.

4 अभिन्नमनस्कत्वम्—गू.

यस्मिन् वैरानुबन्धेन रूढेन विबुधेतराः ।
बहवो लेभिरे सिद्धिं यामिहैकान्तयोगिनः ॥ ६ ॥

तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ।
बद्धश्च वारुणैः पाशैर्नं व्रीडे न च विव्यथे ॥ ७ ॥

पितामहो मे भवदीयसम्मतः प्रह्लाद आविष्कृतसाधुवादः ।
भवद्विपक्षेण विचित्रवैशसं सम्प्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥

किमात्मनाऽनेन जहाति यो मुदं किं रिक्थहारैः स्वजनाख्यदस्युभिः ।
किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो [illegible] ॥

इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादप[illegible] ।
ध्रुवं प्रपेदे ह्यकुतोभयं जनाद् भीतः स्वपक्षक्षपणस्य सत्तम ॥ १० ॥

अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ।
इदं कृतान्तान्तिकवर्ति जीवितं यया ध्रुवं स्तब्धमतिर्न बुध्यते ॥

---

यतो वैरानुबन्धेन वैरयुतस्नेहेन ॥ ६ ॥

ननु कुतो व्यथाद्यभाव इत्याशङ्क्य श्रुतप्रह्लादमाहात्म्यानुस्मरणादित्याशयेनाह— पितामह इति । साधुरिति वादः साधुवादः स्तुतिलक्षणः । विचित्रवैशसं नानाहिंसनम् । त्वमेव परमो यस्य स तथा ॥ ८ ॥

श्रीप्रह्लादः कया चर्यया अतिप्रियदेहादिकमुत्सृज्य श्रीहरिचरणैकशरणमापेति तत्राह— किमिति । यो येनात्मना देहेन मुदं जहाति, तद्वियोगलक्षणमरणेनेतिशेषः, तस्य पुंसः तेन देहेन किम् ? न किमपि प्रयोजनमित्यर्थः । रिक्थहारैः पितृधनस्वीकारयोग्यैरेभिरायुषो व्ययो नाश इति यत् तस्माद् दुर्जनसङ्गाद् भीतः । स्वपक्षोऽसुरजनः तस्य नाशकस्य ॥ ९—१० ॥

ममाप्ययमेव निश्चय इति भावेनाह—अथेति । असुरजातित्वान्मम शत्रुभूतस्य । त्वया त्याजितराज्यश्रीः । बुभूषुणेयं श्रीर्बलादपि त्याज्या अन्यथानर्थयोग एवेति भावेनाह — इदमिति । यया श्रिया स्तब्धमतिः कृतान्तान्तिकवर्तीदं जीवितं न जानातीत्यन्वयः ॥ ११ ॥

श्रीशुक उवाच —

तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ।
आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥

तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ।
प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥

तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ।
ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥

स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ।
उपेत्य भूमौ तरसा महामना ननाम मूर्ध्ना पुलकाश्रुविह्वलः ॥ १५ ॥

प्रह्लाद उवाच —

त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं [1]तदेवाद्य तथैव शोभनम् ।
मन्ये महानस्य कृतोऽप्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥

यया हि विद्वानपि मुह्यते जनस्तत्कोऽभिचष्टे[2] गतिमात्मनो यथा ।
तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिललोकसाक्षिणे ॥ १७ ॥

श्रीशुक उवाच —

बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ।
प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ॥ १८ ॥

---

प्रह्लादस्य भक्त्यतिशयं दर्शयितुं बलेः स्तवनेन भगवद्भक्तिविशेषमाज्ञायागमनमिति, तदागमनमाह शुकः तस्येति[3] ॥१२॥ प्रांशुमुन्नतम् ॥१३॥ सव्रीडत्वेन नीचीनमर्वाचीनं मुखं यस्य स तथा ॥१४॥

आत्मनो मोहहेतुभूतया श्रिया विभ्रंशितो विगलित इति यदयं महाननुग्रहोऽस्य कृत इति मन्ये । तत् तस्मात् कः पुमानात्मनो गतिं यथावदभिचष्टे ? न कोऽपि । यथाऽऽत्मनः स्वस्य गतिं सर्वत्र स्वातन्त्र्यलक्षणामभिचष्टे तथा कः परमात्मनो गतिं स्थितिं स्वातन्त्र्यलक्षणां पश्यति ? श्रीमदान्धत्वान्न पश्यतीति वा ॥ १६–१७ ॥

---

[1] त्वयैवाद्य—लि. [2] विचष्टे—स.शो.लि.

[3] आज्ञाय प्रह्लादागमनमिति हेतोः, प्रह्लादस्य भक्त्यतिशयं दर्शयितुं तद् बलिभक्तिविशेषज्ञानपूर्वकं प्रह्लादागमनमाह शुकः तस्येति अवतरणं योज्यम्—गू. ।

विन्ध्यावलिरुवाच —

क्रीडार्थमात्मन इदं त्रिजगत् कृतं ते
स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ।
कर्तुः प्रभोस्तव किमस्य त आवहन्ति
त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ १९ ॥

श्रीशुक उवाच —

तस्यानुशृण्वतो राजन् प्रह्लादस्य कृताञ्जलेः ।
हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ २० ॥

ब्रह्मोवाच —

भूतभावन भूतेश देवदेव जगन्मय ।
मुञ्चैनं हतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥

कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ।
निवेदितं च सर्वस्वमात्माऽविक्लवया धिया[1] ॥ २२ ॥

यत्पादयोरशठधीः सलिलं प्रदाय
दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।

---

स्वभर्तृगर्वोद्रेकं कटाक्षीकृत्य भगवन्तं समीट्टे—क्रीडार्थमिति । ते त्वया इदं त्रिजगदात्मनः क्रीडार्थं कृतमिति सङ्गिरन्ते केचित् । 'क्रीडार्थं सृष्टिरित्येके[2]' इति श्रुतेः । हे ईश तत्रापरे कुधियोऽसुरप्रकृतयः आत्मनः स्वाम्यं कुर्युः । वयमस्य स्वामिन इति जल्पन्ति जल्पं कुर्वन्ति । तत्रापि तुशब्दो महाविशेषं प्रकाशयति । तेन तव स्वाम्यस्य न कामपि हानिमापादयन्तीत्याह—कर्तुरिति । त्वयाऽवरोपितो विचालतोऽहं कर्तेति वादो येषां ते तथा, अत एव त्यक्तलज्जास्ते कुधियोऽस्य जगतः कर्तुः प्रभोरधिपतेस्तव किमावहन्ति न किमपि हानिं कुर्वन्तीत्यर्थः '[3]समर्थोऽधिपतौ प्रभुः' इति च ॥१९॥

बन्धनादिकमासुरजन्मदोषापहरणाय त्वया कृतं न तु द्वेषात्, अन्यथा तव वैषम्यनैर्घृण्ये स्यातां न तद् युक्तमित्याशयेनाह—यत्पादयोरिति । नविक्लवमनाः सर्वस्वदानादप्यहीनमनाः ॥ २३ ॥

---

[1] अविक्लवया धिया आत्मा च देहश्च निवेदितः कुरु मे शीर्ष्णीत्युक्तेः—स.

[2] भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे इति माण्डूक्यवाक्यम् ।

[3] अधिपतौ समर्थः प्रभुरिति पदद्वयमस्तीति प्रमाणार्थः—गू.

अप्युत्तमां गतिमसौ भजते त्रिलोकीं
दत्त्वा नविक्लबमनाः कथमार्तिमृच्छेत्[1] ॥ २३ ॥

श्रीभगवानुवाच —

ब्रह्मन् यमनुगृह्णामि तद्वित्तं विधुनोम्यहम् ।
यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥

यदा कदाचिज्जीवात्मा संसरन् निजकर्मभिः ।
नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥

जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ।
यद्यस्य न भवेत् स्तम्भस्तत्रायं मदनुग्रहः ॥ २६ ॥

मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ।
सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥

एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ।
अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥

---

यद्यपि ब्रह्मा भगवदभिप्रायं वेत्ति तथापीतरेषां तज्ज्ञापनाय स्वाभिप्रायं[2] वक्ति — ब्रह्मन्निति । ब्रह्मन् प्रजापते । यन्मदः यद्वित्तनिमित्तमदः ॥ २४ ॥

नानायोनिष्व उत्तमत्वेन मदोद्रेकहेतोरपि पुरुषयोनेर्यदृच्छया प्राप्तौ मदनुगृहीतस्य पुंसो मदो नैवोत्पद्यत इत्याह — यदा कदाचिदिति । अयं जीवात्मा निजकर्मभिर्नानायोनिषु संसरन् कदाचिद्-दैववशात् पौरुषीं गतिमाव्रजेत् ॥ २५ ॥

तत्र पौरुषगतौ यद्यस्य जीवात्मनो मदर्चनादौ स्तम्भस्तन्द्रीलक्षणा न भवेत् तर्ह्ययं मदनुग्रहः मत्कटाक्षपातलक्षण इति ज्ञातव्यम् ॥ २६ ॥

स्वभक्तलक्षणमाह — मानस्तम्भेति । पञ्चम्यर्थे जन्मादीनामिति षष्ठी ॥ २७ ॥

[3]एतल्लक्षणदर्शनाय दवीयान् मार्गो न गन्तव्यः किन्त्वत्रैवेति भावेनाह — एष दानवेति । अजयाम् अजेयाम्, न जयो यस्याः सा अजयेति ॥ २८ ॥

---

[1] अशठधीः पुरुषो दूर्वाङ्कुरैः सहितं सलिलमपि प्रदाय यत्पादयोः सतीं सपर्यां विधायोत्तमामपि गतिं भजते तस्मा असौ बलिर्नविक्लबमनाः सन् त्रिलोकीं दत्त्वाऽर्तिं कथमृच्छेत् प्राप्नुयादिति—दु.

[2] स्वाभिप्रायं भगवान् वक्तीति टीकायोजना—गू.    [3] एतल्लक्षणदर्शनाय भक्तलक्षणदर्शनाय । दवीयान् सुदूरो मार्गो न गन्तव्यः । दवीयश्च दविष्ठं च सुदूरं चेत्यमरः—गू.

[1]क्षणाद् विभ्रंशितः स्थानात् क्षिप्तो बद्धश्च शत्रुभिः ।
ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥

गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ।
छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥

एवं मे प्रापितः स्थानं दुष्प्रापममरैरपि ।
सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥

तावत् सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ।
यत्राधयो व्याधयश्च क्लमस्तन्द्री पराभवः ।
नोपसर्गा निवसतां सम्भवन्ति ममेच्छया ॥ ३२ ॥

इन्द्रसेन महाराज याहि भो भद्रमस्तु ते ।
सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥

न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ।
त्वच्छासनातिगान् दैत्यान् चक्रं मे सूदयिष्यति ॥ ३४ ॥

---

यातनां तीव्रवेदनाम् ॥ २९ ॥

सत्यवागनिमित्तक्षीणत्वादिकं प्राप्तोऽपि सत्यं न त्यक्तवानित्यन्वयः ॥ ३० ॥

भवताऽस्मै किमनुगृह्यते त्वद्भक्तायेति तत्राह—**एवमिति** । किं तत् स्थानम् ? अत्राह—**सावर्णेरिति** ॥ ३१ ॥

तर्हि तावत्पर्यन्तमाशयोद्रेकवान् बलिरेवंविधं क्लेशमनुभूय तिष्ठतु किम् ? तत्राह—**तावत् सुतलमिति** । तत्रान्येषामपि क्लेशानुभवो नास्ति, किं पुनरस्येति भावेन वक्ति—**यत्राधय इति** । उपसर्गा उपद्रवाः ॥ ३२ ॥

भवदाज्ञामन्तरेणेदं कथं गमिष्यामीति शङ्का मा भूदित्याह—**इन्द्रसेनेति** । मृतवदेकः कथं गमिष्यामीत्यत उक्तम्—**ज्ञातिभिरिति** ॥ ३३ ॥

स्वर्गस्थैरर्थ्यं चेत् स्पर्द्धया लोकेशा मामुपद्रविष्यन्तीति तत्राह—**न त्वामिति** । राज्यं त्यक्त्वा गतस्य तव शासने वयं न तिष्ठाम इति तिष्ठतां दण्डमाह—**त्वच्छासनेति** ॥ ३४ ॥

---

[1] क्षीणरिक्थश्च्युतः स्थानात्—शो. । क्षीणो विभ्रंशितः स्थानात्—लि.

रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ।
सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥

तत्र दानवदैत्यानां सङ्गात् ते भाव आसुरः ।
दृष्ट्वा मदनुभावं वै सद्यःकुण्ठोऽवनङ्क्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवतेऽष्टमस्कन्धे एकविंशोऽध्यायः ।

॥ अथ द्वाविंशोऽध्यायः ॥

श्रीशुक उवाच —
इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः ।
बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराऽब्रवीत् ॥ १ ॥

बलिरुवाच —
अहो प्रसादोऽस्य कृतः समुद्यतः प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्तदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

---

किं बहुनोक्तेन, सर्वतो मद्रक्षावज्रं तवास्तीत्याह— सर्वत इति । न केवलं सन्निधानविशेषाद्-रक्षामि किन्तु प्रत्यक्षत एवेत्युक्तम्— तत्र मामिति ॥ ३५ ॥

तत्राप्ययमनर्थस्तदवस्थ एव दानवादीनां संसर्गादिति च शङ्का मा भूदित्याह— तत्र दानवेति । सद्यःकुण्ठ इत्येकं पदम् । सद्यः कुण्ठः छेदो यस्य स तथा । अवनङ्क्ष्यतीति । विनङ्क्ष्यतीति[1] पाठे निर्मूलो भविष्यतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य एकविंशोऽध्यायः ।

॥ अथ द्वाविंशोऽध्यायः ॥

भगवति भक्तिमतः पुरुषस्य किमपि दुःसाध्यं नास्तीत्येतत् प्रपञ्चयतेऽस्मिन्नध्याये । तत्र बलेर्हर्याज्ञाकरणं वक्तुमाह— इत्युक्तवन्तमिति । भक्तेरुत्कल उद्रेको यस्य स तथा ॥ १ ॥

समुद्यतः ऊर्ध्वं वर्धमानस्यास्य तव प्रसादोऽहो । [2]कुतो विस्मय इत्यत उक्तम्— कृत इति ।

---

[1] मदनुभावं दृष्ट्वा स्थितस्य ते दानवदैत्यानां सङ्गात् पूर्वं प्राप्त आसुरभावः, सद्यः कुण्ठः छेदो यस्य स सद्यःकुण्ठः सद्यः छिन्नो जात इत्येतद् वै प्रसिद्धम् । तत्र सुतले विनङ्क्ष्यति विशेषेण नङ्क्ष्यति निर्मूलो भविष्यतीति— दु.

[2] इयमवतारिका असपष्टा । उत्तरावतारिकापि ।

श्रीशुक उवाच —

इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ।
विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥

एवमिन्द्राय भगवान् प्रीत्याऽऽनीय त्रिविष्टपम् ।
पूरयित्वाऽदितेः काममशासत् सकलं जगत् ॥ ४ ॥

लब्धप्रसादनिर्मुक्तं पौत्रं वंशधरं बलिम् ।
निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

प्रह्लाद उवाच —

नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ।
यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरभिवन्दिताङ्घ्रिः ॥ ६ ॥

यत्पादपद्ममकरन्दनिषेवणेन
ब्रह्मादयः शरणदाश्नुवते विभूतीः ।
कस्माद् वयं कुसृतयः खलयोनयस्ते
दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥

---

स्वेनेति शेषः । इतोऽपि विस्मय इत्याह—प्रपन्न इति । समाहितः एकाग्रीकृतोऽन्यत्रानपसदैर्दुष्प्राप[1] इत्यर्थः । त्वमपि तेष्वेकः किं न स्यादित्यत आत्मानं धिक्करोति—यल्लोकेति । [2]असुरजातावप्यपसदे अधमे । अलब्धपूर्व इति यथायोग्यमिति ज्ञातव्यम्[3] ॥ २ ॥

लब्धप्रसादश्चासौ निर्मुक्तश्च तम् ॥ ५ ॥

विश्वाभिवन्द्यैर्ब्रह्मादिभिरभिवन्दिताङ्घ्रिः श्रीकान्तोऽसुराणामपि नो दुर्गपालो द्वारपाल आसी-दिति, यदिमं प्रसादं विरिञ्चादिर्न लभत इत्यन्वयः ॥ ६ ॥

कुसृतयः कुत्सितमार्गाः । तत्र हेतुमाह—खलयोनय इति । ते वयं ते तस्य भवतः कस्माद् न हेतोर्दाक्षिण्यदृष्टिपदवीं[4] प्रणीताः, प्रापिताः भक्तानुकम्पित्वमन्तरेणेति शेषः । 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः ॥ ७ ॥

---

[1] अनपसदैरुत्तमैरपि दुष्प्रापः—गू.

[2] यद्वा यो लोकपालैरमरैरपि अलब्धपूर्वः तादृशस्त्वदनुग्रहोऽसुरजाता-वप्यपसदे अधमे मयि कृत इति योज्यम् ।

[3] यथायोग्यं ज्ञातव्यमित्यनेन मूले (स्वरूप) योग्यतामतिक्रम्याऽलब्धपूर्वं इति योज्यमिति सूच्यते—गू.

[4] बहुमानपूर्वकचित्तानुवर्तनं दाक्षिण्यं, तेन या दृष्टिस्तद्विषयताम्—गू.

चित्रं तवेहितमहोऽमितयोगमाया-
लीलाविसृष्टभुवनस्य विशारदस्य ।
सर्वात्मनः समदृशो विषमस्वभावो
भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

श्रीभगवानुवाच —

वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलातलम्[1] ।
मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥

नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ।
मद्दर्शनमहाह्लादन्यस्तकर्मनिबन्धनः ॥ १० ॥

श्रीशुक उवाच —

आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ।
बाढमित्यमलप्रज्ञो मूर्ध्न्याघ्राय कृताञ्जलिः धा ॥ ११ ॥

परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ।
प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥

अथाहोशनसं राजन् हरिर्नारायणोऽन्तिके ।
आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥

---

भवत्स्वरूपत्वादीहितमपि लोकविलक्षणमिति भावेनाह—**चित्रमिति** । तव चित्रं नानाविधमीहितं चेष्टितमहो । 'अहो ही ह विस्मये' इति यादवः । तत् कथमिति तत्राह—**विषमेति** । विषमस्वभावोऽसि भक्तप्रियोऽसि कल्पतरुस्वभावोऽसि यत् तस्माद् विस्मयः । समदृशो विषमस्वभावत्वं सर्वात्मनो भक्तप्रियत्वेन कल्पतरुस्वभावत्वं च विस्मयहेतुरित्यर्थः ॥ ८ ॥

बलिप्रह्लादयोर्भगवद्भक्तत्वेऽपि बलेर्बन्धनादिदुःखमभूत् तत् किन्निमित्तमिति शङ्का, 'बलिरप्यसुरावेशात् स्तुवन्नपि जनार्दनम् । आक्षिपत्यन्तरा क्वापि प्रह्लादो नित्यभक्तिमान्' इत्यनेन परिहर्तव्या । आक्षेपफलं दुःखमित्यर्थः ॥ ९ ॥

---

[1] सुतलालयम्—ख.

ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ।
यत् तत् कर्म सुवैषम्यं[1] ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

शुक्र उवाच —

कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ।
यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रमनुसंकीर्तनं तव ॥ १६ ॥

तथापि वदतो भूमन् करिष्याम्यनुशासनम् ।
एतच्छ्रेयः परं पुंसां यत् तवाज्ञानुपालनम् ॥ १७ ॥

अभिनन्द्य हरेराज्ञामुशना भगवानिति ।
यज्ञच्छिद्रं समतनोद् बलेर्विप्रर्षिभिः सह ॥ १८ ॥

---

कर्म वितन्वतोऽस्य यत् तद् ब्रह्मभिर्ब्राह्मणैर्दृष्टं निरूपितं कर्म [2]सुवैषम्यमन्तरायोपहति[3] यथा समं विहितफलप्रदत्वेन समर्थं भवेत् तथा तव शिष्यस्य बलेः कर्मणो वैषम्यलक्षणमपराधं सन्तनु परिहृतं कुरु । कर्मरन्ध्रं समुन्नतं कुरु वा । ' छिद्रं रन्ध्रापराधयोः ' इत्यभिधानम् । ब्रह्मणा दृष्टं वा ॥ १४ ॥

सति छिद्रे तत्परिहारः, तदेव नास्ति, अस्ति चेदपि तव नामसंकीर्तनं निश्छिद्रं करोतीति वक्त्युशनेत्याह (शुकः)— शुक्र इति । यज्ञपुरुषो भवान् तस्य बलेः कर्मेश्वरः । कुतः — यज्ञेश इति । अनेन सर्वयज्ञस्वामित्वं तव विद्यते किमुतैतद्यज्ञस्वामित्वं बलेस्त्वद्भक्तत्वादिति सूचितम् । तस्य बलेः कर्मवैषम्यं कुतो हेतोः स्यादित्यन्वयः । सर्वभावेन सर्वदानेन पूजित इत्यस्माच्च ॥ १५ ॥

तवानुसङ्कीर्तनं मन्त्रतस्तन्त्रतश्छिद्रं सर्वं देशकालोचितवस्तुतो यथा तथा निश्छिद्रं पूर्णं करोतीत्यन्वयः[4] ॥ १६ ॥

---

[1] कर्मसु वैषम्यम्—स. [2] सुष्ठु वैषम्यं यस्य तत् सुवैषम्यम्—गू. [3] अन्तरायेण उपहतिर्यस्य तदन्तरायोपहति—गू.

[4] यथा भक्तिश्रद्धाभ्यामच्युतानन्तगोविन्देत्यादि भवतो नामोच्चारणं. मन्त्रत उच्चारणादौ स्वरादिभ्रंशात्, तन्त्रतो न्यासादिहस्तक्रियाभ्रंशाद्, देशतः स्थानव्यत्यासात्, कालतः कालव्यत्यासात्, अर्हवस्तुनो यज्ञद्रव्यव्यत्यासाच्च यत् छिद्रम्, तत् सर्वं निश्छिद्रं करोति, तथा सर्वस्वसमर्पणेन पूजितो भवान् बलेः सर्वस्वदानाख्यं कर्म निश्छिद्रं करोतीति किमु वक्तव्यमिति कैमुत्यं सूच्यते ।

एवं बलेर्महीं राजन् भिक्षित्वा वामनो हरिः ।
ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत् परैर्हृतम् ॥ १९ ॥

प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ।
दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥

कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ।
लोकानां लोकपालानामकरोद् वामनं पतिम् ॥ २१ ॥

वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥

उपेन्द्रं कल्पयाश्चक्रे पतिं सर्वविभूतये ।
तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥

ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् ।
लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥

प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितम् ।
श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥

ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ।
पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥

सुमहत् कर्म तद् विष्णोर्गायन्तः परमाद्भुतम् ।
धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥

सर्वमेतन्मयाख्यातं भवतः कुलनन्दन ।
उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥

पारं महिम्न उरुविक्रमतो मुरारे-
र्यः पार्थिवान्यपि कविर्विममे रजांसि ।
किं जायमान उत जात उपैति मर्त्य
इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥

---

ततो बलियज्ञशालायाः ॥ २४ ॥ ब्रह्मादिमहिमातिरिक्तमहिमत्वे मुरारेश्चरितस्य संसाराख्याघसंघातविघातदक्षत्वं घटतामपि, तत् कथमित्याशङ्क्य प्रमाणपूर्वकं तदाह— **पारं महिम्न इति** ।

य इदं देवदेवस्य हरेरद्भुतकर्मणः ।
अवतारानुचरितं शृण्वन् याति परां गतिम् ॥ ३० ॥

क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानवे ।
यत्र यत्रानुकीर्त्येत तत् तेषां सुकृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते अष्टमस्कन्धे द्वाविंशोऽध्यायः ।

॥ अथ त्रयोविंशोऽध्यायः ॥

राजोवाच —

भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
अवतारकथामाद्यां[1] मायामत्स्यविडम्बनाम् ॥ १ ॥

---

'विष्णोर्नु कं वीर्याणि प्रवोचम्', 'न ते विष्णो जायमानो न जातः' इति मन्त्रदृग् वेदद्रष्टा ऋषिराह । यस्य पुरुषस्य यो मर्त्यः पार्थिवानि रजांसि पार्थिवपरमाणून् क्मिमे मानं करोत्यपि । छन्दसि व्यत्ययो बहुलमिति वचनाल्लडर्थे लिट् । जायमान उत जनिष्यमाणो वा समर्थः महिम्नः पारं समाप्तिम् उपैति किम् ? नैवोपैतीत्यन्वयः । पुरुषः क इति तत्राह—मुरारेरिति । उरु महद् यथा भवति तथेति क्रियाविशेषणम् । कविरप्यतिक्रान्तदर्शप्यपीति वा ॥ २९ ॥

यस्तस्याद्भुतकर्मणो देवदेवस्य हरेरवतारानुचरितं शृण्वन् वर्तते स परां गतिं वैकुण्ठाख्यं यातीत्यन्वयः ॥ ३० ॥

अन्यविषयकर्मसमयेऽपि कीर्त्यमानमिदं भगवत्कर्म पूर्णफलप्रदं करोतीत्याह—क्रियमाण इति । अथ मङ्गले दैवप्रभृतिकर्मणि क्रियमाणे सतीदमवतारानुचरितं यत्र यत्र कर्मणि कीर्त्येत तेषां पुंसां तत् तत् कर्म सुकृतं पूर्णफलदानसमर्थं विदुः, ज्ञानिन इति शेषः ॥ ३१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
अष्टमस्कन्धस्य द्वाविंशोऽध्यायः ।

॥ अथ त्रयोविंशोऽध्यायः ॥

अंशिज्ञानवदंशज्ञानमपि मुक्तिसाधनं गुणाद्यविशेषादिति दर्शनाय मत्स्यावतारचरितमनुवर्त-

---

[1] अवतारकथागन्याम्—इत्यपि रा.

यदर्थमदधाद् रूपं मात्स्यं लोकजुगुप्सितम् ।
तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥

एतन्नो भगवन् सर्वं यथावद् वक्तुमर्हसि ।
उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

सूत उवाच —

इत्युक्तो विष्णुरातेन भगवान् बादरायणिः ।
उवाच चरितं विष्णोर्मत्स्यरूपेण यत् कृतम् ॥ ४ ॥

श्रीशुक उवाच —

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥

उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः ।
नोच्चावचत्वं भजते निर्गुणत्वाद् धियो गुणैः[1] ॥ ६ ॥

---

यत्यस्मिन्नध्याये ।

तत्र श्रुतवामनावतारचरितसुधापानाद् द्विगुणतृष्ण इव पुनरपि राजा दशावताराणामादित्वेन मत्स्यावतारमाहात्म्यं श्रोतुं पृच्छति—राजेति । मायामत्स्यस्य विडम्बनमनुकरणं यस्यां सा तथा ॥ १ ॥

कथं जुगुप्सितमभूदिति तत्राह—तमःप्रकृतीति । तमः प्रकृतिः स्वभावो यस्य तत् तथा । दुर्मर्षं सोढुमशक्यम् । कर्मग्रस्तो जीवः ॥ २ ॥

लोकजुगुप्सितं चेत् किमिति वक्तव्यम् ? अत्राह—उत्तमेति ॥ ३ ॥

ननूच्चावचेषु सुरनरादिसंज्ञेषु भोगायतनशरीरेषु वर्तमानस्य हरेरिन्द्रियगुणैरवलेपोऽपि सम्भाव्यते देवदत्तवदिति तत्राह—उच्चावचेष्विति । धीशब्देनेन्द्रियाण्युपलक्षयति ॥ ६ ॥

---

[1] निर्गुणत्वाद् हि यो गुणैः इति सत्याभिनवतीर्थाः पेठुः ? तथा हि तद्व्याख्या । ईश्वरो यो विष्णुः उच्चावचेषु भूतेषु चरन् वायुरिवोच्चावचत्वं न भजते । कुत इत्यत आह—गुणैरिति । नित्याभिव्यक्तज्ञानादिगुणैर्निमित्तैः । अन्यत्राविद्यमानं नित्याभिव्यक्तज्ञानादिगुणत्वं विष्णोः कुतः इत्यत आह—निर्गुणत्वादिति । निर्गुणत्वात् सत्त्वादि-गुणरहितत्वाद् इत्येतद् हि प्रमाणप्रसिद्धमिति ।

आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादयोऽनघ ॥ ७ ॥

आदित एव वक्तुमुपक्रमते—आसीदिति[1] । समुद्रैरुपप्लुता आलीनाः ॥ ७ ॥

[1] अत्र लेखनीयं प्रमेयमनाद्यविद्योपहतात्मसंविद इति श्लोकव्याकृत्यवसरेऽलीलिखत् श्रीधरः । तल्लग्नताऽलग्नताभ्यां न नः कृत्यम् । तदनूद्य गुणदोषौ प्रदर्श्य वयं सप्रमाणकं व्यातन्महे । तथा हि । 'अत्रेदं चिन्त्यम् । किमयं महाप्रलयः किं वा दैनन्दिनः । तत्र तावद् ब्राह्मो लय इति, योऽसावस्मिन् महाकल्पे इति चोक्तेर्महाप्रलय इति प्राप्तम् । नेति ब्रूमः । महाप्रलये पृथिव्यादीनामवशेषाऽसंभवात् । यावद् ब्राह्मी निशेत्युक्तिविरोधाच्च । अतो दैनन्दिन इति युक्तम् । न चैतदपि संगच्छते । सांवर्तकैरनावृष्ट्यादिभिर्विनाऽकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमंक्ष्यतीति मत्स्योक्तेरनुपपत्तेः । यच्चोक्तं प्रथमस्कन्धे—रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे । नाव्यारोप्य महीमय्यामपाद् वैवस्वतं मनुमिति । तदपि तदा दुर्घटम् । न हि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः संभवति । न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति । तथा सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् । त्वं तावदोषधीः सर्वा इत्यादिनिर्देशोऽपि न संगच्छते । न हि तदा ओषध्यादीनां सत्वानां चावशेषः संभवति । तस्मादन्यथा वर्ण्यते । नैवायं वास्तवः कोऽपि प्रलयः किन्तु सत्यव्रतज्ञानोपदेशायाविर्भूतो भगवान् वैराग्यार्थमकस्मात् प्रलयमिव दर्शयामास । यथाऽस्मिन्नेव मन्वन्तरे मार्कण्डेयाय दर्शितवान् । तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषणं संगच्छते । तथा च 'ततः समुद्र उद्वेलः सर्वत्र समदृश्यत' इति तस्यैव यथादर्शनमुक्तेरित्येषा दिक्' इति ।

व्याख्यानमुखेन प्रत्याख्यानं भवतीति तत् तन्महे । अत्र सम्प्रदायद्वयम् । द्वौ मत्स्यावतारावित्येकः, एक इत्येकः । तत्र धातुः शिशयिषोः सुप्तशक्तेः, यावद् ब्राह्मी निशेत्यादिना दैनन्दिनकल्पसम्भवस्याद्यस्य, सत्यव्रतस्येत्यादिना चाक्षुषान्तरसंभवस्य द्वितीयस्य चेत्युभयोश्चरितं सङ्कलय्यात्रोच्यते । द्वितीये चरितमात्रमत्र संगृह्योच्यत इति । एवं कल्पने बलं च वाक्यशाबल्यमिव चरितशाबल्यं च । महाकल्प इतिं तु न महान् कल्पः, चाक्षुषान्तरसंप्लवे इत्युक्तेः । अत्रैव सर्वदैनन्दिनकल्पभवं वस्तु प्रायो दर्शयामास । किमाद्यं (किमसाध्यम् ?) भगवत्याः शक्तेः । अनेन पृथिव्याद्यवशेषः कथमिति परिचोदना पर्यहारि । सप्तमेऽहनीत्यपि संगच्छते । सत्यव्रतार्थनं वरवितरणं चाकालिकत्वात् संभवतः । प्रस्तुतसत्यव्रतोपदेशकथया सहायस्य हयग्रीवहननं विधाय विधये वेददातुः कथा कथितेति आसीदित्यादि चासीत् संभवे । एकस्यैतावत्पर्यन्तमवस्थितिसंभवात् चरितद्वैराश्योक्तिरपि चासीत् संभाविनी किञ्च सांवर्तकैरनावृष्ट्यादिभिर्विनाऽकस्मादिति कस्मादूचिवान् स इति न जानीमः । साधनं तत्कल्प इवात्राप्युक्तं मात्स्ये । (तथा हि प्रथमाध्याये) सूत उवाच—बभूव वरदश्चास्य वर्षायुतशते गते । वरं वृणीष्व प्रोवाच प्रीतः स कमलासनः ॥११॥ एवमुक्तोऽब्रवीद् राजा प्रणम्य स पितामहम् । एकमेवाहमिच्छामि त्वत्तो वरमनुत्तमम् ॥१२॥ भूतग्रामस्य सर्वस्य चरस्य स्थावरस्य च । भवेयं रक्षणायालं प्रलये समुपस्थिते । एवमस्त्विति विश्वात्मा तत्रैवान्तरधीयत ॥१३॥ अचिरेणैव कालेन मेदिनी मेदिनीपते । भविष्यति जले मग्ना सशैलवनकानना ॥ २७ ॥ (एवं द्वितीयेऽध्याये) सूत उवाच—एवमुक्तो मनुस्तेन प्रोवाच मधुसूदनम् । भगवन् कियद्भिर्वर्षैर्भविता त्वन्तरक्षयः ॥१॥ मत्स्य उवाच—अद्य प्रभृत्यनावृष्टिर्भविष्यति महीतले । यावद् वर्षशतं साग्रं सुदुर्भिक्षाकरी तथा ॥३॥ ततोऽल्पसत्वक्षयदा रश्मयः

कालेनागतनिद्रस्य धातुः शिशयिषोर्वली ।
मुखतो निःसृतान् वेदान् हयग्रीवोऽन्तिकेऽहरत्[1] ॥ ८ ॥

ज्ञात्वा तद् दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ।
दधार शफरीरूपं भगवान् हरिरीश्वरः ॥ ९ ॥

[2]तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ।
नारायणपरोऽतप्यत् तपस्तत्सलिलाशये ॥ १० ॥

योऽसावस्मिन् महाकल्पे तनयः स विवस्वतः ।
श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥

---

अन्तिकेऽविदूरतः ॥ ८ ॥ कोऽसौ सत्यव्रत इति तत्राह—योऽसाविति ॥ ११ ॥

---

सप्त दारुणाः । सप्तसप्तेर्भविष्यन्ति प्रतप्ताङ्गारवर्षिणः (वर्णिनः) ॥४॥ और्वानलोऽपि विकृतिं गमिष्यति युग-क्षये । विषाग्निश्चापि पातालात् सङ्कर्षणमुखाच्च्युतः ॥५॥ भवस्यापि ललाटोत्थस्तृतीयनयनानलः । त्रिजग-न्निर्दहन् क्षोभं समेष्यति महामते ॥६॥ आकाशमूष्मणा तप्तं भविष्यति परन्तप । .... .... ॥७॥ संवर्तो भीमनादश्च द्रोणश्चण्डो बलाहकः । विद्युत्पताकः शोणस्तु सप्तैते लयवारिदाः ॥८॥ अग्निप्रस्वेदसंभूताः प्लाव-यिष्यन्ति मेदिनीम् । ........ ॥ ९ ॥ वेदनावमिमां गृह्य सर्वबीजानि सर्वशः ॥१०॥ त्वया सार्धमिदं सर्वं स्थास्यत्यन्तरसंक्षये एवमेकार्णवे जाते चाक्षुषान्तरसंक्षये ॥१४॥ वेदान् प्रवर्तयिष्यामि त्वत्सर्गादौ महीपते । ........ ॥१५॥ आभूतसम्प्लवे तस्मिन्नतीते योगशायिना ॥२०॥ इत्यादि । अत्र स्पष्टं चाक्षुषान्तर एवेति ज्ञायते । आकूतमिदमत्र । अवतारं द्वैविध्ये संगृह्य तदुभयचरितोदीरणम् । तदैक्येऽपि यथा ब्राह्मी निशा यावच्चरिष्यति तथाऽनया निशया निमित्तेन चरिष्यामि भक्षयिष्यामि, अवगमिष्यामीति वाऽर्थः । चरतेर्गत्याद्यर्थ-त्वात् । मात्स्ये दुर्भिक्षाकरी तथेत्युक्तेः । प्रथमेऽन्यामित्युक्तिः, द्वितीये कथामन्यामित्युक्तिश्च मूलम् । कथामाद्यामिति पाठे मा न भवति आद्येति माद्या । अवतारकथा च सा माद्या चेति विग्रहे द्वितीयलाभः । कामचारित्वाद्वा कडारादित्वाद्वा विशेषणस्य परनिपातः । (कथाम् आद्यामिति) पदभेदेनाद्यलाभोऽपि सुलभः । एवं द्विकैकसम्पत्तिरिति विवेकः । विकर्षगमुपलक्षणमेकत्र, अन्यत्र विशेषणम् । सप्तमत्वं त्वक्ष इव मनोरप्य-क्षुण्णमिति सर्वं चतुरस्रम् । प्रतिनन्दन्तु निन्दन्तु नाना नानाविधा जनाः । प्रमेयस्य दुरूहत्वाद् हर्षामर्षौ न नस्ततः—स.

1 कालेन निद्राकालेन निमित्तेनागता निद्रा यस्य तस्य शिशयिषोः शयनं कर्तुमिच्छतो धातुर्ब्रह्मणो मुखतो निःसृतान् बहिरागतान् वेदान् देहधारिणो वेदाद्यभिमानिदेवान् बली हयग्रीवात्मको दैत्योऽहरदपाहरत्—शे.

2 तत्र राजर्षिः कश्चिदित्यत्र तृतीयस्कन्धोक्तहिरण्याक्षकथायामाचार्योक्तं व्यत्यासेनापि चोच्यन्ते इति तात्पर्यमनुसन्धेयमिति । अन्यथा दैनन्दिनप्रलये सत्यव्रतस्थित्यभावेन पूर्वोत्तरश्लोकानुपपत्तिः प्रसज्येत—गू.

एकदा कृतमालायां कुर्वतो जलतर्पणम् ।
तस्याञ्जल्युदके[1] काचित् [2]शफर्येकाऽभ्यपद्यत ॥ १२ ॥
सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥
तमाह साऽतिकरुणं महाकारुणिकं नृपम् ।
यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ।
कथं विसृजसे राजन् भीतामस्मिन् सरिज्जले ॥ १४ ॥

श्रीशुक उवाच —

तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ।
अजानन् रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥
तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः ।
कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥
सा तु तत्रैकरात्रेण वर्द्धमाना कमण्डलौ ।
अलब्धात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥
नाहं कमण्डलावस्मिन् कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥
स एनां तत आदाय न्यधादौदञ्चनोदके ।
तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥

---

अञ्जलितोयेन[3] ॥ १३ ॥ सः मनुः शफर्याः रक्षणार्थाय[4] ॥ १५ ॥ अलब्धात्मावकाशमिति [5]क्रियाविशेषणम् ॥ १७ ॥ उदञ्चनं मणिकं[6] तत्स्थमुदकम् । हस्तत्रयं [7]व्यामत्रयम् ॥ १९ ॥

---

[1] एका न विद्यते कमुदकं यस्याः सा । चिच्छफरी ज्ञानात्मकशफरी । काचिच्छफरी अभ्यपद्यतेति वचने जात्यपेक्षमेकवचनमिति मत्वा बहवः शफर्यः किं प्रत्यपद्यन्त इत्यपि प्रपद्येरन् अथेति वक्तुमेकेत्युक्तम् । तथैवोक्तौ प्रधाना भवत्वेकाऽप्रधाना मीना बहवः किं न भवेयुरिति शङ्का स्यात् तदनुपपत्त्यै काचिदिति ज्ञेयम्—स.

[2] शफरी मत्स्यविशेषः । प्रोष्ठी तु शफरी स्मृतेति हलायुधः । [3] तर्पणार्थमञ्जलिकलितसलिलेन सह तां शफरीं कृतमालानदीतोये उत्सृष्टवानिति यावत् । [4] हरिमजानन् शफर्या रक्षणार्थाय स राजा मनो दधे । रक्षणायेत्येतावता पूर्तौ यदर्थेत्याह तेनापहास्यतागेतन् रक्षणस्याभिप्रेते । परिहासप्रलापादिष्वनर्था वागपीष्यत इत्याद्वेरिति केचिदाहुः । [5] वर्धमाना इति क्रियायाः विशेषणम् ।

[6] गर्गरी मन्थनी प्रोक्ता मणिकः स्यादलिञ्जरः इति हलायुधः । स तमादाय मणिके प्राक्षिपज्जलचारिणम् , इति मात्स्ये (१-२१) [7] व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरमित्यमरः ।

मीन उवाच —

न म एतदलं राजन् सुखं वस्तुमुदञ्चनम् ।
पृथु देहि पदं मह्यं यत् त्वाऽहं शरणं गता ॥ २० ॥

श्रीशुक उवाच —

तत आदाय सा राज्ञा क्षिप्ता राजन् सरोवरे ।
तदावृत्यात्मना सर्वं[1] महामीनोऽन्ववर्द्धत ॥ २१ ॥

मीन उवाच —

नैतन् मे स्वस्तये राजन्नुदकं सलिलौकसः ।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥

इत्युक्तः सो[2]ऽनयन्मत्स्यं तत्र तत्राविदासिनि ।
जलाशये सम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥

क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ।
अदन्त्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥

एवं विमोहितस्तेन वदता वल्गुभारतीम् ।
तमाह को भवानस्मान् मत्स्यरूपेण मोहयन् ॥ २५ ॥

नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि वा ।
यो भवान् योजनशतमह्नाय व्यानशे सरः ॥ २६ ॥

---

पदं स्थानम् ॥ २० ॥ तत् सरोवरम् आत्मना शरीरेणावृत्य व्याप्य ॥ २१ ॥
अविदासिनि[3] अगाधेऽनुपक्षये च, अभिन्नसेतौ वा ॥ २२ ॥

अनन्तरं किमकरोदिति तत्राह — इत्युक्त इति । जलाशये ह्रदे । असस्मितमसमानम् । सम्मितं समानं वा ॥ २३ ॥ म्मि

एवंविधं वीर्यं यस्य सः एवंवीर्यः । अह्नाय झटिति । व्यानशे व्याप्तः ॥ २६ ॥

---

[1] सोऽयम् इति पाठः क्वचित् कोशेषु दृश्यते । [2] नयन्—लि.

[3] अविदासिनि । दस भेदने । अभेद्ये इतरासाध्यगमन इति यावत् । क्वचित् तालव्यपाठः । तत्र विविधा दाशाः सन्त्यस्मिन् समीप इति विदाशी, स न भवतीत्यविदाशी तस्मिन् दाशानामप्यस्मद्भक्षकत्वादिति भावः । विदासी उन्नतो भिन्नो वा 'त्रिविधाः पुरुषा लोके नीचमध्यविदासिनः । चतुर्धा वर्णरूपेण जगदेतत् विदासितम् ।' इति प्रथमतात्पर्योक्तेः स न भवतीत्यविदासी निम्नो अभिन्नो वा तस्मिन्—स.

नूनं त्वं भगवान् साक्षाद् हरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥

नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ।
भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मा गतिर्विभो ॥ २८ ॥

सर्वे लीलावतारास्ते भूतानां भूतिहेतवे ।
ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥

न तेऽरविन्दाक्ष पदोपसर्पणं मुधा भवेत् सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सतामदीदृशो यद् वपुरद्भुतं हि नः ॥ ३० ॥

इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षितं कान्तजनप्रियः[1] प्रभुः ॥ ३१ ॥

श्रीभगवानुवाच —

सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम ।
निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥

---

नरविशेषसम्बन्धित्वान्नारं ज्ञानं तदयनं यस्य स तथा । ज्ञानाश्रयः । कश्चिच्चेतन एव नारायणः किं न स्यादित्यतः—साक्षाद् हरिरिति । तुरीयमूर्तिः[2] ॥ २७ ॥

यदर्थं यत्प्रयोजनाय भवताऽदो मत्स्यरूपं धृतं तत् प्रयोजनपूर्वकं ज्ञातुमिच्छामीत्यन्वयः ॥२९॥

अहं त्वत्स्वरूपज्ञाने योग्य इत्याह—न त इति । हे अरविन्दाक्ष यथा पृथगात्मनां भिन्नविषयबुद्धीनाम् इतरेषां तव पदोपसर्पणं मुधा वृथा, भवेत् 'यद्यप्यनेवंविन्महत् पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयते' इति श्रुतिः । अत्र मानम् । अत एव पृथगित्युक्तम्, सतां तथा न स्यात् तत्र हेतुमाह—अदीदृश इति । तवाद्भुतं नोऽस्माकम् इतरमत्स्यविलक्षणत्वादाश्चर्यं वपुः । वपुः टु वप् बीजसन्तान इति धातोः जगदुत्पादनसमर्थं रूपम् अदीदृशः दर्शितवानिति हि यस्मात् (वयं) सन्त एतद्रूपज्ञाने योग्या इत्यर्थः । तव [illegible] स्वभावत्वात् तथात्वमिति नेत्याह—सर्वेति ॥ ३० ॥

विषयसुखप्रेरकत्वात् प्रियः 'त[illegible] तत् प्रेयः' इति श्रुतेः ॥ ३१ ॥

अद्यतनादह्न ऊर्ध्वं सप्तमेऽह[illegible] निमङ्क्ष्यति निमग्नं भविष्यति । अप्ययाम्भोधौ प्रलयसमुद्रे ॥३२॥

---

[1] चिकीर्षुरेकान्तजनप्रियं प्रभुः, [illegible]र्षुरेकान्तजनप्रियः प्रियम्—स.

[2] अत्र व्याख्यायां लिपिकृत्प्रमा[illegible] भाव्यते ।

त्रिलोक्यां लीयमानायां संवर्ताम्भसि वै तदा ।
उपस्थास्यति नौः काचिद् विशाला त्वां मयेरिता ॥ ३३ ॥

त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ।
सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥ ३४ ॥

आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ।
एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥

दोधूयमानां तां नावं समीरेण बलीयसा ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाहिना ॥ ३६ ॥

अहं त्वामृषिभिः साकं सह नावमुदन्वति ।
विकर्षन् विचरिष्यामि यावद् ब्राह्मी निशा प्रभो ॥ ३७ ॥

मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि ॥ ३८ ॥

श्रीशुक उवाच —

इत्थमादिश्य राजानं हरिरन्तरधीयत ।
सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥

आस्तीर्य दर्भान् प्राक्कूलान् राजर्षिः प्रागुदङ्मुखः ।
निषसाद हरेः पादौ चिन्तयन् मत्स्यरूपिणः ॥ ४० ॥

ततः समुद्र उद्वेलः सर्वतः प्लावयन् महीम् ।
वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥

ध्यायन् भगवदादेशं ददृशे नावमागताम् ।
तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥

---

संवर्ताम्भसि प्रलयोदके । उपस्थास्यति समीपमागमिष्यति ॥ ३३ ॥ सत्त्वैः सत्त्वैः प्राणिभिः उपबृंहितः पूरितः ॥ ३४ ॥ निरालोके तमःप्राये । ऋषीणां वर्चसा प्रकाशेनैव नान्येन ॥ ३५ ॥ दोधूयमानाम् इतस्ततोऽत्यन्तं कम्पमानां निबध्नीहि । महाहिना वासुकिना ॥ ३६ ॥ ब्राह्मी ब्रह्मसम्बन्धिनी ॥ ३७ ॥ तव सम्यक् प्रश्नैः हृदि विवृतं स्पष्टीकृतं मयानुगृहीतं मदीयं ब्रह्मेतिशब्दितं महिमानं ज्ञास्यसि ॥ ३८ ॥ अन्ववैक्षत प्रतीक्ष्य स्थितः ॥ ३९ ॥

तमूचुर्मुनयः प्रीतं राजन् ध्यायस्व केशवम् ।
स वै नः संकटादस्मादविनाशं विधास्यति ॥ ४३ ॥

सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ।
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥

निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ।
वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥

राजोवाच —

'अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः[2] ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥

जनोऽबुधोऽयं निजकर्मबन्धनः
सुखेच्छया कर्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं
स भिन्द्याद्[3] हृदये स नो गुरुः त् ॥ ४७ ॥

---

अविनाशं विनाशविरोधिजीवानां शं सुखम् अविनाभावं सुखयुक्तं पदं विधास्यतीति[4] वा ॥४३॥

वरत्रेण पाशेन । मधुवन्मधु संसारं सूदितवानिति मधुसूदनः तम् ॥ ४५ ॥

अनाद्यविद्योपहता आत्मसंवित् परमात्मज्ञानं येषां ते तथा । साऽविद्या मूलं कारणं यस्य स तन्मूलः । स च (असौ) संसारस्तन्मूलसंसारः । तस्मिन् परिश्रमस्ततो आतुराः क्लिष्टाः यदृच्छया पूर्व-जन्मार्जितपुण्याभिमुखीभूतदैवेच्छया इह लोके विशिष्टजन्मोपसृताः पुरुषा यमाप्नुयुः स परमो गुरु-र्भवान् नो विमुक्तिदोऽस्त्वित्यन्वयः ॥ ४६ ॥

कर्मनिर्मूलनं भगवत्सेवयेत्याह—जन इति । अ ःमं यकर्मणा बन्धनं यस्य स तथा अय-मबुधो जनः सुखमाप्नवानीतीच्छया कर्म समीहते ततोऽसु । ःखमाप्नोति इति यत् ततोऽबुधो जनो यस्येश्वरस्य सेवया कर्मविषयामसन्मतिं विधुनोति, अतः कर्म ने लनं चाप्नोति । गुरुर्ज्ञानोपदेष्टा । स नो हृदये स्थितां ग्रन्थिं कर्मपाशकृतां भिन्द्यादित्यन्वयः ॥ ४७ ।

---

[1] अनाद्यविद्योपहतात्मसंविदः—स.शे, [2] परिश्रमातुराः- इ ।पि स. [3] विभिन्द्यात् —स.शे. ।

[4] जीवानां शं सुखमविनाभावं स्वरूपभूतं, सुखयुक्तं तादृशसुखाश्र ॥ विधास्यतीति वेति । अनेन मूले अविना जीवस्वरूपभूतं शं सुखं यस्मिन् पदे तदविनाशमिति योगः सूचा - -गू.

यत्सेवयाग्नेरिव रुद्ररोदनं पुमान् विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेष सोऽव्ययो भूयात् स ईशः परमो गुरोर्गुरुः[1] ॥

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥

सचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याविदुषो बुधो गुरुः ।
त्वमर्थदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः सुगतिं बुभुत्सताम् ॥

जनो जनस्यादिशतेऽसतीं गतिं यया प्रपद्येत दुरत्ययं तमः ।
त्वमव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥

---

एष पुमान् यत्सेवया आत्मनस्तमोलक्षणं मलं विजह्यात् जहाति निजं वर्णं परमात्मगतिम् आनन्दस्वरूपं च भजेत भजते । कथमिव ? अग्निदाहलक्षणसेवया रुद्ररोदनं हिरण्यं स्वमलं दशविधं जहाति निजवर्णं शास्त्रसिद्धं स्वरूपं भजति यथा तथेत्यर्थः । किञ्च स जीवः पुनरव्ययोऽसंवृतः आवरणरहितो भवति । वेञ् संवरण इति धातोः । गुरोर्गुरुः स परमो नो मुक्तिदो भूयादित्यन्वयः । ईशः मुक्तिदानसमर्थः । ई लक्ष्मीः तस्याः शं यस्मात् स इति वा । 'जातरूपं श्रीमुकुटं हिरण्यं रुद्ररोदनम्' इत्यभिधानम् । स भगवानव्यय इति वा ॥ ४८ ॥

अन्ये देवा अन्ये गुरवो जनाश्च स्वयं समेता मिलिताः पुंसो (वा) यस्य हरेः प्रसादायुतभागलेशं कर्तुं न प्रभवन्ति, तदनुग्रहमन्तरेणेति शेषः । अहं तं त्वामीश्वरं शरणं यामीत्यन्वयः ॥ ४९ ॥

यथाऽन्धस्य पुंसः सचक्षुर्दृष्टिमानग्रणीः अग्रतो गन्ता कृतः, यथा चाविदुषो जनस्य बुधो जनो गुरुः कृतः, शास्त्रविशारदैरिति शेषः । तथा सुगतिं बुभुत्सतां बोद्धुमिच्छतां नोऽर्थदृक् पुरुषार्थद्रष्टा सर्वदृशां सर्वेन्द्रियाणां समीक्षणः साक्षी त्वं गुरुर्वृतः ज्ञानोपदेशकत्वेनेति शेषः । अचक्षुरिति पाठे अयमर्थः । त्वामन्तरेणेतरेषां गुरुत्वं पुरुषार्थानुपयोगि सम्यग् ज्ञानहीनत्वादित्याह— अचक्षुरिति । यथान्धस्याचक्षुषोऽचक्षुरन्धोऽग्रणीः कृतो भवति तथाऽविदुषो जनस्याबुध[2] एवं गुरुर्भवति । 'अन्धेनैव नीयमाना यथाऽन्धाः', 'उभावप्यश्रुतग्रन्थावुभावपि जडात्मकौ' इत्यादिश्रुतिस्मृतिभ्यः । त्वं चार्थदृक् शिष्यस्यापेक्षितपुरुषार्थदर्शी । कुतः ? दर्शनसाधनत्वेन दृशः इन्द्रियाणि तेषां साक्षित्वादस्माकं गुरुत्वेन वृत इति ॥ ५० ॥

एतदेव विवृणोति—जन इति । जनो जननाद्यभिमानी । तादृशस्य जनस्यासतीं गतिं इहा-

---

[1] भजेत् स्ववर्णं निजमेष नोऽव्ययो भूयात् स ईशः परमो हरिर्गुरुः । इति शे पाठः ।

[2] अचक्षुरिति पाठे अबुध इति च्छेदः ।

त्वं सर्वलोकस्य सुहृत् प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।
तथापि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥

तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ।
छिन्ध्यर्थदीपैर्भगवन् वचोभिर्ग्रन्थीन् हृदय्यान् विवृणु स्वमोकः ॥ ५३ ॥

---

मुत्र चोरुफलदं ज्ञानमादिशति । यया येन ज्ञानेन दुरत्ययं तमः नित्यदुःखात्मकमन्धंतमः प्राप्नोति, तादृशमिति शेषः । यथेति पाठे यथोपदिष्टेन दुरत्ययं तमः प्राप्येत तथोपदिशति न सन्नासन्न सदसदित्यद्याकारेणेत्यर्थः । 'अन्धन्तमः प्रविशन्ति' इतीशावास्यश्रुतेः । जनो येन ज्ञानेन निजं पदं निर्दोषत्वेन त्वद्रूपसदृशं सच्चिदानन्दलक्षणमञ्जसा अव्यवधानेन प्रपद्यते यच्चाव्ययमक्षयं यच्चामोघम्-व्यभिचारितया फलसमर्पकं त्वं तदेव ज्ञानमादिशसीत्यन्वयः ॥ ५१ ॥

इतोऽपि त्वदुपदिष्टज्ञानमेवापेक्षितपुरुषार्थसाधनं नान्यत्, अनिमित्तबन्धुत्वादिगुणपूर्णत्वेन सिद्धत्वेन वञ्चनाशङ्कानास्पदत्वादित्याशयेनाह—त्वमिति । सुहृत्प्रत्युपकारशून्यः प्रियश्चेश्वरश्च । विषयसुखस्यापीश्वर इति वा । आत्मा पूर्णानन्दः । गुरुर्ज्ञानोपदेष्टा । जानातीति ज्ञानम् । अभीष्टसिद्धिरपेक्षितपुरुषार्थसाधकः । लोकः सुहृत्त्वादिगुणवन्तं कुतो न जानातीति तत्राह—तथापीति । यद्यप्यनिमित्तबन्धुस्तथापि लोको भवन्तं न जानाति । अन्धधीः नष्टज्ञानत्वात् । ज्ञाननाशः, कस्मादित्यत उक्तम्—हृदीति । दूरस्थत्वान्न तज्ज्ञानमित्यत उक्तम्—सन्तमिति । हृदीत्येतदुभयत्र योज्यम् ॥ ५२ ॥

इदानीं स्वार्थं प्रकाशयति—तं त्वामिति । प्रतिबोधनाय त्वत्स्वरूपविषयज्ञानायाहं यो ज्ञानोपदेष्टृत्वादिगुणोपेतस्तं त्वां शरणं प्रपद्य इत्यन्वयः । देवोत्तमत्वादयमेव शरण्य इति भावेनोक्तम्—देववरमिति । सौन्दर्यादिगुणाभावे न त्वद्भक्तिरुदेतीति भावेनोक्तम्—वरेण्यमिति । उक्तगुणा अन्यत्र व्यभिचारिणो नेत्याह—ईशमिति । अन्यथेश्वरत्वानुपपत्तिः । हृदय्याम् अहङ्कारसम्भूतां ग्रन्थिम् अर्थस्य दीपकैः प्रकाशकैः । किञ्च स्वमोकः स्वस्वरूपं स्वाश्रयं वैकुण्ठं वा विवृणु प्रकाशयेत्यन्वयः । 'ओकसी मन्दिराश्रयौ' इति च । ५३ ॥

इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः ।
मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥ ५४ ॥
पुराणसंहितां दिव्यां साङ्ख्ययोगक्रियावतीम् ।
सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥
अश्रौषीद् ऋषिभिः साकमात्मतत्त्वमसंशयम् ।
नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥ ५६ ॥
अतीते प्रलयापाय उत्थिताय च वेधसे ।
हत्वाऽसुरं हयग्रीवं वेदान् प्रत्याहरद् हरिः तू ॥ ५७ ॥
स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ।
विष्णोः प्रसादात् कल्पेऽस्मिन्नासीद् वैवस्वतो मनुः ॥ ५८ ॥
सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ।
संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥
अवतारं हरेर्योऽमुं कीर्तयेदन्वहं नरः ।
सङ्कल्पास्तस्य सिध्यन्ति प्रयाति परमां गतिम् ॥ ६० ॥
प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः
श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ।

---

साङ्ख्ययोगक्रियावतीं ज्ञानभक्तिकर्मयोगवतीं 'पुराणसंहितामब्रवीत् । इदं श्रद्धेयमिति भावेनोक्तम्— आत्मगुह्यमिति । 'आचार्यस्तु ते गतिं वक्ता ' इतिवदुपदिष्टेव शिष्टं नास्तीत्यत उक्तम्[2] —अशेषत इति ॥ ५४–५५ ॥

नावि जलयाने । प्रलयानामपाये अतीते सति तत् उत्थिताय वेधसे ब्रह्मणे प्रत्याहरत् दैत्याहृतांस्तान् ज्ञात्वा प्रत्याहृत्य दत्तवानित्यर्थः ॥ ५६–५७ ॥

संवादस्य पापहरत्वे अवतारकथाकीर्तनेन किं प्रयोजनमत्राह— अवतारमिति । अस्तु श्रवणफलं कीर्तनेन किं फलमित्यतो वाह—अवतारमिति ॥ ६० ॥

बुद्धिसंग्रहार्थमवतारकथां सङ्कलय्य कथयति — प्रलयेति । सुप्तशक्तेर्विषयोपरतेन्द्रियशक्तेः

---

[1] पुराणसंहितां मत्स्यपुराणम्—गु. [2] अस्पष्टेयमवतारिका ।

दितिजमकथयच्च ब्रह्म सत्यव्रताय
तमहमखिलहेतु जिह्ममीनं नतोऽस्मि ॥ ६१ ॥

इति श्रीमद्भागवते अष्टमस्कन्दस्य त्रयोर्विशोऽध्यायः ।

---

कार्यानभिमुखीभूतप्रकृतिशक्तेर्वा । अपनीतं निःसृतं दैत्येन नीतम् । जिह्ममीनं मायामत्स्यम् । ' अनन्त शक्तिर्भगवान् मत्स्यरूपी जनार्दनः । क्रीडार्थं याचयामास स्वयं सत्यव्रतं नृपम् ' इत्यनेन ' तमाह साऽतिकरुणं महाकारुणिकम् ' इत्यादिना पूर्वोक्तं क्रीडेति ज्ञातव्यम् ॥ ६१ ॥

पदरत्नावलिर्नाम अष्टमस्कन्धसङ्गता ।
प्रीत्यै मत्स्यात्मनो विष्णोरस्तु निर्दोषवर्ष्मणः ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थमुनीन्द्रकृतायां
पदरत्नावल्यां श्रीमद्भागवतटीकायाम्
अष्टमस्कन्धस्य त्रयोविंशोऽध्यायः

भगवद्बादरायणप्रणीतम्

# श्रीमद्भागवतम्

## नवमस्कन्धः

### अथ प्रथमोऽध्यायः

राजोवाच —

मन्वन्तराणि सर्वाणि त्वयोक्तानि श्रुतानि मे
वीर्याण्यनन्तवीर्यस्य हरेस्तत्र कृतानि च[1] ॥ १ ॥
[2]योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ।
ज्ञानं योऽतीतकल्पान्ते लेभे पुरुषसेवया[3] ॥ २ ॥
स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ।
त्वया तस्य सुताः प्रोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥
तेषां वंशं पृथग् ब्रह्मन् वंशानुचरितानि च ।
कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥

---

श्रीवेदव्यासाय नमः

कमलाकान्तं कमलाक्षं विमलानन्दं प्रणम्य च ।
नृपवंशस्कन्धविलासं नवमस्कन्धं विवृणोमि ॥

अस्मिन् स्कन्धे राजवंशवर्णनेन श्रीनारायणे भक्तिविधानार्थं भगवन्माहात्म्यमेव प्रपञ्च्यते ।

तत्र वृत्तवर्तिष्यमाणस्कन्धयोः सङ्गतिप्रदर्शनाय वृत्तानुवादपूर्वकं वैवस्वतमनोः पुत्राणां तद्वंशाना- मनुवंशं तच्चरितानि च राजा शुकं पृच्छति — मन्वन्तराणीत्यादिना वद विक्रमानित्यन्तेन ।

---

[1] त्वयोक्तानि सर्वाणि मन्वन्तराणि मे मया श्रुतानि । तत्र मन्वन्तरेष्वपि अनन्तवीर्यस्य अपरिच्छिन्नवीर्येण हरे- हरिणा कृतान्यनुष्ठितानि वीर्याणि वीर्यसाध्यानि कृतानि कर्माणि च मया श्रुतानीति योज्यम् । अनन्तवीर्यस्य हरेरिति षष्ठी तृतीयादेशः । वीर्यशब्दात् मत्वर्थीयाच् अङ्गीकृत्य वीर्याणीत्यस्य वीर्यसाध्यानीत्यर्थः—दु. चम्

[2] अत्र यच्छब्दद्वयस्य स वै इत्युत्तरश्लोकेनान्वयः—शे.

[3] अतीतकल्पान्ते चाक्षुषकल्पान्ते, पुरुषसेवया मत्स्यावताररूपभगवत्सेवया, तदुपदेशेनेति यावत् तत्त्वज्ञानं लेभे—शे.

ये भूता ये भविष्याश्च भवन्त्यद्यतनाश्च ये ।
तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥ ५ ॥

सूत उवाच —

एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ।
पृष्टः प्रोवाच भगवान् शुकः परमधर्मवित् ॥ ६ ॥

श्रीशुक उवाच —

श्रूयतां मानवो वंशः सङ्क्षेपेण परन्तप ।
न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥ ७ ॥

परावरेषां भूतानामात्मा यः पुरुषः परः ।
स एवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन[1] ॥ ८ ॥

तस्य नाभेरुदस्तात् स पद्मकोशो[2] हिरण्मयः ।
तस्मिन् जज्ञे महाराज स्वयम्भूश्चतुराननः ॥ ९ ॥

मरीचिर्मानसस्तस्य जज्ञे तस्यापि कश्यपः ।
दाक्षायण्यां ततोऽदित्यां विवस्वानभवत् सुतः ॥ १० ॥

---

विक्रमान् वंशे जातानां पुरुषाणां चरितानि ॥ ५ ॥

राज्ञामभिषिक्तानां प्रजापालनादिलक्षणः परमो धर्मस्तं वेत्तीति ॥ ६ ॥

आत्मान्तर्यामी, इदं विश्वं स एवासीत् तदधीनमेवाभून्न तु स्वतन्त्रम् । किञ्चन प्रधानादिकमपि । 'तस्माद्धान्यन्नपरः किञ्चनास' इति श्रुतेः ॥ ८ ॥

उदस्तादुद्भूत् । स्वयम्भूरित्यस्य विष्णावपि च वृत्तेरित्यतश्चतुरानन इत्युक्तम् । 'विष्णुः स्वयम्भूरथभुक् स्वभूर्विश्वपतिरित्यभिधानम् ॥ ९ ॥

मानसो मनोजातः । ततः कश्यपात् ॥ १० ॥

---

त[1] यत् किञ्चन प्रकृत्यादिकमासीत् । तद् अन्यत् परमपुरुषस्यानधीनं नासीत्, किन्तु परमपुरुषस्याधीनमेवासीदिति—दु. [2] तस्य नाभेः समभवत् पद्मकोश इति पांक्तः पाठः । उदस्तात्सपद्मेति पाठे नायं तच्छन्दः । तत्त्वे तस्मिन्नित्युक्तेरयमवक्तव्यं स्यात् । (अपि तु) सशब्दः सारवाची । पुष्करं लोकसारमित्युक्तेः । लोकसारो यः पद्मकोशः स हिरण्मय उदस्तादुद्भूत्—सत्यधर्मतीर्थाः.

ततो मनुः श्राद्धदेवः सञ्ज्ञायामास भारत ।
श्रद्धायां जनयामास दश पुत्रान् स आत्मवान्[1] ॥ ११ ॥

इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूशकान् ।
नरिष्यन्तं पृषध्रं च नाभागं च नभं विभुम्[2] ॥ १२ ॥

अप्रजस्य मनोः पूर्वं वसिष्ठो भगवान् किल ।
मित्रावरुणयोरिष्टिं प्रजार्थमकरोद् विभुः ॥ १३ ॥

तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ।
दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥

प्रेषितोऽध्वर्युणा होता दध्यौ तत् सुसमाहितः ।
गृहीते तेन हविषि वषट्कारं गृणन् द्विजः ॥ १५ ॥

होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ।
तां विलोक्य मनुः प्राह नातिहृष्टमना गुरुम् ॥ १६ ॥

भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ।
विपरीतमहो कष्टं मैवं[3] स्याद् ब्रह्मविक्रिया ॥ १७ ॥

---

ततो विवस्वतो मनोः पुत्रानाह—श्रद्धायामित्यादिना । आत्मवान् वशीकृतमनाः ॥११–१२॥

अप्रजस्य अपुत्रस्य, इक्ष्वाकुप्रभृतिपुत्रोत्पत्तेः पूर्वं मित्रावरुणयोरिष्टिं मित्रावरुणदैवत्याम् (इष्टिम्) ॥ १३ ॥ सुसमाहितः एकाग्रचित्तः, तत् श्रद्धयोक्तं दध्यौ, वषट्कारं गृणन् स्वकर्माकरोदिति शेषः[4] ॥ १५ ॥ तस्य कर्मणो व्यभिचारेण विपक्षवर्तिना हेतुना । वाङ्निमित्तत्वादिला । वाणी सरस्वती भाषा वागिडेला प्रकीर्तितेत्यभिधानम् ॥ १६ ॥

इदं जातं किमिति तत्राह—कर्मेति । ब्रह्मवादिनां वः कर्म विपरीतं पुत्रार्थिनः कन्याफलमभू-

---

[1] भगवत्यन्तःकरणवान्—दु. [2] इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूशकान् जनयामास, नरिष्यन्तं जनयामास, नभं विभुं जनयामासेति, आवृत्तिमङ्गीकृत्य प्रत्येकमन्वयः—दु. मूले विभुमिति विशेषणं, नभमिति विशेष्यम् । नभगं च कविं विभुः इति श्रीधरादिपाठः ।

[3] मैव स्यात् इति दु पाठः । तत्रैवं योजना प्रदर्शिता—हे भगवन् ब्रह्मवादिनां वो युष्माकमिदं कर्म किं कस्मान्निमित्ताद् विपरीतं स्त्रीत्वापादकं जातम् । इदं स्त्रीत्वं कष्टम् । ब्रह्मविक्रिया एवमनिष्टापादनी मैव स्यात् नैव भवति । अतो भवतां कर्मणां स्त्रीत्वापादकमहो । अतो वलवन्निमित्तं किमिति हृदयम् ।

[4] अध्वर्युणा यजेति प्रेषितो होता तेनाध्वर्युणा हविषि गृहीते सति वषट्कारं गृणन् वौषडिति वदन् तद् भार्यया प्रार्थितं दध्याविल्यन्वयः—शे.

यूयं मन्त्रविदो युक्तास्तपसा दग्धकिल्बिषाः ।
कुतः सङ्कल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥

तन्निशम्य वचस्तस्य भगवान् प्रपितामहः[1] ।
होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनन्दनम् ॥ १९ ॥

एतत् सङ्कल्पवैषम्यं होतुस्ते व्यभिचारतः ।
तथापि साधयिष्येऽहं सुप्रजास्त्वं स्वतेजसा ॥ २० ॥

एवं व्यवसितो राजन् भगवान् स महायशाः ।
अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥ २१ ॥

तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ।
ददाविलाऽभवत् तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥

स एकदा महाराज विचरन् मृगयां वने ।
वृतः कतिपयामात्यैरश्वमारुह्य सैन्धवम् ॥ २३ ॥

प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ।
दंशितोऽनुमृगं[2] वीरो जगाम दिशमुत्तराम् ॥ २४ ॥

---

दतः किमिदमिति कुतूहलयामि । अत्रैवंभूतेप्यन्यत्र मा भूदित्याह —मैवमिति । ब्रह्मविदां वः क्रिया मैवं भूदित्यर्थः ॥ १७ ॥

क्वचित् स्खलनेऽन्यत्रापि नियमो न स्यादित्याशङ्क्य क्वचिदप्यन्यथात्वं न युक्तं युष्माकमित्याह —यूयमिति । 'मैत्रावरुणीमिष्टिं कुर्यात् पुत्रकामः' इत्यादिमन्त्रहृदयज्ञाः । 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद् वषट् करिष्यन्' इति, वचनान्मनोयोगयुक्ताः । न च दोषादन्यथात्वं मनस इत्याह—तपसेति । यूयमेवंविधास्तेषु युष्मासु सङ्कल्पवैषम्यं चिन्तितस्यान्यथात्वं कुतः ? न कुतोऽपि सम्भाव्यते । कुत इति तत्राह—अनृतमिति । न हि देवेष्वनृतं दृष्टचरम् । तस्मादनृतं न वदेदिति श्रुतेः ॥ १८ ॥

होतुर्व्यभिचारतः ध्यानस्यान्यथात्वलक्षणात् ॥ २० ॥ तेन वरेण हेतुना ॥ २२ ॥
सैन्धवं सिन्धुदेशजातम् ॥ २३ ॥

---

[1] तस्य वैवस्वतमनोः प्रपितामहो वसिष्ठः । मरीचिवद् वसिष्ठस्यापि ब्रह्मपुत्रत्वात् । रविनन्दनं वैवस्वतम्—शे.
[2] दंशितो वर्मयुक्तः । अनुमृगं, धावन्निति शेषः—शे.

सुकुमारवनं मेरोरधस्तात् प्रविवेश ह ।
यत्रास्ते भगवान् शम्भू रममाणः सहोमया ॥ २५ ॥

तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा ।
अपश्यत् स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥

तथा तदनुगाः सर्वे आत्मलिङ्गविपर्ययम् ।
दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥

इति श्रीमद्भागवते नवमस्कन्धस्य प्रथमोऽध्यायः ।

॥ अथ द्वितीयोऽध्यायः ॥

**राजोवाच —**

कथमेवंगुणो देशः केन वा भगवन् कृतः ।
प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ १ ॥

**श्रीशुक उवाच —**

एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ।
दिशो वितिमिरा भासा कुर्वन्तस्तमुपागमन् ॥ २ ॥

तान् विलोक्याम्बिका देवी विवस्त्रा व्रीडिता भृशम् ।
भर्तुरङ्कात् समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३ ॥

ऋषयोऽपि तयोर्वीक्ष्य प्रसङ्गं रममाणयोः ।
निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ४ ॥

---

नाम्ना सुकुमारवनम् । अधस्तात् स्थितम् ॥ २५ ॥ आत्मानं स्त्रीचिह्नोपेतमश्वं च वडवाम् ॥ २६ ॥ आत्मनो देहस्य लिङ्गविपर्ययं पुरुषचिह्नविपरीतं स्त्रीचिह्नम् ॥ २७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य प्रथमोऽध्यायः ।

॥ अथ द्वितीयोऽध्यायः ॥

एवंगुणः पुरुषस्य स्त्रीत्वापादकगुणयुक्तः ॥ १ ॥ भासा स्वतेजसा वितिमिराः निरस्तान्धकाराः ॥ २ ॥ नीवीं वस्त्रं पर्यधाद् वेष्टितं कृतवती ॥ ३–४ ॥

तदेवं भगवानाह प्रियायाः प्रियकाम्यया ।
स्थानं यः प्रविशेदेतत् स वै योषिद् भवेदिति ॥ ५ ॥

तत ऊर्ध्वं वनं तद् वै पुरुषा वर्जयन्ति हि ।
स चानुचरसंयुक्तो विचचार वनाद् वनम् ॥ ६ ॥

अथ तामाश्रमाभ्याशे चरन्तीं प्रमदोत्तमाम् ।
स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ७ ॥

साऽपि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ।
स तस्यां जनयामास पुरूरवसमात्मजम् ॥ ८ ॥

एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ।
सस्मार स्वकुलाचार्यं वसिष्ठमिति शुश्रुम ॥ ९ ॥

स तस्या तां दशां दृष्ट्वा कृपया भृशपीडितः ।
सुद्युम्नस्याशयन् पुंस्त्वमुपधावत शङ्करम् पा ॥ १० ॥

तुष्टः स तस्मै भगवान् ऋषये प्रीतिमावहन् ।
स्वां च वाचमृतां कुर्वन्निदमाह विशाम्पते ॥ ११ ॥

मासं पुमान् स भविता स्त्री मासं तपसा तव ।
इति व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ १२ ॥

श्रीशुक उवाच —

आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ।
पालयामास जगतीं नाभ्यनन्दन् स्म तं प्रजाः ॥ १३ ॥

---

भगवानाहेत्यन्वयः । कथम् ? य एतत्स्थानं प्रविशेत् स योषिद् भवेदिति । वै इत्यनेनात्मवर्जमिति सूचयति ॥ ५ ॥ तद् वै तदेव नान्यत् । हिशब्दो हेतौ यतः स्त्रीत्वं स्यादत इति ॥ ६ ॥

स बुधः तस्यां स्त्रीत्वमापन्नायां सुद्युम्नाख्यायाम् ॥ ८ ॥

दशां स्त्रीत्वलक्षणाम् । आशयन् कामयन् । उपधावत असेवत ॥ १० ॥ पा

न् मासमिति द्वितीया त्रिंशद्दिनेष्वेकस्मिन् दिनेप्यनन्यथात्वं सूचयति, कालाध्वनोरत्यन्तसंयोगे इति सूत्रात् ॥ १२ ॥ पुंस्त्वलक्षणं कामम् । जगतीं राजप्रधानभूमिम् ॥ १३ ॥

तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः ।
दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ १४ ॥

ततः परिणतः काले प्रतिष्ठानपतिः प्रभुः ।
पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ १५ ॥

इति श्रीमद्भागवते नवमस्कन्धस्य द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

श्रीशुक उवाच —

एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ।
पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥

ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ।
इक्ष्वाकुपूर्वजान् पुत्रान् लेभे स्वसदृशान् दश ॥ २ ॥

पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ।
पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥

एकदा प्राविशद् गोष्ठं शार्दूलो निशि वर्षति ।
शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥

एकां जग्राह बलवान् सा॒नुक्रोश॒भयातुरा । चु
तस्यास्तु क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥

---

दक्षिणापथस्य देशस्य राजानः ॥१४॥ परिणतः वृद्धः । प्रतिष्ठानाख्यपुरपतिः । गां भूमिम् ॥१५॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य द्वितीयोऽध्यायः ।

॥ अथ तृतीयोऽध्यायः ॥

सुद्युम्ने सुते । वैवस्वतः श्राद्धदेवो मनुः ॥ १ ॥ इक्ष्वाकुः पूर्वजो ज्येष्ठो येषां ते तथा तान् ॥ २ ॥ मनोः पुत्राणामष्टमः पुत्रो पृषध्रो गाः पालयामास । कीदृशः ? गुरुणा वसिष्ठेन गोपालः कृतः । तुशब्देन वृषान् धारयितुं योग्य इति निरुक्त्येति सूचयति । गोरक्षैकनिष्ठया नेत्रे उन्मील्य जाग्रदेव गोसन्निधाने प्रतिष्ठानाद् वीरासनव्रतः ॥ ३ ॥ निशि मेघे वर्षति सति ॥४॥ सा गौः ॥५॥

खड्गमादाय तरसा प्रलीनोडुगणे निशि ।
अजानन्नहनद् बभ्रोः शिरः शार्दूलशङ्कया ॥ ६ ॥

व्याघ्रो विवृक्णश्रवणो निस्त्रिंशाग्रहतस्ततः ।
निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥

मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ।
अद्राक्षीत् स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥

तं शशाप कुलाचार्यः कृतागसमकामतः ।
न क्षत्रबन्धुः शूद्रस्त्वं कर्मणा भविताऽमुना ॥ ९ ॥

एवं शप्तस्तु गुरुणा प्रत्यगृह्णात् कृताञ्जलिः ।
अधारयद् व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥

वासुदेवे भगवति सर्वात्मन्यमले परे ।
एकान्तित्वं गतो भक्त्या सर्वभूतसुहृत् समः[1] ॥ ११ ॥

विमुक्तसङ्गः शान्तात्मा संयताक्षोऽपरिग्रहः ।
यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥

---

बभ्रोर्गोः शिरोऽहनत् । बभ्रुर्गौः सौरभेयी च माहेयी गोमतल्लिकेत्यभिधानम् । गोः शिरश्छेदने को हेतुरिति तत्राह — निशीति । निश्यपि नक्षत्रादिप्रकाशनेन विवेकज्ञानं सुलभमिति ? अत्राह — प्रलीनेति । मेघच्छायाच्छादितनक्षत्रादिप्रकाशे च सति ॥ ६ ॥

विवृक्णश्रवणः छिन्नकर्णमूलः । निस्त्रिंशस्य खड्गस्याग्रेण हतः प्रहतः ॥ ७ ॥ परवीरहा शत्रुवीरसंहारकः । निशि व्युष्टायां प्रभातायाम् ॥ ८ ॥ अकामतः बभ्रुहननेच्छाभावतोऽपि, कृतागसं कृतापराधम् । अमुना क्रूरकर्मणा शूद्रो भविता न क्षत्रबन्धुरिति शशापेत्यन्वयः ॥ ९ ॥

तुशब्देन गुरावनसूयवानित्याह । कुतोऽवगतमेतदित्यत उक्तम् — प्रत्यगृह्णादिति । भयात् प्रतिग्रहः किं न स्यादित्यत उक्तम् — कृताञ्जलिरिति । मुनिप्रियमूर्ध्वरेतस्त्वं व्रतम् ॥ १० ॥

किं तन्मुनिप्रियं व्रतमित्याह — वासुदेव इति । एकान्तत्वादिकं व्रतम् ॥ ११ ॥

संयताक्षः नियमितेन्द्रियः । यदृच्छयाऽसंप्रार्थितयाऽऽगतेन ॥ १२ ॥

---

[1] सुहृदादिषु समः, सुखदुःखादिष्विति शेषपूरणेन सुखादिषु समः इति वा योज्यम् ।

आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ।
विचचार महीमेतां जडान्धबधिराकृतिः ॥ १३ ॥

एवंव्रतो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ।
तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥

कविस्तदाऽयं विषयेषु निःस्पृहो विसृज्य सङ्गं सह बन्धुभिर्वनम् ।
निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥

करूशान्मानवादासन् कारूशाः क्षत्रजातयः ।
उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥

धृष्टाद्धार्ष्टमभूत् क्षत्रं ब्रह्मभूतं गतं क्षितौ[1] ।
[2]नभपुत्रोऽतिबलवान् स्वातिमूलोऽभवद्वसुः ॥ १७ ॥

वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्स्वसा ।
कन्या चोघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥

---

तेन दावाग्निना, उपयुक्तकरणः स्वीकृतदेहो, दग्धदेह इत्यर्थः । 'करणं साधकतमे शरीरेन्द्रिययोरपि इत्यभिधानम् ॥ १४ ॥

उक्तमेव विवृणोति — कविरिति । यदा शापं प्राप तदा विषयेषु निःस्पृहः कविर्ज्ञानी अयं वृषध्रः बन्धुभिः सह सङ्गं विसृज्य वनं विवेश । स्वरोचिषं स्वयंप्रकाशं पुरुषं चित्ते निवेश्य कैशोरवया अल्पवयाः, तत्प्रसादेन परं गत इत्यन्वयः ॥ १५ ॥

मानवात् मनुपुत्रात् करूशात् कारूशा इत्येवं प्रसिद्धा आसन्नित्यन्वयः । क्षत्रजातय इत्यनेन गोपालत्वादिजात्यन्तरं नाप्ताः, किन्तु तज्जातय एवेति सूचयति ॥ १६ ॥

धृष्टान्मनुपुत्रात् नाम्ना धार्ष्टं क्षत्रमभूत् । तद्वृत्तमाह — ब्रह्मभूतमिति । ब्रह्मत्वं श्रोत्रियत्वं गतमित्यर्थः । नभस्य मनुपुत्रस्य पुत्रः स्वातिमूलः तस्य पुत्रः नाम्ना वसुरभवत् ॥ १७ ॥

तत्पुत्रः प्रतीकपुत्र ओघवान् । ओघवतस्तस्य सहोदर्योघवती कन्या चाभवत् । सुदर्शनो नाम राजा ॥ १८ ॥

---

[1] गतं क्षितावित्यस्य भूमण्डलस्थतीर्थक्षेत्रादिकं गतमित्यर्थः। क्षितिशब्देन क्षितिस्थिततीर्थक्षेत्रादिकं गृहीत्वा तत्सञ्चार उच्यत इत्यभ्युपगमात्, सर्वदा तीर्थक्षेत्रादिसञ्चार एव कृत इति भावः—दु.

[2] मानवाच्च नृगात् स्वातिस्ततो ज्योतिस्ततो नभः इत्यधिकः शे पाठः ।

चित्रसेनो नरिष्यन्ताद् दक्षस्तस्य सुतोऽभवत् ।
तस्य मीढ्वांस्ततः कूर्च इन्द्रसेनस्तु तत्सुतः ॥ १९ ॥

वीतिहोत्रस्त्विन्द्रसेनात् तस्य सत्यश्रवा अभूत् ।
उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥

देवदत्तस्य भगवानग्निः स्वयमभूत् सुतः ।
कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥

ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ।
नरिष्यन्तान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥ २२ ॥

नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ।
भलन्दनः सुतस्तस्य वत्सप्रीतिर्भलन्दनात् ॥ २३ ॥

वत्सप्रीतेः सुतः प्रांशुस्तत्सुतः प्रमितिर्विभुः[1] ।
खनित्रः प्रमितेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥ २४ ॥

विविंशतिसुतो रम्भः खनिनेत्रोऽस्य धार्मिकः ।
करन्धमो महाराज तस्यासीदात्मजो नृपः ॥ २५ ॥

तस्यावीक्षित् सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ।
संवर्तोऽयाजयद् यं वै महायोग्यङ्गिरस्सुतः ॥ २६ ॥

मरुत्तस्य यथा यज्ञो न तथान्योऽस्ति कश्चन ।
सर्वं हिरण्मयं त्वासीद् यत् किञ्चास्यतिशोभनम् ॥ २७ ॥

---

नरिष्यन्तान्मनुपुत्राच्चित्रसेननामा सुतोऽभूत् तस्य चित्रसेनस्य दक्षः ॥ १९ ॥

अग्नेर्जातूकर्ण्य इति नाम ॥ २१ ॥ ततो जातूकर्ण्याद् ब्रह्मकुलं जातं तदेवाग्निवेश्यायन-नामान्तरेण प्रसिद्धम् । इक्ष्वाकुप्रभृतीनां चतुर्थं दिष्टवंशम् ॥ २२ ॥

अन्यः अन्यजातीयः । कथम् ? वाणिज्यादिकर्मणा वैश्यत्वं गतः । 'दिष्टपुत्रो यः' इति पठन्ति । वक्ष्यमाणादन्य[2] इति वा ॥ २३ ॥

तस्य करन्धमस्य पुत्र अवीक्षित्, यस्यावीक्षितो मरुत्तः सुतः । मरुत्तं विशिनष्टि—संवर्त इति ।

---

[1] विभुरिति प्रमितेर्विशेषणम्—शे.

[2] वक्ष्यमाणाद् अम्बरीषपितुः मनुपुत्रनाभागाद् दिष्टपुत्रनाभागोऽन्यः इति यावत् ।

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
मरुतः परिवेष्टारो विश्वे देवाः सभासदः ॥ २८ ॥

मरुत्तस्य दमः पुत्रस्तस्यासीद् राज्यवर्धनः ।
सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः[1] ॥ २९ ॥

तत्सुतः केवलस्तस्माद् बन्धुमान् वेगवांस्ततः ।
बन्धुस्तस्याभवद् यस्य तृणबिन्दुर्महीपतिः ॥ ३० ॥

तं भेजेऽलम्बुषा देवी भजनीयगुणालयम् ।
वराप्सरा यतः पुत्राः कन्या चेलिबिलाऽभवत् ॥ ३१ ॥

यस्यामुत्पादयामास विश्रवाश्च धनाधिपम् ।
प्रदाय विद्यां परमामृषिर्योगेश्वरः पितुः ॥ ३२ ॥

विशालः शून्यबन्धुश्च धूमकेतुश्च तत्सुताः ।
विशालो वंशकृद् राजा वैशालीं निर्ममे पुरीम् । ॥ ३३ ॥

---

कोऽसौ संवर्त इति तत्राह—महायोगीति । संवर्तो नाम ऋषिः । कीदृशं यज्ञमकारयद् येन महायोगित्वं संभाव्यत इत्यतस्तं यज्ञं विशिनष्टि—मरुत्तस्येति । अनेन मरुत्तस्यापि महायोगित्वं श्रीनारायणानुग्रहपात्रत्वं सूचितम् ॥ २७ ॥

द्विजातयो दक्षिणाभिरमाद्यन् संहृष्टा इत्यन्वयः । मरुतो देवाः, 'गीर्वाणा ऋभवोऽमराश्च मरुतो वृन्दारका निर्जराः' इति हलायुधः । 'विश्वे देवा इति विशेषणाद् वायवो वा परिवेष्टारः भोक्तॄणामपेक्षितान्धसादिनिक्षेप्तारः, सभायां सीदन्त्युपविशन्तीति सभासदः, प्रत्यक्षं सभायामुपविश्य सर्वं विचारयन्त इत्यर्थः ॥ २८ ॥

अलम्बुषा नाम वराप्सरास्तृणबिन्दुं भेजे ॥ ३१ ॥

कीदृशीलिबिलेति तां विशिनष्टि—यस्यामिति । योगेश्वरो विश्रवा ऋषिश्च पितुरिलिबिलायाः पितुस्तृणबिन्दोः परमां विद्यां प्रदाय तामुद्वाह्य, यस्यामिलिबिलायां धनाधिपं वैश्रवणमुत्पादयामासेत्यन्वयः ॥ ३२ ॥ तत्सुताः तृणबिन्दुसुताः ॥ ३३ ॥

---

[1] सौधृतेयः सौधृतेयनामकः सुधृतेः सुतः सन् जज्ञे । नरः सौधृतेयस्य सुतः सन् जज्ञे । नरस्य सुधृतिपौत्रत्वमुच्यते—दु. सौधृतेयः सौधृतिसम्बन्धी नरनामा सुतो जज्ञे—स. सौधृतेयो नरः श्रुतः इति शं पाठः ।

[2] मरुतो वायवः सर्वे विश्वे देवाः—स.

हेमचन्द्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ।
तत्पुत्रः सहदेवस्तु कृशाश्वः सहदेवजः ॥ ३४ ॥

कृशाश्वात् सोमदत्तोऽभूद् योऽश्वमेधैरिडस्पतिम् ।
इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितम् ॥ ३५ ॥

सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ।
एते वैशालभूपालास्तृणबिन्दोर्यशोधराः[1] ॥ ३६ ॥

इति श्रीमद्भागवते नवमस्कन्धे तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

श्रीशुक उवाच —

शर्यातिर्मानवो राजन् ब्रह्मिष्ठः सम्बभूव ह ।
यो वा अङ्गिरसां सत्रे द्वितीयमहरध्यगात्[2] ॥ १ ॥

सुकन्या नाम तस्यासीत् कन्या कमललोचना ।
तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥

सा सखीभिः परिवृता विचिन्वन्त्यङ्घ्रिपान् वने ।
वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी[3] ॥ ३ ॥

---

इडस्पतिम् अन्नपतिं वाक्पतिं वा ॥३५॥ वैशालभूपालाः विशालवंशे जाता भूपालाः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य तृतीयोऽध्यायः ।

॥ अथ चतुर्थोऽध्यायः ॥

ब्रह्मिष्ठः ब्रह्मनिष्ठो वेदनिष्ठो वा । तत्फलमाह—यो वा इति । द्वितीयेऽहि यो मन्त्रोऽध्येतव्यः सत्रकल्पोक्तफलसिद्धये तं मन्त्रमध्यगादित्ययमर्थो द्वितीयमहरध्यगादित्युच्यते ॥ १ ॥

तस्य शर्यातेः ॥ २ ॥ विचिन्वन्ती मृगयन्ती । वल्मीकरन्ध्रे वल्मीकबिले । खद्योते खद्योतरूपे । ख एव द्योतत इति खद्योतः ॥ ३ ॥

---

[1] यशस्करा इति यावत्—स. [2] द्वितीयमहरुक्तवान्—इत्यपि स.

[3] तेजोरूपचक्षुषीति भावः, 'चक्षुषि ज्योतिः' इति हलायुधः ।

दैवेन चोदिता बाला ज्योतिषी कण्टकेन सा ।
अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥

शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात् ।
राजर्षिस्तमुपालभ्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५ ॥

अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ।
व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥

सुकन्या प्राह पितरं भीता किञ्चित् कृतं मया ।
द्वे ज्योतिषी अजानन्त्या निर्भिन्ने कण्टकेन ते ॥ ७ ॥

दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ।
मुनिं प्रसादयामास वल्मीकान्तर्हितं शनैः ॥ ८ ॥

तदभिप्रायमाज्ञाय प्रादाद् दुहितरं मुनेः ।
कृच्छ्रान्मुक्तस्तमामन्त्र्य पुरं प्रायात् सहानुगः ॥ ९ ॥

सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ।
प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥

---

सा सुकन्या मुग्धभावेन अज्ञातवस्तुस्वरूपतया बालभावत्वेन वा, कण्टकेन कण्टकाग्रेण ज्योतिषी ज्योतिराश्रये द्रव्ये, चक्षुषी इति यावत् । असृग् रुधिरम् । ततो विद्धचक्षुषोः ॥ ४ ॥

सैनिकानां राजसेवकानाम् । निरोधः स्तम्भनम् ॥ ५ ॥

युष्माभिर्भार्गवस्याभद्रममङ्गलं विचेष्टितं किमपि कृतमेव, न तत्र संशय इत्याह—व्यक्तमिति । नो मध्ये केनापि पुरुषेण तस्य भार्गवस्याश्रमदूषणं व्यक्तं कृतमत इदं सेनाशकृन्मूत्रस्तम्भनं भार्गवस्य विचेष्टितमिति व्यक्तमभूदिति पुनरावृत्त्या योजनीयम् ॥ ६ ॥

ते द्वे ज्योतिषी तत्त्वमजानन्त्या मया कण्टकेन निर्भिन्ने इत्यन्वयः ॥ ~~८~~ ॥ ॥ ७ ॥

तस्य मुनेः सुकन्यादानलक्षणमभिप्रायं ज्ञात्वा । कृच्छ्रान्मुक्तः, सुकन्यामुनिभ्यामिति शेषः ॥९॥

परमकोपनं अत्यन्तकोपशीलम् । भोजनसमयमन्तरेणान्यसमयं वृथा न मुञ्चतीत्यभिप्रायेण चित्तज्ञा अप्रमत्तेति सन्ध्यभाव इति ज्ञायते ॥ १० ॥

कस्यचित् त्वथ कालस्य नासत्यावाश्रमं गतौ ।
तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥

ग्रहं गृहीष्ये सोमस्य यज्ञे वामप्यसोमयोः ।
क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥

बाढमित्यूचतुर्विप्रमभिनन्द्य भिषक्तमौ ।
निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते[1] ॥ १३ ॥

इत्युक्तो जरया ग्रस्तदेहो धमनिसन्ततः ।
ह्रदं प्रवेशितोऽश्विभ्यां स्वयं चामज्जतां ह्रदे ॥ १४ ॥

पुरुषास्त्रय उत्तस्थुरापीच्या वनिताप्रियाः ।
रुक्मस्रजः कुण्डलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥

तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ।
अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥

दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ।
ऋषिमामन्त्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ १७ ॥

यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ।
ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥

राजा दुहितरं प्राह कृतपादाभिवन्दनम् ।
आशिषश्चाप्रयुञ्जानो नातिप्रीतमना इव ॥ १९ ॥

---

कस्यचित् कालस्योपरि । दत्तम्, युवामिति शेषः ॥ ११ ॥

तव वयोदानेनावयोः किं फलमिति तत्राह—ग्रहमिति । ग्रहमाहुतिविशेषभागम् असोमयोः सोमपानशून्ययोर्युवयोरपि गृहीष्ये दास्यामि ॥ १२ ॥ भिषक्तमौ वैद्यश्रेष्ठौ ॥ १३ ॥

धमनीभिः शिरोभिः सन्ततो व्याप्तः । देह इति शेषः, स्वयमश्विनौ च ॥ १४ ॥

आपीच्याः[2] षोडशवर्षप्रायाः ॥ १५ ॥ वरारोहा योषित् । सरूपान् समानरूपान् ॥ १६ ॥

---

[1] बाढमित्यभिनन्द्य, सिद्धविनिर्मितेऽस्मिन् ह्रदे निमज्जतामित्यूचतुरित्यन्वयः ।

[2] कैशोरयौवनाभ्यामन्तःकाल आपीच्यमुच्यत इति प्रथमतात्पर्यात्—स.

चिकीर्षितं ते किमिदं पतिस्त्वया प्रलम्भितो[1] लोकनमस्कृतो मुनिः ।
या त्वं जराग्रस्तमसत्यसम्मतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥

कथं मतिस्तेऽम्ब गतान्यथाऽसतां मार्गं त्वियं मत्कुलदूषणं त्विदम् ।
बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः[2] ॥ २१ ॥

एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ।
उवाच तात जामाता तवैष भृगुनन्दनः ॥ २२ ॥

शशंस पित्रे तत्सर्वं वयोरूपाभिलम्भनम् ।
विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥

सोमेन याजयन् वीरः[3] ग्रहं सोमस्य चाग्रहीत् ।
असोमयोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥

हन्तुं तमाददे वज्रं सद्योमन्युरमर्षितः ।
सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः ॥ २५ ॥

अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ।
भिषजाविति यत् पूर्वं सोमाहुत्या बहिष्कृतौ[4] ॥ २६ ॥

---

हे असति । दुर्वृत्ते । जरया ग्रस्तत्वादसम्मतम् । अध्वगं पान्थम् ॥ २० ॥

अम्ब पुत्रिके इयं ते मतिः कथमन्यथा गता । अन्यथेत्युक्तं विवृणोति--**असतामिति** । असतां मार्गं गतेत्यर्थः । इदं त्वत्कर्म मत्कुलदूषणं तु एव । किं तत् कर्मेति तत्राह — **बिभर्षीति** । अपत्रपा निर्लज्जा भूत्वा, जारं जरयत्युभयकुलमित्युपपत्तिं बिभर्षि यत् तस्मात् । तदेव स्पष्टयति— **कुलमिति** । नयसि प्रापयसि ॥ २१ ॥ वयोरूपयोरभिनन्दनं प्राप्तिर्येन, तत्सर्वम् ॥ २३ ॥

सोमेन हविषा । असोमयोः सोमपानरहितयोः ॥ २४ ॥ तं च्यवनम् । सद्योमन्युस्तदानीमेव जातक्रोधः । सवज्रं भुजम् ॥ २५ ॥

अन्वजानन् अनुज्ञातवन्तः । पूर्वं सोमग्रहाभावः कथं स्यादिति तत्राह—**भिषजाविति** ॥२६॥

---

[1] प्रलोभितः—स. [2] अन्धकारवाचकेन तमःशब्देनान्धकारयुक्तत्वं लक्ष्यत इत्यङ्गीकृत्य, अन्धकारयुक्तं नरकं नयसीत्यर्थः—दु. [3] समर्थश्च्यवनः—शे. वीरं शर्यातिं—स. [4] ततः सवज्रेन्द्रभुजस्तम्भनानन्तरं भिषजाविति बुद्ध्या पूर्वं सोमाहुत्या यत् यौ बहिष्कृतौ तयोरश्विनोः सोमस्य ग्रहमन्वजानन्—दु.

उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ।
शर्यातेरभवन् पुत्रा आनर्ताद् रेवतोऽभवत् ॥ २७ ॥

सोऽन्तःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ।
आस्थितोऽभुङ्क्त विषयानानर्तादीनरिन्दम ॥ २८ ॥

तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ।
ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥

पुत्र्या वरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ।
आवर्तमाने गान्धर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥

तदन्ते विभुमानम्य स्वाभिप्रायं न्यवेदयत् ।
तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥

अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ।
तत्पुत्रपौत्रनप्तॄणां गोत्राणि च न शृण्महे ॥ ३२ ॥

मुहूर्तं शृण्वतोऽश्राव्यं प्रतियातस्य तेऽनघ ।
[1]कालो यातस्त्रिनवभिः चतुर्युगविकल्पितः ॥ ३३ ॥

तद् गच्छ देवदेवांशो बलदेवो महाबलः ।
कन्यारत्नमिदं राजन् नररत्नाय देहि भो ॥ ३४ ॥

---

कुशस्थलीं द्वारावतीम् ॥ २८ ॥ विभुं ब्रह्माणम् ॥ २९ ॥ अपावृतं प्रकाशितम् । गान्धर्वे गाने । अलब्धक्षणः अलब्धावसरः ॥ ३० ॥ तदन्ते गीतावसाने ॥ ३१ ॥ ये हृदि कृतास्ते पुरुषाः कालेन निरुद्धा मृताः । न केवलं त एव न सन्ति, तत्पुत्रादयोऽपि न सन्तीत्याह—तत्पुत्रेति । गोत्राणि नामानि न शृण्महे न श्रुणुमः ॥ ३२ ॥ प्रतियातस्यात्रागतस्य, ते तवाश्राव्यं नरस्य श्रोतुमयोग्यं गानं मुहूर्तं मत्वा शृण्वतः कालो यात अतिक्रान्त इत्यन्वयः । कियानिति तत्राह—त्रिनवेति । त्रिनवभिः चतुर्युगैः विशिष्टत्वेन कल्पितः सप्तविंशतिसङ्ख्यायुतचतुर्युगभेदैर्भिन्न इत्यर्थः ॥ ३३ ॥

तर्हि किं करोमि, कन्या चावश्यं दातव्या, इमां कस्मै दास्यामीति तत्राह — तदिति । देवदेवस्य हरेरंशः शुक्लकेशांशवान् । मत्वर्थीयोऽच् प्रत्ययः । देवदेवस्यांशो[2] यस्मिन्निति वा ॥ ३४ ॥

---

[1] कालोऽभियातस्त्रिनवचतुर्युगविकल्पितः—म.शो.  [2] सङ्कर्षणस्यांशः ।

भुवो भारावताराय भगवान् भूतभावनः ।
अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ ३५ ॥

इत्यादिष्टोऽभिवन्द्याजं नृपः स्वपुरमागतः ।
त्यक्तां पुण्यजनत्रासाद् भ्रातृभिर्दिक्ष्ववस्थितैः ॥ ३६ ॥

सुतां दत्वाऽनवद्याङ्गीं बलाय बलशालिने ।
बदर्याख्यं ययौ राजा तप्तुं नारायणाश्रमम् ॥ ३७ ॥

इति श्रीमद्भागवते नवमस्कन्धे चतुर्थोऽध्यायः ।

॥ अथ पञ्चमोऽध्यायः ॥

श्रीशुक उवाच —

[1]नाभागोन्यस्ततः प्राज्ञो यं मत्वा भ्रातरः कविम् ।
यविष्ठं व्यभजन् दायं ब्रह्मचारिणमाह सः ॥ १ ॥

---

पुण्यजनत्रासाद् राक्षसभयाद् दिक्ष्ववस्थितैर्भ्रातृभिस्त्यक्तां स्वपुरं निजपुरीमागतः ॥ ३६ ॥
ककुद्मी त्वनवद्याङ्गीं शोभनावयवां सुतां बाहुशालिने बलाय दत्वा तपस्तप्तुं बदर्याख्यं नारायणाश्रमं ययावित्यन्वयः ॥ ३७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य चतुर्थोऽध्यायः ।

॥ अथ पञ्चमोऽध्यायः ॥

बह्वृचब्राह्मणप्रसिद्धो नाभागो मनुपुत्र उच्यते । ततस्तस्मात् पूर्वोक्तदिष्टपुत्रनाभागादन्यो नाभागाख्यमनुपुत्रः । ततः कथान्तरसूचको वा । वेदसिद्धत्वाद् यशसा ततो व्याप्तो वा । नाभानेदिष्ट[2] इत्यन्यः, ततोऽन्यनाम्ना ख्यातः, वेदे इति शेषो वा । नाभानेदिष्टं शंसतीत्यादौ[3] । प्राज्ञो ज्ञानी,

---

[1] नाभागशब्दस्य नभगापत्यमिति निर्वचनाङ्गीकारे आद्यवर्णे एव वृध्या भवितव्यम् । न तु द्वितीये । अत्र द्वितीये भावर्णे वृद्धिर्दृश्यते । नात्र नाभागशब्दस्य प्रवृत्तिनिमित्तं नभगपुत्रत्वम् । येन प्रयोगस्यासाधुत्वं स्यात् । किन्तु न भागो दायविभागो यस्य सः अभागः, अभागो नेत्ययं नाभाग इति । नाकशब्दवद् अत्र नञ्समासश्च । इति प्राद्वरीश्रीनिवासाचार्याः । [2] नाभानेदिष्ट इति तस्यैव नामान्तरम् ।

[3] ख्यात इत्यन्वयः । बह्वृचब्राह्मणे पञ्चमपञ्चकस्य चतुर्दशखण्डे प्रसिद्धमित्यर्थः । तथा हि ' नाभानेदिष्टं शंसति । नाभानेदिष्टं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाऽप्येतर्हि पितरं पुत्रा निष्ठावोऽववदित्येवाचक्षते स पितरमेत्याब्रवीत् त्वां ह वाव मह्यं तताभाक्षुरिति तं पिताऽब्रवीन्मा पुत्रक तदादृथाः ' इति ।

भ्रातरोऽभाङ्क्त किं मह्यं भजान पितरं तव ।
किं म आर्यास्तताभाङ्क्षुर्मा पुत्रक तदादृथाः ॥ २ ॥

इम अङ्गिरसः सत्रमासतेऽद्य सुमेधसः ।
षष्ठं षष्ठमुपेत्याहः कवे मुह्यन्ति कर्मणि ॥ ३ ॥

---

ज्येष्ठभ्रातरो ब्रह्मचारिणं विवाहानभिमुखं गुरुकुले वसन्तं यविष्ठं कनिष्ठं यं नाभागं कविम् आत्मज्ञानित्वेनातिक्रान्तदर्शिनं मत्वा, दायं कुलपारम्पर्येण प्राप्तं विभागयोग्यं द्रव्यं व्यभजन् यदा कवेर्भागमदत्वा तदा स कविर्नाभागोऽभ्यगम्यैत्य भ्रातॄनाह ॥ १ ॥

हे भ्रातरो यूयं मह्यं किमभाङ्क्तेति । नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभाङ्क्तेति' ब्राह्मणवाक्यसूचनायाऽभाङ्क्तेति पदप्रयोगः । मम भागं किमर्थं विभक्तवन्तः, मम भागः को वा कल्पित इति वाऽप्राक्षीदिति । त एतमब्रुवन्—भजान पितरं तवेति । तव पितरं भज, अन गच्छ । अन चेष्टायामिति धातोः । यदि तव विभागापेक्षा तर्हि गत्वा पितरं प्रसाद्य विचारय । वयं चागत्य पृच्छाम इत्यर्थः । 'एतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदित्येवाचक्षते' इति च। 'निष्ठावं व्यवस्थागमकं व्यवस्थापकम् अत एवावगम्य वदितारं पितरमब्रुवन्नित्यर्थः । यतो नाभागादयो निश्चयार्थं पितरं गत्वाऽब्रुवन् तस्मादेतर्हि अद्यापि पुत्राः पितरं निर्णीय व्यवस्थापकम् इत्याहुरित्यर्थः । स नाभागो भ्रातृभिः सह गत्वा पितरमपृच्छत्, किमिति तत्राह —किं म इति । हे तत तात पितः मे आर्या ज्येष्ठास्तद्वस्तु अभाङ्क्षुः किमिति पृच्छामि, त्वाम् । यदाऽहं प्रोषितस्तदाऽऽर्यास्त्वां व्यवस्थाप्य मे भागमदत्वा किमर्थमभाङ्क्षुरिति वा । त्वामन्तरेणाभाङ्क्षुरिति, 'त्वां ह वाव मह्यं तताभाङ्क्षुरिति' । स पिता प्रत्याह — मेति । हे पुत्रक तन्मादृथाः तस्मिन् दायविभागे आदरं मा कार्षीरिति, तं पिताऽब्रवीत् 'मा पुत्रक तदादृथाः' इति ॥ २ ॥

तर्हि मम जीवनोपायः क इति नाभागेन पृष्टः पिता प्रत्याह— इम इति । अद्य इमे सुमेधसः शोभनप्रज्ञा अङ्गिरसः सत्रमासते बहुकर्तृके चिरकालीने यज्ञे दीक्षितास्तिष्ठन्ति । हे कवे ते ऋषयः षष्ठं षष्ठमहरुपेत्य तस्मिन्नहनि कर्तव्ये वैश्वदेवे विश्वदैवत्ये कर्मणि मुह्यन्ति ॥ ३ ॥

---

[1] निष्ठवं निष्ठा निर्णयोऽस्यास्तीति निष्ठावः । मत्वर्थीयो वः । गुणार्णवः केशव इतिवत् । निर्णायकम् ।

तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ।
ते स्वर्यन्तो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥

दास्यन्ते तेऽथ तान् गच्छ तथा स कृतवान् यथा ।
तस्मै दत्वा ययुः स्वर्गं ते सत्रपरिवेषणम् ॥ ५ ॥

तं कश्चित् स्वीकरिष्यन्तं पुरुषः कृष्णदर्शनः ।
उवाचोत्तरतोऽभ्येत्य ममेदं वास्तवं वसु ॥ ६ ॥

---

त्वं महात्मनः तान् प्रति ज्ञातव्ये द्वे सूक्ते शंसय ब्रूहि । ते अङ्गिरसः स्वः स्वर्गं यन्तो गच्छन्तः सन्तः आत्मनः सत्रपरिशेषितं स्वसत्रे परिशिष्टं तुष्टिसाधनं द्रव्यं, ते तुभ्यं दास्यन्ते । अथ कालक्षेपमन्तरेण त्वं तान् ऋषीन् गच्छेति[1] । स नाभाग आत्मने पित्रा यथोक्तं तथा कृतवानित्यर्थः । 'अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते । ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति । तानेते सूक्ते षष्ठेऽहनि शंसय । तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति । तथेति तानुपैत् प्रतिगृभ्णीत मानवं सुमेधस इति । तमब्रुवन् । किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्व एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेति । तथेति । तानेते सूक्ते षष्ठेऽहन्यशंसयत् । ततो वै ते प्रयज्ञमजानन् विप्र/ स्वर्गं लोकं तद्यदेते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रजात्यै स्वर्गस्य लोकस्यानुख्यात्यै' इति । हे सुमेधसः मानवं मां प्रतिगृभ्णीत स्वीकुरुतेति मन्त्रमुक्त्वा कस्मिन् धने विद्यायामथास्मदपेक्षिते विद्योपदेशकामो यस्य स त्वं किंकामः[2] ? युष्मदधिकविद्यावत्त्वात् द्वितीयोऽधुना नाभिमत इति तृतीयकाम इत्याह—इदमेवेति । प्रथमविकल्पकामोऽपि भवामीत्याशयेनाह—अथ यदिति । सर्वयज्ञेषूपयोगमाह—तद्यदिति । अनुख्यातिः प्रकाशः । ते अङ्गिरसः, सत्रपरिवेषणं धनं तस्मै नाभागाय दत्वा स्वर्गं ययुरित्यन्वयः । 'ते स्वर्यन्तोऽब्रुवन्नेतत्ते ब्राह्मण सहस्रमितीति (मिति' इति ।) हे ब्राह्मण वेदविद्याविशारद ॥ ४-५ ॥

कृष्णदर्शनः[3] कृष्णवर्णतया प्रतीयमानः, कश्चिल्लोकविलक्षणः पुरुषो रुद्रः, यज्ञशालाया उत्तरत उत्तरदिग्भागादभ्येत्य सत्रपरिवेषणं स्वीकरिष्यन्तं तं नाभागमुवाच । कथम् ? इदं वास्तवं यज्ञशालालक्षणवास्तुभवं वसु वस्तु[4] ममेति । 'तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं ममैव (मम वै) वास्तुहमितीति (मिति' इति ।) समाकुर्वाणं राशीकृत्य स्वीकुर्वाणं कृष्णशरीरवाससी । वास्तुहं वास्तवम् ।

---

[1] पिता प्राहेति शेषः । [2] कस्मिन् धने विद्यायां विद्योपदेशे वा कामो यस्य स त्वं किंकाम इति विकल्पत्रये-णार्थकथनम् । [3] कृष्ण इति कृष्णा वर्णा इति दर्शनं लोककर्तृकदर्शनं यस्य स कृष्णदर्शन इत्यर्थः —दु.

[4] द्रव्यमित्यर्थः । वित्तं वस्तु वसु द्रव्यमित्यभिधानम्—शे.

ममेदमृषिभिर्दत्तमिति तर्हि स्म मानव ।
स्यान्नौ ते पितरि प्रश्नः स गतः पितरं तथा ॥ ७ ॥
यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ।
चक्रुर्हि भागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥
नाभागस्तं प्रणम्याह तवेश किल वास्तुगम् ।
इत्याह मे पिता ब्रह्मन् शिरसा त्वां प्रसादये ॥ ९ ॥
यत् ते पितावदद् धर्मं त्वं च सत्यं प्रभाषसे ।
ददामि ते मन्त्रदृशो ज्ञानं ब्रह्म सनातनम् ॥ १० ॥
गृहाण द्रविणं दत्तं यत् सत्रपरिवेषितम् ।
इत्युक्त्वाऽन्तर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥

---

मूलभद्रभाषायां हकारवकारयोः पर्यायत्वाङ्गीकारात् ॥ ६ ॥

हे मानव ! यदि ममेदमिति वदसि, तर्हि स्म तदेव ऋषिभिरिदं मम दत्तमित्याह । 'सोऽब्रवीन्मह्यं वा इदमदुरिति' । तर्हि स्म मानवेत्युत्तरत्रापि सम्बध्यते । हे मानव यदि त्वया प्रतिगृहीतमित्युच्यते तर्हि नौ आवयोर्विवादे ते पितरि प्रश्नः स्याद् गत्वा तं पृष्ट्वा निश्चित्य मां ब्रूही-त्युक्तः स नाभागः पितरं गतः तथा पृष्टवान् भो पितः अङ्गिरोभिर्दक्षिणार्थं वास्तवं मह्यं दत्तम् । तद्ग्रहणसमये कश्चित् पुरुष आगत्य मदीयमिदं वास्तवं ऋषिभिर्मह्यं दत्तमिति न त्वया स्वीकर्तव्य-मित्याह, अतो यथार्थं वदेति ॥ ७ ॥

नाभागेन पृष्टः पिता प्राह—यज्ञेति । क्वचिद् दक्षशापप्रसङ्गे, ऋषयो यज्ञवास्तुगतं सर्वमुच्छिष्ट-मवशिष्टं रुद्राय भागं चक्रुः हि यस्मात् सो देवः सर्वमर्हति ॥ ८ ॥ स

त्वया त्वविचार्योक्तमित्युक्तो नाभागो गत्वा तं रुद्रं प्रणम्याह । हे ईश वास्तुगतं तव किलेति मे पिता प्राह । तस्मादहं शिरसा त्वां प्रसादये क्षमस्वेति ॥ ९ ॥

स पुरुषो नाभागं प्रत्याह—यत्त इति । यद् यस्मात् ते पिता सत्यलक्षणं धर्ममवदत् । त्वं च सत्यं यथातथं वदसीति यत् तस्मान्मन्त्रदृशः वैश्वदेवसूक्तं दृष्टवतः, ते तव सनातनं सदातनं, वेद-प्रमाणकं वा ब्रह्म, ब्रह्मविषयं वा ज्ञानं ददाम्युपदिशामि ॥ १० ॥

किञ्च यत् सत्रपरिवेषितं द्रविणं तच्च ददामि गृहाण । 'तमब्रवीत् तद्वै नौ तवैव पितरि प्रश्न इति स पितरमैत् तं पिताऽब्रवीन्ननु ते पुत्रकाऽदुरित्यदुरेव म इत्यब्रवीत् तत्तु मे पुरुषः कृष्णशवास्युत्तरत

य एतत् संस्मरेत् प्रातः सायं च सुसमाहितः ।
कविर्भवति मन्त्रज्ञो गतिं चैव तथाऽऽत्मनः ॥ १२ ॥

इति श्रीमद्भागवते नवमस्कन्धस्य पञ्चमोऽध्यायः ।

॥ अथ षष्ठोऽध्यायः ॥

श्रीशुक उवाच —

नाभागादम्बरीषोऽभून्महाभागवतः कृती ।
नास्पृशद् ब्रह्मशापोऽपि चक्रप्रतिहतः क्वचित् ॥ १ ॥

---

म वै
उपोदतिष्ठन्मम वा इदं ममैव वास्तुहमित्यादितेति तं पिताब्रवीत् तस्यैव पुत्रक तत् तत्तु स तुभ्यं दास्यतीति स पुनरेत्याब्रवीत्, तव ह वाव किल भगव इदमिति मे पिताऽऽहेति सोऽब्रवीत् तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति ; तस्मादेवं विदुषा सत्यमेव वदितव्यमिति ।' हे पुत्रक तेऽङ्गिरसस्तवादुर्ननु दत्तवन्त एव किमिति पृष्टे स नाभागः म अदुरेव न तत्र सन्देह इत्यब्रवीत् । तर्हि किमत्र बाधकमिति तत्राह — तत् तु म इति । सत्रपरिवेषितं यद् धनं तदिदं ममैवेत्युक्त्वाऽऽदत्तवान् स्वीकृतवानित्यर्थः । इत्युक्ते पिता नाभागं प्रत्याह तं पितेति ॥ ११ ॥

फलमाह — य एतदिति । कविस्तत्वविज्ञानी । मन्त्रज्ञः ऋग्वेदतात्पर्यार्थज्ञानी । आत्मनः स्वपरलक्षणस्य वस्तुनो गतिं स्थितिं ज्ञानं वा प्राप्नोतीति शेषः । 'स एषः सहस्रसनिर्मन्त्रो यं नाभानेदिष्टमुपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेदेति ' अनेनापि फलश्रुतेरर्थः सूचित इति । यदाह नाभानेदिष्टः स एषः सहस्रसनिः, वन षण सम्भक्ताविति धातोः, सहस्रेत्युपलक्षणमनेकजनाय धनदाता, सन लाभ इति धातोरनेकविषयज्ञानलाभोपेतः । मन्त्रो मन्त्रज्ञानी पुरुषः एवमितिहासार्थं वेद एनं पुरुषमुद्दिश्य सहस्रम् उपनमति षष्ठेनाह्ना षष्ठदिनापेक्षितसूक्तपूर्वककृतकर्मणा स्वर्गसुखं ज्ञानात्मकं लोकं सर्वाधारं हरिं प्रजानातीति भावः ॥ १२ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य पञ्चमोऽध्यायः ।

॥ अथ षष्ठोऽध्यायः ॥

कृतं पूर्णं ब्रह्मास्यास्तीति कृती, सुकृती वा । चक्रेण सुदर्शननाम्ना प्रतिहतो निरस्तः ॥ १ ॥

राजोवाच —

भगवन् श्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ।
न प्राभूद् यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः ॥ २ ॥

श्रीशुक उवाच —

अम्बरीषो महाभागः सप्तद्वीपवतीं महीम् ।
अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ ३ ॥
मेनेऽतिदुर्लभं पुंसां सर्वं तत् स्वप्नसम्मितम् ।
विद्वान् विभवनिर्वाणं तमो विशति यत् पुमान् ॥ ४ ॥
वासुदेवे भगवति तद्भक्तेषु च साधुषु ।
प्राप्तो भावं परं विश्वं येनेदं लोष्ठवत् स्मृतम् ॥ ५ ॥

स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ ६ ॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गम्[1] ।
घ्राणं च तत्पादसरोजसौरभश्रीमत्तुलस्यां रसनां तदर्पिते ॥ ७ ॥

---

प्रथमतस्तस्य विरक्तिमाह — अम्बरीष इति । मह्यादिकं तत्सर्वं स्वप्नसम्मितं स्वप्नवदनित्यं मेने इत्यन्वयः । अव्ययां दीर्घकालीनां विभवं हिरण्यादिलक्षणम् । अनेनाम्बरीषशब्दार्थोऽपि सूचितः, स आविष्करिष्यते । अम्बादिकं रीषं नश्वरमिति ज्ञानमस्यास्तीत्यम्बरीषः, रुष रिष हिंसायाम्, मत्वर्थे अच्प्रत्ययः । अम्बरवदीषा इच्छा यस्य स तथा । आकाशवद् बहुलज्ञान इत्यर्थः, व्यत्यासश्छान्दसः । अं ब्रह्म तस्य वरिर्वरणं तत्रेच्छा यस्य स तथा । एतदेव स्पष्टयति—विद्वानिति । कथंभूतः — विभवनिर्वाणम् । हिरण्यादिसम्पदां नाशं क्षणिकत्वं विद्वान् पुमान् यद् यस्माद् विभवान्मुग्धस्तमो विशति ॥ ३–४ ॥

परं भावमुत्कृष्टां भक्तिम् । येनाम्बरीषेण इदं विश्वं लोष्ठवत् पांसुपिण्डवत् स्मृतम् । येन भावेन वा ॥ ५ ॥ उत्कृष्टभक्तिमतः प्रवृत्तिं दर्शयति—स वा इति ॥ ६ ॥

मुकुन्दस्य लिङ्गं प्रतिमालक्षणं तेन युक्तस्यालयस्य । पादसरोजसौरभेण युक्तायाम् ॥ ७ ॥

---

[1] अङ्गानां सङ्गः सम्बन्धो यस्य तत् त्वगिन्द्रियम्, तद्भृत्यगात्रस्पर्शार्थं चकारेत्यन्वयः—दु.

पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं तु दास्ये न तु कामकाम्यया तथोत्तमश्लोकजनाश्रयां रतिम् ॥
एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ।
सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ ९ ॥
ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ।
ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ १० ॥
यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ।
तुल्यरूपाश्चानिमिषा व्यदृश्यन्त सुवाससः ॥ ११ ॥
स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ।
शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ १२ ॥
समृद्धा यस्य नो कामाः स्वाराज्यपरिभाविताः ।
दुर्लभा अपि सिद्धानां मुकुन्दं हृदि पश्यतः ॥ १३ ॥

---

कामकाम्यया विषयतृष्णया । उत्तमश्लोकस्य हरेर्जनानाश्रयतीति उत्तमश्लोकजनाश्रया ताम् ॥८॥

तस्मिन् हरौ, निष्ठा मनोयोगलक्षणा येषां ते तथा, तादृशैर्विप्रैरभिहितः । कर्मकलापं कर्मसमूहं, सर्वात्मभावं भक्तिं चेति द्वयं भगवति विदधत् ॥ ९ ॥

[1]सरस्वतीमभिस्रोतं सरस्वत्याः स्रोतो जलप्रवाहः स यथाऽभिमुखो भवति तथा सरस्वतीजलमुद्दिश्येत्यर्थः । उपचिता संवर्धिता यज्ञस्याङ्गभूता दक्षिणा येषां ते तथा तैः । ततैर्विद्यासुनिपुणैर्वसिष्ठश्चासितश्च गौतमश्चादिर्येषां ते तथा तैः । अधियज्ञं यज्ञेशमीजेऽयजत् ॥ १० ॥

तुल्यरूपाः रूपयौवनवस्त्राभरणादिभिः समानवेषाः । अनिमिषा उन्मीलितलोचनाः ॥ ११ ॥

यस्याम्बरीषस्य मनुजैरमरप्रियः स्वर्गोऽपि न प्रार्थित इत्यन्वयः । तत्र किं कारणमिति तत्राह—शृण्वद्भिरिति । अनेन मुकुन्दचरितश्रवणगायनाभ्यामधिकं स्वर्गसुखं न भवत्यतः स्वर्गो न प्रार्थित इत्युक्तम् ॥ १२ ॥

यस्य काम्यन्त इति कामा विषयभोगा नो (अपेक्षिताः) अल्पत्वान्न वाञ्छिता इति नेत्याह—समृद्धा इति । भोगेच्छूनामलम्बुद्धिविषया भवन्तीत्यर्थः । समृद्धौ निमित्तमाह—स्वाराज्येति । स्वाराज्येन

---

[1] सरस्वतीमिति द्वितीया षष्ठ्यादेशः । अभिस्रोतमिति विभक्त्यर्थेऽव्ययीभावः—दु.

स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिव ।
स्वधर्मेण हरिं प्रीणन् सङ्गान् सर्वाञ्छनैर्जहौ ॥ १४ ॥

गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु ।
अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मतिम् ॥ १५ ॥

तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ।
एकान्तभक्तियोगेन प्रीतो [1]भूत्वाऽभिरक्षणम् ॥ १६ ॥

आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ।
युक्तः सांवत्सरं वीरो[2] दधार द्वादशीव्रतम्[3] ॥ १७ ॥

व्रतान्ते कार्तिके मासि त्रिरात्रं समुपोषितः ।
स्नातः कदाचित् कालिन्द्यां हरिं मधुवनेऽर्चयत् ॥ १८ ॥

---

स्वराज्ये स्वरूपभूतैश्वर्येण परिभाविताः प्रचिताः । अत एवास्य सुलभत्वेप्यन्येषां दुर्लभा इत्याह— दुर्लभा इति । अत्रापीदमेव निमित्तमाह—मुकुन्दमिति ॥ १३ ॥

अपरोक्षज्ञानफलमाह – स इति । स्वधर्मेण प्रजापालनलक्षणेन सर्वान् सङ्गान् विशेषणादीन् ॥ १४ ॥ कथं जहावित्यत्राह— गृहेष्विति । असन्मतिम् असन्त्यमङ्गलानि अनर्थकराणीति मतिं बुद्धिं चकार ॥ १५ ॥

अपरोक्षज्ञानित्वेऽपि यावद्देहं मोक्षासम्भवादुद्रिक्तभक्तिभास्करादुत्फुल्लहृदयाम्बुजस्य हरेरम्बरीषेऽनुग्रहविशेषं दर्शयितुमाह — तस्मा इति । प्रत्यनीकानि प्रतिभटसैन्यानि, तेषाम् । चक्रं चमूर्वरूथिन्यनीकिनी स्यादनीकं च इति हलायुधः ॥ १६ ॥

लोकशिक्षाप्रकटनार्थं सांवत्सरमित्युक्तं, न त्वन्यकालनिषेधार्थम् । अन्यथा भक्तिलोपः प्रसज्येत[4] त ॥ १७ ॥ अर्चयद् आर्चयत् । अडभावश्छान्दसः ॥ १८ ॥

---

[1] भूत्याभिरक्षणम्—शे. [2] एवं धृतव्रतोऽपि क्षितिरक्षणसमर्थ इति सूचयति–वीर इति—स.

[3] द्वादश्युपलक्षितदशम्यादिदिनत्रयव्रतमिति यावत् ।

[4] अयमाशय:–सर्वदा दिनत्रयव्रतं कुर्वन्नप्ययं जनो वर्षमध्ये एकस्मिन् मासि कार्तिके श्रावणे वा उत्सवं कुर्यात् । तत्र मण्टपनिर्माणं क्षेत्रविधानेन हरेः पूजां ब्राह्मणभोजनं स्वयं च पारणं कुर्यादिति विधिरिति । एतत्तु नारायणपण्डिताचार्यैर्योगदीपिकायामुक्तमस्ति—शे.

महाभिषेकविधिना सर्वोपस्करसम्पदा ।
अभिषिच्य वराकल्पैर्गन्धमाल्यार्हणादिभिः ॥ १९ ॥

तद्गतान्तरभावेन पूजयामास केशवम् ।
ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ २० ॥

गवां रुक्मविषाणीनां रूप्याङ्घ्रीणां सुवाससाम् ।
पयःशीलवयोरूपवत्सोपस्करसम्पदाम् ॥ २१ ॥

प्राहिणोत् साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ।
भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तरम् ॥ २२ ॥

लब्धकामैरनुज्ञातः[1] पारणायोपचक्रमे ।
तस्य तर्ह्यतिथिः साक्षाद् दुर्वासा भगवानभूत् ॥ २३ ॥

तमानर्चातिथिं भूयः प्रत्युत्थानासनार्हणैः ।
ययाचेऽभ्यवहाराय पादमूलमुपागतः[2] ॥ २४ ॥

प्रतिनन्द्य स तद्याच्ञां कर्तुमावश्यकं गतः ।
निममज्ज बृहद् ध्यायन् कालिन्दीसलिले शुचौ ॥ २५ ॥

मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ।
चिन्तयामास धर्मज्ञो द्विजैस्तद्धर्मसङ्कटे ॥ २६ ॥

ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ।
यत् कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ २७ ॥

---

संवत्सरव्रतान्ते सर्वसाधनसम्पदा । महाभिषेकविधिना साम्राज्याभिषेकप्रकारेण । वराकल्पैरुत्तमाभरणैः ॥ १९ ॥ तद्गतान्तरभावेन श्रीहरिनिष्ठमनस्कत्वेन । सिद्धार्थान् कृतकृत्यान् ॥ २० ॥

सहस्रकोटिसङ्ख्या न्यर्बुदम्[3] ॥ २२ ॥ अभ्यवहाराय भोजनाय ॥ २४ ॥ आवश्यकं नित्यकर्म । बृहत् गुणपूर्णं ब्रह्म ॥ २५ ॥ धर्मसङ्कटे धर्मापदि प्राप्तायां सत्याम् ॥ २६ ॥

आमन्त्रितब्राह्मणातिक्रमे दोषोऽस्ति, द्वादश्यामपारणे श्रीहरिप्रियद्वादशीभोजनाकरणे च दोषोऽस्ति

---

[1] अनुज्ञातः—स पाठः । [2] उपाश्रितः—ग. [3] वृन्दं च न्यर्बुदं चैव शङ्खपद्मौ च सागरः । अन्त्यं मध्यं परार्द्धं च दशवृद्ध्या यथाक्रमम् इत्यभिधानम् ।

अम्भसा केवलेनाद्य करिष्ये व्रतपारणम् ।
आहुरब्भक्षणं विप्रा [1]ह्यशितं नाशितं च यत् ॥ २८ ॥

इत्यपः प्राश्य राजर्षिश्चिन्तयन् मनसाऽच्युतम् ।
प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥ २९ ॥

दुर्वासा यमुनाकूलात् कृतावश्यक आगतः ।
राज्ञाऽभिच्छन्दितस्तस्य बुबुधे चेष्टितं धिया ॥ ३० ॥

मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ।
बुभुक्षितश्च सुतरां कृताञ्जलिमभाषत ॥ ३१ ॥

अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ।
धर्मव्यतिक्रमं विष्णोरभक्तस्येष्टमानिनः ॥ ३२ ॥

यो मामतिथिमायातमातिथ्येन निमन्त्र्य च ।
अदत्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ३३ ॥

एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ।
तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ३४ ॥

---

तृ यस्माद् तस्माद् यत् कृत्वा मे साधु भूयादुभयदोषपरिहारेण श्रेयः स्यात् । उभयोरेकातिक्रमलक्षणोऽधर्मो वा मां न स्पृशेदिति तद् धर्मसूक्ष्मं द्विजैः सह चिन्तयामास ॥ २७ ॥

एवं सञ्चिन्त्य द्विजानां हार्दं स्वहार्दं चैकमेवेत्याशयेनाह- अम्भसेति । केवलेन व्रीह्यन्नरहितेन[2] । तत्र किं प्रमाणमिति तत्राह— आहुरिति । हे विप्रा अब्भक्षणम् अम्भसा पारणम् अशितं भुक्तं पूर्वव्रतधारणार्थं भुक्तं भवति । उत्तरकर्मार्थम् अनशितमभुक्तं भवतीत्याहुर्वेदा इति हि यत् तदिदं युष्माकं च सिद्धं, तस्मात् तेनैव व्रतपारणं करिष्य इत्यन्वयः ॥ २८ ॥ ततः किं कृतमिति तत्राह— इतीति । प्रत्याचष्ट प्रत्यैक्षत ॥ २९ ॥ धिया ज्ञानदृष्ट्या ॥ ३० ॥ भ्रुकुट्या कुटिलं वक्रमाननं यस्य स तथा ॥ ३१ ॥ अभक्तस्यातिथौ भक्तिशून्यस्य । विष्णोरिष्टमानिनः, अहमिष्ट इत्यभिमानवतः ॥ ३२ ॥ अदत्वा अन्नमिति शेषः ॥ ३३ ॥ जटामुत्कृत्य, स्वशिरसीति शेषः । तस्मै अम्बरीषाय । कृत्यां भूतविशेषम् ॥ ३४ ॥

---

[1] हीति श्रुत्यादिप्रसिद्धिमाह–अपोऽश्नाति वै तन्नैवाशितं तेनैवाशितमिति श्रुतिः । आशितानशिता आपः इत्याद्याः स्मृतयश्च—स. [2] केवलेनान्नामिश्रेणोदकेन व्रतपारणमद्येदानीं करिष्ये—स.

तामापतन्तीं ज्वलतीमसिहस्तां पदा भुवम् ।
वेपयन्तीं समुद्वीक्ष्य न चचाल [1]पदा नृपः ॥ ३५ ॥

आदिष्टं भक्तरक्षायां पुरुषेण महात्मना ।
ददाह कृत्यां [2]तच्चक्रं क्रुद्धाहिमिव पावकः ॥ ३६ ॥

तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ।
दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ३७ ॥

तमन्वधावद् भगवद्रथाङ्गं दावाग्निरुद्भूतशिखो यथाहिम् ।
तथाऽनुषक्तं मुनिरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ३८ ॥

दिशो नभः क्ष्मां विवरान् समुद्राँल्लोकान् सपालांस्त्रिदिवं गतः सः ।
यतो यतो धावति तत्र तत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ३९ ॥

अलब्धनाथः स यदा कुतश्चित् संत्रस्तचित्तोऽरणमेषमाणः ।
देवं विरिञ्चं समगाद् विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ४० ॥

श्रीब्रह्मोवाच —
स्थानं मदीयं सह विश्वमेतत् क्रीडावसाने द्विपरार्धसंज्ञे ।
भ्रूभङ्गमात्रेण हि सन्दिधक्षोः कालात्मनः पश्यति को भविष्यत् ॥

---

वेपयन्तीं कम्पयन्तीम् ॥३५॥ कृत्यां दग्ध्वा आत्मानमभिद्रवत् तच्चक्रम् । स्वप्रयासं स्वप्रयत्नम् । प्राणपरीप्सया स्वजीवनरक्षणेच्छया ॥ ३६–३७ ॥ तं दुर्वाससम् । अनुषक्तं स्वपृष्ठलग्नम् । विविक्षुः प्रवेष्टुमिच्छुः ॥ ३८ ॥ चक्रानुयातो दुर्वासा एतानि स्थानानि बभ्रामेत्याह— दिश इत्यादिना । विवरान् पातालादीन् ॥ ३९ ॥ अलब्धो नाथो पालनसमर्थो येन स तथा । अरणं शरणम् । एषमाणः अन्वेषमाणः । अजिततेजसः हरेस्तेजोरूपाच्चक्रात् । त्राहि रक्ष ॥ ४० ॥

ब्रह्मणा किमवादीति तत्राह— स्थानमिति । द्विपरार्धसंज्ञे ममायुःपूर्तिलक्षणे, हरिक्रीडावसाने, आसन्नप्रलय इति यावत् । सह विश्वं चराचरलक्षणप्रपञ्चेन सहितमेतन्मदीयं स्थानं भ्रूभङ्गमात्रेण संदिधक्षोः संदग्धुमिच्छोः कालात्मनः कालरूपस्य हरेर्यद् भविष्यत् कर्म को वा पुरुषस्तत् पश्यति अपरोक्षीकर्तुं समर्थः ? न कोऽपीत्यन्वयः । त्वामुपलक्षीकृत्य मदादिकं सर्वं संहरिष्यतीति ज्ञातुं न (?) शक्यत इति भावः ॥ ४१ ॥

---

[1] पदान्नृपः—क्ष । [2] ददाह कृत्यां तां चक्रम्—ग.

अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ।
सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्नाऽर्पितं लोकहितं वहामः ॥ ४२ ॥

श्रीशुक उवाच —

प्रत्याख्यातो विरिञ्चेन विष्णुचक्रोपतापितः ।
दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ४३ ॥

श्रीशङ्कर उवाच —

वयं न तात प्रभवाम भूम्नो भवन्ति काले न भवन्ति हीदृशाः ।
यस्मिन् परेऽन्येप्यजजीवकोशाः सहस्रशो यत्र वयं भ्रमामः ॥ ४४ ॥

अहं सनत्कुमारश्च नारदो भगवानजः ।
कपिलोऽपान्ततरमो देवलो धर्म आसुरिः ॥ ४५ ॥
मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शिनः ।
विदाम न वयं सर्वे यन्मायां माययाऽऽवृताः ॥ ४६ ॥

---

अतो मदादीनां तदनुमतमेवानुकर्तुं प्रयतनं न त्वन्यदित्याशयेनाह—**अहमिति** । यन्नियमं यस्याज्ञालक्षणां प्रेरणां तस्येति पूर्वेणान्वयः । अर्पितम्, तेनैवेति शेषः ॥ ४२ ॥

यद्यप्यनेन शङ्करोऽपि प्रत्याख्यातस्तथापि मन्दजनशङ्कानिरासाय दुर्वाससः शङ्करशरणप्राप्तिमाह —**प्रत्याख्यात इति** । 'सर्वः शर्वः शिवः स्थाणुः', 'शर्वः शंरोधनाद्धरिः' इत्यतो विष्णुशङ्का-निरासायाह—**कैलासेति** ॥ ४३ ॥

शङ्करोऽपि स्वाशक्तिमेव वक्तीत्याह—**वयमिति** । हे तात वयं न प्रभवाम त्वां रक्षितुं न समर्थाः स्याम आद्यन्तवत्त्वादित्याह—**भूम्न इति** । ईदृशा मादृशा भूम्नः पूर्णानन्दाद्धरेः सृष्टिकाले भवन्ति संहारकाले न भवन्ति हि यस्मात् तस्मात् । यदा चेतनस्य भगवदधीनत्वं स्पष्टं तदा किं वक्तव्यमचेतनस्येत्याशयेनाह—**यस्मिन्निति** । यत्र येषु अजजीवकोशेषु वयं भ्रमामः ते अन्ये अचेतना अपि सहस्रशो जीवकोशाः, अजो ब्रह्मा स एव जीवः तस्य कोशाः शरीरस्थानीया ब्रह्माण्डकोट्यो यस्मिन् परे सन्ति, स ईशानः त्वदापदः परिहर्ता स्यान्न वयमिति वाक्यशेषः ॥ ४४ ॥

अन्यतोऽप्यवनाशां निवारयति—**अहमिति** । अहं, सनत्कुमारादय इति सर्वे वयं यस्य हरे-र्मायामिच्छां किं विषयामिति न विदाम इत्यन्वयः ॥ ४५–४६ ॥

तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ।
तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ४७ ॥

ततो निराशो दुर्वासाः पदं भगवतो ययौ ।
वैकुण्ठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ४८ ॥

सन्दह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ।
आहाच्युतानन्त सदीप्सित प्रभो कृतागसं मामव विश्वभावन ॥ ४९ ॥

अजानता ते परमानुभावं कृतं मयाऽघं भवतः प्रियाणाम् ।
विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ५० ॥

श्रीभगवानुवाच —

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ५१ ॥

नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा ॥ ५२ ॥

ये दारागारपुत्राप्तान् प्राणान् वित्तमिदं परम् ।
हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ५३ ॥

---

दुर्विषहं सोढुमशक्यम् । तर्ह्यहं किं करोमीति तत्राह—तमेवेति ॥ ४७ ॥

अव रक्ष, विश्वभावन सर्ववशीकरणसमर्थ ॥ ४९ ॥

तस्याघस्यापचितिं प्रायश्चित्तम् । अघपरिहारसामर्थ्यं तवैवेत्याह—मुच्येतेति । नारको नरकस्थो यन्नाम्न्युदिते अघान्मुच्येतेत्यन्वयः ॥ ५० ॥

आत्मरक्षार्थं दुर्वाससा प्रार्थितो भगवान् लोकसङ्ग्रहार्थमात्ममायां प्रकटयति—अहमिति । अतोऽस्वतन्त्र इव न त्वस्वतन्त्रः । स्वतन्त्रस्यास्वातन्त्र्यवचनं कथं सङ्गच्छत इति तत्राह—साधुभिरिति ॥ ५१ ॥ ग्रस्तहृदयत्वं नाम किमित्यतस्तद् विवृणोति—नाहमिति । साधुभिर्मद्भक्तैर्विना अहमात्मानं स्वरूपं नाशासे नेच्छामि । तदप्रिये प्राप्ते मज्जीवनेन किं प्रयोजनमिति कृत्वेति शेषः । यदा स्वात्मानमपि नाशासे तदाऽनन्यशरणं श्रियं नाशास इति किं वक्तव्यमित्याह—श्रियं चेति । भक्ताश्चापीदृशा इत्याह—येषामिति ॥ ५२ ॥

इदं भूस्थानम् । परं स्वर्गादिकम् ॥ ५३ ॥

मयि निर्बद्धहृदयाः साधवः समदर्शिनः ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ५४ ॥

मत्सेवया प्रदिष्टं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ॥ ५५ ॥

साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥ ५६ ॥

उपायं कथयिष्यामि तव विप्र शृणुष्व तत् ।
अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ ५७ ॥

साधुषु प्रहितं तेजः प्रहर्तुः कुरुते भयम् ।
तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ ५८ ॥

त एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ।
ब्रह्मंस्तद् गच्छ भद्रं ते नाभागतनयं नृपम् ।
क्षमापय महाभागं ततः शान्तिर्भविष्यति ॥ ५९ ॥

श्रीशुक उवाच —

एवं भगवताऽऽदिष्टो दुर्वासाश्चक्रतापितः ।
अम्बरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ ६० ॥

---

तदत्यागे भक्त्या वशीकरणमेव कारणं नान्यदित्याह—मयीति ॥ ५४ ॥

इदं चात्यागे कारणमित्याह—मत्सेवयेति ॥ ५५ ॥

इतोऽपि मदन्यापेक्षा तेषां नास्तीत्याशयेनाह—साधव इति । 'मह्यं मम हृदयं प्रियम् । तुशब्दो हेतौ । साधवो मम हृदयम् अहं साधूनां हृदयमिति यस्मात् तस्मात् ते मदन्यं प्रियं न जानन्ति, अहमपि तेभ्यः साधुभ्यो मनागत्यल्पमपि प्रियमन्यन्न जानामीत्यन्वयः ॥ ५६ ॥

प्रकृते किमायातमिति तत्राह—उपायमिति । हि यस्मात् । आत्मना त्वया कृतोऽभिचारः कृत्याप्रयोगः । यतः यस्मै । तं वै तमेव । शरणमिति शेषः ॥ ५७ ॥ तस्मै प्रयुक्तमात्मानं कथं बाधत इति तत्राह—साधुष्विति । प्रहितं प्रयुक्तं क्षुद्रोपद्रवलक्षणं तेजोऽर्चिः । 'तेजोऽबले प्रभावेऽग्रे ज्योतिष्यर्चिषि रेतसि' इत्यभिधानम् । प्रहर्तुः प्रयोक्तुरपि भयं कुरुते । विनयशून्यस्य तत्र विद्यातपसी अनर्थकरे एवाभूतामिति भावेनाह—तप इति ॥ ५८ ॥ अन्यथा अनर्थकरे ॥ ५९ ॥

तस्य तद् व्यसनं वीक्ष्य पादस्पर्शविलज्जितः ।
अस्तावीत् तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ ६१ ॥

अम्बरीष उवाच —

त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ।
त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेन्द्रियाणि च ॥ ६२ ॥

सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ।
सर्वास्त्रघातिन् विप्राय स्वस्ति भूयादिडस्पते ॥ ६३ ॥

त्वं धर्मस्त्वं धृतिः सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ।
त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ६४ ॥

नमः सुनाभाखिलधर्मसेतवे अधर्मशीलासुरधूमकेतवे ।
त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणेऽस्तु ते ॥ ६५ ॥

यदा विसृष्टस्त्वमनञ्जनेन वै बलं प्रविश्योर्जितदैत्यदानवम् ।
बाहूदरोर्वङ्घ्रिशिरोधराणि वृक्णन्नजस्रं प्रधने विराजसे ॥ ६६ ॥

त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च दृशो महात्मनाम् ।
दुरत्ययस्ते महिमा गिराम्पते त्वद्रूपमेतत् सदसत् परावरम् ॥ ६७ ॥

स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता ।
विप्राय चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ६८ ॥

यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ।
कुलं नो विप्रदैवं चेद् द्विजो भवतु विज्वरः ॥ ६९ ॥

---

मात्राः शब्दादयः ॥ ६२ ॥ सहस्राणि अराणि दलानि यस्य स तथा । हे सहस्रार विप्राय दुर्वाससे । इडस्पते अन्नपते ॥ ६३ ॥ सुनाभ सुदर्शन । धूमकेतुरग्निः ॥ ६५ ॥

अनञ्जनेन निर्लेपेन । ऊर्जितदैत्यदानवं बलम् । बाह्वादीन् वृक्णन् छिन्दन् । प्रधने युद्धे ॥ ६७ ॥

त्वत्तेजसा तमः संहृतं महात्मनां दृशोः प्रकाशश्च संहृतः स्तम्भितः । एतत्परावरं सदसत् त्वद्रूपं त्वत्प्रतिमा ॥ ६७ ॥ साधुजनत्राणाय खलप्रहाणये दुष्टनिग्रहाय च । अस्मत्कुलदैवहेतवे देवताभक्त्युत्पत्तिनिदानाय ॥ ६८ ॥

यदि मे भगवान् प्रीत एकः सर्वगुणाश्रयः ।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ७० ॥

श्रीशुक उवाच —

इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ।
अशाम्यत् सर्वतो विप्रं प्रदहद् राजयाच्ञया[1] ॥ ७१ ॥

स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ।
प्रशशंस तमुर्वीशं युञ्जानः परमाशिषः ॥ ७२ ॥

दुर्वासा उवाच —

अहो अनन्तदासानां महित्वं दृष्टमद्य मे ।
कृतागसोऽपि यद् राजन् मङ्गलानि समीहसे ॥ ७३ ॥

दुष्करं किन्नु साधूनां दुस्त्यजं वा महात्मनाम् ।
यैः सङ्गृहीतो भगवान् सात्वतामृषभो हरिः ॥ ७४ ॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ ७५ ॥

राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ।
ममाघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ ७६ ॥

राजा तमकृताहारः प्रत्यागमनकाङ्क्षया ।
चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥ ७७ ॥

सोऽशित्वाऽऽदृतमानीतमातिथ्यं सार्वकामिकम् ।
तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ ७८ ॥

---

सर्वभूतानामयमात्मा स्वामी, सर्वोत्कृष्ट इति भावेन भक्त्या यद्येकः प्रधानो भगवान् प्रीतः ॥ ७० ॥ महित्वं महिमा ॥ ७३ ॥ आतिथ्यम् अतिथिप्रियमन्नम् । सार्वकामिकम् अपेक्षिताखिलभोजनम् ॥ ७८ ॥

---

[1] राज्ञः संस्तुवतः सतः विष्णुचक्रं सर्वतः प्रदहदपि सुदर्शनं शोभनं दर्शनं सत् अशाम्यत् । तत्र तत्र राजयाच्ञयेति —स.

प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ।
दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ ७९ ॥

कर्मावदातमेतत् ते गायन्ति स्वःस्त्रियो मुहुः ।
कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ ८० ॥

श्रीशुक उवाच —
एवं संकीर्त्य राजानं दुर्वासाः परितोषितः ।
ययौ विहायसाऽऽमन्त्र्य ब्रह्मलोकमहैतुकम् ॥ ८१ ॥

संवत्सरोऽत्यगात् तावत् यावत्त नागतो गतः ।
मुनिस्तद्दर्शनाकाङ्क्षी राजाऽब्भक्षो बभूव ह ॥ ८२ ॥

गतेऽथ दुर्वाससि सोऽम्बरीषो द्विजोपभोगातिपवित्रमाहरन् ।
ऋषेर्विमोक्षं व्यसनाच्च बुद्ध्या मेने स्ववीर्यं च परानुभावम् ॥ ८३ ॥

एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं यया विरिञ्च्यादिमधश्चकार ॥ ८४ ॥

---

आत्ममेधसा आत्मज्ञानेन ॥ ७९ ॥ अवदातं निर्मलम् । स्वःस्त्रियः स्वर्गाङ्गनाः ॥ ८० ॥ इतो गतो मुनिर्यावत् तं नृपं नागतः तावत् संवत्सरोऽत्यगात् । मुनिदर्शनाकाङ्क्षी राजा च तावदब्भक्षोऽभूत् ॥ ८२ ॥ सोऽम्बरीषो बुद्ध्या मुनेर्व्यसनान्मोक्षं स्ववीर्यं च परमात्मनोऽनुभावः प्रभावः सामर्थ्यं यस्मिंस्तत्तथा, भगवन्महिमोपेतं मेन इत्यर्थः ॥ ८३ ॥

विरिञ्चः आदिः कारणं यस्य स विरिञ्च्यादिस्तं प्रपञ्चं यथायोग्यमधश्चकार न तु सर्वम् । तथात्वे शास्त्रविरोधः स्यात् । तथा हि 'ब्रह्मादिशक्तिकोट्यंशांशो नैवाम्बरीषके । नैवास्त्यन्यस्य कस्यापि तथापि हरिरीश्वरः । तात्कालिकोपचेयत्वात् तेषां यशस आदिराट् ।' इति । नन्वम्बरीष एव स्तुतिं कृत्वा चक्रनिवर्तनं कृतवान् न ब्रह्मादय इत्यत आह 'ब्रह्मादयश्च तत्कीर्तिं व्यञ्जयामासुरुत्तमाम् । मोहनाय च दैत्यानां ब्रह्मादेर्निन्दनाय च । अन्यार्थं च' इति । निन्दनाय, असुरकृतायेति शेषः । अन्यार्थम् अर्थवादार्थम् । किञ्च फलानिच्छुत्वज्ञापनाय च विष्ण्वादिभिश्चक्रं न निवर्तितमित्याह 'स्वय विष्णुर्ब्रह्माद्याश्च निराशिषः' इति । अम्बरीषस्य मनुष्याधिकारिषु भक्त्यादिगुणैरुत्तमत्वज्ञापनार्थमपि । तदुक्तम्—'मानुषेषूत्तमत्वाच्च' इति । ब्रह्मादीनां भक्त्यादिगुणाधिक्यप्रकटनाय च । 'तेषां भक्त्यादि-भिर्गुणैः' इति । अन्यच्च प्रयोजनम्—'ब्रह्मादेर्विष्ण्वधीनत्वज्ञापनाय च केवलम्' इति । तर्हि दुर्वासाः

श्रीशुक उवाच —

अथाम्बरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः ।
वनं विवेशात्मनि वासुदेवे मनो दधद् ध्वस्तगुणप्रवाहः ॥ ८५ ॥

इत्येतत् पुण्यमाख्यानमम्बरीषस्य भूपतेः ।
सङ्कीर्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ॥ ८६ ॥

इति श्रीमद्भागवते नवमस्कन्धे षष्ठोऽध्यायः ।

## ॥ अथ सप्तमोऽध्यायः ॥

श्रीशुक उवाच —

विरूपः केतुमाञ्छम्भुरम्बरीषसुतास्त्रयः ।
विरूपात् पृषदश्वोऽभूत् तत्पुत्रस्तु रथीतरः ॥ १ ॥

---

क इति चेद् रुद्रावतारः—' दुर्वासाश्च स्वयं रुद्रः ' इति । तथापि रुद्रत्वेपि असुरावेशादन्याय्यवचनम् । ' तथाप्यन्याय्यमुक्तवान् ' इति । स्वाज्ञाकारित्वेन तस्मिन्ननुग्रहविशेषाय, भक्तजनमदविनाशाय च विष्णुना निवर्तनं नाकारि[1] । तस्याप्यनुग्रहार्थाय दर्पनाशार्थमेव च । ' इत्यादिशास्त्रविरोधसद्भावाद् । त
अतो भक्तिविधानार्थं तद्यशोऽर्थं दुष्टजनमोहनार्थं चेति ज्ञातव्यम् ॥ ८४ ॥

आख्यानफलमाह— इतीति ॥ ८६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायाम्
नवमस्कन्धस्य षष्ठोऽध्यायः ।

---

[1] मन्दाधिकारिणां (ब्रह्मादीनां) विष्ण्वधीनत्वज्ञापनायैव विष्णुना दुर्वाससः आपद्विमोक्षणं ब्रह्मादिना न कारितम् । यद्यपि दुर्वासाः स्वयं साक्षाद् रुद्रः तथापि यतः कारणाद् दर्पेणान्याय्यम् ' अहो अस्य नृशंसस्य ' इत्याद्यन्याय्यवाक्यमुक्तवान् अतस्तस्य दर्पनाशार्थमेव दर्पनाशेनानुग्रहाय च नीचेनाप्यम्बरीषेणोत्तमदुर्वाससो विष्णुना स्वचक्रआपद्विमोक्षणं कारितमिति भावः—प्रबोधिनी.

अनुग्रहोऽयं दुर्वाससो यत् पराभवो नाम । भगवदभिमते अम्बरीषकीर्तिव्यञ्जनकर्मणि मुख्यतोऽयं निरूढपात्र इति विशेषतोऽनुग्रहपात्रत्वाद् दुर्वाससः—गो.

रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः ।
अङ्गिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥

'एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः' स्मृताः ।
रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥

क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ।
तस्य पुत्रशतं ज्येष्ठा विकुक्षिनिमिदण्डकाः ॥ ४ ॥

तेषां पुरस्तादभवन् आर्यावर्ते नृपा नृप ।
पञ्चविंशति पश्चाच्च त्रयो मध्येऽपरेऽन्यतः ॥ ५ ॥

स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ।
मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥

तथेति सवनं गत्वा मृगान् हत्वा 'क्रियार्हणान् ।
श्रान्तो बुभुक्षितो वीरः शशमाददपस्मृतिः ॥ ७ ॥

शेषं निवेदयामास पित्रे तेन च तद्गुरुः ।
चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥

ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ।
देशान्निस्सारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥

---

तन्तवे सन्तानाय ॥ २ ॥ अङ्गिरस उत्पत्तिनिमित्तत्वात् नाम्ना अङ्गिरसः । रथीतराणां रथीतरसन्ततिजातानाम् ॥ ३ ॥ एकवंशं समाप्य अन्यवंशं वक्तुं प्रारभते—क्षुवत इति । क्षुतं कुर्वतो मनोर्घ्राणत इक्ष्वाकुर्जज्ञे ॥ ४ ॥ आसमुद्रात् पुरस्तात् तु आसमुद्राच्च पश्चिमात् । तयोरेवान्तरं गिर्योरार्यावर्तं प्रचक्षते । इत्येवंविध आर्यावर्ते पुरस्तात् पूर्वदिक्पालाः तेषां विकुक्ष्यादीनां मध्ये पञ्चविंशतिनृपाः पश्चात् पश्चिमदिक्पालाः पञ्चविंशतिनृपाः अभूवन् । मध्ये विन्ध्यहिमवत्पर्वतयोर्मध्ये त्रयः पालकाः । अपरे च ये त्रिपञ्चाशदवशिष्टाः सप्तचत्वारिंशन्नृपाः ते अन्यतः दक्षिणत उत्तरतः पालका अभूवन् इत्यन्वयः ॥ ५ ॥ अपस्मृतिर्विवेकरहितः ॥ ७ ॥ तद्गुरुर्वसिष्ठः प्रोक्षणाय श्राद्धोपचितसंस्काराय । अकर्मकं कर्मायोग्यम् ॥ ८ ॥ त्यक्तविधिमाचारशून्यम् ॥ ९ ॥

---

[1] क्षत्रक्षेत्रप्रसूता वै—स. [2] आङ्गिरसाः—स. [3] क्रियार्हकान्—शे.

स तु विप्रेण संवादं जापकेन समाचरन् ।
त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ।
पितर्युपरतेऽभ्येत्य पृथिवीशासनं कृतम् ॥ १० ॥

पुरञ्जयस्तस्य सुत इन्द्रवाह इतीरितः ।
ककुत्स्थ इति वाप्युक्तः शृणु नामानि कर्मभिः ॥ ११ ॥

कृतान्त आसीत् समरे देवानां सह दानवैः ।
पार्ष्णिग्राहो वृतो [1]धीरो देवैर्दैत्यपराजितैः ॥ १२ ॥

वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ।
वाहनत्वे वृतस्तस्य बभूवेन्द्रो महावृषः ॥ १३ ॥

स सन्नद्धो धनुर्दिव्यमादाय विशिखान् शितान् ।
स्तूयमानस्तमारुह्य युयुत्सुः ककुदि स्थितः ॥ १४ ॥

तेजसा व्यापितो विष्णोः पुरुषस्य परात्मनः ।
प्रतीच्यां दिशि दैत्यानां न्यरुणत् त्रिदशैः पुरम् ॥ १५ ॥

---

नाम्ना जापकेन विप्रेण संवादं तत्त्वविषयं समाचरन् तेन संवादजनितेन ज्ञानेन योगी ज्ञानी । कालान्तर इति शेषः । कालान्तरे कलेवरं शरीरं त्यक्त्वा स [2]विकुक्षिः यत्परं ब्रह्म तदवाप । अशासदीजे स हरिं यज्ञैः पुष्कलदक्षिणैः, इति केचित् पठन्ति । शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः, इत्यन्ये । शशमत्तीति शशादः । पुष्कलदक्षिणैः पूर्णदक्षिणैः ॥ १० ॥

तस्य विकुक्षेः । इन्द्रो वाहो वाहनं यस्य स तथा । कर्मभिः विक्रमलक्षणैः पुरञ्जय इन्द्रवाहः ककुत्स्थ इति नामान्यवाप्तानि ॥ ११ । पार्ष्णिग्राहो वृतो देवैः साहाय्यत्वेन स्वीकृतः ॥ १२ ॥

शितान् निशितान्, विशिखान् शरान् । ककुदि वृषभस्कन्धे स्थितः ॥ १४ ॥

---

[1] वीरो—शे. [2] इक्ष्वाकुरिति ग कोशे तथा स.शे. । सत्याभिनवतीर्था पुनरेवं व्याचक्रिरे । तथा हि—स विकुक्षिस्तु जापकेन विप्रेण संवादं समाचरन् । तेन संवादजनितेन ब्रह्मज्ञानेन स योगी विकुक्षिः कालान्तरे कलेवरं त्यक्त्वा यत्परं ब्रह्म तदवापेति । एतेन पितर्युपरत इत्युत्तरवाक्ये पितुर्मरणानन्तरमागत्य 'पृथिवीशासनं कृतम्' इति वक्ष्यमाणत्वात् । पितुर्मरणानन्तरमागत्य पृथिवीशासनं कृत्वा योगसामर्थ्येन कलेवरं त्यक्त्वा परं ब्रह्मावापेत्यर्थः । इति ।

तैस्तस्य ह्यभवद् राजन् सङ्ग्रामो रोमहर्षणः ।
यमाय भल्लैरनयद् दैत्यान् ये युयुधुर्मृधे ॥ १६ ॥

तस्येषुपाताभिमुखं युगान्ताग्निमिवोल्बणम् ।
विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १७ ॥

जित्वा पुरं धनं सर्वं सश्रीकं वज्रपाणये ।
प्रत्ययच्छत् स राजर्षिरिति नामभिराहुतः ॥ १८ ॥

पुरञ्जयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ।
विश्वगन्धिस्ततश्चन्द्रो युवनाश्वस्तु तत्सुतः ॥ १९ ॥

शावस्तिस्तत्सुतो येन शावस्ती निर्मिता पुरी ।
बृहदश्वस्तु शावस्तेस्ततः कुवलयाश्वकः ॥ २० ॥

[1]यः प्रियार्थं मुकुन्दस्य धुन्धुनामासुरं बली ।
सुतानामेकविंशत्या सहस्रैरहनद् वृतः ॥ २१ ॥

धुन्धुमार इति ख्यातस्तत्सुतास्ते प्रजज्वलुः ।
धुन्धोर्मुखाग्निना सर्वे त्रय एवावशेषिताः ॥ २२ ॥

दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ।
दृढाश्वपुत्रो हर्यश्वो निकुम्भस्तत्सुतः स्मृतः ॥ २३ ॥

---

तस्य पुरञ्जयस्य, इषूणां पातः संपातो धारा, तस्याऽभिमुखं प्रत्यवस्थानं, स्वमालयं स्वगृहं च विसृज्य हित्वा दुद्रुवुः ॥ १७ ॥

स राजर्षिः पुरं जित्वा [2]सश्रीकं गजतुरगादिश्रीसहितं सर्वं पुरधनं वज्रपाणये प्रत्ययच्छत् दत्तवान् । स राजर्षिः दैत्यपुरजयात् पुरञ्जय इति, वृषभरूपेन्द्रस्य अस्य वाहनत्वाद् इन्द्रवाह इति, वृषभककुदि स्थितत्वात् ककुत्स्थ इति नामभिराहूतः ॥ १८ ॥

---

[1] यः प्रियार्थमुदङ्कस्य—म. [2] मुद्रितकोशेषु 'सर्वमयच्छद्' इति मूले 'अयच्छद् आप्नोत्' इति टीकायाम्, अयच्छद् इति पाठो लिपिकृत्प्रमादपतितः दुर्बोधश्च । हन्तैकत्र लिखितकोशे पदरत्नावल्यामेव सश्रीकमिति सुबोधपाठोऽप्यलाभि । सत्यधर्मतीर्थाः अप्येतादृशकोशान् परिददृशुरिति तट्टिप्पणीतो वेविद्यते । तथा हि— सर्वमयच्छद् इति पाठो नाऽऽदृतः । सश्रीकमिति च सश्रीकः इति ।

बर्हणाश्वो निकुम्भस्य कृशाश्वोऽथास्य सेनजित् ।
युवनाश्वोऽभवत् तस्य सोऽनपत्यो वनं गतः ॥ २४ ॥

भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ।
इष्टिं स्म वर्तयाश्चक्रुरैन्द्रीं ते सुसमाहिताः ॥ २५ ॥

राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ।
दृष्ट्वा शयानान् विप्रांस्तान् पपौ मन्त्रजलं स्वयम् ॥ २६ ॥

उत्थितास्ते निशाम्याथ व्युदकं कलशं प्रभो ।
पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २७ ॥

राज्ञा पीतं विदित्वाऽथ ईश्वरप्रहितेन ते ।
ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २८ ॥

ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ।
युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ २९ ॥

कं धास्यति कुमारोऽयं स्तन्यो रोरूयते भृशम् ।
मान्धातर्वत्स मा रोदीरितीन्द्रो देशिनीमदात् ॥ ३० ॥

न ममार पिता तस्य विप्रदेवप्रसादतः ।
युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३१ ॥

---

तर्षितः उदन्यया युतो भार्यायै देयं मन्त्रपूतं जलं स्वयं पपौ ॥ २६ ॥

निशाम्य दृष्ट्वा । व्युदकं जलरहितम् । पुंसवनं पुत्रोत्पत्त्यर्थमभिमन्त्रितम् ॥ २७ ॥

ईश्वरप्रहितेन दैवप्रेरितेन ॥ २८ ॥

स्तन्यः स्तनपानेच्छुरयं बालो भृशं रोरूयते पुनः पुनरत्यन्तं रौति । कं धास्यति कस्य स्त्रीजनस्य स्तनं धास्यति पास्यति । धेट् पाने इति धातोः । इति मत्वा इन्द्रो हे वत्स मा रोदीः रोदनं मा कार्षीरित्युक्त्वा [1]देशिनीमङ्गुष्ठानन्तरामङ्गुलीमदाद् अतो मान्धातेति नाम ॥ ३० ॥

तस्य मान्धातुः पिता युवनाश्वः । तत्र सत्रसदने ॥ ३१ ॥

---

[1] तर्जनी स्यात् प्रदेशिनी इत्यमरः ।

त्रसद्दस्युरितीन्द्रोऽङ्ग विदधे नाम तस्य वै ।
यस्मात् त्रसन्ति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३२ ॥
यौवनाश्वोऽथ मान्धाता चक्रवर्त्यवनीं प्रभुः ।
सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३३ ॥
ईजे च यज्ञं क्रतुभिरात्मविद् भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥ ३४ ॥
द्रव्यं मन्त्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ।
धर्मो देशश्च कालश्च सर्वमेतद् यदात्मकम् ॥ ३५ ॥
यावत् सूर्य उदेति स्म यावच्चन्द्रः प्रतिष्ठति[1] ।
सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ३६ ॥
शशबिन्दोर्दुहितरि बिन्दुमत्यामधान्नृपः ।
पुरुकुत्समम्बरीषं मुचुकुन्दं च योगिनम् ॥ ३७ ॥
तेषां स्वसारः पञ्चाशत् सौभरिं वव्रिरे पतिम् ॥ ३८ ॥
यमुनान्तर्जले मज्जंस्तप्यमानः परंतपः ।
निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ ३९ ॥
जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ।
सोऽप्याह गृह्यतां ब्रह्मन् कामं कन्या स्वयंवरे ॥ ४० ॥
स विचिन्त्याप्रियः स्त्रीणां जरठोऽयमसम्मतः ।
वलीपलित एजत्क इत्यहं प्रत्युदाहृतः । ॥ ४१ ॥

---

यज्ञं श्रीहरिं सर्वदेवमयं सर्वदेवप्रधानं सर्वात्मकं मन्त्रतन्त्रद्रव्यादिसर्वव्यापिनम् ॥ ३४ ॥ एतदेव स्पष्टयति—द्रव्यमिति । य आत्मा व्यापी यस्य तद् यदात्मकं यत्स्वामिकम् ॥ ३५ ॥ न

निर्वृतिमानन्दम् ॥ ३९ ॥ सः सौभरिरयं मुनिः स्त्रीणामसम्मतो जरठः एजत् कम्पमानं कं शिरो यस्य स तथा, वलीभिर्लम्बमाननाडीभिर्युक्तानि पलितानि शुक्ललोमानि यस्य स तथा अप्रिय

---

[1] यावच्च प्रतितिष्ठति—रा। प्रतितिष्ठति धारयेति—रा

साधयिष्ये तथात्मानं सुरस्त्रीणामपीप्सितम्[1] ।
किं पुनर्मनुजस्त्रीणामिति व्यवसितः प्रभुः ॥ ४२ ॥

मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् ।
वृतश्च राजकन्याभिरेकः पञ्चाशता वरः ॥ ४३ ॥

तासां कलिरभूद् भूयांस्तदर्थेऽपोह्य सौहृदम् ।
ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥

स बह्वृचस्ताभिरवारणीयश्रिया विराजत्सपरिच्छदेषु ।
गृहेषु [2]नानोपवनामलाम्भःप्रसूनसौगन्धिककाननेषु ॥ ४५ ॥

महार्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ।
स्वलङ्कृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजवृन्दबन्दिषु[3] ॥ ४६ ॥

यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ।
विस्मितः स्तम्भमजहात् सार्वभौमश्रियान्वितः ॥ ४७ ॥

---

इति मत्वा राज्ञाऽहं प्रत्युदाहृतो निराकृतः । स्वयंवरे गृह्यतामिति प्रोक्तोऽतस्तथाऽऽत्मानं साधयिष्य इत्युत्तरेणान्वयः ॥ ४१ ॥ क्षत्त्रा द्वारपालकेन कन्यान्तःपुरं प्रवेशितः पञ्चाशता राजकन्याभिरेको वरः वृत इति शेषः ॥ ४३ ॥ कलिः कलहः तदर्थे मुनिपरिणयनार्थे । सौहृदं सुहृद्भावम् अपोह्य परित्यज्य । तद्गतचेतसां मुनिसंलग्नचेतसाम् ॥ ४४ ॥

बह्वृचः ऋङ्मन्त्रद्रष्टा सौभरिः गृहेषु ताभिः सह रेमे इत्यन्वयः । कीदृशेषु गृहेषु ? अवारणीयश्रिया अप्रतिघातलक्ष्म्या विराजन्ति शोभमानानि च तानि परिच्छदैरुपकरणैः सहितानि च विराजत्सपरिच्छदानि तेषु, अमलानि च तान्यम्भांसि च अमलाम्भांसि, प्रसूनानां सौगन्धिकानि, सौरभ्ययुतानि नानाविधोपवनानि च अमलाम्भोभिर्युतानि प्रसूनसौगन्धिकानि च काननानि येषु तानि तथा तेषु, द्विजानां पक्षिणां वृन्दानि द्विजवृन्दानि, अनुगायन्ति च तानि द्विजवृन्दान्येव बन्दिनो येषु तानि तथा तेषु ॥ ४५–४६ ॥

यद्गार्हस्थ्यं यस्य सौभरेः गार्हस्थ्योचितयावद्धर्मानुष्ठानं महाभोगभाग्यं च संवीक्ष्य सप्तद्वीपवतीपतिर्मान्धाता श्वशुरः स्तम्भमहङ्कारनिमित्तं कर्तव्याकरणलक्षणं जहावित्याह—यदिति ॥ ४७ ॥

---

[1] सुरस्त्रीणाममीप्सितम्—स. [2] नानोपवनामलाम्भःसरस्सु—स. शो. [3] द्विजभृङ्गबन्दिषु—शो.

एवं गृहेष्वभिरतो विषयान् विविधैः सुखैः ।
सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥

स कदाचिदुपासीन आत्मापह्नवमात्मना[1] ।
ददर्श बह्वृचाचार्यो मीनसङ्गसमुत्थितम् ॥ ४९ ॥

अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ।
अन्तर्जले वारिचरप्रसङ्गात् [2]प्रस्रावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥

सङ्गं त्यजेत [3]मिथुनव्रजिनान्मुमुक्षुः
सर्वात्मना न विसृजेद् बहिरिन्द्रियाणि ।
एकश्चरन् रहसि चित्तमनन्त ईशे
युञ्जीत तद्व्रतिषु साधुषु चेत् प्रसङ्गः ॥ ५१ ॥

एकस्तपस्व्यहमथाम्भसि मत्स्यसङ्गात्
पञ्चाशताथ सुतपञ्चसहस्रसङ्गः ।
नान्तं व्रजाम्युभयकृत्यमनोरथानां
मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥

---

आज्यस्तोकैः घृतबिन्दुभिः ॥ ४८ ॥ आत्मना स्वेनैव आत्मापह्नवं स्वस्वरूपनाशं, तपसस्तिरस्कारं वा ॥ ४९ ॥ यच्चिरं धृतं ब्रह्म तपः तत् प्रस्रावितं च्युतं नष्टमित्यर्थः । ब्रह्म वेद तपस्तत्त्वम् इत्यभिधानम् । तत्त्वमनारोपितरूपं ज्ञानमेव प्रस्रावितं प्रतिबद्धमिति वा ॥ ५० ॥

'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि' इति वाक्यार्थमनुसंदधान आह—सङ्गमिति । मिथुनव्रजिनात् स्त्रीपुरुषसङ्गोद्भूतपापान्मुमुक्षुः सङ्गं त्यजेत । इन्द्रियाणि बहिः शब्दादिविषयेषु न विसृजेत् न प्रयुञ्जीत । एकाकी चरन् रहसि एकान्ते अनन्ते ईशे चित्तं युञ्जीत । चेद् यदि प्रसङ्गोऽपेक्षितस्तर्हि तस्मिन् हरौ रतिर्येषां ते तद्व्रतयस्तेषु साधुषु निर्मत्सरजनेषु स्यान्नान्यत्रेत्यन्वयः ॥ ५१ ॥

अहमेक एव तपस्वी अथाम्भसि मङ्गलजले मत्स्यसङ्गान्मत्स्यानां मिथः स्नेहं दृष्ट्वा अथानन्तरं पञ्चाशता स्त्रीभिः सह सुरतप्रसङ्गेन सुतपञ्चसहस्रसङ्ग आसम् । अथोभयकृत्यं पुत्राणां विवाहादिः

---

[1] आत्मापह्नवमात्मनः—शो.  [2] विस्रावितं—स.  [3] मिथुनव्रजिनात्—स.

एवं वसन् गृहे कालं विरक्तो न्यासमाश्रितः ।
वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥

तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्शनमात्मवित् ।
[1]सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥

[2]ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ।
अन्वीयुस्तत्प्रभावेण शान्तमग्निमिवार्चिषः ॥ ५५ ॥

मान्धातृपुत्रप्रवरो योम्बरीषः प्रकीर्तितः ।
मातामहेन प्रवृतो युवनाश्वस्तु तत्सुतः ॥ ५६ ॥

हरितस्तस्य पुत्रोऽभून्मांधातृप्रवरा इमे ।
नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय चोरगैः ॥ ५७ ॥

---

कन्यकानां प्रदानादिरित्युभयं कर्तव्यं तत्र ये मनोरथास्तेषाम्। उभयेन स्त्रीपुरुषद्वयेन यत् कृत्यं तत्र विद्यमानानां मनोरथानां वा । उभयस्मिन् इह लोके परलोके च यत् कृत्यं तद्विषयमनोरथानां वा अन्तमवसानं न व्रजामि । तत्रेदं निमित्तमाह—मायेति । मायागुणैः भगवदिच्छासहकृतप्रकृतिगुणैः । विषये शब्दादौ । अर्थ इति पुरुषार्थ इति भावो बुद्धिर्यस्य सः । मङ्गलानन्तरारम्भप्रश्नकात्स्न्र्येष्वथो अथ, इत्यमरः ॥ ५२ ॥

एवं विरज्य किमकार्षीदिति तत्राह—एवमिति । न्यासं वित्तगृहादिसर्वविषयत्यागलक्षणम् ॥ ५३ ॥

आत्मकर्शनं देहस्य कृशत्वापादकम् । [3]अग्निभिः सहात्मानं देहं युयोज । देहं दग्ध्वा आत्मानं परमात्मनि युयोज । हरिसायुज्यलक्षणं मोक्षमाप्तवानित्यर्थः ॥ ५४ ॥

अधिकश्चासावात्मा च अध्यात्मा तस्य सर्वाधिकात्मनो हरेः संबन्धिनीं गतिम् ॥ ५५ ॥

मातामहेन मातुः पित्रा शशबिन्दुना । तस्याम्बरीषस्य सुतः ॥ ५६ ॥

मान्धाता प्रवरो येषां ते तथा । भ्रातृभिरुरगैः पुरुकुत्साय मान्धातृज्येष्ठपुत्राय नर्मदा तन्नामिका नागकन्या दत्ता ॥ ५७ ॥

---

[1] स हैव इत्यत्र सः ह एव इति च्छेदः । आत्मानमित्यस्यावृत्तिः । सः सौभरिरात्मानमन्तःकरणं परमात्मनि युयोज । आत्मानं देहं श्रौताग्निभिर्युयोज । इत्येतद् ह प्रसिद्धम्—शे.

[2] ताश्च पत्युरित्युभतः पाठः—स.   [3] पश्चाद्देहानुष्ठितेष्टिसंबन्धिभिः—स.

तया रसातलं नीतो भुजगेन्द्रप्रयुक्तया ।
गन्धर्वान् सोऽवधीत् तत्र वध्यथश्वान् विष्णुशक्तिधृक् ॥ ५८ ॥
नागाल्लब्धवरः सर्पादभयं स्मरतामिमम् ।
त्रसद्दस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ ५९ ॥
हर्यश्वस्तत्सुतस्तस्मादरुणोऽथ त्रिबन्धुरः ।
तस्य सत्यव्रतः पुत्रस्त्रिशङ्कुरिति विश्रुतः ॥ ६० ॥
प्राप्तश्चण्डालतां शापाद् गुरोः कौशिकतेजसा ।
सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ ६१ ॥
पतितोऽवाक्शिरा देवैस्तेनैव स्तम्भितो बलात् ।
त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः ॥ ६२ ॥

---

भुजगेन्द्रप्रेरितया नर्मदया रसातलं नीतः स पुरुकुत्सस्तत्र रसातले वध्यथश्वान् वध्यथश्वनामकदुष्ट-गन्धर्वान् । गन्धर्वजातत्वाद् गन्धर्वनामकान् । वध्यो वधार्हा अश्वा येषां ते तथा तान् इति वा अवधीदित्यन्वयः ॥ ५८ ॥

स च पुरुकुत्सो नागाद् भुजगेन्द्रात् किं लब्धवानिति तत्राह—सर्पादिति । इमं गन्धर्व-वधलक्षणं पुरुकुत्सविक्रमं स्मरतां पुंसां सर्पादभयं भूयादिति लब्धवरोऽभूदित्यर्थः । पुरुकुत्सस्यापत्यं पौरुकुत्सो यस्त्रसद्दस्युः सोऽनरण्यस्य तन्नामकस्य राज्ञो देहकृत् पिता ॥ ५९ ॥

अथारुणात् त्रिबन्धुरः सुतः । तस्य त्रिबन्धुरस्य सुतः सत्यव्रतः त्रिशङ्कुरिति नामद्वयेन विश्रुत इत्यर्थः ॥ ६० ॥

गुरोर्वसिष्ठस्य शापात् । कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेण सशरीरो मानुषशरीरसहितः स्वर्गं गतः अद्यापि दिवि दृश्यते मनुजैरिति शेषः ॥ ६१ ॥

स्वर्गं गतः कथं मानवैर्दृश्यत इति तत्राह—पातित इति । तेन विश्वामित्रेण बलात् तपःशक्तेः स्तम्भितः स्तम्भनं प्राप्तः । त्रैशङ्कवः त्रिशङ्कोरपत्यं हरिश्चन्द्रः ॥ ६२ ॥

यो हरिश्चन्द्रो निमित्तं यस्य तद्यन्निमित्तम् । पक्षिणोः सहायिनोर्वसिष्ठविश्वामित्रयोः । पक्षः पार्श्वमरुत्साध्यसहायबलभित्तिषु इति यादवः । 'नापुत्रस्य लोकोऽस्ति' इति वाक्यार्थज्ञानाद् त् विषण्णमना अनपत्यः स हरिश्चन्द्रो नारदोपदेशात् 'हे प्रभो मे पुत्रो जायताम्' इति निवेद्य वरुणं शरणं यात इत्यन्वयः ॥ ६३ ॥

यन्निमित्तमभूद् युद्धं पक्षिणोर्बहुवार्षिकम् ।
सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ।
वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ६३ ॥

यदि वीरो महाराज तेनैव त्वां यजे इति ।
तथेति वरुणेनोक्ते पुत्रो जातस्तु रोहितः ॥ ६४ ॥

जातः सुतो ह्यनेनाङ्ग मां यजस्वेति सोऽब्रवीत् ।
यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ ६५ ॥

निर्दशे च समागत्य यजस्वेत्याह सोऽब्रवीत् ।
दन्ताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥ ६६ ॥

जाता दन्ता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
यदा पतन्त्यस्य दन्ता अथ मेध्यो भवेदिति ॥ ६७ ॥

---

एतदेव विवृणोति—यदीति । हे महाराज यदि वीरः पुत्रो जायेत तर्हि तेन पुत्रेण त्वां यजे, पुरुषपशुना त्वां यक्ष्य इति हरिश्चन्द्रेणोक्ते, वरुणेनापि तथास्त्वित्युक्ते, नाम्ना रोहितः पुत्रो जात इत्यन्वयः । [1]'अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य पुत्रो जज्ञे रोहितो नाम' इति ब्राह्मणं चैतमेवार्थमनुवदति ॥ ६४ ॥

अथ वरुण आगत्य हरिश्चन्द्रमवादीदित्याह—जात इति । अङ्ग ते सुतो जातोऽनेन पुत्रेण मां यजस्वेति । स हरिश्चन्द्रो वक्तीत्याह—सोऽब्रवीदिति । 'तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति' इति । निर्दशो दशाहातिक्रान्तः ॥ ६५ ॥

निर्दशे जाते 'स ह निर्दश आस तं होवाच निर्दशो न्वभूद् यजस्व मानेनेति' इति । यदुत यदा पशोर्दन्ता जायेरन् अथ तदा पशुः शुचिः स्यादनन्तरं त्वां यक्ष्य इत्यब्रवीद् हरिश्चन्द्रः । 'स तं होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायंतामथ त्वा यजा इति तथेति' इति ॥ ६६ ॥

स वरुण एत्याह हरिश्चन्द्रम् अस्य दन्ता जाता अथ मां यजस्वेति । 'तस्य ह दन्ता जज्ञिरे

---

[1] ऐतरेयब्राह्मणे सप्तमपञ्चिकतृतीयाध्यायः सर्वोऽप्येतन्मूलभूतः ।

पशोर्निपतिता दन्ता यजस्वेत्याह सोऽब्रवीत् ।
यदा पशोः पुनर्दन्ता जायन्तेऽथ पशुः शुचिः ॥ ६८ ॥

पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ।
सान्नाहुको यदा राजन् राजन्योऽथ पशुः शुचिः ॥ ६९ ॥

इति पुत्रानुरागेण स्नेहयन्त्रितचेतसा ।
कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत ॥ ७० ॥

रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ।
प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ ७१ ॥

---

तं होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति' इति । अज्ञत अजायन्त । यदास्य पुत्रस्य दन्ताः पतन्त्यथ स शुद्धो भवेदित्यब्रवीत् । 'स होवाच यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यंतामथ त्वा यजा इति तथेति । तस्य ह दन्ताः पेदिरे' इति ॥ ६७ ॥

पुत्र पशोर्दन्ताः निपतिताः अथ मां यजस्वेति वरुण आह । 'तं होवाचापत्स्यत वा अस्य दन्ता यजस्व माऽनेनेति', इति । यदा पशोर्दन्ताः पुनर्जायन्ते अनन्तरं पशुः शुद्धः स्यादिति स हरिश्चन्द्रोऽब्रवीत् 'स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति तस्य ह दन्ताः पुनर्जज्ञिरे' इति ॥ ६८ ॥

अस्य दन्ताः पुनर्जाताः अथ मां यजस्वेति स वरुणो हरिश्चन्द्रमेत्याह । 'तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व माऽनेनेति ।' इति । यदा राजन्यः क्षत्रियः सान्नाहुकः सन्नाहयोग्यः शस्त्रास्त्रग्रहणयोग्यः कवचवानथ राजपशुः शुचिरिति स हरिश्चन्द्रोऽब्रवीत् । 'स होवाच यदा वै क्षत्रियः सान्नाहुको भवत्यथ स मेध्यो भवति सन्नाहं नु प्राप्नोत्वथ त्वा यजा इति, तथेति । स ह सन्नाहं प्राप तं होवाच सन्नाहं तु प्राप्नोद् यजस्व माऽनेनेति' इति ॥ ६९ ॥

ननु हरिश्चन्द्रः किमर्थं कालमक्षिपदिति तत्राह—इतीति । स्नेहपाशबद्धचेतसा दशाहादिलक्षणं तं तं कालं वञ्चयता हरिश्चन्द्रेणोक्तो वरुणदेवस्तं कालमैक्षत प्रत्याह चेत्यन्वयः । तथात्मयागकालमैक्षतेति वा ॥ ७० ॥

'स तथेत्युक्त्वा पुत्रमामन्त्रयामास तताऽयं वै मह्यं त्वामददाद्धन्त त्वयाऽहमिमं यजा इति स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ स संवत्सरमरण्ये चचार' इति ब्राह्मणप्रसिद्धम् । पितुश्चिकीर्षितं तं वरुणमुद्दिश्यात्मयजनं कर्तुमिष्टं तत्कर्माऽभिज्ञाय प्राणप्रेप्सुरात्मजीवनेच्छू रोहितो धनुरादाय वनं प्राप ॥ ७१ ॥

पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ।
रोहितो ग्राममेयाय तमिन्द्रः प्रत्यषेधत ॥ ७२ ॥

भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ।
रोहितायाऽदिशच्छक्रः सोऽप्यरण्येऽचरत् समाः[1] ॥ ७३ ॥

एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा ।
अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाऽऽह वृत्रहा ॥ ७४ ॥

---

तदनन्तरं पितरं वरुणग्रस्तमित्यारभ्य प्रदाय समवन्दतेत्यन्तेन ग्रन्थेन 'अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे, इत्यादिब्राह्मणप्रसिद्धोऽर्थोऽनूद्यते ।

[अथ हैक्ष्वाकं वरुणो जग्राह, तस्य होदरं जज्ञे, तदु ह रोहितः शुश्राव, सोऽरण्याद् ग्राम-मेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच-नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम । पापो नृषद्वरो जन इन्द्र इच्चरतः सखा चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह ।]

एयाय आजगाम । प्रशंसायां रूपप्रत्ययविधानात्, प्रशस्तपुरुषरूपो विप्र इति यावत् । इन्द्रो वृद्धविप्रो भूत्वा तं रोहितमेत्य पर्युवाच । 'अपपरी वर्जने' इति सूत्रान्निषेधपूर्वमभाषतेत्यर्थः ॥ ७२ ॥

तत्र युक्तिमाह–भो रोहित नानाश्रान्ताय पुण्यतीर्थक्षेत्रनिषेवणेन नानाविधेन श्रान्तस्य जनस्य श्रीरैहिकामुष्मिकसंपदस्तीति, नृषद्वरः अनुक्तकारी गुर्वाद्युक्तमकुर्वाणः स्तम्भवत् तिष्ठन् चर्मकार इव वा जनः पापः क्लेशिष्टः इति शुश्रुम । नृषद्वरोऽनुक्तकारी चर्मकृच्च प्रकीर्तितः, इत्यभिधानम् । तर्हि सञ्चरमाणस्य एकाकिनश्चोरादिभयं स्यादिति नाशङ्कनीयम् । चरतः पुंस इन्द्र इत् इन्द्र एव सखा भवत्यतः चरैव चरैव त्वमटनं कुरुष्वैवं कश्चिद् ब्राह्मणो मामवोचत् । इन्द्रेणोपदिष्टो रोहितः किं चकारेति तत्राह—सोऽपीति । [2]समाः संवत्सरम् ॥ ७३ ॥

कति संवत्सरान् अरण्ये चचारेति तत्राह—एवमिति । 'द्वितीयं संवत्सरमरण्ये चचार' इत्यादिब्राह्मणं चास्मिन्नर्थे मानम् ।

[द्वितीयं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच–पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः । शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताश्चरैवेति चरैवेति वै

---

[1] समाम्—स. [2] समा नित्यबहुवचनान्ता स्त्रियाम्, इति वामनादयः—हलायुधविवृतिः ।

मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः। शेते निपद्यमानस्य चरति चरतो भगश्चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—कलिः शयानो भवति संजिहानस्तु द्वापरः। उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरंश्चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार सोऽरण्याद् ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—चरन् वै मधु विन्दति चरन् स्वादुमुदुम्बरम्। सूर्यस्य पश्य श्रेमाणं यो तन्द्रयते चरंश्चरैवेति चरैवेति वै मा ब्राह्मणोऽवोचदिति ह।]

पुष्पिणी गर्भिणी जङ्घयोर्बलाच्चरति अटति नैकत्रास्ते यथा, तथा चरतः पुरुषस्य जङ्घे पुष्पिण्यौ बलवत्यौ भवतः। सततं पर्यटन्नात्मा पुरुषः फलग्रहिर्भूष्णुः[1] भविता। किं तत्फलमिति तत्राह—शेर[2] इति। प्रपथे महामार्गे तीर्थयात्राश्रमेण हता अस्य पुंसः सर्वे पाप्मानः शेरे शीर्णा भवन्तीति। अतस्त्वमपि चरन् फलं लभस्वेत्यर्थः। आसीनस्य निर्व्यापारस्य भगो भाग्यमप्यास्ते आसीनं भवति। समृद्धं न भवति। तिष्ठत उत्थानं कुर्वतो भग ऊर्ध्वस्तिष्ठति उत्थानं करोति। पुरुषच्छायेव निपद्यमानस्य निकृष्टं गच्छतो भगः शेते निद्रां करोति, निकृष्टो भवतीत्यर्थः। चरतः पुण्येन यथा सञ्चरमाणस्य पुंसः भगश्चरति प्राप्नोति, तमिति शेषः। 'भगो योन्यां भगो यत्ने यशोवीर्यार्कभूतिषु' इत्यभिधानम्। कलिः शयान इत्यादिना कारणगुणः कार्यपरो योजनीयः[3]। तथा हि कलौ जातः शयानः तामसत्वेन शुभप्रवृत्तिशून्यो भवति। द्वापरे जातः संजिहानः संशयानः इदं वा अदो वेति तत्त्वं न निश्चिनोति। 'संबन्धिपुत्रौ दायादौ द्वापरौ युगसंशयौ' इत्यभिधानम्। त्रेतायां जात उत्तिष्ठन् धर्मार्थकामलक्षणकार्योद्योगी भवति। कृतयुगे जातः कृतं विहितं चरन् सम्पद्यते ज्ञानसम्पन्नो भवतीत्यतस्त्वं चरो भवेत्यर्थः। 'युगेऽक्षपाते पर्याप्ते कृतं क्लीबे हितेऽर्थवद्' इति। भूमौ चरन् पर्यटन् मधुसुखं विन्दति वै। अशनक्लेशोऽपि नास्तीत्याह-स्वादिष्ठमुदुम्बरं फलविशेषं चरन् भक्षयन् भूमिपर्यटनं कुर्वतः इत्थंभावमाह—चरन्निति। श्रवणमननाभ्यां स्वादु पुनः पुनः सेवाबुद्धिजनकमुदुम्बरम् अत्युत्तमं वरं वरणीयं सर्वगुणाभिरामं हरिं चरन् शरणं गच्छन् मत्वेति वा नित्यमटन्

---

[1] भूष्णुर्भविष्णुर्भविता, इत्यमरः। [2] अत्र शेर इति उत्तरत्र चरन्निति सूर्यस्येति च प्रतीकधारणं ब्राह्मणवाक्यस्येति बोध्यम्। [3] निद्रा जागरणमुत्थानं चरणं चेति चतस्रोऽवस्था याः पुरुषस्य ता एतच्चतुर्युगीरूपा आसुः। उत्तमत्वाच्चतुर्थी त्वयाऽनुष्ठेयेति—स.

षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ।
उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ।
[1]शुनःशेपं पशुं पित्रे प्रदाय समवन्दत ॥ ७५ ॥
ततः पुरुषमेधेन हरिश्चन्द्रो महायशाः ।
मुक्तोदरो [2]यजन् देवान् वरुणादीन् महाक्रतौ ॥ ७६ ॥
विश्वामित्रोऽभवत् तस्मिन् होताध्वर्युरात्मवान् ।
जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्यसामगः ॥ ७७ ॥

कोऽस्तीति तत्राह—सूर्यस्येति । यश्चरन् अविरतमटन् न तन्द्रयते आलस्यं न करोति, तस्य सूर्यस्य श्रेमाणम् अव्याहतगमनशिक्षां पश्य । तवाप्येवमरण्ये चरतः जीवनक्षेम स्यादिति वृत्रहा रोहितमशिक्षतेत्यन्वयः ॥ ७४ ॥

एवं शिक्षितस्तत्रारण्ये षष्ठं संवत्सरं चरित्वा पुरीमुपागच्छन् रोहितोऽजीगर्तान्मध्यमं सुतं शुनःशेफमक्रीणात्, गवां शतं दत्वा स्वीकृतवान् । स्वीकृत्य शुनःशेपाख्यं पशुं हरिश्चन्द्राय पित्रे प्रदाय पितरं समवन्दतेत्यन्वयः । ' षष्ठं संवत्सरमरण्ये चचार सोऽजीगर्तं सौयवसिमृषिमशनयापरीतमरण्यमुपेयाय । तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति । तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणा इति । स ज्येष्ठं पुत्रं निगृह्णान उवाच न न्विममिति । नो एवेममिति कनिष्ठं माता । तौ ह मध्यमे सम्पादयाञ्चक्रतुः शुनःशेपे तस्य ह शतं दत्वा स तमादाय सोऽरण्याद् ग्राममेयाय । स पितरमेत्योवाच तत हन्ताहमनेनात्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान् वै ब्राह्मणः क्षत्रियादिति वरुण उवाच ' इति ॥ ७५ ॥

ततः पुरुषपशुप्राप्त्यनन्तरं महायशा हरिश्चन्द्रः पुरुषमेधेन पुरुषपशुहिंसालक्षणयज्ञेन वरुणादीन् यजंस्ततः स राजा मुक्तोदरो जलोदररोगरहितोऽभवदित्यन्वयः । ' तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच तमेतमभिषेचनीये पुरुषं पशुमालेभे ' इति सोऽभिषेचनीय इति तादर्थ्ये सप्तमी । वरुणमुद्दिश्येति । आलेभे आलम्भनमुपाक्रान्तवान् ॥ ७६ ॥

' तस्य ह विश्वामित्रो होताऽऽसीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता ' इति ब्राह्मणार्थत्वेनास्मिन् यज्ञे होत्रादीनाह—विश्वामित्र इति ।

[1] शुनःशेपः शुनःशेफः इति पान्तःफान्तश्च प्रयुज्यते । ' शेफसशेपसी शेफशेपौ शेवश्चेति पञ्च रूपाणि भवन्ति ' इति हलायुधविवृतौ । [2] मुक्तोदरोऽयजद् देवान्—शे.

तस्मै तुष्टो ददाविन्द्रः [1]शातकौम्भमयं रथम् ।
शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रचक्षते ॥ ७८ ॥

---

[तस्य ह विश्वामित्रो होताऽऽसीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता तस्मा उपाकृताय नियोक्तारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं ददुस्तं स नि नियोज । तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशसितारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्य-मपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशसितारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा अपरं शतं ददुः सोऽसिं निशान एयाय । अथ ह शुनःशेप ईक्षाञ्चक्रेऽमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा । तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा । तमग्निरुवाच सविता वै प्रसवानामीशो तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन । तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता । तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या । तमग्निरुवाच विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा । तं विश्वेदेवा ऊचुरिन्द्रो वै देवाना-मोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पञ्चदशभिः । तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति । तमिन्द्र उवाचाश्विनौ तुष्टावात उत्तरेण तृचेन । तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन । तस्य ह स्मर्च्यृच्युक्तायां विपाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां विपाशो मुमुचेऽगद ऐक्ष्वाक आस ॥ ऐ.ब्रा. अ ३३ खण्डः २]

अयास्य एव सामगः अयास्यसामगः साम गायतीति सामग उद्गातेत्यर्थः । आत्मा परमात्माऽ-स्यास्तीतिं आत्मवान् ॥ ७७ ॥

तस्मै शुनःशेपाय । उपरिष्टाच्चतुर्दशेऽध्याये तत्र विश्वामित्रपुत्रप्रस्तावे ॥ ७८ ॥

---

[1] शातकुम्भमयं रथम्—स.

सत्यसारं धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ।
विश्वामित्रो भृशं प्रीतो ददावविहतां गतिम् ॥ ७९ ॥

मनः पृथिव्यां तामद्भिस्तेजसाम्भोऽनिलेन तत् ।
खे वायुं धारयंस्तं च शब्दादौ तन्महात्मनि ॥ ८० ॥

तस्मिन् ज्ञानकलां ध्यात्वा तया ज्ञानं विनिर्दहन् ।
हित्वा तां स्वेन भावेन निर्वाणसुखसंविदा ।
अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबन्धनः ॥ ८१ ॥

इति श्रीमद्भागवते नवमस्कन्धे सप्तमोऽध्यायः ।

---

हरिश्चन्द्रे गुणान् दृष्ट्वा सन्तुष्टो विश्वामित्रो ज्ञानोपदेशं चकारेत्याह—सत्यसारमिति । भार्यया सहितस्य भूपतेः सत्यसारं सत्ये सज्जनहितकरवचने सारं सारत्वं, दार्ढ्यमित्यर्थः । 'यत् सतां हितमत्यन्तं तत् सत्यमिति कीर्तितम्' इति वचनात् । धृतिं लौकिकमार्गाद्चलनरूपं धैर्यं दृष्ट्वा । भार्यायाः अप्येतद्द्वयमस्तीति प्रकाशनाय सभार्यस्येत्युक्तम् । अविहतां कुतर्कैरप्रतिषिद्धां गतिं ज्ञानलक्षणां विद्याम् ॥ ७९ ॥

उपासनाकाले मनआदितत्त्वानां जडानां स्वस्वकारणेषु जडेषु तत्त्वेषु विलयस्तदभिमानिदेवानां भिन्नानां भिन्नेषु देवेषु प्रवेशलक्षणो विलयः । स्वरूपाणां स्वस्वरूपेष्वेकीभावलक्षणश्चिन्तनीय इत्यतस्तं प्रकारमाह—मनः पृथिव्यामिति । 'अन्नमयं हि सौम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति श्रुतेः । [1]अन्नं पृथिवी पार्थिवं मनः पृथिव्यां विलीयतेति मनो धारयंस्तां पृथिवीमद्भिरप्सु लीनामिति । अद्भिरिति तृतीया सप्तम्यर्थे । तदम्भस्तेजसा संह्रियते । तत् तेजोऽनिलेन ग्रस्यते । तं वायुं खे आकाशे लीनमिति । तच्च खं शब्दादावहङ्कारतत्त्वे तदहङ्कारं महात्मनि महत्तत्त्वे, तदभिमानिनं तदभिमानिन्यात्मनि चतुर्मुखे ब्रह्मणि प्रविष्टम् ॥ ८० ॥

तस्मिन् महत्तत्त्वे ज्ञानकलां बुद्धितत्त्वाभिमानिनीं सरस्वतीं ध्यात्वा, तया ब्रह्मसायुज्यभाजा सरस्वत्या तदभिमन्यमानविषया ज्ञानस्वरूपचैतन्यं निर्दहन्, तामस्वरूपविषयामविद्यां हित्वा विध्वस्तं बन्धनं येन स तथा । स हरिश्चन्द्रः स्वभावेन स्वमहिम्ना निर्वाणे शरीररहिते सुखसंविदो यस्य स तथा तेन सच्चिदानन्देन अनिर्देश्यं चाप्रतर्क्यं च तत् तथा तेन ब्रह्मणा सह तस्थौ 'सह ब्रह्मणा विपश्चिता' इति, 'आत्मन आकाशः सम्भूतः' इति च श्रुतेः । शब्दादौ शब्दकारणे महति आत्मनि हरौ

---

[1] पृथिव्यधिकारेति सूत्रभाष्ये पृथिवी चाऽन्नम्, इत्युक्तत्वादन्नं पृथिवी—ख.

## ॥ अथ अष्टमोऽध्यायः ॥

श्रीशुक उवाच —

हरितो रोहितादासीच्चम्पस्तस्माद् विनिर्मिता ।
चम्पापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥

तरुकस्तत्सुतस्तस्माद् वृकस्तस्यापि बाहुकः ।
सोऽरिभिर्हृतराज्यस्तु सभार्यो वनमाविशत् ॥ २ ॥

वृद्धं तं पञ्चतां प्राप्तं महिष्यनुमरिष्यती ।
और्वेण जानताऽऽत्मानं प्रजावन्तं निवारिता ॥ ३ ॥

आज्ञायास्यै सपत्नीभिर्गरो दत्तोऽत्र साहसः ।
सह तेनैव सञ्जातः सगराख्यो महायशाः ॥ ४ ॥

सगरश्चक्रवर्त्यासीत् सागरो यत्सुतैः कृतः ।
यस्तालजङ्घान् यवनाञ्छकान् हैहयबर्बरान् ॥ ५ ॥

---

ज्ञानकलां ज्ञानलक्षणकामधेनुं, ज्ञानानन्दादिगुणपूर्ण इति ध्यात्वा तया तथोपासनया अज्ञानं तन्निमित्तं संसारं भस्मीकुर्वन् तां संसृतिं हित्वा परित्यज्य निर्वाणसुखसंविदा प्राकृतशरीराभोग्यानन्दज्ञानलक्षणेन मादृशैरनिर्देश्याप्रतर्क्येण स्वेन भावेन स्वरूपभूतैश्वर्येण तस्थाविति वा ॥ ८१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य सप्तमोऽध्यायः ।

## ॥ अथ अष्टमोऽध्यायः ॥

तद् तस्माद् हरिताच्चम्पः । तस्माच्चम्पान्निर्मिता पुरी चम्पा नाम । अतश्चम्पात् । यस्य सुदेवस्य ॥ १ ॥ स बाहुकः ॥ २ ॥ अनुमरिष्यती सहगमनं कर्तुमिच्छन्ती । प्रजावन्तं पुत्रवन्तं तस्या आत्मानं देहं जानता । इयमन्तर्वत्नीति यावत् । ज्ञानिनौर्वेण ऋषिणा निवारिता ॥ ३ ॥

अत्र गर्भे पुत्रमाज्ञाय सपत्नीभिरस्यै बाहुकपत्न्यै, सहसा हन्तीति साहसो गरो दत्त इत्यन्वयः । तेन विषेण सह सञ्जातोऽतः सगराख्यः ॥ ४ ॥ 'यस्य स्यादाज्ञया पृथ्वी चक्रवर्ती स ईर्यते' इत्युक्तः चक्रवर्ती । सगरपुत्राः सागरास्तैः कृतत्वात् सागरः समुद्रः । सगरस्य प्रभावमाह—य इति । तालजङ्घादयो द्वीपान्तरवासिनो दुष्टयवनाः निर्देश्याः ॥ ५ ॥

नावधीद् गुरुवाक्येन चक्रे विकृतवेषिणः ।
मुण्डान् श्मश्रुधरान् कांश्चिन्मुक्तकेशार्धमुण्डितान् ॥ ६ ॥

अनन्तर्वाससः कांश्चिदबहिर्वाससोऽपरान् ।
सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥

और्वोपदिष्टयोगेन हरिमात्मानमीश्वरम् ।
तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरन्दरः ॥ ८ ॥

सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ।
हयमन्वेषमाणास्ते समन्तान्न्यखनन् महीम् ॥ ९ ॥

प्रागुदीच्यां दिशि हयं ददृशुः कपिलान्तिके ।
एष वाजिहरश्चोर आस्ते मीलितलोचनः ॥ १० ॥

हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः ।
उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥

स्वशरीराग्निना तावन्महेन्द्रहृतचेतसः ।
महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥

न साधुवादो मुनिकोपभर्जिता नृपेन्द्रपुत्रा इति सत्वधामनि ।
कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥

---

पामरान् मा वधीरिति गुरोर्वाक्येन ॥ ६ ॥ अनन्तर्वाससोऽन्तर्वस्त्रशून्यान् । अबहिर्वाससः बहिरुत्तरीयरहितान् । सर्ववेदसुरात्मकं सर्ववेदप्रतिपाद्यं, सर्वदेवस्वामिनं च ॥ ७ ॥

उत्सृष्टं मन्त्रयित्वा भूप्रदक्षिणार्थं प्रेषितम् ॥ ८ ॥ सगरस्य सुमतिः केशिनीति द्वे भार्ये । तत्र सुमतिर्गरुडस्य स्वसा, तस्याः षष्टिसहस्रपुत्राणां प्रभावमाह—सुमत्या इति ॥ ९ ॥

षष्टिसहस्रसंख्या येषामस्तीति षष्टिसहस्रिणः । इति ब्रुवन्त इति शेषः । उन्मिमेष नेत्रविकासं कृतवान् ॥ ११ ॥ स्वशरीरस्थाग्निना तावत् क्षणाद् भस्मसादभवन्नित्यन्वयः । महेन्द्रेण हृतं चेतो येषां ते तथा मुग्धा इत्यर्थः । महतो व्यतिक्रमेण, चोरो हन्यतामित्यादिवचनलक्षणस्वापराधेनैव हता नृपपुत्राः । न तु मुनिकोपदग्धा इत्यर्थः ॥ १२ ॥

केचित्तु कपिलस्य कोपाग्निना दग्धा इति वदन्ति । तन्निराकरोति—न साधुवाद इति । नृपेन्द्रपुत्रा मुनिकोपभर्जिता इत्ययं साधुवादो न भवति असम्भवात् । कथमिति तत्राह—सत्वधा-

यस्येरिता साङ्ख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ।
भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥

योऽसमञ्जस इत्युक्तः स केशिन्या[1] नृपात्मजः ।
तस्य पुत्रोंऽशुमान् नाम पितामहहिते रतः ॥ १५ ॥

असमञ्जस आत्मानं दर्शयन्नसमञ्जसम् ।
जातिस्मरः पुरा सङ्गाद् योगी योगाद् विचालितः ॥ १६ ॥

आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ।
सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥

---

मनीति । शुद्धस्फटिकविशदज्ञानमूर्तौ श्रीकपिलदेवे रोषमयं तमः कथं विभाव्यते संभाव्यते ? न कथमपि । किञ्च जगत्पवित्रीकरणसमर्थस्वभावे । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इति यादवः । असम्भावनायां दृष्टान्तः—खे रज इति । न साधुवाद इत्यतो नञः तन्त्रान्वयः । नञ् इवार्थे । '[2]चक्रं न वृत्तम्' इत्यादिवेदे दृष्टत्वात् । न यथा भुवो रजः पार्थिवो धूलिः खे सम्भावितः तथा क्रोधो माधवेऽसम्भावित इति भावः ॥ १३ ॥

इतोऽपि तमोगुणकार्यस्य कोपस्य हरावनवसर इत्याशयेनाह—यस्येति । इह जगति सदनुग्रहाय यस्य येनेरिता ग्रन्थरूपेण कथिता, दृढा अपेक्षितफलदानाय समर्था अन्यत्र नूतनत्वेन बलिष्ठा, साङ्ख्यमयी शुद्धज्ञानमयी नौस्तरी । यया ज्ञाननावा मुमुक्षुः मृत्युपथं मृत्योर्मार्गं दुरत्ययं ज्ञाननावमन्तरेणात्येतुमशक्यं भवार्णवं तरते तस्य परमात्मभूतस्य साक्षान्नारायणावतारस्य विपश्चितः शुद्धज्ञानवतः श्रीकपिलस्य, पृथङ्मती रोषरूषिता मतिः कथं संभाव्यते इत्यन्वयः ॥ १४ ॥

हे नृप, योऽसमञ्जस इत्युक्तः स केशिन्याः सगरभार्यायाः आत्मजः । पितामहः सगरः ॥ १५ ॥

पुरा पूर्वजन्मनि, योगी योगाभ्यासनिपुणोऽसमञ्जसः सङ्गाद् हेतोः योगादीश्वरोपासनालक्षणाद् विचालितो हि यस्मात्, तस्मात् पूर्वजातिं स्मरतीति जातिस्मरः । आत्मानं असमञ्जसं असमचेतःसङ्गतमनतिरमणीयं दर्शयन्, सङ्गं जहाविति शेषः ॥ १६ ॥

असमञ्जसत्वं दर्शयति—आचरन्निति । किं तज्ज्ञातीनां विप्रियं कर्मेति तत्राह—सरय्वामिति । जनमुद्वेजयन् कम्पयन्, तीरे क्रीडतो बालान् सरय्वां नद्यां प्रास्यत् प्राक्षिपदित्यन्वयः ॥ १७ ॥

---

[1] सुकेशिन्या—स. [2] चतुर्भिः साकं नवतिं च नामभिः चक्रं न वृत्तं व्यतीँरवीविपत् (ऋ॰सं. १-१५५-६)

एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ।
योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥

अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ।
दृष्ट्वा विसिस्मिरे राजन् राजा चाप्यन्वतप्यत ॥ १९ ॥

अंशुमांश्चोदितो राज्ञा तुरङ्गान्वेषणे ययौ ।
पितृव्यखातानुपथं भस्मापि ददृशे हयम् ॥ २० ॥

तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ।
अस्तौत् समाहितमनाः प्राञ्जलिः प्रणतो महान् ॥ २१ ॥

न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः ।
कुतोऽपरे तस्य मनःशरीरविसर्गसृष्टावयवप्रकाशाः[1] ॥ २२ ॥

---

ततः किमभूदिति तत्राह—एवमिति । एवं वृत्तं कर्म यस्य सः । योगैश्वर्येण युष्मद्बाला एते इति तान् नदीजलमग्नान् बालान् दर्शयित्वा ततः स्थानाद् ययावित्यन्वयः ॥ १८ ॥

विसिस्मिरे विस्मयं चक्रुः । अथासमञ्जसे गते राजा चान्वतप्यत पश्चात्तापं प्राप्त इत्यन्वयः ॥ १९ ॥ पितरि गतेंऽशुमता किमकारीति तत्राह—अंशुमानिति । पितृव्या असमञ्जससहोदरास्तैः खातमनु यः पन्थास्तं ययौ । पितृव्याणां शरीरभस्म, हयमपि ददृशे इत्यन्वयः । भस्मान्ति इति पाठे भस्मसमीपे हयं दृष्टवानित्यर्थः ॥ २० ॥

अस्तौत् स्तुतवान् ॥ २१ ॥ स्तुतिर्द्वेधा विद्यमानगुणविषया अविद्यमानगुणविषया च । तत्र द्वितीयाऽपि विद्वदविद्वद्विषयभेदेन द्विविधा । उभयस्या अपि स्तुतिफलं न लभ्यते । विदुष आत्मन्यविद्यमानगुणकथनेन ह्रिया स्तोतरि द्वेषसंभवात् विदुषोऽज्ञानेन मुखविकासादिसंभवेऽपि स्तोतुः स्तुतिफलप्रदानशक्तिसामग्र्यभावात्, अतः प्रथमैव श्रेयसीति भावेन स्तौति—न पश्यतीति । अजनोऽजो विरिञ्चो यस्य परमात्मनोंऽशं त्वां न पश्यति अनन्तत्वेन साक्षादपरोक्षीकर्तुं न शक्नोति । तर्हि परोक्षतो जानाति किम्? नेत्याह—नेति । समाधियुक्तिभिरेकाग्रीकृतचित्तयोगैरद्यापि न बुध्यते । सम्यङ् न जानातीत्यन्वयः । 'पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः' इतिवत् । न यस्य तत्त्वमिति पाठे, परमात्मनो यस्य तव तत्त्वं न बुध्यत इति न, किन्तु बुध्यते, तथापि सम्यङ् न जानातीत्यर्थः । 'कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रतिवाचं पपाद' इति श्रुतेः । नयस्य नीति-

---

[1] मनःशरीरविसर्गसृष्टा वयमप्रकाशाः—स.शो.

ये देहभाजस्त्रिगुणप्रधाना गुणान् विपश्यन्त्युत वा तमश्च ।
यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥
तं त्वामहं ज्ञानघनस्वभावं प्रध्वस्तमायामयभेदमोहैः ।
सनन्दनाद्यैर्मुनिभिर्विभाव्यं कथं विमूढः परिभावयामि ॥ २४ ॥

---

रूपस्य परमात्मनस्तव तत्त्वं न बुध्यते इति वा । एकस्य ज्ञानाभावेप्यन्यस्य तत्सम्भवः किं न स्यात् तथा दृष्टत्वादित्याशङ्क्य, इतरविषयोऽयं न्यायो न परमात्मविषय इति भावेनाह—कुत इति । अपरे विरिञ्चादितरे, समाधियुक्तिरहिताः कुतो हेतोः पश्यन्ति जानन्ति ? दर्शनादिसद्भावे न किमपि लिङ्ग-मित्यर्थः । अनेन चोद्यं कथं परिहृतमिति तत्राह—तस्येति । तस्य विरिञ्चस्य मनसः शरीराच्च विसर्गः विशिष्टा सृष्टिर्येषां मरीच्यादीनां ते मनःशरीरविसर्गाः तैः सृष्टेषु शरीरावयवेषु श्रोत्रादिषु प्रकाशो अभिमानित्वेन स्थितिलक्षणो येषां दिक्सूर्यादीनां ते मनःशरीरविसर्गसृष्टावयवप्रकाशाः । अनेन इन्द्रादयो मरीच्यादय उभयेऽपि प्रत्युक्ताः । अत्र जनो न पश्यति न बुध्यते इत्यङ्गीकारे कुतोऽपरे इत्येतद्-गतार्थत्वेनासङ्गतं स्यादतोऽजन इति पदच्छेदेन विरिञ्च एव ग्राह्यः ॥ २२ ॥

ये देहभाजः शरीरिणस्ते त्रिगुणप्रधानाः सत्त्वप्रधाना रजःप्रधानास्तमःप्रधाना इति त्रिविधाः । तत्र रजःप्रधाना राजसा मानुषाः त्रिगुणप्रधानाः धर्मार्थकामपरायणाः गुणान् स्वर्गादीनेव पश्यन्ति, न मोक्षम् । तमःप्रधानास्तामसा असुराः यस्य हरेर्मायया बन्धकशक्त्या मोहितचेतसः अन्यथाज्ञान-पूर्णबुद्धयः तमो वा अन्धंतम एव विशिष्टं पश्यन्ति अनुभवन्ति । अत्र निमित्तमाह—त इति । ते स्वसंस्थं स्वहृदिस्थं विष्णुं न विदुरिति यत् तस्मादिति शेषः । तर्हि तेऽचेतनाः किं ? नेत्याह—बहिरिति । बहिर्देहादावेव प्रकाशो येषां ते तथा अनात्मज्ञानिन इत्यर्थः । 'आत्मैव मह्यः' इति श्रुतेः । ज्ञानाश्रयत्वेन चेतनत्वेऽपि यथार्थज्ञानं नास्तीति भावः ॥ २३ ॥

ये सत्त्वप्रधानाः सात्त्विकप्रकृतयः तैः सनन्दनाद्यैर्मुनिभिर्विभाव्यम् उपास्यं तं तत्तद्योग्येभ्यस्त-त्तत्फलदातारं त्वामहं कथं परिभावयामि चिन्तयामि ? चिन्तने काऽनुपपत्तिरिति तत्राह—विमूढ इति । सामान्यज्ञाते वस्तुनि विशेषजिज्ञासा सञ्जाघटीति । मम तु तदेव नास्त्यतस्त्वद्विषयज्ञानाभाव एवानुपपत्तिरित्यर्थः । सनन्दनादीनामपि देहभाक्त्वाविशेषात् तत्परिभावना कथं स्यादिति तत्राह—प्रध्वस्तेति । प्रध्वस्तो मायामयः प्रकृतिहेतुको भेदमोहः अनात्मन्यात्मत्वमोहो यैस्ते तथा तैः, निरस्त-मिथ्याज्ञानैरित्यर्थः । अनेन देहभाक्त्वेऽपि विशेषोऽस्तीति दर्शितम् । 'कार्यते ह्यवशः कर्म सर्वः प्रकृति-जैर्गुणैः' इति स्मृतिः ॥ २४ ॥

प्रशान्तमायागुणकर्मलिङ्गमनामरूपं सदसद्विमुक्तम् ।
ज्ञानोपदेशाय गृहीतलिङ्गं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥

यन्मायारचिते लोके वस्तुबुध्या गृहादिषु ।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः ॥ २६ ॥

अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः ।
मोहपाशो दृढश्छिन्नो[1] भगवंस्तव दर्शनात् ॥ २७ ॥

श्रीशुक उवाच —

इत्थं गीतानुभावस्तं भगवान् कपिलो मुनिः ।
अंशुमन्तमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥

श्रीभगवानुवाच —

अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ।
इमे च पितरो दग्धा गङ्गाम्भोऽर्हन्ति नेतरत् ॥ २९ ॥

---

त्वां नमामह इत्यन्वयः । त्वामिति क इति तत्राह — पुरुषमिति । तर्हि देवदत्तवच्चिरंतनः कश्चिदयं स्यादिति नेत्याह— अनामरूपमिति । प्राकृतनामरूपरहितम् । तत् कुत इति तत्राह— प्रशान्तेति । प्रशान्तानि उपरतानि मायागुणाः सत्त्वादयः कर्माणि तन्निमित्तव्यापारा लिङ्गशरीरं च यस्य स तथा । अतत्कारणत्वेन मृद्घटदभिन्नत्वे एतत् कथं घटत इति तत्राह— सदिति । सतो ब्रह्मणः असतः परमाण्वादेः विमुक्तं भिन्नम् । 'रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्' इति श्रुतेः । शरीरवत्त्वेन नामरूपदर्शनात् तदभावकथनं कथमिति तत्राह— ज्ञानेति । लोकानुग्रहार्थं शरीरग्रहणं न तु कर्मनिमित्तम् । अत एव नित्यदुःखाभावः ॥ २५ ॥

त्रिविधानां जीवानां स्वभावाभिभवो नास्तीति दर्शनाय मानुषस्वभावमाह— यन्मायेति । यस्य हरेर्मायया प्रकृत्या इच्छया वा रचिते निर्मिते लोके भूम्यादौ रचितगृहादिषु वस्तुबुद्ध्याऽनश्वराणीति मनसा भ्रमन्ति परिवर्तन्ते । मानुषा इति शेषः । निमित्तमाह— कामेति । कामो विषयाभिलाषः लोभो धर्मादिविषयार्थत्यागानिच्छा, ईर्ष्या अक्षमा, मोहो वैचित्त्यम् । एतैर्विभ्रान्तं चेतो येषां ते तथा ॥ २६ ॥

उपसंहरति— अद्येति । अद्य नोऽस्माकं पुत्रादिषु दृढो मोहपाशोऽज्ञानहेतुकः स्नेहपाशश्छिन्न इत्यर्थः । कामकर्मेन्द्रियेष्वाशेत इति कामकर्मेन्द्रियाशयः ॥ २७ ॥ अर्हन्ति अपेक्षन्ते ॥ २९ ॥

---

[1] दृढं छिन्न इत्यपि स पाठः । दृढं पुनरनुज्जृम्भणं यथा तथा छिन्नः— स.

तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ।
सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥
राज्यमंशुमते न्यस्य निःस्पृहो मुक्तबन्धनः ।
और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥
अंशुमांश्च तपस्तेपे गङ्गागमनकाम्यया ।
कालं महान्तं नाशक्नोत् ततः कालेन संस्थितः ॥ ३२ ॥
दिलीपस्तत्सुतः तद्वदशक्तः कालमेयिवान् ।
भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ ३३ ॥
दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ।
इत्युक्तः स्वमभिप्रायं शशंसावनतो भृशम् ॥ ३४ ॥

गङ्गोवाच —

को विधारयिता वेगं पतन्त्या मे महीतले ।
अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥ ३५ ॥
किं चाहं दुर्गतिं यास्ये नरा मय्यामृजन्त्यघम् ।
मृजामि तदघं क्रूरं राजंस्तत्र विविच्यताम् ॥ ३६ ॥

राजोवाच —

साधवो निराशिषः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गाद् ये प्राप्ताः स्वहृदा हरिम् ॥ ३७ ॥

---

महदपराधपङ्कप्रक्षालनेनात्मजनोद्धाराय महान्तं कालं तपस्तेप इत्यन्वयः । कालेन संस्थितो मृतः ॥ ३२ ॥ कालमेयिवान् मरणं प्राप्तः ॥ ३३ ॥ प्रसन्ना देवी ते वरदाऽसीति निगद्य स्वात्मानं तमुद्दिश्य प्रदर्शयामास ॥ ३४ ॥

किञ्च रसातलप्रवेशलक्षणानर्थ एव न, अन्योऽप्यस्तीत्याशयेनाह—किञ्चेति । कुतो नरकप्राप्तिरिति तत्राह— **नरा इति** । पापिनो नराः स्नानादिना मय्यघमामृजन्ति शोधयन्ति । पापं निक्षिप्य स्वयं शुद्धा भवन्ति । हे राजन् तदघं मृजामि शोधयामि । क्वेति शेषः । क्व निक्षिप्य शुद्धा भवामि ? अत्र अस्मिन्नर्थे विविच्यतां नराणामघसंहर्त्र्यहं मदघसंहर्ता क इति विवेकः क्रियतामित्यन्वयः ॥ ३६ ॥

उत्तरमाह— साधव इति । शमदमादिलक्षणसम्पन्नाः साधवोऽत एव निराशिषः स्वर्गादिसुख-

धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ।
यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु ॥ ३८ ॥

इत्युक्त्वा स नृपो देवीं तपसाऽतोषयच्छिवम् ।
कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत[1] ॥ ३९ ॥

तथेति राज्ञाऽभिहितः सर्वलोकहितः शिवः ।
दधारावहितो गङ्गां पादपूतजलां हरेः ॥ ४० ॥

भगीरथोऽपि राजर्षिर्निन्ये भुवनपावनीम् ।
यत्र स्वपितृणां देहा भस्मीभूताः स्म शेरते ॥ ४१ ॥

रथेन वायुवेगेन प्रयान्तमनुधावती ।
देशान् पुनन्ती निर्दग्धानसिञ्चत् सगरात्मजान् ॥ ४२ ॥

यज्जलस्पर्शमात्रेण ब्रह्मदण्डहता अपि ।
सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ ४३ ॥

---

लक्षणाशारहिताः । कुत इति तत्राह— ब्रह्मिष्ठा इति । इष्ठन् प्रत्ययान्तं चैतत् । ब्रह्मिणः पूर्णाः भगवद्भक्त्येति शेषः । अमी अतिशयेन ब्रह्मज्ञानसंपन्ना इति यावत् । ब्रह्मण्येव स्थिता ब्रह्मिष्ठा इत्ययं छान्दस इति केचित् । तथात्वे ब्रह्मस्था इति स्यात् । न हि छान्दसता स्वच्छन्देनाङ्गीकार्या । तस्मादयमिष्ठन्नन्तस्तमनुसृत्यैवं कृतम् । लोकपावना एवंविधा ये स्वहृदा हरिं प्राप्तास्ते अङ्गसङ्गात् पाद-प्रक्षालनादिना हस्ताद्यङ्गसंबन्धात् पापिनामघं हरन्तीति शेषः । तेषां स्वहृदि स्थितहरिसान्निध्यात् पापं नास्त्येव । तत्र किं वक्तव्यमनवरतं पद्मनाभसरोजनिवासाया इत्यर्थः ॥ ३७ ॥

द्वितीयं प्रश्नं परिहृत्य प्रथमं परिहरति— धारयिष्यतीति । आत्मा स्वामी । शाटी कन्था, गुणितद्विपुटिका[2] वा ॥ ३८ ॥ राज्ञाऽभिहितः सर्वलोकहितः शिवः तथेति गङ्गामवहितः समाधान-चित्तः सन् स्वयमपि स्वोद्धारार्थं हरेः पादपूतजलां तां दधारेत्यन्वयः ॥ ४० ॥

प्रयान्तं भगीरथम् अनुधावती पृष्ठत आयान्ती ॥ ४२ ॥ यज्जलस्पर्शनं तच्च केवलं देह-भस्मभिरेव न साक्षात् । अतस्तन्माहात्म्यं किं वर्णनीयमित्यध्याहृत्य योजनीयम् ॥ ४३ ॥

---

[1] तपसा चाश्वतुष्यत—ग. [2] शरीरिणां देहवाहानामहङ्कारामिमतिमानिति स्वामी । तदेवात्मत्वं निदर्शनपूर्वकं दर्शयति । यस्मिन् हराविदं विश्वं स्थावरं सर्वं तन्तुषु शाटीव कन्था यथा तथा ओतं प्रोतं तत्त्वेन वर्तते । तदाधारमिति यावत् । अतो धारयिष्यति—स.

भस्मीभूताङ्गसङ्गेन स्वर्याताः सगरात्मजाः ।
किं पुनः श्रद्धया देवीं ये सेवन्ते धृतव्रताः ॥ ४४ ॥

न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ।
अनन्तचरणाम्भोजप्रसूताया भवच्छिदः ॥ ४५ ॥

संनिवेश्य मनो यस्मिन् श्रद्धया मुनयोऽमलाः ।
त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ ४६ ॥

श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ।
सिन्धुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ ४७ ॥

ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ।
दत्त्वाक्षहृदयं तस्मै सर्वकामस्तु तत्सुतः ॥ ४८ ॥

ततः सुदासस्तत्पुत्रो मदयन्तीपतिर्नृपः ।
आहुर्मित्रसहं यं वै कल्माषाङ्घ्रिमुत क्वचित् ॥ ४९ ॥
वसिष्ठशापाद् रक्षोऽभूदनपत्यः स्वकर्मणा[1] ॥ ५० ॥

---

उक्तं किञ्चिदनूद्य गङ्गामाहात्म्यं हरिमहत्त्वोन्नायकमपीत्युचरत्र विविच्याह—भस्मीभूतेति । भस्मीभूताङ्गस्य स्वर्धुन्याः सङ्गेन ॥ ४४ ॥

श्रीनारायणचरणसङ्गलब्धमेवास्या माहात्म्यं नान्यतोऽतो नैतत् चित्रमित्याह—न हीति । इह सगरात्मजकथाप्रसङ्गेन गङ्गामाहात्म्यमुदितम् । अनन्तस्य त्रिविक्रमस्य वामपादेन जाताया अत एव भवच्छिदः संसारछेत्र्याः जन्मछेत्र्या वा । 'भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु' इत्यभिधानम् ॥ ४५ ॥ संसारछेदनमाहात्म्यं श्रीहरिनिष्ठं गङ्गाया उपचार इत्याशयवानाह—संनिवेश्येति । त्रैगुण्यं त्रिगुणसंबन्धिसंसारम् । तदात्मतां तत्सायुज्यलक्षणां मुक्तिं तत्स्वामिकतां वा ॥ ४६ ॥

एवं भगीरथस्य गङ्गानयनादिमाहात्म्यमुक्त्वा तत्सन्ततिं कथयति—श्रुत इति । तस्य श्रुतस्य नाभो नाभागो मानवादपरः सुतः । ततोऽयुतायोः ऋतुपर्णः । अयात् प्राप्तवान् । तत्सुतः ऋतुपर्णसुतः ॥ ४७–४८ ॥ यं सुदासपुत्रम् ॥ ४९ ॥

---

[1] स्वकर्मणा प्राचीनेनानपत्योऽपुत्रः । स्वकर्मणेदानीमनुष्ठितेन वसिष्ठशापाद् रक्षोऽभूत्—स.

राजोवाच —

किन्निमित्तो गुरोः शापः सौदासस्य महात्मनः ।
एतद् वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ ५१ ॥

श्रीशुक उवाच —

सौदासो मृगयां [1]किञ्चिच्चरन् रक्षो जघान ह ।
[2]शुशोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ ५२ ॥
स चिन्तयन्नघं राज्ञः सूदरूपधरो गृहे ।
गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ ५३ ॥
परिवेष्यमाणं भगवान् विलोक्याभक्ष्यमञ्जसा ।
राजानमशपत् क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ ५४ ॥
रक्षःकृतं तद् विदित्वा चक्रे द्वादशवार्षिकम् ।
सोऽप्यपोऽञ्जलिनाऽऽदाय गुरुं शप्तुं समुद्यतः ॥ ५५ ॥
वारितो मदयन्त्याऽऽपो रुशतीः पादयोर्जहौ ।
दिशः खमवनीं सर्वां पश्यन् जीवमयीं नृपः ॥ ५६ ॥
राक्षसं भावमापन्नः पादे कल्माषतां गतः ।
व्यवायकाले ददृशे वनौकौ दम्पती द्विजौ ॥ ५७ ॥
क्षुधार्तो जगृहे विप्रं तत्पत्न्याहाकृतार्थवत् ।
न भवान् राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ ५८ ॥

---

न रहो गोप्यं न ॥ ५१ ॥ रक्षो राक्षसम् । मृतं भ्रातरम् । प्रतिचिकीर्षया भ्रातृहन्तृहनन-लक्षणप्रतीकारेच्छया ॥ ५२ ॥ सूदरूपधरः पाचकवेषधरः । नरामिषं नरमांसम् ॥ ५३ ॥

अञ्जसा ज्ञानदृष्ट्या । एवंविधो रक्षः ॥ ५४ ॥ रक्षःकृतं राक्षसकृतम् ॥ ५५ ॥

रुषतीः क्रूरा आपो मन्त्रितत्वात् । रुष रिष हिंसायामिति धातोः, हिंसयन्तीर्वा । रुश् शब्दे इति धातोः, हतं चिकीर्षाम इति शब्दयन्तीर्वा । 'माघमासे रटन्त्यापः' इति वचनात् ॥ ५६ ॥

कल्माषतां कल्माषवर्णवत्ताम् । 'कल्माषो कृष्णपाण्डुरः' इति हलायुधः । व्यवायकाले सुरतकाले । वनमोको निवासो ययोस्तौ वनौकौ ॥ ५७ ॥ द्विजपत्नी राक्षसस्य कृपाजननायावध्यत्वे चानेकानि कारणान्याह — न भवानित्यादिना ॥ ५८ ॥

---

[1] कञ्चिच्चरन् — शे. [2] मुमोच — शे । कञ्चिद् राक्षसं जघान तस्य भ्रातरं मुमोच । सः पलाय्य गतः — शे.

मदयन्त्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ।
देहि मेऽपत्यकामायास्त्वकृतार्थं पतिं द्विजम् ॥ ५९ ॥

देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ ६० ॥

एष हि ब्राह्मणो विद्वान् तपःशीलगुणान्वितः ।
आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ ६१ ॥

सर्वभूतात्मभावेन भूतेष्वन्तर्हितं गुणैः ।
सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद् विभो ॥ ६२ ॥

कथमर्हति धर्मज्ञ वधं पितुरिवात्मजः ।
तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ ६३ ॥

कथं वधं यथा बभ्रुवा[1] मन्यते सम्मतो भवान् । भ्र्
यद्ययं क्रियते भक्ष्यस्तर्हि मां खाद पूर्वतः ॥ ६४ ॥

न जीविष्ये विना येन क्षणं च मृतकं यथा ।
एवं करुणभाषिण्या विलपन्त्या अनाथवत् ॥ ६५ ॥

व्याघ्रः पशुमिवाखादत् सौदासः शापमोहितः ।
ब्राह्मणी वीक्ष्य भर्तारं पुरुषादेन भक्षितम् ॥ ६६ ॥

शोचन्त्यात्मानमुर्वीशमशपत् कुपिता सती ।
यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ ६७ ॥

---

सर्वभूतात्मभावेन सर्वभूतनियामकत्वेन, भूतेष्वन्तर्हितमदृश्यत्वेन स्थितम् । गुणैः पूर्णमिति शेषः ॥ ६१ ॥ भ्रूणस्य स्वयमेव पुत्रस्य[2] । ब्रह्मवादिनः ब्रह्मज्ञानिनः षडङ्गवेदाध्यायिनो वा ॥ ६३ ॥

बभ्रवाः सौरभेय्याः । 'माहेयी सौरभेयी च बभ्रुः स्याद् वृषकांक्षिणी' इत्यभिधानम् ॥ ६४ ॥ येन पत्या । मृतकं प्राणरहितशरीरम् । प्राणमन्तरेण यथा मृतकं देहं तथा मज्जीवनमनेन विनेति भावः ॥ ६५ ॥

---

[1] बभ्रोः—शे. [2] 'भ्रूणोऽर्भके स्त्रैणगर्भे' इत्यमरः । भ्रूणः स्त्रीगर्भयोरिति भानुः । स्त्रैणगर्भो नाम स्वयमपत्यतयाऽधुना न जात इति स्वयमेव वर्तत इत्यर्थः—स.

तत्रापि [1]मृत्युरापातादकृतप्रज्ञ दर्शितः ।
एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ ६८ ॥
तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ।
विशापो द्वादशाब्दान्ते मैथुनाय समुद्यतः ॥ ६९ ॥
विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ।
तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणा प्रजाम् ॥ ७० ॥
वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् ।
सा वै सप्त समा गर्भमबिभ्रन्न व्यजायत ॥ ७१ ॥
जघ्नेऽश्मनोदरं तस्मात् सोऽश्मकस्तेन कथ्यते ।
अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ ७२ ॥
नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ।
ततो दशरथस्तस्मात् पुत्र ऐलबिलिः स्मृतः ॥ ७३ ॥
राजा विश्वसहो यस्य खट्वाङ्गश्चक्रवर्त्यभूत् ।
यो देवैरर्थितो दैत्यानवधीद् युधि दुर्जयान् ॥ ७४ ॥
[2]मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं सन्दधे मनः ।
न मे ब्रह्मकुलात् प्राणाः कुलदैवान्न चात्मजाः ॥ ७५ ॥

---

हे अकृतप्रज्ञ अशिक्षितबुद्धे, तव मृत्युरेवं गर्भाधानसमये दर्शितो भवेत् । आपातादतर्कितात् कालादिति शेषः[3] । मित्रसहं कल्माषपादम् ॥ ६८ ॥ प्रास्य निक्षिप्य ॥ ६९ ॥

ब्राह्मण्या शापं विज्ञाय स मित्रसहः स्त्रीसुखं स्त्रियं दूरीकृत्य कर्मणा मैथुनलक्षणेन प्रजां सन्ततिं तत्याज ॥ ७० ॥ तर्ह्यस्य केन विधिना पुत्रो जात इति तत्राह— वसिष्ठ इति । तेन सौदासेन अनुज्ञातः मद्भार्यायां पुत्रमुत्पादयेति । समाः संवत्सरान् ॥ ७१ ॥ निःक्षत्रे परशुरामेण दुष्टक्षत्रियसंहारे कृते सति, क्षत्रियवंशस्य मूलमभवदतो मूलक इति चाप्युक्तः ॥ ७३ ॥ खट्वाङ्गो दैत्यान् निहत्य स्वपुरं गत्वाऽऽयुर्मुहूर्तावधिकं ज्ञात्वैवं मनः सन्दधे ॥ ७४ ॥ कथं तदिति तत्राह— न म इति । कुलदैवात् ब्राह्मणकुलात् मे प्राणादयो नातिवल्लभा इत्यन्वयः ॥ ७५ ॥

---

[1] मृत्युराधानात्—स.शे. [2] एतच्छ्लोकमारभ्य श्लोकचतुष्टये उत्तरार्धमुत्तरान्वयि । [3] आधानाद् गर्भाधानमप्राप्य स्थितस्य मृत्युः प्रदर्शितः । आपातादिति पाठे गर्भगन्दर्भकरेतईषत्पातात् सम्यगपत्योत्पत्तिहेतुभूतात् प्रागेवेत्यर्थः—स

न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ।
न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ ७६ ॥

नापश्यमुत्तमश्लोकादन्यत् किञ्चन वस्त्वहम् ।
देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ ७७ ॥

न वृणे ह्यवमं कर्म भूतभावनभावनात् ।
येविक्षिप्तेन्द्रियधियो देवास्ते स्वहृदि स्थितम् ॥ ७८ ॥

न विदन्ति प्रियं शश्वदात्मानं किमुतापरे ॥ ७९ ॥

अथेशमायारचितेषु सङ्गं गुणेषु गन्धर्वपुरोपमेषु ।
रूढं प्रकृत्याऽऽत्मनि विश्वभर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥८०॥

इति व्यवसितो बुध्या नारायणगृहीतया ।
हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥ ८१ ॥

यत् तद् ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ।
भगवान् वासुदेवेति यं गृणन्ति हि सात्वताः ॥ ८२ ॥

---

मह्यं मम मतिः ॥ ७६ ॥ वस्तु अप्रतिहतम् ॥ ७७ ॥ भूतभावनस्य भूतोत्पादकस्य हरेर्भावनाद् उपासनादन्यदवमं कर्म मोक्षसाधनत्वेन न वृणे । अविक्षिप्तेन्द्रियधियः[1] । आत्मानं हरिम् ॥ ७८-७९ ॥ किमनेन बहुनोक्तेनापि, एवं मम सिद्धान्त इति सन्दधाति—अथेति । अथाहं तं श्रीहरिं प्रपद्य इत्यन्वयः । किं कृत्वा ? ईशस्य हरेर्मायया विकृतैः पृथिव्यादिपञ्चभूतै रचितेषु गुणेषु देहेन्द्रियादिषु गन्धर्वपुरोपमेषु नश्वरेषु । आत्मनि मनसि । प्रकृत्या स्वत एव रूढं सङ्गं स्नेहलक्षणं पाशं हित्वा । त्यागे साधनमाह—विश्वभर्तुरिति । भावेन भक्त्या ॥ ८० ॥

अज्ञानमज्ञाननिमित्तकम्, अन्यस्मिन् स्वतन्त्रेतरे देहगेहादौ भावं विद्यमानं ममतादिरूपं सङ्गं हित्वा तं स्वं स्वतन्त्रं भावं नारायणाख्यं नित्यपदार्थमाश्रितः ॥ ८१ ॥

भावशब्दस्य लीलाद्यनेकार्थेषु वृत्तेरत्र विवक्षितः क इति तत्राह—यत् तदिति । उत्तरलिङ्गविवक्षया यत् तदिति । वेदान्तिनो यं भावं परं ब्रह्मेति गृणन्ति, योगिनः सूक्ष्ममिन्द्रियागोचरमाकाशवदिति सङ्गिरन्ते, केचिदवैदिकाः शून्यनाम्ना कल्पितं जल्पन्ति । न तत् तत्त्वमित्याह-अशून्यमिति ।

---

[1] विक्षिप्तेन्द्रियधिय इति श्रीधरादयोऽच्छिनन् । तथात्वे किमुताऽपरे इत्युक्तकैमुत्यानुपपत्तेः एवं च्छेदः प्रादर्शि टीकाकारैः ।

खट्वाङ्गाद् दीर्घबाहुश्च रघुस्तस्मात् पृथुश्रवाः[1] ।
अजस्तस्मान्महाराजस्तस्माद् दशरथोऽभवत् ॥ ८३ ॥

तस्यापि भगवानेष साक्षाद् ब्रह्ममयो हरिः ।
अंशांशेन चतुर्धाऽगात् पुत्रत्वं प्रार्थितः सुरैः
रामलक्ष्मणभरतशत्रुघ्नाश्चेति संज्ञया ॥ ८४ ॥

तस्यानुचरितं राजन् ऋषिभिस्तत्त्वदर्शिभिः ।
श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ ८५ ॥

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथिरुजो[2] यो हरीन्द्रानुजाभ्याम् ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भः
[3]त्रस्ताऽब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतीर्णः[4] ॥

---

सात्वताः पञ्चरात्रिकाः यं भगवानिति ब्रह्मेति च । गृणन्ति तं भावमाश्रित इत्यन्वयः । हिशब्देनोक्तार्थस्य प्रमाणप्रसिद्धिं दर्शयति 'ब्रह्मविदाप्नोति परम्' 'तस्यान्ते सुषिरं सूक्ष्मं' 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' 'शमूनं कुरुते यस्माच्छून्यस्तस्माज्जनार्दनः' इत्यादेः शून्यं तत्त्वमबाध्यमिति च ॥ ८२-८३ ॥ ब्रह्ममयो वेदमुख्यार्थभूतः । स्वयमंशेन लक्ष्मणादिषु अंशांशेन[5] ॥ ८४ ॥

तत्त्वदर्शिभिः ऋषिभिर्वर्णितं तस्य सीतापतेर्भूरि फलतो महच्चरमनुचरितम् ॥ ८५ ॥

त्वया पुनः पुनः श्रुतमपि सूत्रप्रायश्लोकेन सङ्क्षिप्य कथ्यमानम् शृणुष्वेत्याशयेनाह — गुर्वर्थे इति । गुर्वर्थे, पित्रर्थे । पद्मपद्भ्यां पद्मोपमचरणाभ्याम् । मृजितपथिरुजः मार्जितमार्गक्लेशः । हरीन्द्रानु-

---

[1] पृथुश्रवा इति रघ्वजान्वयि–स. [2] मृजितपथरुजः-स. । यो वाटः पथश्चेति त्रिकाण्डकोशात् स्वतन्त्रोऽदन्तः पथशब्दः—स. । मृजितपथिरुज इति पाठः स्वरसः—स । [3] त्रस्ताब्धिर्बद्धसेतुः—शे.

[5] स वासुदेवः प्रथमं रामो बभूव । लक्ष्मणादिषु सङ्कर्षणादिरूपेण प्राविशदिति । चतुर्मूर्तेर्मुकुन्दस्य मूर्तिरेवाग्रतोऽभवत् । अन्येषु त्रिषु तिस्रोऽन्याः प्राविशन्निति सम्मतम्—शे.

[4] अवताम्न इति पाठोऽवताम्नः—स. । योऽनुवनं जलमनु व्यचरत् स एवावतीर्ण इत्यन्वयेनापि नारायण एवायमिति भावो ध्वन्यते । दशाप्यवतारा एतेन सङ्गृहीता इति भाति । तथाहि—अनुवनं गुर्वर्थे सत्यव्रतोपरि निहितभाररूपप्रयोजनार्थं जलमनुसृत्यावतीर्णो यो व्यचरदिति वा योऽनुवनं व्यचरत् स मत्स्योऽवतादिति वाऽन्वयः॥१॥ यो गुर्वर्थे मन्दरभारमुद्दिश्यानुवनं व्यचरत् कूर्मः । यथापूर्वमुर्वरितम् ॥२॥ अनुवनं काननमनुसृत्य पाणिस्पर्शाक्षमाभ्यां पाणिस्पर्शे आ क्षमा धरा ययोस्ताभ्यां पद्मपद्भ्यां व्यचरत् स वराहः । पादसंवाहिका मही यस्येति

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ।
पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुङ्गवाः ॥ ८७ ॥

यो लोकवीरसमितौ धनुरैशमुग्रं
सीतास्वयंवरगृहे त्रिशतोपनेयम् ।
आदाय बालगजलील इवेक्षुयष्टिं
सज्जीकृतं नृप विकृष्य बभञ्ज मध्ये ॥ ८८ ॥

---

जाभ्यां सुग्रीवलक्ष्मणाभ्याम् । वैरूप्यात्[1] नासिकाच्छेदलक्षणाद् हेतोस्तया प्रलोभितेन रावणेन भार्याया अपहारात्, प्रियायाः सीताया जातो यो विरहस्तेनोद्भूतया रुषा आरोपितभ्रूविजृम्भः उन्नमितभ्रूभङ्गः । अत्र निमित्तमाह—श्रुत्वाऽऽविः इति । हनुमतो मुखेन लङ्कायां प्रियाया [2]आविः भावं श्रुत्वा । खला एव दवः खलदवः, तस्य खलदवस्य दाहे दहनेऽग्निः । 'दवदावौ वनारण्यवह्न्योः' इति यादवः । एवंविधो भगवान् कोसलेन्द्रनाम्ना भुव्यवतीर्ण इत्यन्वयः । अवतान्न इति केचित् पठन्ति ॥ ८६ ॥

एकपद्येन सूत्रवत् संक्षिप्य कथितं रामचरितमादित एव किञ्चित् प्रपञ्चयति—विश्वामित्रेति । येनैव ॥ ८७ ॥ लोके ये वीरास्तेषां समितौ सभायाम् । ऐशं शिवसंबन्धि । त्रिशतैरनेकैः पुरुषैरुपनेयं समीपमानेतुं योग्यम् । सज्जीकृतं ज्यया सहितं कृतम् ॥ ८८ ॥

---

भावः ॥३॥ गुरोः प्रह्लादपितुरर्थे निवृत्तौ तामुद्दिश्य योऽवतीर्णः स नृसिंहः ॥४॥ गुर्वर्थे गुरुर्बृहस्पतिस्तस्यार्थे । अवमानेन अदृश्यतारूपनिवृत्तौ यस्त्यक्तराज्यस्तस्य । गुरोर्ज्येष्ठत्वात् पितृसमस्येन्द्रस्यार्थे । तस्मा इति यावत् । त्यक्तं बलित उपहृत्य दत्तं राज्यं येनेति वामनः ॥५॥ गुर्वर्थे पूज्यकश्यपार्थे त्यक्तराज्य इति जामदग्न्योऽत एव धरायाः काश्यपीत्यभिधा ॥६॥ प्रस्तुतस्तुतश्चैकः ॥७॥ गुर्वर्थे उग्रसेनार्थे त्यक्तराज्यो, याः प्रियाः अत्यक्तराज्योऽत्यक्तपङ्क्तयस्तासां पाणिस्पर्शाक्षमाभ्यां पद्मपद्भ्यामनुवनं मृजितपथिरुजो व्यचरद् यः स कृष्णः ॥८॥ यो वैरूप्याद् वैरूप्येण दिगम्बरतयाऽततीति स तथा बुद्धः ॥९॥ यश्च हरीन्द्रो वाजिराजस्तस्याऽनु पश्चाद्भागे जायेते इति तौ ताभ्यां पद्मपद्भ्यां मृजितपथिरुजः । चतुष्ट्वात् पादानां कथं द्वयोरेव ग्रहणमित्यतोऽप्याह । पद्मपद्भ्यां पाणिस्पर्शाक्षमाभ्यां योग्यतया हरीन्द्रपदार्थान्वयः । पाणिस्पर्शमात्रेण न विद्यते क्षमा भूः स्पृश्यत्वेन ययोस्ताभ्यामुत्तानीकृताभ्यामिति यावत् । इति चतुर्भिः पादैः । यदाऽश्वस्य पाणिस्पर्शोऽसम्भावितस्तदा कथा दुर्दशा किं शंसनीयेति द्योत्यतेऽनेन कल्की ॥१०॥—स.

[1] वैरूप्यादिति प्रथमान्तम् । वैरूप्यम् आतयति प्रापयतीति । यद्वा वैरूप्यादिति पञ्चमी (ल्यब्लोपनिमित्ता) वैरूप्यमारभ्य यो व्यचरदित्यन्वयः—स. [2] प्राकाश्यार्थे आविः इत्यव्ययम् । आविः भावं लङ्कायां सीतायाः स्थितिमिति भावः । प्राकाश्ये प्रादुराविः स्यादित्यमरः ।

जित्वात्मरूपगुणशीलवयोऽनुरूपां
सीताभिधां श्रियमुरस्यभिलब्धमानाम् ।
मार्गे व्रजन् भृगुपतेर्व्यनयत् प्ररूढं
दर्पं महीं कृतवतो हतराजबीजाम् ॥ ८९ ॥

यः सत्यपाशपरिवीतपितुर्निदेशं
स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ।
राज्यश्रियं प्रणयिनः सुहृदोऽधिवासं
त्यक्त्वा ययौ वनमसूनिव मुक्तसङ्गः ॥ ९० ॥

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धे-
स्तस्याः खरत्रिशिरदूषणमुख्यबन्धून् ।
जघ्ने चतुर्दशसहस्रमवारणीय-
कोदण्डपाणिरटमान उवास कृच्छ्रम् ॥ ९१ ॥

सीताकथाश्रवणदीपितहृच्छयेन
सृष्टं विलोक्य नृपते दशकन्धरेण ।

---

उरसि वक्षस्यभिलब्धमानां प्राप्तमानाम् , तत्र स्थितामित्यर्थः । आत्मनः स्वस्य रूपादिभिरनुरूपा या सीताभिधा श्रीर्लक्ष्मीस्तां जित्वा प्राप्य, स्वर्जित इतिवत् , मार्गे व्रजन् रामो हतराजबीजां निर्मूलितक्षत्रसन्ततिं महीं कृतवतो भृगुपतेः परशुरामस्य प्ररूढं दर्पम् उन्नतमदं व्यनयदपनीतवानित्यन्वयः ॥ ८९ ॥

यो रामः सत्याख्यपाशेन परिवीतस्य परिवेष्टितस्य पितुर्निदेशमाज्ञां शिरसाऽपि पितृसम्भावनार्थं जगृह इत्यन्वयः । अपिर्जुगुप्सितार्थो वा । जुगुप्सायां किं निमित्तमित्यत उक्तम्— स्त्रैणस्येति । स्त्रीजितस्य । सभार्य इत्यनेन तस्या अपि बहुमानातिशयं सूचयति । असूनिवेत्यनेन राज्यलक्ष्म्यादीनामशक्यत्याज्यतां दर्शयति । मुक्तसङ्ग इत्यनेन 'असङ्गो ह्ययं पुरुषः' इति श्रुतिसिद्धनित्यासङ्गतां दर्शयति । अधिवासम् अयोध्याम् ॥ ९० ॥

रक्षःस्वसुः शूर्पणख्याः रूपं व्यकृत कर्णनासिकाच्छेदनलक्षणविकारं कारितवान् । कृच्छ्रं लोकरीत्या यथा तथा अटमानः, वन इति शेषः ॥ ९१ ॥

शूर्पणखीमुखात् सीतायाः सौन्दर्यादिविषयकथायाः श्रवणेन दीपितः प्रज्वलितो हृच्छयः कामो यस्य स तथा । तेन दशकन्धरेण रावणेन सृष्टं प्रतिपाद्य प्रेपितम् । 'त्यागो विहापितं दानमुत्सर्जन-

[1]जघ्ने कृतैणवपुषाऽऽश्रमतोऽपकृष्टो
मारीचमाशु विशिखेन यथाऽरिमुग्रः ॥ ९२ ॥

रक्षोधमेन वृकवद् विपिनेऽसमक्षं
वैदेहराजदुहितर्यपयापितायाम् ।
भ्रात्रा वने कृपणवत् प्रियया वियुक्तः
स्त्रीसङ्गिनामिति रतिं प्रथयंश्चचार ॥ ९३ ॥

[2]दग्ध्वाऽऽत्मकृत्यहतकृत्यमहन् कबन्धं
सख्यं विधाय कपिभिर्दयितागतिं तैः ।
बुद्ध्वाऽथ वालिनि हते प्लवगेन्द्रसैन्यै-
र्वेलामगात् स मनुजोऽजभवार्चिताङ्घ्रिः ॥ ९४ ॥

---

विसर्जने । 'विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्' इत्यमरः । कृतैणवपुषा विरचितमृगाकारेण आश्रमतः समीपे विचरन्तं विलोक्य सीतया अपकृष्टः उल्लिखितः । वशीकृत इति यावत् । आश्रमतोऽपकृष्टो दूरं नीतो रामो विशिखेन मारीचम् आशु जघ्न इत्यन्वयः । उग्रो नरसिंहो हिरण्यकशिपुनामानम् अरिं यथा । 'उग्रो जघ्ने वीर्याय स्वधावान्' इति श्रुतिः । उग्रो रुद्रोऽन्धकाख्यं रिपुं वा । 'उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत्' इत्यमरः ॥ ९२ ॥

निर्ऋत्यादिराक्षसविवक्षया रक्षोधमेन रावणेन विपिने वृकवत् स्थितेन, वृणोत्यावृणोत्यात्मानमिति वृकः । वेषान्तरेण स्थितेनेत्यर्थः । असमक्षमप्रत्यक्षं, रामस्येति शेषः । वैदेहराजदुहितरि सीतायामपयापितायामपनीतायाम्, अवने नियुक्तेन भ्रात्रा लक्ष्मणेन रहितायामिति शेषः । प्रियया सीतया वियुक्तः, लोकदृष्ट्येति शेषः । स्त्रीसङ्गिनां विटानां रतिमितीत्थं प्रथयन् प्रख्यापयन् चचार ।

---

[1] जघ्नेऽद्भुतैणवपुषा—शे

[2] अयं श्लोको विजयध्वजतीर्थेन व्याख्यायि । परं सत्यधर्मतीर्थैः शेषाचार्यैश्च व्याख्यायि । सत्यधर्मतीर्थैस्तु एवं व्याख्यायि—'दग्ध्वेति श्लोकः प्रक्षिप्त इति कैश्चिन्न व्याख्यातः । कथासंग्राहक इति गङ्गाजलमिलितेतरजलवत् निर्णयाभावेन व्याख्यास्यामः । आत्मकृत्यं आत्मनः स्वस्य कृत्येन युद्धाख्यव्यापारेण हतेति सत आवृत्तमन्वेति । हतहृतकृत्यं हतश्चासौ हृतं गतं कृत्यं प्रेतकार्यं यस्य स तं, मन्दचेष्टितमित्याचार्योक्तेः, गतव्यापारं गतासुम् अनन्तरं दग्ध्वा । आत्मकृत्ये सीतान्वेषणरूपस्वकार्ये हतकृत्यमिति वा । अथ कबन्धमहन् हतवान् । कपिभिः सुग्रीवादिभिः सख्यं विधाय वालिनि स्वेन हते सति तैर्दयितागतिं हनुमदादिभिर्भार्यास्थितिं बुद्ध्वा ज्ञात्वा सैन्यैः सह वेलां नीरनिधितीरमगात् । अजभवार्चिताङ्घ्रिर्ब्रह्मरुद्रपूजितपादः स मनुजस्त्वत्त्वेनाविर्भूतोऽवतात् । स मनुजः, इति काकुः । न मनुज इत्यर्थ इति वा । यो मनुजः स त्वमज हरे भवार्चिताङ्घ्रिर्भवेति शुकः प्रार्थयतीत्यर्थ इति वर्णयन्ति' इति ।

यद्रोषतीव्रपरिवृत्तकटाक्षपात-
संभ्रान्तनक्रमकरो भयगीर्णघोषः ।
सिन्धुः शिरस्यर्हणं परिगृह्य रूपी
पादारविन्दमुपगम्य बभाष एतत् ॥ ९५ ॥

तं त्वा वयं जडधियो न विदाम भूमन्
कूटस्थमादिपुरुषं जगतामधीशम् ।
त्वं सत्त्वतः सुरगणान् रजसः प्रजेशान्
मन्योश्च भूतपतयः स भवान् गुणेशः ॥ ९६ ॥

---

अनेन विटजनशिक्षणार्थमेवं दर्शितमिति ज्ञायते, प्रथयन्नित्युक्तेः । किमर्थमेवं कल्पना तत्स्वभावानुभवात् किं न स्यादिति चेन्न— 'नित्यपूर्णसुखज्ञानस्वरूपोऽसौ यतो विभुः । अतोऽस्य राम इत्याख्या तस्य दुःखं कुतोऽण्वपि । तथापि लोकशिक्षार्थमदुःखो दुःखवर्तिवत् । अन्तर्हितां लोकदृष्ट्या सीतामासीत् स्मरन्निव' इति स्मृतिविरोधात् । प्रियया वियुक्तत्वदर्शनमपि लोकदृष्ट्यपेक्षयेति ज्ञातव्यम् । तत् कुतोऽवगतमिति चेत् 'ज्ञापनार्थं पुनर्नित्यसम्बन्धं स्वात्मनः श्रिया[1] । अयोध्याया विनिर्गच्छन् सर्वलोकस्य चेश्वरः । प्रत्यक्षं तु श्रिया सार्धं जगामानादिरव्ययः ।' इति स्मृत्या ज्ञातव्यम् । एवमन्यत्रापि प्रमाणसामर्थ्यात् सर्वत्राप्यनुसन्धेयोऽन्यार्थ इति विशदं समस्तम् ॥ ९३ ॥

इतोऽपि श्रीरामः साक्षान्नारायण एव न देवदत्ताद्यन्यतमः । तस्य प्रियवियोगादिना दुःखप्रकटनमसुरजनमोहनाय, मानुषावतारदेवताजनशिक्षणाय चेत्येतद् अत्रत्यैः श्लोकैरेव ज्ञातुं सुशकमित्याशयेन, अल्पमतीनामनितरसाधारणमाहात्म्यं प्रकटयति— यद्रोषेति । यस्य रामस्य रोषेण तीव्रं यथा तथा परिवृत्तो यः कटाक्षस्तस्य पातेन लक्ष्यवेधवद् विषयीकरणेन सम्भ्रान्ता [2]नक्राश्च मकराश्च यस्मिन् स तथा । भयेन गीर्णो नष्टो घोषो यस्मिन् स तथा । अत एव तूष्णीं स्थित इत्यर्थः । अर्हणमर्घ्यपाद्यादिपूजासाधनम् । रूपी करचरणादिविशिष्टावयवोपेतः ॥ ९५ ॥

जडवदचेतनवद् धीर्येषां ते तथा, ज्ञानपूर्वप्रवृत्तिशून्या इत्यर्थः । जडाधारा इत्यर्थोऽपि ग्राह्यः । अनेन तावदेवास्माकं प्रयोजनमिति सूचयति । वेदान्ते जगत्कारणस्य ब्रह्मत्वं निरणायि । रामस्य तदभावात् तत्त्वं कथमिति चेत् तदस्याप्यस्तीत्याह— त्वमिति । यस्त्वं सत्त्वगुणात् सुरगणान् असाक्षीः,

---

[1] स्वात्मनः श्रिया नित्यसंबन्धस्य ज्ञापनार्थमित्यर्थः ।

[2] कुम्भीरो नक्र उच्यते, मत्स्यविशेषो मकरः—हलायुधः ।

कामं प्रयाहि जहि विश्रवसोऽवमेहं
त्रैलोक्यरावणमवाप्नुहि वीर पत्नीम् ।
बध्नीहि सेतुमिह ते यशसो वितत्यै
गायन्ति दिग्विजयिनो यमुपेत्य भूपाः ॥ ९७ ॥

बध्वोदधौ रघुपतिर्विविधाद्रिकूटैः
सेतुं कपीन्द्रकरकम्पितभूरुहाङ्गैः ।
सुग्रीवनीलहनुमत्प्रमुखैरनेकैः[1]-
र्लङ्कां विभीषणदृशाऽऽविशदाशु दग्धाम् ॥ ९८ ॥

सा वानरेन्द्रबलरुद्धविहारकोष्ठ-
सद्द्वारगोपुरसदोवलभीविटङ्का ।
निर्भज्यमानधिषणध्वजहेमकुम्भ-
शृङ्गाटका गजकुलैर्ह्रदिनीव घूर्णा ॥ ९९ ॥

---

रजोगुणात् प्रजेशान् मनुष्यानसृजः, मन्योस्तमोगुणाच्च भूतपतयः भूतपतीन् ब्रह्मराक्षसादिलक्षणपुरान् उदभावयः स परमाण्वादिमहत्तत्त्वान्तजगतः कर्ता भवान् नान्यः । गुणैः प्रवर्तमानस्य गुणनिमित्ताभिभवो नाशङ्कनीयः, गुणानां तदधीनत्वादित्याशयेनाह—गुणेश इति । क्रोधस्य तमःकार्यत्वात् तेन तल्लक्षयति ॥ ९६ ॥

यथाऽवमेहं विष्ठा शरीरान्निर्गता शुनामुपभोगाय भवति तथाऽयमपि विश्रवसो देहात् निर्गतत्वेनावमेहस्थानीयः त्वच्छरनिर्भिन्नहृदयः शुनामशनाय स्यादित्यतो विश्रवसोऽवमेहमित्युक्तम् । त्रैलोक्यस्य रोदनकारणत्वात् त्रैलोक्यरावणः । हे वीर इह मयि । वितत्यै विस्ताराय । यं सेतुम् ॥ ९७ ॥

विविधाद्रिकूटैर्नानाविधपर्वतशृङ्गैः । कपीन्द्राणां करैः कम्पितानि भूरुहाणां वृक्षाणाम् अङ्गानि शाखोपशाखालक्षणानि येषु तानि तथा तैः ॥ ९८ ॥

यदा सा लङ्का रामेणाविष्टा तदा गजकुलैर्ह्रदिनीव घूर्णाऽभूदिति शेषः । विहरन्त्यस्मिन्निति विहारः क्रीडास्थानम् । कोष्ठमन्तर्गृहम् । सद्द्वारं सभाद्वारम्, प्रशस्तद्वारं वा । गोपुरं पुरद्वारम् । सदः सभास्थानम् । वलभी गृहाच्छादनान्तर्नाली, दारुभिः परितो निर्मिता गोपानसीति कीर्त्यते । विटङ्का पक्षिपेटिका । वानरेन्द्राणां बलेन सेनया रुद्धा आवरिता विहारादयो यस्याः सा तथा ।

---

[1] अनीकैः—शे.

रक्षःपतिस्तदवलोक्य निकुम्भकुम्भ-
धूम्राक्षदुर्मुखसुरान्तनरान्तकादीन् ।
पुत्रान् प्रहस्तमतिकायविकम्पनादीन्
सर्वानुगान् समहिनोदथ कुम्भकर्णम् ॥ १०० ॥

तां यातुधानपृतनामसिशूलचाप-
प्रासर्ष्टिशक्तिशरतोमरखड्गजुष्टाम् ।
सुग्रीवलक्ष्मणमरुत्सुतगन्धमाद-
नीलाङ्गदर्क्षपनसादिभिरन्वितोऽयात् ॥ १०१ ॥

तेऽनीकपा रघुपतेरभिपत्य सर्वे
द्वन्द्वं वरूथमिभपत्तिरथाश्वयोधम् ।
जघ्नुर्द्रुमैर्गिरिगदेषुभिरङ्गदाद्याः
सीताभिमर्शहतमङ्गलरावणेशम् ॥ १०२ ॥

---

'आच्छादने स्याद् वलभी गृहाणां गोपानसी दारुषु वक्रसंस्था । नीध्रं वलीकं पटलान्तमाहुः कपोतपाली च विटङ्कसंज्ञाम्' इति हलायुधः । गोपानसी तु वलभी छादने वक्रदारुणि । कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्' इत्यमरः । निर्भज्यमाना वानरेन्द्रबलेन निर्भिद्यमाना धिषणध्वजाः गृहालङ्कारकेतवः. हेमकुम्भाः सुवर्णकलशाः, शृङ्गाटकाः गृहमुखाग्रत उन्नतत्रिशूलाङ्कगृहैकदेशाः, यस्यां सा तथा । निर्भज्यमानानि धिषणध्वजोपरिस्थहेमकुम्भयुक्तानि शृङ्गाटकानि चतुष्पथानि यस्याः सा इति वा । 'शृङ्गाटकं पथां श्लेषः संस्थानं तु चतुष्पथम्' इति हलायुधः ॥ ९९ ॥

तद् वानरेन्द्रबलकृतं कर्म । समहिनोत् प्राहिणोत् ॥ १००॥ या रावणेन प्रेरिता तां यातुधानपृतनां राक्षससेनाम् ॥ १०१ ॥

रघुपतेस्तेऽनीकपाः सेनानायकाः वरूथं रथगुप्तिमभिपत्य प्राप्य, इभाश्च पत्तयश्च रथाश्चाश्वाश्च योधाश्च यस्मिन् तदिभपत्तिरथाश्वयोधम्, द्वन्द्वं द्वाभ्यां द्वाभ्याम् इभादिभ्यां क्रियमाणं युद्धमभ्युपगम्य राक्षसबलं जघ्नुरित्यन्वयः । 'रथगुप्तिर्वरूथो ना कूबरो ना युगन्धरः' इति यादवः । सीताभिमर्शेन सीतायाः अपहारेण, हतं नष्टं मङ्गलं यस्य स तथा, स चासौ रावणश्च सीताभिमर्शहतमङ्गलरावणः, स एवेशो यस्य तत् तथा तत् ॥ १०२ ॥

रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट
आरुह्य यानकमथाभिससार रामम् ।
स्वः स्यन्दने द्युमति मातलिनोपनीते
विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ १०३ ॥

रामस्तमाह पुरुषादपुरीष यन्नः
कान्ताऽसमक्षमसताऽपहृता स्वयं ते ।
त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य
[1]इच्छामि काल इव कर्तुमलङ्घ्यवीर्यः ॥ १०४ ॥

एवं क्षिपन् धनुषि सन्धितमुत्ससर्ज
बाणं स वज्रमिव तद्धृदयं बिभेद ।
सोऽसृग् वमन् दशमुखैर्न्यपतद् विमानाद्
हा हेति जल्पति जने सुकृतीव रक्षः ॥ १०५ ॥

ततो निष्क्रम्य लङ्काया यातुधान्यः सहस्रशः ।
[2]मण्डोदर्या समं तस्मिन् प्ररुदन्त्य उपाद्रवन् ॥ १०६ ॥

---

रक्षःपती रावणः स्वबलस्य स्वसेनाया नष्टिं नाशमवेक्ष्य रुष्टः कुपितो यानकं पुष्पकविमानमारुह्य श्रीराममभिससार । स्वः स्वर्गात् मातलिनेन्द्रसारथिनोपनीते द्युमति तेजस्विनि स्यन्दने रथे विभ्राजमानं रामं क्षुरप्रैरर्धचन्द्रैरहनत् । 'अर्धचन्द्रः क्षुरप्रः स्यात्' इत्यभिधानम् ॥ १०३ ॥

हे पुरुषादपुरीष राक्षसाधम । 'अपकृष्टं पुरीषं स्याद् विष्ठा निष्ठ्यूतमप्युत' इत्यभिधानम् । असता अप्रशस्तकर्मणा त्वया कान्ता सीता नः अस्माकमसमक्षं यथा तथा वञ्चयित्वाऽपहृता । तस्मादद्य त्यक्तत्रपस्य निर्लज्जस्य जुगुप्सितस्याकार्यकरणात् निन्दितस्य ते कर्मणः फलं कर्तुमिच्छामि । तवाधुना तल्लङ्घनमशक्यमित्याशयेनाह—काल इति । काल इवाऽलङ्घ्यवीर्योऽहम् । कालोऽन्तकः । 'कालो मृत्यौ यमे' इति यादवः । 'वीर्यं पराक्रमे रेतस्यन्नमाहात्म्ययोरपि' इति च ॥ १०४ ॥

स रावणः सुकृती भुक्तपुण्यः, स्वर्गादिव ॥ १०५ ॥

---

[1] यच्छामि काल इव कर्तुरलङ्घ्यवीर्यः—शे. [2] मण्डमन्दपाठात्वानन्ददी । 'मण्डं पिपीलिकामध्यम्' इत्यभिधानात् तद्वदुदरं यस्याः सा । मन्दमल्पमुदरम्—स.

स्वान् स्वान् बन्धून् परित्यज्य [1]लक्ष्मणेषुभिरर्दितान् ।
रुरुदुः सुस्वरं दीना घ्नन्त्य आत्मानमात्मना ॥ १०७ ॥
हा हताः स्म वयं नाथ लोकरावणरावण ।
कं यायाच्छरणं लङ्का त्वद्विहीना परार्दिता ॥ १०८ ॥
न वै वेद महाभाग भवान् कामवशं गतः ।
तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥ १०९ ॥
कृतैषा विधवा लङ्का वयं च कुलनन्दन ।
देहः कृतोऽयं गृध्राणामात्मा नरकहेतवे ॥ ११० ॥

श्रीशुक उवाच —

स्वानां विभीषणश्चक्रे कोसलेन्द्रानुमोदितः ।
पितृमेधविधानेन यदुक्तं साम्परायिकम् ॥ १११ ॥
ततो ददर्श भगवानशोकवनिकाश्रमे ।
क्षामां स्वविरहव्याधेः शिंशुपामूलमाश्रिताम् ॥ ११२ ॥
रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकम्पत ।
आत्मसन्दर्शनाह्लादविकसन्मुखपङ्कजाम् ॥ ११३ ॥
आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ।
विभीषणाय भगवान् दत्वा रक्षोगणेशताम् ॥ ११४ ॥

---

अर्दितान् हिंसितान् । अर्द हिंसायाम् इति धातुः । आत्मानं देहम् , आत्मना देहैकदेशेन हस्तेनेति यावत् ॥ १०७ ॥ सीतायास्तेजसोऽनुभावं सामर्थ्यं येनानुभावेनेमां दशां नीतो गतो भवान् कामवशं गतो नैव वेद ॥ १०९ ॥ वयं च विधवाः कृताः । देहो गृध्राणां जीवनाय कृतः । गृध्रप्राणरक्षणेनापि पुण्यं स्यादिति तत्राह—नरकहेतव इति । आत्मा जीवो नरकदुःखानुभवार्थं कृतः ॥ ११० ॥ पितृमेधविधानेन शवदाहादिविधिना । साम्परायिकं परलोकसुखसाधनम्॥ १११॥ क्षामामित्यादिकमसुरमोहार्थम्॥ ११२ ॥ भ्रातृभ्यां भरतशत्रुघ्नावनुसृत्य लक्ष्मणसुग्रीवाभ्यां, लक्ष्मण-विभीषणाभ्यां वा । छत्रिन्यायेन वा ॥ ११४ ॥

---

[1] शवं दुर्योधनादींस्ते धनञ्जयशरैर्हतान् , इत्यादौ क्वचित् पुंव्यत्यासेनोक्तिरिव लक्ष्मणेत्युक्तिः । उपलक्षणीयो राम इति केचित् । लक्ष्मणं रामनाम येष्विषुषु ते लक्ष्मणेषवस्तैरिति वा । रामनामाङ्कितैः शरैरिति रामायणोक्तेः । ' लक्ष्मणं नाम्नि चिह्ने च रामभ्रातरि लक्ष्मणे इति विश्वः—स.

लङ्कामायुश्च कल्पान्तं ययौ तीर्णव्रतः पुरीम् ।
अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ११५ ॥

उपगीयमानचरितः शतधृत्यादिभिर्मुदा ।
गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ॥ ११६ ॥

महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयम् ।
भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ ११७ ॥

पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ।
नन्दिग्रामात् स्वशिबिरात् गीतवादित्रनिःस्वनैः ॥ ११८ ॥

ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ।
स्वर्णकक्ष्यैर्गजैश्चापि हैमैश्चित्रध्वजै रथैः ॥ ११९ ॥

सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ।
श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चागात् सदोद्यतैः ॥ १२० ॥

पारमेष्ठ्यान्युपादाय [1]भाण्डान्युच्चावचानि च ।
पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ १२१ ॥

पादुके न्यस्य पुरतः प्राञ्जलिर्बाष्पलोचनः ।
तमाश्लिष्य दृढं दोर्भ्यां स्नापयन् नेत्रजैर्जलैः ॥ १२२ ॥

रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽभवंस्ततः ।
तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ १२३ ॥

---

तीर्णव्रतः पूर्णवनवासव्रतः ॥ ११५ ॥ शतधृत्यादिभिः ब्रह्मादिभिः । गोमूत्रयावकं गोमूत्रपक्वयावान्नभोजिनम् । भ्रातरं भरतम् ॥ ११६ ॥ स्वर्णकक्ष्यैः सुवर्णमयी कक्ष्या उदरबन्धो येषां ते तथा तैः । हैमैर्हेमालंकृतैः । चित्रा नानावर्णा ध्वजा येषां तैः ॥ ११९ ॥ रुक्मसन्नाहैः स्वर्णनिर्मिताः सन्नाहाः कवचानि येषां तैः । पुरटवर्मभिः सुवर्णकवचैः । श्रेणीभिरङ्गरक्षकैः ॥ १२० ॥ पारमेष्ठ्यानि आगतेऽतिथौ ब्रह्मत्वानुसन्धानेन क्रियमाणार्घ्यपाद्याद्युपयुक्तानि उच्चावचान्यनेकविधानि भाण्डानि[2] ॥ १२१ ॥ ततस्तत्र येऽभवंस्तेभ्यो विप्रेभ्यो वसिष्ठादिभ्यः ॥ १२२ ॥

---

[1] पण्यान्युच्चावचानि च—शो.  [2] 'स्याद् भाण्डमश्वाभरणेऽमत्रे' इत्यमरः ।

धुन्वन्त उत्तरासङ्गं पतिं वीक्ष्य चिरागतम् ।
उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा ॥ १२४ ॥

पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ।
विभीषणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ १२५ ॥

धनुर्निषङ्गाञ्छत्रुघ्नः सीता तीर्थकमण्डलुम् ।
अबिभ्रदङ्गदः खड्गं हैमं चर्मर्क्षराण्नृप ॥ १२६ ॥

पुष्पकस्थैर्वृतस्त्वेभिः स्तूयमानश्च बन्दिभिः ।
विरेजे भगवान् राजन् ग्रहैरिन्दुरिवोदितः ॥ १२७ ॥

भ्रातृभिर्नन्दितः सोऽपि सोत्सवां प्राविशत् पुरीम् ।
प्रविश्य राजभवनं गुरुपत्नीश्च मातरम् ॥ १२८ ॥

गुरून् वयस्यावरजान् पूजितः प्रत्यपूजयत् ।
वैदेही लक्ष्मणश्चैव यथायोग्यं प्रणेमतुः ॥ १२९ ॥

पुत्रांस्तन्मातरस्तावत् प्राणांस्तन्व इवोत्थिताः ।
आरोप्याङ्केऽभिषिञ्चन्त्यो बाष्पौघैर्विजहुः शुचः ॥ १३० ॥

जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः ।
अभ्यषिञ्चद् यथैवेन्द्रं चतुःसिन्धुजलादिभिः ॥ १३१ ॥

एवं कृतशिरःस्नानः सुवासाः सदलंकृतः ।
स्वलंकृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ १३२ ॥

अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ।
प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥ १३३ ॥

जुगोप पितृवद् रामो मेनिरे पितरं च तम् ।
त्रेतायां वर्तमानायां कालः कृतसमोऽभवत् ॥ १३४ ॥

---

उत्तरासङ्गमुत्तरीयवस्त्रं, धुन्वन्तः कम्पयन्तः ॥ १२४ ॥ निषङ्गं तूणीरम् । ऋक्षराट् जाम्बवान् ॥ १२६ ॥ गत्वा आगतान् प्राणानवाप्य तन्वः तनवो यथोत्थिता भवन्ति तथा । विरहशुचः ॥ १३० ॥ गुरुर्बृहस्पतिर्यथेन्द्रमभ्यषिञ्चत्, तथा गुरुर्वसिष्ठो राममभ्यषिञ्चत् ॥ १३१ ॥ सिंहोपपदमासनम् । ग्रहणे हेतुमाह—भ्रात्रेति । भ्रात्रा भरतेन ॥ १३३ ॥

रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ।
वनानि नद्यो गिरयो वर्षाणि द्वीपसिन्धवः ॥ १३५ ॥
सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ।
नाधिव्याधिजराक्षुत्तृड्दुःखशोकभयक्लमाः ॥ १३६ ॥
मृत्युश्चानिच्छतां नासीद् रामे राजन्यधोक्षजे ।
एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ १३७ ॥
स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् ।
प्रेम्णाऽनुवृत्त्या शीलेन प्रश्रयावनता सती ।
भिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ १३८ ॥

इति श्रीमद्भागवते नवमस्कन्धे अष्टमोऽध्यायः ।

॥ अथ नवमोऽध्यायः ॥

श्रीशुक उवाच —

भगवानात्मनाऽऽत्मानं राम उत्तमकल्पकैः ।
सर्वदेवमयं देवमीज आचार्यवान् मखैः ॥ १ ॥
होत्रेऽददाद् दिशं प्राचीं ब्रह्मणे दक्षिणां विभुः ।
अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥
आचार्याय ददौ शेषा यावती भूस्तदन्तरा ।
मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥

---

वर्षाणि खण्डाः ॥ १३५ ॥ अनिच्छताम्, मरणमिति शेषः ॥ १३७ ॥ अनुवृत्त्या शुश्रूषया । शीलेनानुकूलस्वभावेन । प्रश्रयेण विनयेनावनता ॥ १३८ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्याष्टमोऽध्यायः ।

॥ अथ नवमोऽध्यायः ॥

आचार्यवानित्यनेन गुरुकुलवासित्वं शिक्षितत्वं च सूचयति[1] । 'आचार्यवान् पुरुषो वेद' इति श्रुतेः ॥ १ ॥

---

[1] आचार्यवान् वसिष्ठविशिष्टः—स.

इत्यदात् स्वमलङ्कारं वासोभ्यामवशेषितः ।
तथा राज्यपि वैदेही सौमङ्गल्यावशेषिता ॥ ४ ॥

ते तु ब्राह्मणदेवस्य वात्सल्यं वीक्ष्य सज्जनाः ।
प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥

अप्रत्तं नस्त्वया किन्नु भगवन् भुवनेश्वर ।
यतोऽन्तर्हृदि संविश्य तमो हंसि स्वरोचिषा ॥ ६ ॥

नमो ब्रह्मण्यदेवाय रामायाकुण्ठमेधसे ।
उत्तमश्लोकधुर्याय न्यस्ततन्वेऽर्पिताङ्घ्रये ॥ ७ ॥

श्रीशुक उवाच —

कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ।
चरन् वचोऽशृणोद् रामो भार्यामुद्दिश्य कस्यचित् ॥ ८ ॥

---

सौमङ्गल्यं मङ्गलसूत्रमेवावशेषितं यस्याः सा तथा ॥ ४ ॥ ब्राह्मणा देवाः पूज्या इति भावो यस्य स तथा तस्य । वात्सल्यं स्नेहपारवश्यम् । भक्त्या क्लिन्नधियो द्रवच्चित्ताः । प्रत्यर्प्य दत्तं पुनर्दत्वा ॥ ५ ॥ हे भगवन् त्वमस्माकं हृदि हृदयस्यान्तः स्वरोचिषा स्वविषयकज्ञानमुत्पाद्य तमोऽज्ञानं हंसि नाशयसि यतोऽतस्त्वया नोऽप्रदत्तं किन्नु ? न किमपि । अत इदं भूदानादिकमधिकं न भवति । ज्ञानधनस्यानश्वरत्वाद् अहार्यत्वाच्च । भवतो भूपालत्वात् तत्कर्म तवैव योग्यम् । तस्मिन् कर्मण्यनधिकारिणो वयम् । तस्मात् प्रत्यर्पणेन दत्तापहारकलङ्कपङ्कलेपो न भवति भवत इति स्वीकृत्य तद्रक्षणं कर्तव्यमिति भावः[1] ॥ ६ ॥

न्यस्ततन्वे भगवति समर्पितस्वरूपाय भक्ताय, अर्पितौ अङ्घ्री[2] येन तस्मै । न्यस्तदण्डार्पिताङ्घ्रये इति पाठे न्यस्तमनोवाक्कायदण्डा विरक्ता योगिनः, तेष्वर्पितोऽङ्घ्रिर्ज्ञानलक्षणा गतिर्येन स तथा तस्मै । अघि गताविति धातुः । उत्तमश्लोकानां ब्रह्मादीनां धुरं भारं वहतीति उत्तमश्लोकधुर्यस्तस्मै ॥ ७ ॥ कस्यचित् पुंसो वचः ॥ ८ ॥

---

[1] यतः हृदि संविश्य अन्तस्तमोऽज्ञानं स्वरोचिषा त्वद्दत्तज्ञानेन हंसि । अत्र नश्वरताधियं रासीति यावत् । त्वं तु भूपालो वयं त्वत्पाल्या नानयाऽन्या कृत्यमस्माकमिति तस्मै प्रत्यार्पयन्निति भावः—स.

[2] ज्ञानानन्दौ पादौ—स.

नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ।
स्त्रैणो हि बिभृयात् सीतां रामो नाहं भजे पुनः ॥ ९ ॥

इति लोकाद् बहुमुखाद् दुराराध्यादसंविदः ।
श्रुत्वा भीतेन सा त्यक्ता प्राप्ता प्राचेतसाश्रमम् ॥ १० ॥

अन्तर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ।
कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥ ११ ॥

अङ्गदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ।
तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥

सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ।
गन्धर्वान् कोटिशो जघ्ने भरतो विजये दिशाम्
तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ १३ ॥

शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ।
हत्वा मधुवनं चक्रे मथुरां नाम वै पुरीम् ॥ १४ ॥

मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ।
ध्यायन्ती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥

तच्छ्रुत्वा भगवान् रामो रुन्धन्नपि धिया शुचः ।
स्मरंस्तस्या गुणांस्तांस्तान् नाशक्नोद् रोद्धुमीश्वरः ॥ १६ ॥

---

[1]बहुमुखाद् बहूनि अन्योन्यशिक्षानियतत्वेनानेकानि मुखानि प्रधानानि यस्य स तस्मात् । अत एव दुराराध्यात् समाधापयितुं दुःसाध्यात् । अत एवासंविदः प्रेक्षासंवादशून्यात् मर्यादारहिताद्वा लोकात् श्रुत्वा लोकापवादभीतेन रामेण त्यक्ता सा सीता प्राचेतसः प्रचेतसो वरुणस्यापत्यं वाल्मीकिस्तस्याश्रमं प्राप्ता ॥ १० ॥

अन्तर्वत्नी गर्भिणी । यमौ यमलौ । क्रियाः क्षत्रयोग्याः जातकर्मादिकाः ॥ १२ ॥

[2]गन्धर्वान् गन्धर्वजन्मनोऽसुरान् ॥ १३ ॥ मुनौ वाल्मीकौ । विवरं भूविलम् ॥ १५ ॥ अपिपदेम लोकशिक्षार्थं सम्भावित एव न त्वनुभूत इत्याह ॥ १६ ॥

---

[1] मुखशब्देन मुखकार्यभाषणं गृहीत्वा बहुमुखादित्यस्य बहुभाषणादित्यर्थः—दु. [2] कोटित्रयं स निजघान तथाऽसुराणां गन्धर्वजन्म भरतेन सतां च धर्मम्, इत्याचार्योक्तेः ते चासुरा इति ज्ञेयम्—स.

स्त्रीपुम्प्रसङ्ग एतादृक् सर्वत्र त्रासमावहः[1] ।
अपीश्वराणां किमुत ग्राम्यस्य गृहमेधिनः ॥ १७ ॥

तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत् प्रभुः ।
त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् ॥ १८ ॥

स्मरतां हृदि विन्यस्य बुद्धं पद्ममिवांशुकैः ।
स्वपादपल्लवं राम आत्मज्योतिरगात् ततः ॥ १९ ॥

नेदं यशो रघुपतेरिह विश्वमूर्ते-
लीलातनोरधिकशान्तविमुक्तधाम्नः ।
रक्षोवधो जलधिबन्धनमस्त्रपाणेः
किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥

---

ततः अस्या भूमिनिवेशानन्तरम् अखण्डितमग्निहोत्रमजुहोत् । पूर्वं क्वचित् खण्डितमित्यर्थो नैव । किन्तु ततः पूर्वं च । ब्रह्मचर्यं धारयन्नित्यस्याप्यूर्ध्वरेतस्त्वं नार्थः । किन्तु ब्रह्मणा लक्ष्म्या सीतया सह चर्यं चरणं धारयन् कुर्वन्नेवेत्यर्थः । 'मम योनिर्महद्ब्रह्म' इति श्रुतेः । अन्यथा त्रयोदशसहस्रमित्युक्तिरसङ्गता स्यात् । सर्वात्मना राज्यभरणस्य तावत्त्वात् । तस्मात् क्षितिमण्डलं त्रयोदशसहस्रमब्दं ब्रह्मलोकसमं कृत्वेति बोध्यम् । तदुक्तं 'नक्षत्रमासगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम्' इति[2] ॥ १८ ॥

ततोऽयोध्यायाः अगाद्, वैकुण्ठमिति शेषः । अंशुकैः सूर्यकिरणैः बुद्धं विकसितं पद्ममिव शोभमानं स्वपादपल्लवं स्मरतां पुंसां हृदि विन्यस्य निधिवन्निधाय । आत्मज्योतिः स्वप्रकाशः ॥ १९ ॥

रघुपतेरिदं यशो वक्ष्यमाणलक्षणं न । किं तन्निपेध्यमिति तत्राह—रक्ष इति । राक्षसवधो यः, यच्च जलधिबन्धनम् तद् इदमिति । नेदं विस्मयावहमित्यत्र हेतुमाह—विश्वमूर्तेरिति । 'तत् सृष्ट्वा तदेवानुप्राविशत्' इति श्रुतेः । किं प्रयोजनमुद्दिश्य रघुपतिनामरूपग्रहणमित्याशङ्क्य, न किमपीत्याशयेनाह—लीलातनोरिति । लीलार्था तनुर्यस्य तस्य । शरीरग्रहणेन किमपि प्रयोजनं वर्तेत इत्यत आह—अधिकेति । सर्वस्मादधिकं शान्तमानन्दपूर्णं नित्यमुक्तं धाम स्वरूपं यस्य स तथा तस्य, अस्त्रपाणेर्धनुष्पाणेः श्रीरामस्य कपयः शत्रुहनने सहायाः बलभूताः किम् ? नेत्यर्थः ॥ २० ॥

---

[1] त्रासमावह इत्यनुगार्थः । सर्वत्रापि भयावह इत्यभयावहः पाठः—श.

[2] तत ऊर्ध्वं सीतायाः भूमिप्रवेशानन्तरं, रामः अन्यां [illegible] अखण्डब्रह्मचर्येण [illegible] व्रतं धारयन्निव दृश्यमानः । तदुक्तं 'भूमिप्रवेशादूर्ध्वं सा [illegible] रामः [illegible] समाः । रामोऽपि दृष्ट्वा [illegible] जानकीमात्मजाम्' इति—श.

यस्यामलं नृपसदस्सु यशोऽधुनाऽपि
गायन्त्यघघ्नमृषयो दिगिभेन्द्रपाते ।
तन्नाकपालवसुपालकिरीटजुष्टं
पादाम्बुजं रघुपतेः शरणं प्रपद्ये ॥ २१ ॥

स यैः स्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा ।
कोसलास्ते ययुः स्थानं यत्र गच्छन्ति योगिनः ॥ २२ ॥

पुरुषो रामचरितं श्रवणैरुपधारयन् ।
आनृशंस्यपरो[2] राजन् कर्मबन्धैर्विमुच्यते ॥ २३ ॥

राजोवाच —

[1]कथं स भगवान् रामो भ्रातृन्बन्धुष्ववर्तत ।
प्रजास्वौरसवद् रामः कथं वा राम ईश्वरः ॥ २४ ॥

---

न केवलं नृपसभासु गायन्ति, अपि तु दिगिभेन्द्रपाते दिग्गजानां पातः सञ्चारो यस्मिन् देशे स तथा तस्मिन् लोकालोकप्रदेशेऽपीत्यनेन सर्वत्रेत्याह । नाकपाला इन्द्रादयः । वसुपालाः कुबेरादयः ॥२१॥ यैः स्पृष्टो नमनादिना । दृष्टो वा चक्षुरादिना । उपलक्षणमेतत् श्रुतो वा श्रोत्रादिना । संविष्टः सम्यग् ज्ञातो वा । अनुगतः पृष्ठतो यातो वा । कोसला अयोध्यावासिन इत्युपलक्षणम्, सर्वेऽपीति ग्राह्यम् । यत्र योगिनो भक्तिज्ञानयोगवन्तो गच्छन्ति तत् स्थानं ययुरित्यन्वयः ॥ २२ ॥

पुरुषमात्रस्य श्रद्धया श्रवणमात्रेणाऽपि रामनाम्नः कर्मबन्धमोक्षः स्यादित्याशयेनाह–पुरुष इति । [2]आनृशंस्यपरः प्रमादाद् हिंसाकर्मपरोऽपि । अनेन 'रामो रामो राम इति सर्वेषामभवत् तदा । सर्वो राममयो लोको यदा रामस्त्वपालयत् ।' इति मानमसूचि ॥ २३ ॥

तत्रैवं राजा पृच्छति—कथमिति । स भगवान् भ्रात्रादिषु कथं केन भावेन रामो रमयितृत्वेनावर्तत । औरसवद् यथौरसः स्वदेहोत्पन्नः पुत्रः पित्रादौ कलभाषणादिना रतिप्रदत्वेन प्रवर्तते, तथाऽयमपि केन प्रकारेण रामो रतिप्रदः प्रजास्ववर्तत । किञ्च रामो बालवत् क्रीडावान् कथं केन भावेनेश्वरोऽयमिति सर्वजनबुद्धाववर्तत । इतीदं प्रश्नत्रयं परिहर्तव्यमिति शेषेणान्वयः ॥ २४ ॥

---

[1] कथं स भगवान् रामो भ्रातृन् वा स्वयमात्मनः । तस्मिन् वा तेऽन्ववर्तन्त प्रजाः पौराश्च ईश्वरे—स.शे.

[2] आनृशंस्यपरो मनोवागादिभिरितरहिंसामनाचरन् । न नृशंसः अनृशंसः, तस्य भाव आनृशंस्यम्—स.

श्रीशुक उवाच —

अथादिशद् दिग्विजये भ्रातॄंश्च त्रिदशेश्वरः ।
आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः ॥ २५ ॥

आसिक्तमार्गां गन्धोदैः करिणां मदसीकरैः ।
स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥

प्रासादगोपुरसभाचैत्यदेवगृहादिषु ।
विन्यस्तहेमकलशैः पताकाभिश्च मण्डिताम् ॥ २७ ॥

पूगैः सवृन्तै रम्भाभिः [1]पालिकाभिः सुवाससाम् ।
आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८ ॥

तमुपेयुस्तत्र तत्र पौरा अर्हणपाणयः ।
आशिषो युयुजुर्देव पाहीमां प्राक् त्वयोद्धृताम् ॥ २९ ॥

तं ताः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृज्य गृहान् स्त्रियो नराः ।
आरुह्य हर्म्याण्यरविन्दलोचनं नतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥

---

प्रथमतृतीयप्रश्नौ परिहरति – अथेति । अथ राज्याभिषेकानन्तरं भ्रात्रादौ स्वाज्ञाकारित्वे- नावर्तत । त्रिदशेश्वर इत्यनेन मानवेश्वरत्वं किं वक्तव्यमित्यसूचि । तेन लोकानुकरणायेयं क्रीडेति कथितमित्यर्थः । द्वितीयं परिहरति—आत्मानमिति । स्वात्मसंदर्शनेन जनस्यानन्दजनकत्वेन राम इति बुद्धिं जनयामासेति भावः । पुरीनिरीक्षणं च स्वभक्तानुकंपित्वप्रदर्शनाय ॥ २५ ॥

पुरीं वर्णयति—आसिक्तेति त्रिभिः । गन्धोदैः चन्दनादिगन्धद्रव्यमिश्रजलैः । रावणादीन् निहत्य प्राप्तं स्वामिनमालोक्य, सुतरां हर्षेण मत्तामिव, करिणां मदसीकरैः मदजलबिन्दुभिर्वा मत्तामिव, पेक्षतेत्यनुषङ्गः ॥ २६ ॥ चैत्यं पाषाणादिभिर्बद्धं वृक्षमूलस्थलम् ॥ २७ ॥

[2]सवृन्तैः फलस्तबकसहितैः पूगैः क्रमुकैः, रम्भाभिः कदलीस्तम्भैः, सुवाससां सीमन्तिनीनां हस्तविन्यस्ताभिरादर्शैः दर्पणैरंशुकैर्वस्त्रैः, स्रग्भिः मालाभिश्च, कृतानि विरचितानि कौतुकानि मङ्गलानि येषां तानि तोरणानि यस्यां सा तथा ताम् ॥ २८ ॥ प्राक् वराहावतारकाले त्वया पातालादुद्धृतां, भुवमिति शेषः ॥ २९ ॥

---

[1] पालिकाभिः साङ्कुरशरावादिभिः—स. [2] वृन्तं प्रसवबन्धनम् इत्यमरः ।

अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ।
अनन्तगृहकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥

विद्रुमोदुम्बरद्वारैर्वैदूर्यस्तम्भपङ्क्तिभिः ।
स्थलैर्मारकतैः स्वच्छैर्भातं स्फटिकभित्तिभिः ॥ ३२ ॥

चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुभिः ।
मुक्ताफलैश्चिदुल्लासैः[1] कान्तकामोपपत्तिभिः ॥ ३३ ॥

धूपदीपैः सुरभिभिर्मण्डितैः पुष्पमण्डकैः ।
स्त्रीपुंभिः सुरसङ्काशैर्जुष्टं भूषणभूषणैः ॥ ३४ ॥

तस्मिन् स भगवान् रामः स्निग्धया प्रिययेष्टया[2] ।
रेमे स्वारामचाराणामृषभः सीतया सह ॥ ३५ ॥

बुभुजे च यथाकामं कामं धर्ममपीडयन् ।
वर्षपूगान् बहून् नृणामभिध्येयाङ्घ्रिपल्लवः । ॥ ३६ ॥

इति श्रीमद्भागवते नवमस्कन्धे नवमोऽध्यायः ।

---

[3]विद्रुमैरुदुम्बरैस्ताम्रैः कृतद्वारैः । 'ताम्रं शुल्बमुदुम्बरम्' इत्यभिधानम् । भातं शोभितम् ॥ ३२ ॥ पट्टिकाभिर्वितानैः ॥ ३३ ॥ भूषणानामपि भूषणभूतैः ॥ ३४ ॥

स्वारामाः शोभनोद्यानानि तत्र चारो सञ्चारो येषां देवादीनां ते स्वारामचाराः, तेषामृषभः । निरन्तरं चारुतरोद्यानेषु सञ्चरतामीश्वर इत्यनेनातीवसौख्यं सूचयति । अनेनापि सीतावियोगो नास्तीत्युक्तं भवति । किञ्च सीतया नित्यरमणात् स्वयं सुखरूपत्वात् प्रजानां सुखहेतुत्वात् सर्वजनचित्तनिलयत्वेन राम इति भावः ॥ ३५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य नवमोऽध्यायः ।

---

[1] चिता स्वज्ञानमात्रेण, अवलोकनमात्रेणेति यावत्, उल्लासो विलोकयितृणां येस्ते—स.

[2] प्रिययेच्छया—शे. स्निग्धया स्वस्मिन् भक्तियुक्तया प्रियया भार्यच्छया इच्छानुसारिण्या सीतया सह रेमे—शे.

[3] विद्रुममया उदुम्बरा देहल्यो येषु द्वारेषु तैर्द्वारैः—शं.

॥ अथ दशमोऽध्यायः ॥

श्रीशुक उवाच —

कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ।
पुण्डरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत् ततः ॥ १ ॥

देवानीकस्ततोऽहीनः पारिपात्रश्च तत्सुतः ।
ततो बलस्थलस्तस्माद् वज्रनाभोऽर्कसम्भवः ॥ २ ॥

स्वगणस्तत्सुतस्तस्माद् विधृतश्चाभवत् सुतः ।[3]
ततो हिरण्यनाभोऽभूद् योगाचार्यस्तु जैमिनेः ॥ ३ ॥

शिष्यः सकलमध्यात्मं याज्ञवल्क्योऽध्यगाद् यतः ।
योगं महोदयमृषिर्हृदयग्रन्थिभेदनम्[1] ॥ ४ ॥

[2]पुष्यो हिरण्यनाभस्य ध्रुवसन्धिस्ततोऽभवत् ।
सुदर्शनोऽथाग्निवर्णः शीघ्रस्तस्य मरुत् सुतः ॥ ५ ॥

योऽसावास्ते योगसिद्धः कलापग्राममास्थितः ।
कलेरन्ते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥

तस्मात् तु सुश्रुतस्तस्य सन्धिस्तस्यापि मर्षणः ।
महस्वांस्तत्सुतस्तस्माद् विश्वसाह्वो व्यजायत ॥ ७ ॥

ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ।
एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ ८ ॥

---

अथ श्रीरामपुत्रस्य कुशस्य सन्ततिमनुक्रामति—कुशस्येति । चशब्दः सन्ततेरविच्छेदं सूचयति ॥ १ ॥ अध्यात्मं परमात्मविषयकं योगं भगवत्प्रीत्युपायं शास्त्रम् । महानुदयो मोक्षलक्षणो यस्मात् स तथा । एतदेव विशिनष्टि—हृदयेति । हृदयग्रन्थिरज्ञानं तस्य भेदनं येन तम् । ऋषिर्ज्ञानी ॥ ४ ॥ तस्याग्निवर्णस्य शीघ्रः । तस्य सुतो मरुत् ॥ ५ ॥ तस्मान्मरुतः ॥ ७ ॥ समरे बृहद्बलो ते तव पित्रा अभिमन्युना हतः । अनागतानुत्पत्स्यमानान् । तस्येत्येतत् पूर्वोत्तरत्र संबन्धितव्यम् ॥ ८ ॥

---

[1] हृदयग्रन्थिभेदकम्—शे. [2] पुष्पो—स. [3] स्वगणाद् विधृतः । ततो विधृताद् योगाचार्यो योगशास्त्ररचयिता जैमिनेः शिष्यो(हिरण्यनाभः)। यतो हिरण्यनाभात् स[illegible]अध्यात्मं परमात्मविषयकं महोदयं महानुदय उच्छ्रयो येन तम्, योगं भगवत्प्रीत्युपायसमयम् ऋषिः ज्ञान्ययम (याज्ञवल्क्यः) अध्यगात्—स.

बृहद्बलस्य भविता पुत्रो नाम्ना बृहद्रणः ।
उरुक्षयः सुतस्तस्य वत्सप्रीतो भविष्यति ॥ ९ ॥

प्रतिष्योमस्ततो भानुर्दिवार्को वाहिनीपतिः ।
सहदेवस्ततो भावी बृहदश्वोऽथ भानुमान् ॥ १० ॥

प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः ।
भविता मरुदेवोऽथ सुनक्षत्रोऽथ रुक्षकः ॥ ११ ॥

तस्यान्तरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ।
बृहद्भ्रोजरतु तस्यापि बर्हिस्तस्मात् कृतञ्जयः ॥ १२ ॥

रणञ्जयस्तस्य सुतः सञ्जयो भविता ततः ।
तस्माच्छक्योऽथ शुद्धोदो लाङ्गलस्तत्सुतः स्मृतः ॥ १३ ॥

ततः प्रसेनजित् तस्मात् क्षुद्रको भविता ततः ।
कुणको भविता तस्मान् सुरथस्तनयस्ततः ।
सुमित्रो नाम निष्ठान्तस्त्वेते बार्हद्बला नृपाः ॥ १४ ॥

इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति ।
यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १५ ॥

इति श्रीमद्भागवते नवमस्कन्धे दशमोऽध्यायः ।

---

तस्य सुतपसः सुतोऽमित्रजित् ॥ १२ ॥ सुमित्रो नाम राजा निष्ठाया वंशावलेरन्तोऽवधिभूतः । तत्र समाप्तो वंश इत्यर्थः ॥ १४ ॥

तत् एवदेव विशदयति—इक्ष्वाकूणामिति । सुमित्रोऽन्तोऽवसानं यस्य स तथा । तं सुमित्रनामकम् । संस्थां नाशम्, समाप्तिं वा । 'संस्था व्यवस्था प्रणिधिः समास्याचारमन्त्रिषु' इत्यभिधानम् ॥ १५ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य दशमोऽध्यायः ।

## ॥ अथ एकादशोऽध्यायः ॥

श्रीशुक उवाच —

निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ।
आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः ॥ १ ॥

तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ।
तूष्णीमासीद् गृहपतिः सोऽपीन्द्रस्याकरोन्मखम् ॥ २ ॥

[1]निमिः सत्रविदां विद्वान् सत्रमारभतात्मवान् ।
ऋत्विग्भिरपरैस्तावद् यावत् तन्नागमद् गुरुः ॥ ३ ॥

शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ।
अशपत् पतताद् देहो निमेः पण्डितमानिनः ॥ ४ ॥

निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ।
तवापि पतताद् देहो लोभाद्धर्ममजानतः ॥ ५ ॥

इत्युत्ससर्ज तं देहं निमिरध्यात्मकोविदः ।
मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ।
गन्धर्वस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ ६ ॥

---

अवृत वव्रे । स वसिष्ठोऽपि ॥ १ ॥ तं शक्रस्य यागं निर्वर्त्य समाप्य । प्रतिपालय प्रतीक्षस्व । गृहपतिः निमिः ॥ २ ॥ सन्तत्यमयन्त इति, सत्त्रं त्रायत इति वा सत्रं ब्रह्म, तद्विदां मध्ये विद्वांस्तेषां संशयच्छेत्ता । अपरैर्वसिष्ठव्यतिरिक्तैः ॥ ३ ॥ तावन्नागमदित्यादिना गुर्वपेक्षायाः नियतत्वदर्शनात् तत्प्रतिसन्धानमगणय्य शिष्याय शापदानमधर्म इति कृत्वाऽधर्मवर्तिन इत्युक्तम् । लोभात् पौरोहित्यविषयात् ॥ ५ ॥ वसिष्ठो निमिशापेन देहोत्सर्जनानन्तरं कुत्रोत्पन्न इति तत्राह — मित्रावरुणयोरिति । यो मित्रावरुणयोरुर्वश्यां जज्ञे स मम प्रपितामहो वसिष्ठः[2] । तद्देहं तस्य निमेर्देहं गन्धर्वस्तुषु

---

[1] निमिश्चलमिदं विद्वान्—स.    [2] वसिष्ठो वृद्धप्रपितामह इत्यर्थः । वसिष्ठसुतशक्तिसुतपराशरसुतवेदव्याससुतत्वात् श्रीशुकस्य—शे. अत्र विशेषोऽस्ति । वसिष्ठस्य शक्त्यादयः शतपुत्राः पूर्वं राक्षसो भवेति शप्तकल्माषपादराजेन भक्षिताः । तदा शक्तिभार्या गर्भिणी । तद्गर्भमपि भक्षितुमागतः कल्माषपादः । तदा वसिष्ठस्तद्गर्भं माधवस्तवराजस्तोत्रेण रक्षित्वा जातं पुत्रं स्वस्य पुत्राभावात् स्वपुत्रत्वेन जातकर्मादि कृत्वा स्वपुत्रमकरोत् । अतः शुकस्य व्यासः पिता, पराशरः पितामहः, वसिष्ठः प्रपितामह इत्युक्तं युक्तम्—स.

समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ।
राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ ७ ॥

तथेत्युक्ते निमिः प्राह मा भून्मे देहबन्धनम् ।
यस्य योगं न वाञ्छन्ति वियोगभयकातराः ॥ ८ ॥

भजन्ति चरणाम्भोजं मुनयो हरिमेधसः ।
देहं नावरुरुत्सेऽहं दुःखशोकभयाश्रयम् ॥ ९ ॥

सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥

देवा ऊचुः —

विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ।
उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥ ११ ॥

अराजकभयं नृणां मन्यमाना महर्षयः ।
देहं ममन्थुश्च निमेः कुमारः समजायत ॥ १२ ॥

---

गन्धवासिततैलेषु हरिद्रादिद्रव्यविशेषेषु निधाय[1] ॥ ६ ॥ सत्रनामयागे ॥ ७ ॥ देहलक्षणं बन्धनम् । किमिति देहबन्धो मा भूदिति तत्राह—यस्येति । यस्य देहस्य योगं संबन्धम् । यस्य वियोगभयेन कातरा व्यग्रचित्ताः ॥ ८ ॥ हरिः भक्तजनपापहरणशीला मेधा धारणावती धीः, यस्य स तथा तस्य । 'धीर्धारणावती मेधा' इत्यमरः । हरिवत् सूर्यवत् प्रकाशमाना मेधा यस्येति वा, तस्य विष्णोः । मुनयो वाचंयमाः । तं देहं नावरुरुत्से स्वीकर्तुं नेच्छामि । दुःखं तीव्रवेदना । शोको मन्युः । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । भयं सञ्चलनम् ॥ ९ ॥ नेनोऽपि देहग्रहणेच्छेत्याह—सर्वत्रेति ॥ १० ॥ अदेहस्यास्य वासः कथं घटते, अधिष्ठानाद्यभावादिति तत्राह—लोचनेष्विति । लोचनेष्वस्य सद्भावः कथं जायत इति तत्राह—उन्मेषणेति । किमस्य कर्मेति तत्राह—अध्यात्मेति । अधिकश्चासावात्मा च हरिस्तत्र संस्थितः, परमात्मोपासनायुक्त इत्यर्थः ॥ ११ ॥

---

[1] इति परस्परशापानन्तरं निमिः तं देहं विससर्ज । अध्यात्मकोविदो वसिष्ठोऽपि देहं विससर्ज । तदनन्तरं मित्रावरुणयोः उर्वश्यां दृष्टायां स्कन्ने रेतसि कुम्भे जाम्भते तयोः सकाशाज्जज्ञे । 'यः स कुम्भो रघुश्रेष्ठ तेजःपूर्णो महात्मनोः । तस्मिंस्तेजोमयौ विप्रौ संभूतावृषिसत्तमौ । पूर्वं समभवत् तत्रागस्त्यो भगवानृषिः । नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् । कस्यचित् त्वथ कालस्य मित्रावरुणसंभवः ।' इत्यादिरामायणोक्तेः —रा.

जननाज्जनकः सोऽभूद् वैदेहस्तु विदेहजः ।
मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥

तस्मादुदावसुस्तस्य पुत्रोऽभून्नन्दिवर्धनः ।
ततः सुकेतुस्तस्यापि देवरातो महीपतिः ॥ १४ ॥

तस्माद् बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ।
सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥

मरोः प्रतीन्धकस्तस्माज्जातः कृतरथो यतः ।
देवमीढस्तस्य सुतो विधृतोऽथ महाधृतिः ॥ १६ ॥

कृतिरातस्ततस्तस्मान्महारोमाऽथ तत्सुतः
स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥

ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ।
सीता सीराग्रतो जाता तस्मात् सीरध्वजः स्मृतः ॥ १८ ॥

कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृप ।
धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥

कृतध्वजात् केशिध्वजः खाण्डिक्यस्तु मितध्वजात् ।
कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥

खाण्डिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् गतः ।
भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥

शुचिस्तु तनयस्तस्मात् सनद्वाजस्ततोऽभवत् ।
ऊर्जकेतुः सनद्वाजादजोऽथ कुरुजित्सुतः ॥ २२ ॥

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः ।
ततश्चित्ररथो यस्य क्षेमापिर्मिथिलाधिपः ॥ २३ ॥

---

नामनिर्वचनपूर्वकं जनकस्य वंशं कथयति — **जननादित्यादिना** । मथनेन जननमस्येत्यस्मिन्नर्थे मिथिलेति निपातनम् । शवानां शयनमस्मिन्निति श्मशानमितिवत् । मिथिला पुरी ॥ १३ ॥

सुधृत्पिता सुधृतो जनकः ॥ १५ ॥ सीताजननहेतुत्वेन सीरं ध्वजं गमकं ज्ञापकं यस्य स सीरध्वजः । ध्वज गताविति धातुः ॥ १८ ॥

तस्माद्द्रुमरथस्तस्य सुतः सत्यरथस्ततः ।
आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसम्भवः ॥ २४ ॥

वैवस्वतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ।
श्रुतस्ततो जयस्तस्माद् विजयोऽस्माद् ऋतः सुतः ॥ २५ ॥

शुनकस्तत्सुतो जज्ञे वीरहव्यो धृतिस्ततः ।
बहुलाश्वो धृतस्तस्य कृतिरस्य महावशी ॥ २६ ॥

एते वै मिथिला राजन्नात्मविद्याविशारदाः ।
योगेश्वरप्रसादेन द्वन्द्वैर्मुक्ता गृहेष्वपि ॥ २७ ॥

इति श्रीमद्भागवते नवमस्कन्धे एकादशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

**श्रीशुक उवाच —**

अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ।
यस्मिन्नैलादयो भूपाः कीर्त्यन्ते पुण्यकीर्तयः ॥ १ ॥

सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ।
जातस्यासीत् सुतो धातुरत्रिः पितृसमो गुणैः ॥ २ ॥

---

गृहेषु स्थिता अपि योगेश्वरस्य याज्ञवल्क्यस्य प्रसादेन जनकादयो द्वन्द्वैः शीतोष्णादिभावैः मुक्ता आत्मारामा इत्यर्थः ॥ २७ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य एकादशोऽध्यायः ।

॥ अथ द्वादशोऽध्यायः ॥

अथ सूर्यवंशकथनानन्तरम् । यतः पुण्यश्लोकराजवंशज्ञानं पुरुषार्थसाधनमत इति हेत्वर्थः । गुणविशिष्टपुरुषज्ञानमन्तरेण वंशज्ञानेन कथं पुरुषार्थः स्यादित्यतः क्षिप्रप्रवृत्यर्थं तद्वंश्यान् संक्षिप्याह —यस्मिन्निति । पेलादयः बुधादिलायां जातः पुरूरवा पेलः स एवादिर्येषां ते ॥ १ ॥

तस्य दृग्भ्योऽभवत् पुत्रः सोमोऽमृतमयः किल ।
[1]विप्रौषध्यम्बुगर्भाणां ब्रह्मणा कल्पितः पतिः ॥ ३ ॥

सोऽयजद् राजसूयेन विजित्य भुवनत्रयम् ।
पत्नीं बृहस्पतेर्दर्पात् तारां नामाहरद् बलात् ॥ ४ ॥

यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात् ।
नात्यजत् तत्कृते जज्ञे सुरदानवविग्रहः ॥ ५ ॥

शुक्रो बृहस्पतेर्द्वेषादग्रहीत् सासुरोडुपम् ।
हरो गुरुसुतस्नेहात् सर्वभूतगणावृतः ॥ ६ ॥

सर्वदेवगणोपेतो महेन्द्रो गुरुमन्वयात् ।
सुरासुरविनाशोऽभूत् समरस्तारकामयः ॥ ७ ॥

निवेदितोऽजोऽङ्गिरसा सोमं निर्भर्त्स्य विश्वकृत् ।
तारां स्वभर्त्रे प्रायच्छदन्तर्वत्नीं बृहस्पतिः[2] । ॥ ८ ॥

[3]त्यज त्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः ।
नाहं त्वां भस्मसात् कुर्यां स्त्रियं सान्तानिके सति ॥ ९ ॥

तत्याज व्रीडिता तारा कुमारं कनकप्रभम् ।
तस्यां जज्ञे दस्युहन्ता कुमारः कनकप्रभः ॥ १० ॥

---

तस्यात्रेर्दृग्भ्य आनन्दाश्रुभ्यः इयमेव वार्ता सर्वत्र, सर्वैरेवं सम्भावितोऽयं सोम इति वा किलेत्युक्तम् । 'वार्ता सम्भाव्ययोः किल' इत्यमरः । यः सोमो विप्राणामोषधीनाम् अम्बुगर्भाणां कुमुदादीनां ब्रह्मणा पितामहेन पतिः पतित्वेन कल्पितः ॥ ३ ॥ तत्कृते तारार्थम् ॥ ५ ॥ असुरैः सह वर्तमानः सासुरः । उडूनां नक्षत्राणां पतिः उडुपः । शुक्रविशेषणं सासुर इति । सन्धिरार्षः । बृहस्पतेर्द्वेषाद् बृहस्पतिविषयकद्वेषात् । हरः स्मरहरो गुरुरङ्गिराः तस्य सुतो बृहस्पतिरिति स्नेहात् तमग्रहीत् ॥ ६ ॥ सुरासुराणां विनाशो यस्मिन् स तथा । तारकामयः गुरुभार्या तारा, तारैव तारका । स्वार्थे कः । ताराप्रधानसमर इत्यर्थः ॥ ७ ॥ अजो ब्रह्मा । बृहस्पतिः तारामाहेति शेषः ॥ ८ ॥ मत्क्षेत्राद् गर्भं त्यज । कुत इति तत्राह—आहितं परैरिति । [4]सान्तानिके पुत्रे ॥ ९ ॥

---

[1] विप्रौषध्युडुगर्भाणाम्—इत्यपि स. [2] अन्तर्वत्नीमवैत पतिः—शे. [3] गर्भं त्यजाशु—स.
[4] हे सान्तानिके दुष्टसन्तानवति हे असति इति वा—स.

स्पृहामाङ्गिरसश्चक्रे कुमारे सोम एव च ।
ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः ॥ ११ ॥

पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता च सा ।
कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ १२ ॥

किं न वोचस्यसद्वृत्ते पितरं मे वदाशु वै ।
न त्वां तु भस्मसात् कुर्यामात्मावद्यविगूहिनीम् ॥ १३ ॥

ब्रह्मा तं तु विनिर्भत्स्र्य क्षेप्तारं मातुरन्तिके ।
तामाहूय समप्राक्षीद् रह एव तु सान्त्वया ॥ १४ ॥

सोमस्येत्याह शनकैः सोमस्तं तावदग्रहीत् ।
तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ १५ ॥

बुद्ध्या गम्भीरया येन पुत्रेणापोडुराण् मुदम् ।
ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ १६ ॥

तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ।
श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ १७ ॥

तदन्तिकमुपेयाय देवी स्मरशरार्दिता ।
मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ १८ ॥

---

तस्मिन् कुमारे विवदमानयोः सतोः ॥ ११ ॥ तारामिति शेषः । अलीकलज्जया अप्रियनिमित्तलज्जया ॥ १२ ॥ न वोचसि न कथयसि । असद्वृत्ते दुराचारे, अमङ्गलस्वरूपे वा । 'वृत्तं स्वरूपे चरिते वृत्तं छन्दोविधासु च' इत्यभिधानम् । आत्मावद्यस्य स्वदोषस्य विगूहिनीमाच्छादनकरीम् । आत्मावद्यविगूहिनीमित्यनेन भस्मीकरणयोग्यत्वे सूचितेऽपि मातृशब्दवाच्यत्वात् त्वां भस्मसान्न कुर्यामिति सूचितम् ॥ १३ ॥ सान्त्वया वाचा ॥ १४ ॥ तारा जनकं वक्तीत्याह—सोमस्येति । तं कुमारम् । सा आत्मा परमात्मा योनिर्जनको यस्य स तथा ॥ १५ ॥ बुध इति नामकरणे निमित्तमाह—बुद्ध्येति । ततो बुधात् । [1]उदाहृतो द्वितीयाध्याये ॥ १६ ॥ आगमने कारणान्तरमाह—मित्रेति[2] ॥ १८ ॥

---

[1] इलायां य उदाहृत इत्युदाहरणं तस्या एव सुद्युम्नत्वेन पुमवस्थाव्यवस्थयाऽभवदिति पूर्वोक्तस्मारणार्थमिति ज्ञेयम् । यद्वा यः पुरूरवा उदाहृतस्तस्येत्युत्तरेणान्वयः—स.

[2] यद्यपि शाप उभाभ्यां न दत्तः किन्त्वेकेन मित्रेण । यथोक्तं रामायणे । 'तां तु मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत्' ... .... .... इत्यादि । तथापि 'तमेव कालं मित्रोऽपि वरुणत्वमकारयत् । क्षीरोदेन सहापेनः

निशाम्य पुरुषश्रेष्ठं कन्दर्पमिव रूपिणम् ।
धृतिं विहाय ललना उपतस्थे तदन्तिकम् ॥ १९ ॥

स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः ।
उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ २० ॥

राजोवाच —

स्वागतं ते वरारोहे आस्यतां करवाम किम् ।
संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ २१ ॥

ऊर्वश्युवाच —

कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ।
यदङ्गान्न रमा याति स दृष्टो हरिराश्रयः[1] ॥ २२ ॥

एतावुरणकौ राजन् न्यस्तौ रक्षस्व मानद ।
संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥ २३ ॥

घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ।
विवाससं तत् तथेति प्रतिपेदे महामनाः ॥ २४ ॥

---

श्लक्ष्णया मधुरया ॥ २० ॥ नौ आवयोः शाश्वतीः समाः बहून् संवत्सरान् । रतिः सुरतक्रीडाऽस्तु ॥ २१ ॥ मनोहरत्वे निमित्तमाह—यदङ्गादिति । रमा यस्य हरेरङ्गान्न याति न च्यवते नित्याश्रितवक्षःस्थळत्वात्, स हरिस्तवाश्रयो दृष्ट इत्यन्वयः । लक्ष्मीकान्तस्य सन्निधिपात्रत्वाद् इत्यर्थः ॥ २२ ॥ उरणकौ मेषौ न्यस्तौ निक्षेपकल्पनया स्थापितौ । तस्माद् रक्षस्व । संरंस्ये सम्यक् त्वया रतिं करिष्ये । अस्माकमियमेव ऋतक्लृप्तिरित्याह — श्लाघ्य इति । यः श्लाघ्यः कमनीयः स एव स्त्रीणां वरः पतिः स्मृतः ॥ २३ ॥ समयं बध्नाति — नेक्ष इति । मैथुनादन्यत्र सुरतसमयमन्तरेण त्वा विवाससं नग्नं नेक्षे न पश्यामि अन्यथेतो गमिष्यामीति शेषः । पुरूरवा उत्तरमाह— तत् तथेतीति ।

---

पूज्यमानः सुरेश्वरैः' इति तत्रैवोक्तेर्वरुणत्वं मित्रस्येति मित्रावरुणयोरित्युक्तिः । 'मित्रश्च वरुणश्चैव दीक्षितौ प्रेक्ष्य चोर्वशीम् । रेतः सिषिचतुस्तस्यास्तत्कुम्भे न्यदधुस्तदा । तां शपवन्तौ मनुजभोग्या भूम्यां भवेति तौ' इति माधवः वेदव्याख्यायां पुराणान्तरमुदाजहार । तत उभयोरिति संभवति । किञ्च ब्रह्मशापोऽप्युपलक्षणीयः । यथोक्तं हरिवंशे । 'ब्रह्मशापाभिभूता सा मानुषं समुपस्थिता' इति—स.

[1] यदङ्गान्तरमासाद्य च्यवते ह रिरंसया इति पाठः पाठः । तत्रार्थः । अङ्गान्तरमासाद्य मध्यदेहम्, वक्ष इति यावत् । प्राप्य रिरंसया रन्तुमिच्छया कस्या मनश्च्यवते ? न च्यवते । ह निश्चयः । अन्वयतः —रा.

अहो रूपमहो भावं नरलोकविमोहनम् ।
को न सेवेत मनुजो देवीं त्वां स्वयमागताम् ॥ २५ ॥

तया स पुरुषश्रेष्ठो रमयन्त्या यथार्हतः ।
रेमे सुरविहारेषु कामं चैत्ररथादिषु ॥ २६ ॥

रममाणस्तया देव्या पद्मकिञ्जल्कगन्धया ।
तन्मुखामोदमुषितो मुमुदेऽब्दगणान् बहून् ॥ २७ ॥

अपश्यन्नुर्वशीमिन्द्रो गन्धर्वान् समचोदयत् ।
उर्वशीरहितं मह्यमास्थानं नातिशोभते ॥ २८ ॥

त उपेत्य महारात्रौ तमसि प्रत्युपस्थिते ।
उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया ॥ २९ ॥

निशम्याक्रन्दितं देवी पुत्रयोर्नीयमानयोः ।
हताऽस्म्यहं कुनाथेन नपुंसा वीरमानिना ॥ ३० ॥

यद्विश्रम्भादहं नष्टा हृतापत्या च दस्युभिः ।
यः शेते निशि सन्त्रस्तो यथा नारी दिवा पुमान् ॥ ३१ ॥

इति वाक्सायकैर्विद्धः प्रतोदैरिव कुञ्जरः ।
निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद् रुषा ॥ ३२ ॥

---

तत् तयोक्तं त्रयमपि तथेति प्रतिपेदे अभ्युपगतवान् ॥ २४ ॥

तस्येङ्गितं हर्षोल्लासं दर्शयति—अहो इति । भावं शृङ्गारादिकम् । न रीयन्त इति नरा अमरास्तेषां लोकः समूहः तमपि विमोहयतीति नरलोकविमोहनम् । एवंविधां त्वाम् ॥ २५ ॥

सुराणां विहारो येषु ते तथा तेषु चैत्ररथादिषु[1] चित्ररथवनमादिर्येषां तेषु नन्दनादिषु । 'अस्योद्यानं चैत्ररथम्,' इत्यमरः ॥ २६ ॥ मह्यं मत्सत्कं ममास्थानं सभा । एवं मत्वा गन्धर्वान् समचोदयत् ॥ २८ ॥ जायया उर्वश्या ॥ २९ ॥ नपुंसा नपुंसकेन निर्वीर्येणेत्यर्थः ॥ ३० ॥

हृतापत्या हृतपुत्रा । यथा नारी निशि सन्त्रस्ता सती शेते तथा त्वमपि रात्रौ सन्त्रस्तः सन् शेषे । अथ त्वं दिवैव पुरुषः रात्रौ पण्ढतुल्य इत्यर्थः ॥ ३१ ॥ इत्येवं वाक्सायकैः वचनबाणै-

---

[1] चैत्ररथादिषु चित्रा एव चैत्राः, अश्वतरीयुजा रथाः क्षत्रियमुख्यचिह्नभूताः 'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति सूत्रात्, 'रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते इति' स्मृतेश्च तथाऽवगतेः । तैः रथाश्वगमनं तदेवादिर्येषां गजादिगमनादीनां तेषु रेमे—स.

ते विसृज्योरणौ तत्र प्राद्योतन्त स्वविद्युता ।
आदाय मेषावायान्तं नग्नमैक्षत सा पतिम् ॥ ३३ ॥
ऐलोऽपि शयने जायामपश्यन् विमना अभूत् ।
तच्चित्तो [1]विक्लवः शोचन् बभ्रामोन्मत्तवन्महीम् ॥ ३४ ॥
स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ।
पञ्च प्रहृष्टवदनः प्राह सूक्तं पुरूरवाः ॥ ३५ ॥
अहो जाये तिष्ठ तिष्ठ घोरे न त्यक्तुमर्हसि ।
मन्त्रा अद्याप्यनिर्वृत्ता वचांसि कृणवावहै ॥ ३६ ॥
सुदेवोऽयं पतत्यत्र देवि दूरं हृतस्त्वया ।
खादन्त्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम् ॥ ३७ ॥

---

विद्धस्ताडितः । प्रतोदैरङ्कुशैः । कुञ्जेषु रन्तुं शीलमस्येति कुञ्जरः । निस्त्रिंशं खड्गम् ॥ ३२ ॥

तत्र तस्मिन् समये ते गन्धर्वा उरणौ तत्र विसृज्य स्वविद्युता स्वशरीरप्रकाशेन प्राद्योतन्त तत्प्रान्तं स्वान् नग्नं चैनं प्रकाशितवन्तः ॥ ३३ ॥ ऐल इलापुत्रः पुरूरवा बभ्राम पर्यटनं कृतवान् । भ्रमु अनवस्थाने, इति धातुः ॥ ३४ ॥ पुरूरवाः सरस्वत्यां नद्यां तामुर्वशीं पञ्च तत्सखीश्च वीक्ष्य सूक्तं प्राह इत्यन्वयः ॥ ३५ ॥

किं तत्सूक्तमित्यतोऽर्थतस्तत् प्रतिगृह्णाति—अहो जाये तिष्ठेति । 'हये जाये मनसा' इत्यारभ्य 'हविषा यजाति स्वर्ग उ त्वमपि मादयासे' इत्यन्तमुत्तरप्रत्युत्तरात्मकं सूक्तमुर्वशीवशीकरणाभिप्रायेण प्राहेत्यर्थः । ततश्चेदम् ऋग्वेदेऽष्टमाष्टकपञ्चमाध्याये प्रथमसूक्तम्—'हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु । न नौ मन्त्रा अनुदितास एते मयस्करन् परतरे चनाहन्' इति । हये अहो जाये मनसा तिष्ठ मनःपूर्वकं पूर्ववत् तिष्ठ, मां त्यक्तुं नार्हसीति शेषः । हे घोरे सुरतशौण्डे, अये परतरे अहन् अहनि उत्तरोत्तरदिवसे मयः सुखं करन् चन कुर्वन्त्येव । एते नौ आवयोः सुरत-मन्त्रा करुणोक्तिपूर्वकाः, नु अद्याप्यनुदितासः अनिर्वृत्ताः अपरिसमाप्ताः इति यस्मादतो नैतदुचितमतो मिश्राणि सँलापलक्षणानि वचांसि कृणवावहै करवावहै ॥ ३६ ॥

सारसङ्ग्रहाभिप्रायेण मध्ये काश्चनर्चो विहाय सुदेवोऽद्य प्रपतेदित्येतामृचमर्थत उदाहरति—सुदेव इति । 'सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ । 'अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः' इति । हे देवि योऽहं परावतं परवन्तम्, दीर्घश्छान्दसः । दूरं देश

---

[1] विह्वलः—शं.

ऊर्वश्युवाच —

मा मृथा पुरुषोऽसि त्वं मा स्म त्वाऽद्युर्वृका इमे ।
क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥ ३८ ॥

---

हृतः त्वया सह परमां रतिं गन्तवै उ गन्तुमेव । तुमुनर्थे तवैन् प्रत्ययः । तस्य मे अयं सुदेवः[1] समीचीनज्ञानलक्षणगतिसाधनं शरीरम् अत्र कुरुक्षेत्रे अस्यामवस्थायां वा प्रपतेत् प्रपतिष्यति । कुतः ? अनावृत् आधाररहितः । अथ पतनानन्तरं निर्ऋतेर्भूमेरुपस्थे पृष्ठे शयीत । अथ निर्जीवमेनं शरीरं रभसासः भक्षणसम्भ्रमाकुला वृका अद्युः खादन्ति । पतित्वा शयित्वाऽपि कथञ्चित् सप्राणं चेद् वृका इन्द्रियाणि खादन्ति इति ॥ ३७ ॥

हये जायेति पुरूरवस वचनम्, अस्य उर्वश्या उत्तरम्— 'किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव । पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि ' इति । तव एता एतया वाचा फलानुपलम्भिकया किं कृणवै किं कुर्वः । किं निमित्तमिति तत्राह—**अहमिति** । अहमुषसामग्रियेव प्राक्रमिषमतिक्रम्यागतास्मि । यथा प्रथमोषसः अतिक्रान्तत्वात् पश्चात्तनानामुषसां योगो न घटते तथाऽऽवयोरपीत्यर्थः । तर्ह्यहं किं करोमीति तत्राह—**पुरूरव इति** । हे पुरूरवः पुनः पश्चाद् त्त अस्तं गृहं परेहि परागच्छ । किमर्थं पश्चाद्गमनमिति तत्राह—**दुरापनेति** । यथा वातो वायुर्ग्रहीतुमशक्यः तथाऽहमपि दुरापना दुर्ग्रहेत्यर्थः । इति मृदुवचनोत्तरेणायं गृहं न यातीत्यभिसन्धाय कठिणोत्तरेण निवर्तयिष्यामीति मत्वा ' पुरूरवो मा मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन् । न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता ' इत्येतदर्थम् उत्तरत्वेनोर्वशी वक्ति—**मा मृथा इति** । हे पुरूरवः त्वं मा मृथाः मरणं मा प्राप्नुहि । गूढाक्षेपं करोति—**पुरुष इति** । पुरुषत्वेन बलिष्ठत्वात् तव कामनिमित्तमरणं न युक्तम् । अबलायाश्चेदबलत्वेन कथञ्चित् सम्भावितं स्यादित्यर्थः । अनेनार्थतः मा प्रपप्त इत्येतद् विवृतं भवति । प्रपप्तः इति पततेर्यङ्लुङन्तं रूपम् । कामपारवश्येन भृशं पतितो मा भूः । अभ्यासस्य दीर्घाभावश्छान्दसः । इमे अशिवासः अशिवाः अशुद्धिहेतवो वृकासो वृकाः त्वा त्वां मोक्षन्, उक्षतिरत्र भक्षणार्थः, मा स्माऽद्युर्न लालाजलेन प्रोक्षयित्वा भक्षयेयुरित्यर्थः । स्त्रैणानि स्त्रीसम्बन्धीनि सख्यानि 'ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं स्नेहलक्षणम् ' इति स्नेहलक्षणानि न वै सन्ति क्वापि सदातनानि न भवन्ति ।

---

[1] दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इति धातुः ।

स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ।
घ्नन्त्यल्पार्थेऽपि विस्रब्धं पतिं भ्रातरमप्युत ॥ ३९ ॥

विधायालीकविस्रम्भमज्ञेष्वत्यन्तसौख्यदाः ।
नवं नवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४० ॥

संवत्सरान्तेऽपि भवानेकरात्रं मयेश्वर ।
वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः ।
अन्तर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरीम् ॥ ४१ ॥

पुनस्तत्र गतोऽब्दान्ते ऊर्वशीं वीरमातरम् ।
उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ ४२ ॥

अथैनमुर्वशी प्राह कृपणं विरहातुरम् ।
गन्धर्वानुपधावेमांस्तुभ्यं दास्यन्ति मामिति ॥ ४३ ॥

---

तत्र हेतुमाह—एतेति । मूलश्लोके यथेत्यनेन सालावृकाणामिति लुप्तोपममिति सूचयति । हृदयमिति जातावेकवचनम् । यथा सालावृकाणां हृदयानि निर्दयानि, एता एतान्यपि स्त्रीणां हृदयानि तथेत्यर्थः ॥ ३८ ॥

एतेति सूक्तोक्तमेव विवृणोति—स्त्रिय इति । दुर्मर्षाः अमर्षणशीलाः । प्रिये प्रेष्ठेऽपि साहसं बलात्काररलक्षणं कर्म यासां तास्तथा । एतदेव विविच्य दर्शयति—घ्नन्तीति । अल्पार्थेऽपि अल्पप्रयोजनेऽपि । विस्रब्धं विश्वस्तम् ॥ ३९ ॥

अलीकविस्रम्भं कपटविश्वासं विधाय अज्ञेषु पुरुषेषु अत्यन्तसौख्यदा इव प्रतीयमाना नवं नवं पुरुषमभीप्सन्त्य इच्छन्त्यः । पुंश्चल्य इत्यस्य विवरणं स्वैरवृत्तय इति । घ्नन्तीति पूर्वेणान्वयः ॥ ४० ॥

अथ तमेवं सान्त्वयति—संवत्सरान्त इति । भो ईश्वर पते भवान् मया सहैकरात्रं वत्स्यति, सुरतलीलामनुभविष्यतीत्यर्थः । तथाऽपराण्यपत्यानि भविष्यन्ति । अपराणीति वचनाद् अन्तर्वत्नीं गर्भिणीमुपालक्ष्य ज्ञात्वा ॥ ४१ ॥ समुवास सम्भोगलक्षणसुरतमनुभूतवान् ॥ ४२ ॥

उपधाव शरणं गच्छ । धावु गतिशुद्ध्योरिति धातोः । त्रिकरणशुद्ध्या स्तुतिं कुर्वित्यर्थः । 'इति त्वा देवा इम आहुरैल यथेमेतद्भवसि मृत्युबन्धुः । प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे' इति ॥४३॥

तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ।
ऊर्वशीं मन्यमानस्तां नाबुध्यत चरन् वने ॥ ४४ ॥

स्थालीं न्यस्य वने गत्वा गृहानध्युषितो निशि ।
त्रेतायां सम्प्रवृत्तायां मनसि त्रय्यवर्तत ॥ ४५ ॥

स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ।
तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४६ ॥

उर्वशीं मन्त्रतो ध्यायन्नधरारणिमुत्तराम् ।
आत्मानमुभयोर्मध्ये यत् तत् प्रजननं प्रभुः ॥ ४७ ॥

तस्य निर्मथनाज्जातो जातवेदा विभावसुः ।
त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४८ ॥

---

अग्निस्थालीम् अग्निस्थापनयोग्यपात्रम् । अनेनाग्निना यज्ञं कृत्वोर्वशीं प्राप्स्यसीत्यभिप्रायेणाग्नियुक्तस्थालीं ददुः । स तु तां स्थालीमेवोर्वशीं मन्यमानः स्थाल्या युक्तो वने चरन्, नेयमुर्वशी किन्त्वग्निस्थालीत्यबुध्यत ॥ ४४ ॥

स पुरूरवाः अग्निस्थालीं वने न्यस्य निक्षिप्य निशि गृहान् गत्वा तां निशामध्युषितोऽभूत् । अथ परस्मिन् दिवसे त्रेतायां संप्रवृत्तायां त्रेतायुगारम्भसमये जाते सति उर्वशीं चिन्तयतस्तस्य राज्ञो मनसि अग्न्याधानादिसाङ्गयज्ञप्रकाशकवेदत्रयं प्रकाशितमभूदित्यर्थः ॥ ४५ ॥

तदर्थं विचार्याग्निस्थालीप्रदानाभिप्रायं ज्ञात्वा अग्निस्थलीस्थानं गतः, तत्र स पुरूरवाः शमीगर्भं शमीवृक्षेणाधिष्ठितमश्वत्थं विलक्ष्य विशेषतो दृष्ट्वा स्थाली शमी जाताऽग्निस्त्वश्वत्थो जात इति विज्ञाय शमीगर्भमश्वत्थं छित्वा तेन शमीगर्भाश्वत्थेन द्वे अरणी कृत्वा उत्तराधरारणिभेदेन निधाय । उर्वशीलोकप्राप्तीच्छया ॥ ४६ ॥

मथनेऽनुसंधानप्रकारमाह—उर्वशीमिति । 'विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि । जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ।' इति मन्त्रार्थत्वेनोर्वशीं ध्यायन्, उर्वशीमधरारणिमात्मानं पुरूरवनामकं स्वात्मानमुत्तरारणिं च चिन्तयन्, उभयोररण्योर्मध्ये यत् प्रजननं तच्च मनसा ध्यायन् अरणी, निर्ममन्थेति शेषः । प्रभुरित्यनेन सर्वध्यानादिसामर्थ्यं दर्शयति ॥ ४७ ॥

मथितमाह-तस्येति । तस्य राज्ञो निर्मथनाज्जातवेदा जात इति, तत्प्रभृति जातवेदा नामाऽग्नेरिति सूचितम् । स विभावसुरग्निस्त्रय्या विद्यया वेदत्रयसञ्ज्ञया प्रतिपाद्यो राज्ञा पुत्रत्वे कल्पित

तेनायजत यज्ञेशं भगवन्तमधोक्षजम् ।
उर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४९ ॥

एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ।
देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ५० ॥

पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप ।
अग्निना प्रजया राजा लोकं गान्धर्वमेयिवान् ॥ ५१ ॥

इति श्रीमद्भागवते नवमस्कन्धे द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ।
आयुः श्रुतायुः सत्यायुरयो[1]ऽथ विजयो जयः ॥ १ ॥

---

इत्यन्वयः । त्रिभिराहवनीयादिरूपैर्वर्तत इति त्रिवृत् । अध्यात्मविवक्षायाम् अकारोकारमकारसमाहारोङ्काररूपेण वर्तत इति त्रिवृत् ॥ ४८ ॥

तेन त्रिवृताऽग्निना । उर्वशीसालोक्यम् । सर्वदेवमयं सर्वदेवोत्तमम् ॥ ४९ ॥ पुरा कृतयुगे वेद एक एव मिश्रीभूत आसीत् । 'अकारो वै सर्वा वाक्' इति सर्ववाङ्मयः [2]प्रणवोऽप्येकः ॥ ५० ॥

त्रयी त्रिप्रकारा । अत्राथर्वणभाष्यं मानम् 'एको वेदः कृते ह्यासीत् त्रेतायां स त्रिधाऽभवत् । स एव पञ्चधा जातो द्वापरं प्राप्य वै युगम् । उत्सन्नः स कलिं प्राप्य वेदः प्रायेण सर्वशः । नैवं ऋक्सामादिनामानि तदा वेदस्य चाभवन्' इति । अग्निना प्रजया पुत्रत्वेन कल्पितेनाग्निना ॥ ५१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां नवमस्कन्धस्य द्वादशोऽध्यायः ।

॥ अथ त्रयोदशोऽध्यायः ॥

ब्रह्मणोऽत्रिः । अत्रेः सोमः । सोमाद् बुधः । बुधात् पुरूरवाः । तस्य पुत्रानाह—ऐलस्य चेति । पुरूरवस इत्यर्थः ॥ १ ॥

---

[1] सत्यायू रय इति केचित् । सत्यायु रयेति पाठे रुलोपनिमित्तदीर्घाभावश्छान्दसः । वस्तुतस्तु सात्यायुना सहितश्चासौ रयश्चेत्युत्तरपदलोपसमासे न काप्यनुपपत्तिः—स. [2] 'अनन्तमात्रां तमुदाहरन्ति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः' इति सुमध्वविजये । 'त्रिमात्रमादितः कृत्वा यावच्चानन्तमात्रकाः । प्रणवास्ते विभेदेन ह्यनन्ताः परिकीर्तिताः । एकमात्रोत्तराः सर्वे परब्रह्माभिधायकाः । इत्येकादशतात्पर्ये—स.

श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतञ्जयः ।
रयस्यात्सुत एकस्तु जयस्य तनयोऽमितः ॥ २ ॥

भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः ।
तस्य जह्नुः सुतो गङ्गां गण्डूषीकृत्य योऽपिबत् ॥ ३ ॥

[1]जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ।
ततः कुशः कुशस्यापि कुशाम्बुस्तनयो वसुः ॥ ४ ॥

कुशनाभश्च चत्वारो गाधिरासीत् कुशाम्बुजः ।
तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ ५ ॥

वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ।
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ॥ ६ ॥

सहस्रं दीयतां शुल्कं कन्यायाः कुशिकान्वयः[2] ।
इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणान्तिकम् ॥ ७ ॥

आनीय दत्वा तानश्वानुपयेमे वराङ्गनाम् ।
स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ।
श्रपयित्वोभयैर्मन्त्रैश्चरुं स्नातुं गतो मुनिः ॥ ८ ॥

तावत् सत्यवती मात्रा स्वचरुं याचिता सती ।
श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदत् स्वयम् । ॥ ९ ॥

---

आयोर्वंशमुत्तरत्र वक्ष्यन् क्रमेण श्रुतायुप्रभृतीनां पञ्चानां वंशमाह—श्रुतायोरिति ॥ २ ॥

कुशाम्बुजो गाधिरित्येकस्य नामद्वयम् तत्र तावत् परशुरामावतारचरितं वक्तुं गाधेः कन्यावंशमाह—तस्य सत्यवतीमित्यादिना ॥ ५ ॥ भार्गवम् ऋचीकम् ॥ ६ ॥ यतः कुशिकानामन्वयो यस्य स तथा कुशिकान्वय इति प्रसिद्धः ॥ ७ ॥ श्वश्र्वा भार्यामात्रा । उभयैर्ब्रह्मक्षत्रोभयजातियोग्यैः सात्विकराजसभेदभिन्नैर्मन्त्रैश्चरुं श्रपयित्वा प्रपच्याभिमन्त्र्य तवेदं तव मातुरिदमिति निगद्य संस्थाप्य, स्नातुं गतः ॥ ८ ॥ तावत् तदा गत्यन्तरा स्वभार्यापक्षपातेन आत्मीयचरुः पुरुभिर्मन्त्रैः श्रपितः स्यादिति तया मात्रा श्रेष्ठं गत्वा याचिता सत्यवती स्वचरुं मात्रे ददौ, मातुश्चरुं स्वयमदत्

---

[1] जह्नोः पुरुस्तस्य पुत्रो—शे. [2] कुशिका वयमिति पाठे यतो वयं कुशिका अतो दुर्मिलोऽस्मदनुबन्धः, तदर्थेनं कुर्वित्यर्थः । कुशिकान्वय इति पाठे कुशिकानामन्वयः संबन्धो यस्य स एवं चेद् भविष्यसीत्यर्थः—स.

तद् विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ।
घोरो दण्डधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥

प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ।
अथ तर्हि भवेत् पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥

सा चाभूत् सुमहापुण्या कौशिकी लोकपावनी ।
रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥

तस्यां वै भार्गवऋषेः सुता वसुमदादयः ।
यवीयान् जज्ञ एतेषां राम इत्यभिविश्रुतः ॥ १३ ॥

यमाहुर्वासुदेवांशं हैहयानां[1] कुलान्तकम् ।
[2]त्रिः सप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥

दृप्तं क्षत्रं भुवो भारमब्रह्मण्यमधार्मिकम् ।
[3]रजस्तमोवृतमहन् फल्गुन्यपि कृतेंऽहसि ॥ १५ ॥

राजोवाच —

किं तदंहो भगवतो राजन्यैरजितात्मभिः ।
कृतं येन कुलं नष्टं क्षत्रियाणाममीक्ष्णशः ॥ १६ ॥

श्रीशुक उवाच —

हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ।
दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥

---

जघास । आडभावश्छान्दसः ॥ ९ ॥

कष्टं जुगुप्सितम् ॥ १० ॥ तव पुत्रो घोरो दण्डधरः सर्वसंहारको भविष्यति । ते भ्राता ब्रह्मवित्तमो भविष्यति ॥ ११ ॥ सा चा सत्यवती कौशिकीनामिका नदी, बभूवेति शेषः ॥ १२ ॥ भार्गवऋषेर्जमदग्नेः । वसुमानेवादिर्येषां ते वसुमदादयः । यवीयान् कनिष्ठः ॥ १४ ॥ क्षत्रवधे मुख्यं कारणमाह—दृप्तमिति । रजस्तमोभ्यां तत्प्रयोज्यरागद्वेषाभ्यां वृतम् । अहन् हतवान् । फल्गुन्यल्पे । अंहस्यपराधे ॥ १५ ॥ अमीक्ष्णशोऽनेकवारम् ॥ १६ ॥ दत्तं दत्तात्रेयम् । परिकर्मभिः परिचर्याभिराराध्य ॥ १७ ॥

---

[1] हैहयानामिति सुपठम्—स. [2] त्रिसप्तकृत्वो—शे. [3] रजस्तमोद्धतमहन् इत्यपि स.

बाहून् दशशतं लेभे दुर्धर्षत्वमरातिषु ।
अव्याहतेन्द्रियौजश्रीतेजोवीर्ययशोबलम् ॥ १८ ॥

योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ।
चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥

स्त्रीरत्नैरावृतः क्रीडन् रेवाम्भसि मदोत्कटः ।
वैजयन्तीं स्रजं बिभ्रद् रुरोध सरितं भुजैः ॥ २० ॥

विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः ।
नामृष्यत् तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥

गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः । कि
माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥

स एकदा तु मृगयां विचरन् विजने वने ।
यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥

तस्मै स नरदेवाय मुनिरर्हणमाहरत् ।
ससैन्यामात्यवाहाय हविर्धान्या तपोधनः ॥ २४ ॥

---

अरातिषु शत्रुषु दुर्धर्षत्वमप्रधृष्यत्वं वरं तथा अव्याहतानि यानीन्द्रियाणि तेषामोजोऽवष्टम्भशक्तिश्च श्रीः शरीरकान्तिश्च तेजः प्रभावश्च वीर्यमस्त्रादिलभ्यं च यशः कीर्तिश्च बलं शौर्यं च लेभ इत्यन्वयः । द्वन्द्वैकवद्भावोऽयम् ॥ १८ ॥

योगेश्वरत्वं योगसामर्थ्यरूपमैश्वर्यम् । यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणा अन्तर्भूतास्तादृशमैश्वर्यं लेभ इत्यर्थः । अव्याहतगतिश्चचारेत्यन्वयः ॥ १९ ॥ रेवाया नर्मदाया अम्भसि क्रीडन् जलक्रीडां कुर्वन् सरितं नर्मदां रुरोध प्रवाहस्तम्भनं कृतवान् ॥ २० ॥ दशाननो दिग्विजयावसरे माहिष्मतीपुर्याः समीपे नर्मदायां सदाशिवपूजामाचरन् कार्तवीर्यार्जुनेन प्रवाहस्यावरोधात् प्रतिस्रोतःसरिज्जलैः प्रतिगमनं स्रोतः प्रवाहो येषां तानि प्रतिस्रोतांसि, प्रतिस्रोतांसि च तानि सरिज्जलानि च प्रतिस्रोतःसरिज्जलानि, तैर्विप्लावितं प्रवाहवेगेन नीतं स्वशिबिरम्, वीक्ष्येति शेषः । 'स्रोतोऽम्बुनिर्गमद्वारे इन्द्रियेषु जलसृतौ' इत्यभिधानम् ॥ २१ ॥ यथा केनचित् कपिर्बद्धो पुनर्मुक्तश्च भवति, तथाऽयं दशमुखः कृतकिल्बिषः क्रीडन्तमभिभावयितुं प्रवृत्तोऽत एवापराधाद् येनार्जुनेन माहिष्मत्यां सन्निरुद्धोऽथ पुलस्त्यप्रार्थनया मुक्तश्च ॥ २२ ॥ हविर्धान्या कामधेन्वा ॥ २४ ॥

स वीरस्तस्य तद् दृष्ट्वा आत्मैश्वर्यातिशायिनम् ।
तन्नाद्रियन्नग्निहोत्रीं साभिलाषः स हैहयः ॥ २५ ॥

हविर्धानीमृषेर्दर्पान्नरान् हर्तुमयोजयत् ।
तां ते माहिष्मतीं निन्युः सवत्सां क्रन्दतीं बलात् ॥ २६ ॥

अथ राजनि निर्याते राम आश्रम आगतः ।
श्रुत्वा तत् तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥

परशुं योजयामास सतूणं चर्म कार्मुकम् ।
अन्वधावत [1]दुर्धर्षो मृगेन्द्र इव यूथपम् ॥ २८ ॥

तमापतन्तं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ।
[2]ऐणेयचर्माम्बरमात्मधामभिर्युतं जटाभिर्ददृशे पुरीं नृपः ॥ २९ ॥

अचोदयद्धस्तिवरांश्च पत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ।
अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥

यतो यतोऽसौ प्रहरन् परश्वधो मनोनिलौजाः परचक्रसूदनः ।
ततस्ततश्छिन्नभुजोरुकन्धरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ३१ ॥

---

आत्मनः स्वस्य ऐश्वर्यमतिशायिनम् अतीत्य वर्तमानं तस्य जमदग्नेस्तदैश्वर्यं दृष्ट्वा तद् आत्मैश्वर्यं न नाद्रियन् नादरं कुर्वन्, अग्निहोत्रीं कामधेनुं प्रति साभिलाषः सन् हविर्धानीं धेनुं हर्तुं नेतुं नरान् भृत्यान् अयोजयन्नियुङ्क्तवान् । तत्र निमित्तमाह—दर्पादिति ॥ २५–२६ ॥

योजयामास उत्तेजितं कृतवान् । कार्मुकम्, गृहीत्वेति शेषः । गजयूथपम् ॥ २८ ॥

ऐणेयं चर्म कृष्णाजिनं तदेवाम्बरं यस्य स तथा तम् । आत्मनः स्वस्य धाम तेजो यासां ताः, ताभिः जटाभिर्युक्तं तम् । पुरीम् आपतन्तम् ॥ २९ ॥ अर्जुनो याः अक्षौहिणीरचोदयत् ताः राम एक एवासूदयदित्यन्वयः ॥ ३० ॥ परेषां चक्रं सैन्यं सूदयतीति स तथा । चक्रं सैन्यरथाङ्गयो-रित्यभिधानम् । मनोवदनिलवदोजो वेगो यस्य स तथा । मनोवद् वेगोऽनिलवदवष्टम्भ इति वा । ओजोऽवष्टम्भबलयोः, इति यादवः ॥ ३१ ॥

---

[1] दुर्धर्ष इति पाठः सरलोऽप्रयासम् । दुर्मर्ष इति पाठोऽपि क्वाचित्कः सम्भवदर्थः—स.

[2] ऐणेयचर्माम्बरमर्कधामभिः—शे.

दृष्ट्वा स्वसैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ।
विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद् रुषा ॥ ३२ ॥

अथार्जुनः पञ्चशतेषु बाहुभिर्धनुष्षु बाणान् युगपत् स सन्दधे ।
रामाय रामोऽस्त्रभृतां समग्रणीस्तानेकबद्धेषुभिरच्छिनत् समम् ॥ ३३ ॥

पुनः स्वहस्तैरचलान् मृधेऽङ्घ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ।
भुजान् कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं हसन्निव ॥ ३४ ॥

कृत्तबाहोः शिरस्तस्य गिरिशृङ्गमिवाहरत् ।
हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥

अग्निहोत्रीमुपावृत्य सवत्सां परवीरहा ।
समुपेत्याश्रमं पित्रे परिक्लिष्टां समार्पयत् ॥ ३६ ॥

स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ।
वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥

राम राम महाबाहो भवान् पापमकारषीत् ।
अवधीन्नरदेवं यत् सर्वदेवमयं वृथा ॥ ३८ ॥

वयं हि ब्राह्मणास्तात क्षमयाऽर्हणतां गताः ।
यया लोकगुरुर्देवः पारमेष्ठ्यमगात् पदम् ॥ ३९ ॥

क्षमया रोचते लक्ष्मीः ब्राह्मी सौरी यथा प्रभा ।
क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥ ४० ॥

---

विवृक्णा विच्छिन्ना चर्मध्वजचापविग्रहा यस्य तत् । विग्रहो देहः ॥ ३२ ॥

अथागत्यार्जुनः पञ्चशतेषु धनुष्षु इतरैः पञ्चशतैर्बाहुभिः बाणान् युगपदेकप्रयत्नेन सन्दधे । अस्त्रभृतां मध्ये समग्रणीरतिश्रेष्ठो रामः समं युगपदेकस्मिन् धनुषि बद्धेषुभिः सन्धितशरैस्तान् पञ्चशतशरान् अच्छिनदित्यन्वयः ॥ ३३ ॥ पुनः रामः स्वहस्तैरचलान् गिरीन् अङ्घ्रिपान् वृक्षान् मृधे हननार्थम् उत्क्षिप्य युधि वेगादभिधावतोऽर्जुनस्य भुजान् कठोरनेमिना शितधारेण चिच्छेदेत्यन्वयः ॥ ३४ ॥ उपावृत्य निवर्त्य । इतस्तत आकर्षणादिना परिक्लिष्टां क्लेशोपेताम् ॥ ३६ ॥

तत्कृतमर्जुनकृतम् ॥ ३७ ॥ अर्हणतां पूज्यताम् । यया क्षमया लोकगुरुर्ब्रह्मा पारमेष्ठ्यं सत्यलोकाधिपत्यमित्यर्थः ॥ ३९ ॥ यथा सौरी सूर्यसम्बन्धिनी प्रभा रोचते तथा ब्राह्मी ब्राह्मणसम्बन्धिनी लक्ष्मीः सद्विद्योपदेशादिजन्या शोभा प्रकाशते ॥ ४० ॥

राज्ञो मूर्धावसिक्तस्य वधो ब्रह्मवधाद् गुरुः ।
तीर्थसंसेवया चांहो जह्यङ्गाच्युतचेतनः ॥ ४१ ॥

इति श्रीमद्भागवते नवमस्कन्धे त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

श्रीशुक उवाच —

पित्रोपशिक्षितो रामस्तथेति कुरुनन्दन ।
संवत्सरं तीर्थचर्यां चरित्वाऽऽश्रममाव्रजत् ॥ १ ॥

कदाचिद् रेणुका याता गङ्गायां पद्ममालिनम् ।
गन्धर्वराजं क्रीडन्तमप्सरोभिरपश्यत ॥ २ ॥

विलोकयन्ती क्रीडन्तमुदकार्थं नदीं गता ।
होमवेलां न सस्मार किञ्चिच्चित्ररथस्पृहा ॥ ३ ॥

कालात्ययं तं विलोक्य मुनेः शापविशङ्किता ।
आगत्य कलशं तस्थौ पुरोधाय कृताञ्जलिः ॥ ४ ॥

व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ।
घ्नतैनां पुत्रकाः पापामित्युक्तास्तां न चक्रिरे[1] ॥ ५ ॥

---

मूर्धावसिक्तस्य मूर्धाभिषिक्तस्य चक्रवर्तिनः । ब्रह्मवधाद् ब्राह्मणहननात् । अच्युते श्रीनारायणे चेतना बुद्धिर्यस्य स तथा ॥ ४१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य त्रयोदशोऽध्यायः ।

॥ अथ चतुर्दशोऽध्यायः ॥

हर्यवतारो भार्गवरामः तथेत्युक्त्वा, अयोग्यजनान् मोहयन् इति शेषः । तदुक्तम् ‘ अपापमपि देवेशं पितरः संन्यवारयन् । अजानन्तोऽस्य माहात्म्यं मोहितास्तस्य मायया । मोहयन् मायया लोकं चक्रे चापचितिं वधे । पुण्यपापादिनिर्मातुः कुतः पापादिसङ्गतिः’ इति चरित्वा कृत्वा ॥ २ ॥ याता, गङ्गामिति शेषः ॥ १ ॥ किञ्चिद् ईषच्चित्ररथे स्पृहावती जाता ॥ ३ ॥ कलशं पुरोधाय भर्तुरग्रे निधाय तत्रैव कृताञ्जलिस्तस्थौ ॥ ४ ॥ घ्नत हतां कुरुत । तां हतिम् ॥ ५ ॥

---

[1] तन्न चक्रिरे इति पाठे हननमिति वा तद्वचनमिति वाऽर्थः—स.

रामः सञ्चोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् ।
प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥

वरेण छन्दयामास प्रीतः सत्यवतीसुतः ।
वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥

उत्तस्थुस्ते कुशलिनो निद्रापाय इवाञ्जसा ।
पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥

येऽर्जुनस्य सुता राजन् स्मरन्तः स्म पितुर्वधम् ।
रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥

एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते ।
वैरं सिसाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥

दृष्ट्वाऽग्न्यागार आसीनमावेशितधियं मुनिम् ।
भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥

याचमानाः कृपणया राममात्राऽतिदारुणाः ।
प्रसह्य शिर उत्कृत्य जग्मुस्ते क्षत्रबन्धवः ॥ १२ ॥

---

मुनेः समाधेः तपसश्च सम्यक् प्रभावज्ञः । 'प्रतापमाहात्म्ययोः प्रभावः स्यात्' इत्यभिधानम् । छन्दयामास वशीचकार । 'वशाभिप्राययोश्छन्दः' इत्यभिधानम् । वधे अस्मृतिं वयं रामेण हता इति स्मृतिशून्यत्वलक्षणं वरं च ॥ ७ ॥

रामेण एते वसुमदादयो जीवन्ति चेज्जीवन्तु नो चेन्म्रियन्तामिति मत्वा सुहृद्वधो नाकारि । किन्तु स्वसार्वज्ञमीश्वरत्वेन दोषाभावं च प्रकटयितुमिति भावेनेत्याह—**पितुरिति** । 'वीर्यं पराक्रमे रेतस्यन्नमाहात्म्ययोरपि' इति यादवः । पितुस्तपोमाहात्म्यं जानता कृतमिति भावः । साक्षान्नारायणावतारस्य निरवद्यस्य सकलगुणाकरस्य भार्गवरामस्य क्षत्रहत्यादिदोषमार्जनाय तीर्थसेवा मातृभ्रातृवधात् स्वाज्ञाकारित्वेन प्रसन्नात् पितुर्वरदानमित्यादिकं कथं घटत इतीत्थं शङ्का 'जामदग्न्यो वरं वव्रेऽनन्तशक्तिरपि स्वयम् । पितुर्मान्यत्वसिद्ध्यर्थं लोके लोकेश्वरः प्रभुः' । इत्यादिमानेन परिहर्तव्या ॥ ८ ॥

लब्धच्छिद्रा लब्धावसराः ॥ १० ॥ अग्न्यागारेऽग्निहोत्रगृहे । आवेशितधियं विषयादाहृत्य भगवत्येव निवेशितबुद्धिम् ॥ ११ ॥ क्षत्रबन्धवः क्षत्रियाभासाः ॥ १२ ॥

रेणुका दुःखशोकार्ता निघ्नन्त्यात्मानमात्मना ।
राम रामेति तातेति विचुक्रोशोच्चकैः सती ॥ १३ ॥

तदुपश्रुत्य दूरस्था हा रामेत्यार्तवत्स्वरम्[1] ।
त्वरयाश्रममासाद्य ददृशुः पितरं हतम् ॥ १४ ॥

ते दुःखरोषामर्षार्तिशोकवेगविमोहिताः ।
हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥ १५ ॥

विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ।
प्रगृह्य परशुं रामः क्षत्रान्ताय मनो दधे ॥ १६ ॥

गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ।
तस्यां स शीर्षभी राज्ञां[2] मध्ये चक्रे महागिरिम् ॥ १७ ॥

तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ।
हेतुं कृत्वा पितृवधं क्षत्रेऽमङ्गलकारिणि ॥ १८ ॥

त्रिः सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां विभुः ।
स्यमन्तपञ्चके चक्रे शोणितोदान् ह्रदान् नव ॥ १९ ॥

पितुः कायेन सन्धाय शिर आदाय बर्हिषि ।
सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥

---

आत्मना यत्नेनात्मानम् उदरवक्षःपुरःसरम् । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि । यत्नेऽर्केऽग्नौ मतौ वाते' इति यादवः ॥ १३ ॥ दूरस्थाः सुता इति शेषः ॥ १४ ॥ क्षत्रान्ताय विशेषेण क्षत्रियकुलनाशाय ॥ १६ ॥ ब्रह्मघ्नैरर्जुनसुतैर्विहता नष्टा श्रीर्यस्यास्ताम् । शीर्षभिः तस्यां प्रविश्य मध्ये माहिष्मतीमध्ये ॥ १७ ॥ अब्रह्मण्यानां ब्राह्मणद्वेषिणां भयङ्करां नदीम्, चक्र इति पूर्वेणान्वयः । सर्वक्षत्रियवधे निमित्तमाह—हेतुमिति । क्षत्रियसमूहेऽमङ्गलकारिणि अन्यायवर्तिनि सति ॥ १८ ॥ स्यमन्तपञ्चके कुरुक्षेत्रे । शोणितान्येवोदकानि येषु ते तथा तान् । ह्रदान् जलैरगाधप्रदेशान् ॥ १९ ॥ शिरः कायेन सन्धाय । बर्हिषि यज्ञ आदाय । दर्भबन्धनविशेषे वा । सर्वदेवमयं सर्वदेवोत्तमम् ॥ २० ॥

---

[1] आर्तवदिति स्वार्थे वतिः । आर्तमार्तिः । भावे क्तः । आर्तिमत्स्वरं वा—स. [2] राजन्—शे.

ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ।
अध्वर्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥

अन्येभ्योऽवान्तरदिशः काश्यपाय च मध्यतः ।
आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥

ततश्चावभृथस्नानविधूताशेषकिल्बिषः ।
सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥

स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ।
ऋषीणां मण्डले सोऽभूत् सप्तमो रामपूजितः ॥ २४ ॥

जामदग्न्योऽपि भगवान् रामः कमललोचनः ।
आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् ॥ २५ ॥

आस्तेऽद्यापि महेन्द्राद्रौ न्यस्तदण्डः प्रशान्तधीः ।
उपगीयमानचरितः सिद्धगन्धर्वचारणैः ॥ २६ ॥

एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ।
अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥ २७ ॥

गाधेरभून्महातेजाः समिद्ध इव पावकः ।
तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥ २८ ॥

---

उपद्रष्ट्रे न्यूनातिरिक्तकर्मसाक्षिणे । परम् अवशिष्टम् ॥ २२ ॥ विधूताशेषकिल्बिषत्वमौपचारिकं लोकशिक्षार्थत्वात् । नाम्ना सरस्वत्यां ब्रह्मनद्यां ब्रह्माधिष्ठितायां वेदमय्यां नद्याम्, अवभृथस्नानेन विधूतमशेषाणां जनानां किल्बिषं येन सः, विगतान्यभ्राणि यस्मादसौ व्यभ्रो मेघच्छायानिर्मुक्तः अंशुमानादित्य इव रेज इत्यन्वयः । अनेनावभृथस्नानेन जनस्याशेषतः किल्बिषं विध्वस्तं भवतीति दर्शनाय निर्दोषेण रामेणावभृथस्नानमकारीति सूचितं भवति ॥ २३ ॥ जमदग्निस्तु संज्ञानलक्षणं ज्योतिर्मयलक्षणं स्वयोग्यदेहं लब्ध्वा सप्तर्षीणां मण्डले सप्तमः, ऋषिरिति शेषः, अभूदित्यन्वयः ॥२४॥

आगामिन्यन्तरे भविष्यन्मन्वन्तरेऽष्टमे सावर्णिमन्वन्तरे बृहद् ब्रह्म वेदमुत्सन्नं वर्तयिष्यति । वेदप्रवर्तको भविष्यतीत्यर्थः ॥ २५ ॥ भुवः परं भारं केवलं भारभूतान् नृपान् अहन् संहृतवान् ॥ २७ ॥ महातेजा विश्वामित्रः ॥ २८ ॥

विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप ।
मध्यमस्तु मधुच्छन्दा माधुच्छन्दस एव ते ॥ २९ ॥

पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ।
आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥

यो वै हरिश्चन्द्रमखे विक्रीतः पुरुषः पशुः ।
स्तुत्वा देवान् प्रजेशादीन् मुमुचे पाशबन्धनात् ॥ ३१ ॥

यो रातो देवयजने देवैर्गाधिसुताय सः ।
देवरात इति ख्यातः शुनःशेपस्तु भार्गवः ॥ ३२ ॥

---

तस्य विश्वामित्रस्यैकशतं पुत्रा आसन् । तेषामेकोत्तरशतपुत्राणां मध्ये यो मध्यमः स तु मधुच्छन्दा नाम । तेन मधुच्छन्दसा संयुक्ता ये पञ्चाशत्पुत्राः ते मधुच्छन्दसः सकाशात् कनिष्ठा माधुच्छन्दसनामानो भवन्ति नान्ये । 'तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः । पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत् कनीयांसस्तथा ज्यायांसो न ते कुशलं मेनिरे ।' (ऐ.ब्रा, ७-३.१८) इत्यादिब्राह्मणं चेममेवार्थं वक्ति ॥ २९ ॥

'शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रचक्षते' इत्युक्तं प्रपञ्चयितुमाह—पुत्रं कृत्वेति । अत्र काचित् किंवदन्ती—मम पुत्रो भवेति विश्वामित्रेणोक्तोऽयमाजीगर्तः शुनःशेपोऽहं स्वत्पुत्राणां ज्येष्ठश्चेत् तव पुत्रः स्यां तत्रापि मध्यमो न स्यां, नापि कनिष्ठ इति विश्वामित्रमाह । तदेवमस्त्विति विश्वामित्रः शुनःशेपं पुत्रं कृत्वाऽन्यानौरसान् पुत्रान् अब्रवीत् । एषः शुनःशेपो युष्माकं ज्येष्ठः प्रकल्प्यताम्, भवद्भिरिति शेषः इति । शुनःशेपशब्दं शृण्वतां शुनीजातीयोऽयं किमित्यन्यथाप्रतीतिं निवारयति—भार्गवमिति । भृगुवंशोद्भवं तथा आजीगर्तम् अजीगर्तस्य मुनेरपत्यम् । तर्हि विश्वामित्रस्य पुत्रत्वे का सङ्गतिरित्यतः—देवरातमिति । विश्वामित्राय देवैः रातं दत्तमिति ॥ ३० ॥

अनेन विशेषणत्रयेण ज्येष्ठत्वकल्पनायां वैशिष्ट्यमुक्त्वा वैशिष्ट्यान्तरं चाह—य इति । यः शुनःशेपः हरिश्चन्द्रयज्ञे अजीगर्तेन रोहिताय विक्रीतः पुरुषाख्यः पशुरभूत् पश्चात् प्रजेशादीन् ब्रह्मादिदेवान् स्तुत्वा तत्प्रसादात् पाशबन्धनात् संसाराख्यपाशबन्धनात् यूपसंबन्धिरज्जुबन्धनाच्च आत्मानं मुमुचे मोचयामास । 'कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम' इत्यारभ्य 'अस्मे रयिं निधापय' इत्यन्तवेदवाक्येन स्तुत्वा । ऋग्भाष्ये एतासामृचामर्थं अचार्यैरेव विस्तरेणोक्त इति चास्माभिः प्रपञ्च्यते ॥ ३१ ॥ देवरातशब्दनिर्वचनेन विश्वामित्रस्य तत्संबन्धमाह—य इति ।

ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् ।
अशपत् तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जनाः ॥ ३३ ॥
स होवाच मधुच्छन्दाः सार्धं पञ्चाशता ततः ।
यन्नो भवान् सञ्जानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥
ज्येष्ठं मन्त्रदृशं चक्रुः त्वामन्वञ्चो वयं स्म हि ।
विश्वामित्रः सुतानाह वीरवन्तो भविष्यथ ॥ ३५ ॥
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा ।
एष वः कौशिका वीरो देवरातस्तमन्वित ॥ ३६ ॥

---

देवानां यजनं यस्मिन् तस्मिन् यज्ञे यस्माद् यो देवै रातो रक्षितस्तैरेव गाधिसुताय विश्वामित्राय रातो दत्तः तस्मात् स देवरात इति ख्यातः प्रसिद्ध इत्यतोऽयं भार्गवः ॥ ३२ ॥

शुनःशेफो ज्येष्ठत्वेन कल्प्यतामिति विश्वामित्रेणोक्ता ये पञ्चाशत्पुत्रा मधुच्छन्दसो जन्मना ज्येष्ठास्ते शुनःशेफस्य ज्येष्ठत्वं स्वात्मनः कनिष्ठत्वं यत् तत् कुशलं साधु न मेनिरे ततः किमभूदिति तत्राह—**अशपदिति** ॥ ३३ ॥

तेषां म्लेच्छभावेन शुनःशेफस्य किमायातमिति तत्राह—**स हेति**। हेत्यनेन ब्राह्मणमनुकरोति। स मधुच्छन्दाः पञ्चाशता पञ्चाशत्संख्याकैः कनिष्ठैः सार्धं पितरमुवाच ह। ततस्तातः भवान् नोऽस्माकं यत् सञ्जानीते आज्ञापयति तस्मिन् आज्ञप्ते शुनःशेफस्य ज्यैष्ठ्ये अस्माकं कानिष्ठ्ये सर्वे वयमविचारेण तिष्ठामहे। तदेवं निश्चित्य वर्तामह इति यावत्। 'प्रकाशनस्थेयाख्ययोश्च' इति सूत्राद् आत्मनेपदता ॥ ३४ ॥ ते पुत्रा मन्त्रदृशं 'कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम' इत्यादिऋग्वेदद्रष्टारं शुनःशेफं ज्येष्ठं चक्रुः। कथं चक्रुरिति तत्राह—**त्वामिति**। भो देवरात वयं त्वामन्वञ्चः अनुवर्तमानाः कनिष्ठाः स्म भवाम। हि प्रसिद्धम्, हेतौ वा। यस्माद् वयं त्वत्कनिष्ठा अभूम तस्मात् ते ज्येष्ठत्वे संशयो मा भूदिति। अथवा हे पितः वयं त्वामन्वञ्चः अनुवर्तमानाः स्म त्वदाज्ञाकारिण इत्यर्थः। सन्तुष्टः पिता कं वरं प्रायच्छदिति तत्राह—**विश्वामित्र इति**। वीरवन्तः पुत्रवन्तः कर्तव्ये विशिष्टप्रेरणावन्तो वा ॥ ३५ ॥

कुतोऽयं वरो दत्त इति तत्राह—**य इति**। ये भवन्तो मे मानम् अनुगृह्णन्तः परिपालनलक्षणानुग्रहं कुर्वन्तः मा मां वीरवन्तमकर्त कृतवन्त इति यस्मात् तस्माद् यूयं वीरवन्तो भविष्यथेति। 'वीरवन्तमकर्त मा' इति ब्राह्मणवाक्यानुसारेण वेदतुल्यमिति प्रकाशयति। मां वीरवन्तं स्वधर्मशूर-

अन्ये चाष्टकहारीता जयक्रतुमदादयः
एवं कौशिकगोत्रं तद्वैश्वामित्रैः पृथग्विधम्
प्रवरान्तरमापन्नं तद्धीत्येवं प्रकल्पितम् ॥ ३७ ॥

यः पुरूरवसः पुत्र आयुस्तस्याभवन् सुताः ।
नहुषः क्षत्रवृद्धश्च रजी रम्भश्च[1] वीर्यवान् ।
अनेना इति राजेन्द्र क्षत्रवृद्धान्वयं शृणु ॥ ३८ ॥

क्षत्रवृद्धसुतस्यासन् सुहोत्रस्यात्मजास्त्रयः ।
काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ ३९ ॥

शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ।
काश्यस्य काशिस्तत्पुत्रः सुराष्ट्रो दीर्घतमःपिता[2] ॥ ४० ॥

---

सूनुमन्तमकर्त अकुर्वन्त । 'जीवतो वाक्यकरणाद् ऋणसंशोधनेन च । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इति स्मृतेः । स्ववचनकरणसन्तुष्टो विश्वामित्र एवमादिदेश । हे कौशिकाः कौशिकगोत्राः, एष देवरातो वो युष्मदीयः कौशिक एव यत एष वीरो मम पुत्रस्तमेनं युष्माकं ज्येष्ठम् अन्वित अनुवर्तध्वम् ॥ ३६ ॥

अन्ये चाष्टकादयोऽनुवर्तन्तामिति शेषः । उपसंहरति—**एवमिति** । यत् कौशिकगोत्रं तद्-वैश्वामित्रैः पृथग्विधमभूत् । कथं तदिति तत्राह—**प्रवरान्तरमिति** । प्रवरान्तरमापन्नं हि यस्मात् तस्मादेव पृथग्विधं कल्पितं, हि प्रसिद्धमिति भावः । एवमत्रावगन्तव्यम्, एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृतः । इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातम् । तच्च प्रवरान्तरमापन्नं प्राप्तं हि यस्मादेवं देवरातज्येष्ठत्वेन तत् प्रकल्पितम् । अत्र प्रवरो नाम तस्मिन्नेव वंशेऽवान्तरभेदो न तु वंशान्तरम् । तथा च स्मृतिः 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वं विना भृग्वङ्गिरोगणात्' इति । अत एवाश्वलायनबौधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तम् इति ॥३७॥ श्रुतायोः सन्ततिं विस्तृत्य पुरूरवसः पुत्रस्य प्रथमस्यायोर्वंशं वर्णयति बादरायणिः— **य इति** । नहुषान्वयस्यैव राज्यार्हत्वात् क्षत्रवृद्धाद्यन्वयस्य तदनर्हत्वात् सूचीकटाहन्यायमनुसन्दधानः क्षत्रवृद्धाद्यन्वयं वक्ति—**क्षत्रवृद्धान्वयमिति** ॥ ३८ ॥

---

[1] रामश्च—म. 'रम्भो रजिरनेनाश्च' इति हरिवंशदर्शनात् रामस्य रम्भोऽपि नामान्तरं ज्ञेयः—रा.

[2] दीर्घतमसः पिता ।

धन्वन्तरिर्दीर्घतमस आयुर्वेदप्रवर्तकः ।
यज्ञभुग् वासुदेवांशः स्मृतिमात्रार्तिनाशनः ॥ ४१ ॥

तत्पुत्रः केतुमान् यस्य जज्ञे भीमरथस्ततः ।
दिवोदासो द्युमांस्तस्मात् प्रतर्दन इति स्मृतः ॥ ४२ ॥

स एव शत्रुजिद्वत्सो ऋतध्वज इतीरितः ।
तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः[1] ॥ ४३ ॥

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
नालर्कादपरो राजा बुभुजे मेदिनीं युवा ॥ ४४ ॥

अलर्कात् सन्नतिस्तस्मात् सुनीथोऽथ सुकेतनः ।
धर्मकेतुः सुतस्तस्मात् सत्यकेतुरजायत ॥ ४५ ॥

धृष्टकेतुस्ततस्तस्मात् सुकुमारः क्षितीश्वरः ।
वीतिहोत्रोऽस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥ ४६ ॥

इतीमे काश्यजा भूपाः क्षत्रवृद्धान्ववायिनः ।
रम्भस्य[2] रभसः पुत्रो गम्भीरश्चाक्रियस्ततः ॥ ४७ ॥

तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ।
शुद्धस्ततः शुचिस्तस्मात् त्रिककुब् धर्मसारथिः ॥ ४८ ॥

ततः शान्तरजा जज्ञे कृतकृत्यः स आत्मवान् ।
रजेः पञ्चशतान्यासन् पुत्राणाममितौजसाम् ॥ ४९ ॥

---

अलर्कं स्तौति—षष्टिरिति । षट्शतोत्तरषष्टिसहस्रवर्षाणीत्यर्थः । तथेत्यध्याहारः । अलर्कादपरो राजा युवा तथा न बुभुजे ॥ ४४ ॥ इतीमे काश्यजाः काश्यस्य सन्तानजा भूपाः क्षत्रवृद्धस्यान्ववायो वंश एषामस्ति तथा । 'वंशोऽन्ववायः सन्तानः' इत्यभिधानम् ॥ ४७ ॥

---

[1] स एव प्रतर्दन एव शत्रुजिद्वत्सो ऋतध्वजः कुवलयाश्वश्चेतीरितः, नामान्येकस्यैवेमानीति व्याचख्युः । हरिवंशविरोधं सेहिरे त इति ज्ञेयम् । 'प्रतर्दनस्य पुत्रौ द्वौ वत्सगर्भौ भुविश्रुतौ । वत्सपुत्रो ह्यलर्कः' .... इत्युक्तेः । तत इति अत्राप्यन्वेति । ततः प्रतर्दनाद् वत्सोऽभूत् । स एव वत्स इतीरित एव शत्रुजिदादिकुवलयाश्वेत्यन्तनामभिः प्रोक्त इत्यन्वयेन तदविरोधो ज्ञेयः—स. [2] राभस्य—ग.

देवैरभ्यर्थितो दैत्यान् हत्वेन्द्रायाददाद् दिवम् ।
इन्द्रस्तस्मै पुनर्दत्वा गृहीत्वा चरणौ रजेः ॥ ५० ॥

आत्मानमर्पयामास प्रह्लादात् परिशङ्कितः ।
पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ ५१ ॥

त्रिविष्टपं महेन्द्राय यज्ञभागान् समाददुः ।
गुरुणा हूयमानेऽग्नौ बलभित् तनयान् रजेः ॥ ५२ ॥

अवधीद् भ्रंशिताद् मार्गान्न कश्चिदवशेषितः । न्मा
प्रतिक्षत्रः क्षत्रवृद्धात् सञ्जयस्तत्सुतो जयः ॥ ५३ ॥

ततः कृतः कृतस्यापि जज्ञे वीर्यधनो नृपः ।
सहदेवस्ततोऽहीनो जयत्सेनस्तु तत्सुतः ॥ ५४ ॥

सङ्कृतिस्तस्य च जयः क्षत्रधर्मा महारथः ।
क्षत्रवृद्धान्वया भूपा इमे शृण्वथ नाहुषान् ॥ ५५ ॥

इति श्रीमद्भागवते नवमस्कन्धे चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

श्रीशुक उवाच —

यतिर्ययातिः संयातिरायातिर्वियतिः कृतिः ।
षडिमे नहुषस्यासन् इन्द्रियाणीव देहिनः ॥ १ ॥

राज्यं नैच्छद् यतिः पित्रा दत्तं तत्परिणामवित् ।
यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥

---

क्षत्रवृद्धात् प्रतिक्षत्रोऽभूत् । अनेन क्षत्रवृद्धस्य द्वौ पुत्रौ सुहोत्रः प्रतिक्षत्रश्चेति । तत्र सुहोत्रवंशः प्राक् कथितः । इदानीं प्रतिक्षत्रस्य वंश उच्यत इत्युक्तं भवति ॥ ५३ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां नवमस्कन्धस्य चतुर्दशोऽध्यायः ।

॥ अथ पञ्चदशोऽध्यायः ॥

अथ नहुषस्य सन्ततिमनुक्रामति—यतिरित्यादिना ॥ १ ॥ तस्य राज्यस्य परिणाममनर्थहेतुत्वं वेत्तीति तथा । तत्र हेतुः—यत्रेति । यत्र राज्ये आत्मानं स्वं परमात्मानं च ॥ २ ॥

पितरि भ्रंशिते स्थानाद् इन्द्राण्या धर्षणाद् द्विजैः ।
प्रापितेऽजगरत्वं च ययातिरभवन्नृपः ॥ ३ ॥

चतसृष्वादिशद् दिक्षु भ्रातॄन् गोप्तॄन् यवीयसः ।
कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥

राजोवाच —

ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबन्धुश्च नाहुषः ।
राजन्यविप्रयोः कस्माद् विवाहः प्रातिलोमकः ॥ ५ ॥

श्रीशुक उवाच —

एकदा दानवेन्द्रस्य शर्मिष्ठा नाम कन्यका ।
सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥

देवयान्या पुरोद्याने पुष्पितद्रुमसङ्कुले ।
व्यचरत् कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥

जलाशयं समासाद्य कन्याः कमललोचनाः ।
तीरे न्यस्य दुकूलानि विजह्रुः सिञ्चतीर्मिथः ॥ ८ ॥

वीक्ष्य व्रजन्तं गिरिशं सह देव्या वृषे स्थितम् ।
सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥

शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ।
स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥ १० ॥

---

इन्द्राण्या धर्षणात् शच्याः संस्पर्शनिमित्तात्, पितरि नहुषे द्विजैरगस्त्यादिभिः स्वर्गस्थानाद्भ्रंशिते त्याजिते सति, अजगरत्वं महासर्पत्वं प्रापिते सति ॥३॥ यवीयसः कनिष्ठान् संयातिपूर्वान् । काव्यस्य शुक्रस्य पुत्र्या देवयान्या, वृषपर्वणो राज्ञः पुत्र्या शर्मिष्ठया च कृतदारो ययातिः ॥ ४ ॥

प्रातिलोम्येन विवाहः कथं घटत इति पृच्छति—ब्रह्मर्षिरिति ॥ ५ ॥ दैववशादिदं पाणिग्रहणं प्राप्तं न तु मानुषवशादिति प्रकाशयितुमाख्यायिकामाख्याति–एकदेति । भामिनी तेजस्विनी ॥ ६ ॥ कलगीता अलयो यस्यां सा नलिनी, तस्याः पुलिनं तस्मिन् ॥ ७ ॥ सिञ्चतीः जलप्रक्षेपं कुर्वन्त्यः ॥ ८ ॥ पर्यधुराच्छादितवन्त्यः ॥ ९ ॥ अजानती शर्मिष्ठा गुरुपुत्र्या वासः स्वीयं मत्वा समव्ययत् संवीतवती । व्येञ् संवरणे इति धातोः । तदा प्रकुपिता देवयानीदं वक्ष्यमाण-

अहो निरीक्ष्यतां मह्यं दास्याः कर्म ह्यसाम्प्रतम् ।
अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥

यैरिदं तपसा सृष्टं मुखं पुंसः परस्य वै ।
धार्यते यैः परञ्ज्योतिः शिवः पन्थाश्च दर्शितः ॥ १२ ॥

येऽपीदमुपतिष्ठन्ते लोकनाथाः सुरेश्वराः ।
भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥ १३ ॥

वयं तत्रापि भृगवः शिष्योऽस्या नः पितासुरः ।
अस्माद्धार्यं धृतवती शूद्रो वेदमिवासती ॥ १४ ॥

एवं क्षिपन्तीं शर्मिष्ठा गुरुपुत्रीमभाषत ।
रुषा श्वसन्ती नागीव धर्षिता दष्टदच्छदा ॥ १५ ॥

आत्मवृत्तिमविज्ञाय कत्थसे बहु भिक्षुकि ।
किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥ १६ ॥

एवंविधैः सुपरुषैः क्षिप्त्वाऽऽचार्यसुतां सतीम् ।
शर्मिष्ठा प्राक्षिपत् कूपे वासस्त्वादाय मन्युना ॥ १७ ॥

तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ।
प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥

---

मब्रवीदित्यन्वयः ॥ १० ॥ मह्यं मम दास्याः शर्मिष्ठायाः । असाम्प्रतम् अयुक्तम् ॥ ११ ॥ स्वकुलप्रशंसार्थं ब्राह्मणानां माहात्म्यं कथयति—यैरिदमित्यादिना । इदं विश्वं यैर्ब्राह्मणैस्तपसा सृष्टम्, तद् ब्राह्मणकुलं परस्य पुंसो विष्णोर्मुखं तज्जातं तदाश्रितं च । वैशब्दः 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतिप्रसिद्धिद्योतकः । यैः परञ्ज्योतिः परब्रह्माख्यं हृदि धार्यते, यैश्च शिवः पन्थाः वेदमार्गो दर्शितः ॥ १२ ॥ ये लोकनाथाः सुरेश्वरास्तेपीदं ब्राह्मणकुलमुपतिष्ठन्ते अभिमुखेन हविरादातुं प्रतीक्षन्ते । विश्वात्मा भगवानपि, ब्राह्मणप्रियो यानुपतिष्ठत् इति शेषः ॥ १३ ॥ वयं तत्रापि ब्राह्मणेष्वपि भृगवो भृगुकुलजाः, अत एव श्रेष्ठा इति शेषः । अस्याः पिता वृषपर्वासुरो नोऽस्माकं शिष्यः । गुरुपुत्रीत्वादेवमवादीदिति ज्ञेयम् । यथा वेदग्रहणायोग्यो वृषलो वेदं धारयति तथेयमसती अस्मद्धार्यं वस्त्रमिदं धृतवती ॥ १४ ॥ धर्षिता अप्रगल्भीकृता तुच्छीकृतेत्यर्थः । दष्टदच्छदा दष्टोष्ठा ॥ १५ ॥ आत्मवृत्तिं स्वजीविकामविज्ञाय बहु कत्थसे व्यर्थवचनं वदसि । तद् भिक्षुकीत्वं स्पष्टमित्याह—किं नेति । बलिभुजः श्वानः काको वा ॥ १६ ॥

दत्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ।
गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥
तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ।
राजंस्त्वया गृहीतो मे पाणिः परपुरञ्जय ।
हस्तग्रहोऽपरो मा भूद् गृहीतायास्त्वया हि मे ॥ २० ॥
एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः ।
यदिदं कूपमग्नाया भवतो दर्शनं मम ॥ २१ ॥
न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ।
कचस्य बार्हस्पत्यस्य शापाद् यमशपं पुरा ॥ २२ ॥
ययातिरनभिप्रेतं दैवोपहृतमात्मनः ।
मनस्तु तद्गतं बुध्वा प्रतिजग्राह तद्वचः ॥ २३ ॥

---

उत्तरम् उत्तरीयम् । उज्जहार, कूपादिति शेषः ॥ १९ ॥ औशनसी उशनसोऽपत्यम् । प्रेमनिर्भरया स्नेहपूर्णया । हस्तं गृह्णातीति हस्तग्रहः पाणिग्रहणकर्ता अपरोऽन्यो न स्यात् । हस्तग्राह इति पाठे हस्ते ग्राहो ग्रहणं यस्य स तथा । कुम्भकारवदण्प्रत्ययान्तो वा ॥ २० ॥

ननु निषिद्धोऽयं प्रातिलोम्यसंबन्ध इति चेत् तत्राह—एष इति । कूपमग्नाया मम भवतो यदिदं दर्शनमेष सम्बन्धः ईशकृतः श्रीनारायणविहितः । न पौरुषः पुरुषयत्नसाध्यो न भवति ॥ २१ ॥

ब्राह्मणपुत्र्यास्तव ब्राह्मण एव भर्ता युक्तो, न तु क्षत्रियः । प्रतिलोमाप्रवेशादित्याशङ्कां परिहरति —न ब्राह्मण इति । हे महाभुज मे ब्राह्मणो हस्तग्राहो न भविता न भविष्यति । कुत इति तत्राह कचस्येति । बार्हस्पत्यस्य बृहस्पतेरपत्यस्य नाम्ना कचस्य शापात् । मृतसञ्जीविनीविद्यार्थी कचस्तत्प्रतिग्रहाय बहुतिथं गुरुपरिचर्यां विधाय तत्प्रसादमासाद्य तद्विद्यामध्यगीष्ट । अथ गुरोराज्ञया गन्तुकामं कचमुपलभ्य सर्वप्रकारेण कचस्य हितमाचरन्त्या मया भो कच त्वं मम भर्ता भव, इत्युक्तो मामुवाच—हे देवयानि त्वया मैवं वक्तव्यं यद् भ्राताऽहमिति । तदा कुपिताहं तमशपं मत्पितुरवाप्तविद्या न फलत्विती यमाख्यायिकानेनाख्यायते—यमशपं पुरेति । अहं पुरा यं कचमशपं शप्तवती तस्य शापादिति ॥ २२ ॥ अनन्तरं ययातिः किं कृतवानिति तत्राह—ययातिरिति । यदनभिप्रेतं प्रातिलोम्येनोद्वहनं तदेव आत्मनो दैवेन नारायणेन उपहृतं प्रापितम्, आत्मनो मनश्च तस्यां गतमनुरक्तं बुद्ध्वा तस्या देवयान्या वचः प्रतिगृहीतवानित्यन्वयः ॥ २३ ॥

गते राजनि सा वीरे तत्र स्म रुदती पितुः ।<br>
न्यवेदयत् ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥

दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ।<br>
स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥

वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ।<br>
गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥

क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ।<br>
कामोऽस्याः क्रियतां राजन् नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥

तथेत्यवस्थिते प्राह देवयानी मनोगतम् ।<br>
पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ २८ ॥

स्वानां तत् सङ्कटं वीक्ष्य तदर्थस्य च गौरवम् ।<br>
देवयानीं पर्यचरत् स्त्रीसहस्रेण दासिवत्[1] ॥ २९ ॥

---

ततो [2]घूर्णिकामुखात् स्ववृत्तान्तमाकर्ण्य तत्रागतस्य पितुः पुरतो रुदती सती, उक्तं भिक्षुकीत्यादि कृतं कूपप्रक्षेपादि सर्वं न्यवेदयत् ॥ २४ ॥ कापोतीं कपोतसम्बन्धिनीमुञ्छवृत्तिं स्तुवन् । ग्रन्थाधिकभयान्न कापोतीवृत्तिर्विव्रियते[3] । दुहित्रा देवयान्या सह ॥ २५ ॥ प्रत्यनीकाः असुरद्वेषिणो देवा विवक्षिता जयं प्रापणीया इत्यभिप्रेता येन सः ॥ २६ ॥ अस्या देवयान्याः कामोऽपेक्षाविशेषः । स्वाभीष्टसाधनाय यात्वियं शर्मिष्ठा भवानस्मत्प्रियायास्तामिति तत्राह—**नैनामिति** ॥ २७ ॥

यदभीष्टं तत् तथा करिष्ये इत्युक्त्वा वृषपर्वण्यवस्थिते सति वृषपर्वणा तव किं कर्तव्यमिति पृष्टा देवयानी मनोगतं स्वमनसि स्थितं कार्यं प्राह । अहं पित्रा दत्ता यतो यत्र यास्ये तत्र मामियं शर्मिष्ठा सानुगा दासीसहस्रेण सहिताऽनुयातु अन्वागच्छतु इति ॥ २८ ॥

शर्मिष्ठा तत् सर्वं श्रुत्वा यद्यहं नानुगमिष्यामि तदा गुरुद्रोहान्मत्कुलं सर्वं नष्टं भवतीति यत् स्वानां सङ्कटं तद् वीक्ष्य तदर्थस्य तदनुगमनप्रयोजनलक्षणस्य गौरवं गुरुप्रसादेन स्वकुलाभिवृद्धिलक्षणमस्तीति मनसा निश्चित्य स्त्रीसहस्रेण परिवृता तथा करिष्यामीति पितरमुक्त्वा देवयानीं दासीवत् पर्यचरत् ॥ २९ ॥

---

[1] दासवत्—स. [2] नाम्ना घूर्णिका । [3] कापोतीम् 'उञ्छः कणश आदानम्' इत्युक्तोञ्छवृत्तिम् । कपोताः पाषाणभक्षकाः तद्वृत्तिं स्तुवन् दृषत्कण्टकादिभिरुदरपूरणं वरमिति गृणन्—स.

नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ।
तमाह राजञ्छर्मिष्ठां मा धास्तल्पे तु कर्हिचित् ॥ ३० ॥

विलोक्यौशनसीं राज्ञीं शर्मिष्ठा सुप्रजां क्वचित् ।
तमेव वव्रे रहसि सख्याः पतिमृतौ सति ॥ ३१ ॥

राजपुत्र्याऽर्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ।
स्मरञ्छुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥

गर्भसम्भवमासुर्या भर्तुर्विज्ञाय भामिनी ।
देवयानी पितुर्गेहं ययौ क्रोधविमूर्च्छिता ॥ ३४ ॥

प्रियामनुगतः कामी वचोभिरभिमन्त्रयन्[1] ।
न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥

शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ।
त्वां जरा विशते मन्द विरूपकरणी नृणाम् ॥ ३६ ॥

---

उशनाः सुतां देवयानीं नाहुषाय नहुषपुत्राय ययातये शर्मिष्ठया सह दत्वा तं राजानमाह । किमाह ? क्वचिदपि शर्मिष्ठां तल्पे शयनीयस्थाने मा धाः नोपगच्छेः ॥ ३० ॥

औशनसीं देवयानीम् । विलोक्य कार्यमालोच्य । सख्याः पतिं तमेव ययातिमेव ऋतौ तत्काले वव्रे ॥ ३१ ॥ अपत्ये सन्तानार्थे । तादर्थ्ये सप्तमी । राजपुत्र्या शर्मिष्ठया प्रार्थितो धर्मविद् धर्मज्ञः । 'न काञ्चन परिहरेत् तद् व्रतम्' इति छान्दोग्ये । 'अत्यागी च स्वभार्याणां मुच्यते नात्र संशयः' इति सामसंहितायां च । स्वयमागतां परिहर्तुमशक्यं चेति धर्ममवेक्ष्य शुक्रवचः स्मरन्नपि दिष्टमेव दैवमेवात्र कारणमिति निश्चित्य काले ऋतुकालेऽभ्यपद्यत, तामिति शेषः ॥ ३२ ॥

व्यजायत अजीजनत् ॥ ३३ ॥ आसुर्याः शर्मिष्ठायाः ॥ ३४ ॥ हे स्त्रीकाम अनृतपुरुष असत्यवादिपुरुष । विशत इति लट् लोडर्थे । जरा त्वामाविशतामिति शापमदादित्यर्थः ॥ ३६ ॥

---

[1] उपमन्त्रयन्—डो.

यथातिरुवाच —

अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् दुहितरि स्म ते ।
व्यत्यस्यैतां यथाकामं वयसा योऽभिधास्यति ॥ ३७ ॥

श्रीशुक उवाच —

इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ।
यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥
मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ।
वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥

यदुरुवाच —

नोत्सहे जरया स्थातुमन्तरा प्राप्तया तव ।
अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥
तुर्वसुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ।
प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥
अपृच्छत् तनयं पूरुं वयसोनं गुणाधिकम् ।
न त्वमग्रजवद् वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥

पूरुरुवाच —

को नु लोके मनुष्येन्द्र पितुरात्मकृतः पुमान् ।
[1]प्रतिहर्तुं क्षमो यस्य प्रसादाद् विन्दते परम् ॥ ४३ ॥

---

ते तव दुहितरि कामानां स्म शब्दादिविषयाणां स्मरणेनातृप्तोऽस्मि अलंबुद्धिं न प्राप्तोऽस्मि । ' स्मृतौ वृत्ते निषेधे स्म स्वः स्वर्गपरलोकयोः ' इत्यभिधानम् । अत एव ममानुग्रहः कर्तव्य इत्याह — व्यत्यस्येति । यो मह्यं वयोऽभिधास्यति तस्मिन्नेतां जरां व्यत्यस्य सङ्क्रमय्य तद्वयसा यथाकामं भुञ्ज इति ॥ ३७ ॥ तर्हि तथास्त्विति लब्धव्यवस्थानो लब्धं जराया व्यवस्थानं येन स ययातिर्ज्येष्ठं पुत्रमुवाच । प्रतीच्छ गृहाण ॥ ३८ ॥ मातामहेन शुक्रेण कृताम् । रंस्ये सुरतमनुभवामि ॥ ३९ ॥ अन्तरा मध्ये प्राप्तया । पूरुषो ग्राम्यं सुखमविदित्वा अननुभूय वैतृष्ण्यं वैराग्यं नैत्यतो जरया स्थातुं नोत्सहे ॥ ४० ॥ प्रत्याचख्युः निराकृतवन्तः । अनित्ये क्षणभङ्गुरे ॥ ४१ ॥ वयसोनं कनिष्ठम् । मां मदाज्ञाम् । प्रत्याख्यातुं निराकर्तुम् ॥ ४२ ॥ आत्मकृतः शरीरकर्तुः । प्रतिहर्तुं नेति प्रतिख्या-

---

[1] प्रतिकर्तुम्—रो .

उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः ।
अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥

इति प्रमुदितः पूरुः प्रत्यगृह्णाज्जरां पितुः ।
सोऽपि तद्वयसा कामान् यथावज्जुजुषे नृपः ॥ ४५ ॥

सप्तद्वीपपतिः सम्यक् पितृवत् पालयन् प्रजाः ।
यथोपजोषं विषयान् जुजोषाऽव्याहतेन्द्रियः ॥ ४६ ॥

देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ।
प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥

अयजद् यज्ञपुरुषं क्रतुभिर्भूरिदक्षिणैः ।
सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥ ४८ ॥

यस्मिन्निदं विचरितं व्योम्नीव जलदावलिः ।
नानेव भाति नाभाति स्वप्नमायामनोरथः ॥ ४९ ॥

तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ।
नारायणमणीयांसं निराशीरयजत् प्रभुः ॥ ५० ॥

एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ।
विदधानोऽपि नातृप्यत् सार्वभौमः कदिन्द्रियैः ॥ ५१ ॥

इति श्रीमद्भागवते नवमस्कन्धे पञ्चदशोऽध्यायः ।

---

हर्तुम् । परं लोकम् ॥४३॥ चिन्तितम्, पितुरिति शेषः । उच्चरितं पुरीषद्रव्यः ॥ ४४ ॥ जुजुषे बुभुजे ॥ ४५ ॥ यथोपजोषं यथासुखम् । अव्याहतेन्द्रियः अप्रतिहतेन्द्रियपाटवशक्तिः ॥ ४६ ॥ प्रेयसः भर्तुः ॥ ४७ ॥ मयट् प्राधान्यार्थः । सर्वदेवप्रधानं सर्ववेदवेद्यं च हरिमयजत् ॥ ४८ ॥ स्वप्नमायामनोरथवदनित्यम्, अस्वतन्त्रं चेति शेषः ॥ ४९॥ गुहाशयं हृदयगुहास्थितम् । निराशीः विषयाभिलापरहितः ॥ ५० ॥ कदिन्द्रियैः कुत्सितेन्द्रियैः ॥ ५१ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य पञ्चदशोऽध्यायः ।

॥ अथ षोडशोऽध्यायः ॥

श्रीशुक उवाच —

स इत्थमाचरन् कामान्स्त्रैणोपह्नवमात्मनः ।
बुध्द्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥

शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ।
धी धीरा यस्यानुशोचन्ति वने ग्रामनिवासिनः ॥ २ ॥

बस्त एको वने कश्चित् विचिन्वन् प्रियमात्मनः ।
ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥

तस्या उद्धरणोपायं बस्तः कामी विचिन्तयन् ।
[1]विवर्त्य तीर्थं उद्धृत्य विषाणाग्रेण रोधसि ।
सोत्तीर्य कूपात् सुश्रोणी तमेव चकमे किल ॥ ४ ॥

तया वृत्तं समुद्वीक्ष्य बह्व्योऽजाः कान्तकामिनीः ।
पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं यावकोविदम् ॥ ५ ॥

---

अन्यापदेशेन स्ववृत्तान्तं शिक्षाकरणत्वेन स्वभार्यायै कथयति — **स इत्थमिति** । स्त्रैणः स्त्रीजितः स ययातिः इत्थमात्मज्ञानहेतून् कामान् विषयान् आचरन् भुञ्जानः आत्मनोऽपह्नवं नित्यसुखहानिलक्षणं नाशं विज्ञाय निर्विण्णो विरक्त एतां वक्ष्यमाणत्वेन बुद्धिसन्निहितां गाथां स्वकीयवृत्तान्तरूपमितिहासमगायतेत्यन्वयः ॥ १ ॥ हे भार्गवि भृगुकुलजाते । मद्विधैः स्त्रैणैराचरिताम्. दृष्टेति शेषः । **वने** धीरा निवृत्तिमार्गलक्षणे स्थिरा मुक्तसङ्गा ज्ञानिनो यस्य ग्रामनिवासिनः कामिनो गृहस्थस्याचरणमनुशोचन्ति । अहो लोकस्य मौढ्यमिति परिखिन्ना भवन्तीत्यर्थः ॥ २ ॥ आत्मानं लक्षीकृत्याह — **बस्त इति** । बस्तोऽजः । प्रियं स्त्रीजनम् । कूपे संसारलक्षणे । अत्राजशब्देन प्रकृतिपुरुषावुपलक्ष्येते ॥ ३ ॥

तीर्थे कूपजले अवतारमार्गे वा, विवर्त्य किञ्चिदवतीर्य विषाणाग्रेणोद्धृत्य रोधसि कूपतीरे न्यधत्त तामिति शेषः । ' तीर्थं मन्त्राद्युपाध्याये शास्त्रेष्वम्भसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः ' इति यादवः । उपायं वा विवर्त्य उद्धरणोपायं दृष्ट्वेत्यर्थः ॥ ४ ॥

कान्तविषयः कामो यासामस्तीति कान्तकामिनीः । श्मश्रुलं बहुकूर्चश्मश्रुयुक्तम् । मीढ्वांसं रेतःसेकसमर्थम् । यावकोविदं यावान्नभक्षणपाटवोपेतम् । यावः यावकः कुल्माषः तद्भक्षणे शक्तमिति वा ।

---

[1] व्यधत्त तीर्थमुदुधृत्य–म. विपाणाग्रेण तीर्थमवतारप्रदेशं व्यधत्त । ततस्तां विपाणाग्रेणोद्धृत्य रोधसि व्यधत्त–स.

स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ।
रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥

तमेव [1]प्रेष्ठतमया रममाणमजाऽन्यया ।
विलोक्य रूपसंलग्ना नामृष्यद् बस्तकर्म तत् ॥ ७ ॥

तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ।
इन्द्रियाराममुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥

सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ।
कुर्वन् बिलिबिलाकारं[2] नाशक्नोत् पथि सन्धितुम् ॥ ९ ॥

तस्य तत्र द्विजः कश्चिदजास्वाम्यच्छिनद् रुषा ।
लम्बन्तं वृषणं भूयः सन्दधेऽर्थाय योगवित् ॥ १० ॥

संवृद्धवृषणः सोऽपि ह्यजया कूपलब्धया ।
कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥

---

'यावः केवलकुल्माषे बलकेतोपवर्णिके' इत्यभिधानम् । याभकोविदमिति पठित्वा मैथुनकुशलमिति व्याख्यानं मीढ्वांसमित्यनेन गतार्थत्वात् पौनरुक्त्यग्रस्तम् । असम्प्रदायज्ञता चात्र प्रसज्येत ॥ ५ ॥

मीढ्वांसमिति पदं विवृण्वन्नाह— स एक इति । अजवृषस्तदधिपः । अवबुध्यतेत्यत्र अडभावश्छान्दसः ॥ ६ ॥ शर्मिष्ठां लक्षीकृत्याह —अन्ययेति । अजा रूपसंलग्ना रूपगुणसम्पन्ना । कुचसंलग्नेति पाठे[3] कुचभरसन्नतमध्या, प्रेष्ठतमया प्राप्तुं योग्यतमया अन्यया अजया एवं रममाणं तं विलोक्य तत् अन्यासक्तिलक्षणं बस्तस्य कर्म नामृष्यदित्यन्वयः ॥ ७ ॥ स्वामिनं पितरं शुक्रम्, अन्यत्र कञ्चनाजस्वामिनम् ॥ ८ ॥

सोऽपि बस्तोऽपि ययातिशब्दवाच्योऽपि बिलिबिलाकारं मैथुनानुकरणलक्षणं तिर्यक् कण्ठोत्थित शब्दविशेषम्, अन्यत्र सीत्कारादिशब्दं च कुर्वन् सन्धितुं सन्धानं कर्तुम् । 'तिर्यग् बिलिबिलाकारो मैथुनानुकरो रसः' इत्यभिधानम् ॥ ९ ॥ लम्बन्तं वृषणमच्छिनद् अन्याजासंभोगासमर्थमकरोत् । अन्यत्र जराकरणेन । अर्थाय स्वपुत्र्याः मैथुनलक्षणप्रयोजनाय योगवित् सन्धानोपायज्ञः, अन्यत्र जराव्यत्यसनोपायज्ञः सन्दधे भोगसामर्थ्यमापादितवान् ॥ १० ॥ अजया, रममाण इति शेषः ॥ ११ ॥

---

[1] प्रेष्ठतमया—स. [2] बिलबिलाकारम्—स. [3] कुचसंलग्नेति पाठे कुचौ संलग्नौ निरन्तरौ यस्याः सा—स.

तथाऽहं कृपणः सुभ्रु भवत्याः प्रेमयन्त्रितः ।
आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
न दुह्यन्ति मनःप्रीतिं पुंसः कामहतस्य मे ॥ १३ ॥

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥

यदा न कुरुते भावं सर्वभूतेष्वमङ्गलम् ।
समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥

या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ।
तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥

मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥

---

कृपणस्त्वद्वियोगासहिष्णुः, आत्मानं परमात्मानं स्वस्वरूपं च मायया विभ्रमलक्षणया ॥ १२ ॥ काममोहनास्त्रविद्धस्य पुंसः नैतच्चित्रमित्याह — यत् पृथिव्यामिति । व्रीहियवमित्येकवद्भावः । व्रीह्यादयो मनःप्रीतिं न दुह्यन्ति न पूरयन्ति । दुह प्रपूरण इति धातुः ॥ १३ ॥

ननु प्रावृडुपरमे नदीजलह्रासवत् विषयोपभोगेन कामोपशान्त्या मोहो निवर्तत इति चेत् तत्राह —नेति । कामः तृष्णा । कामानां विषयाणाम् । हविषाऽऽज्येन । 'हविर्गव्ये घृते तोये' इति यादवः । कृष्णवर्त्माऽग्निः ॥ १४ ॥

नन्वेवं चेत् साधनाभावेन कदापि मुक्तिर्न स्यादिति तत्राह—यदेति । यदा सर्वभूतेषु अमङ्गलं पापसाधनं हिंसालक्षणं भावं स्वभावं न कुरुते यस्तदा तस्य समदृष्टेः सर्वस्य ब्रह्माधीनत्वेन तत्तद्योग्यता-विशिष्टवस्तुदर्शिनः पुंसः सर्वा दिशः सुखमाययन्ति प्रापयन्तीति सुखमयाः, सुखप्रधाना वा । 'भावः पदार्थे सत्तायामात्मयोनिस्वभावयोः' इति यादवः ॥ १५ ॥

ननु स्थाविर्ये निराहारत्वे वा स्वतो विषयतृष्णात्यागेन मुक्तिः किं न स्यादिति तत्राह—येति । सत्यं तृष्णात्यागे मुक्तिः स्यात् । स एव नास्ति । यस्माद् ज्ञानेन तत्त्यागोऽतस्तदेवापाद्यमित्यर्थः । जीर्यतः वयसा अनशनेन वा जरामाप्नुवतः । शर्मकामः मोक्षरूपनित्यसुखार्थी ॥ १६ ॥

स्त्रीसंनिधानं तु सर्वथा त्याज्यमित्याह — मात्रेति । अविविक्तासनः एकशय्यासनः ॥ १७ ॥

पूर्णं वर्षसहस्रं मे विषयान् सेवतोऽसकृत् ।
तथापि चानुसवनं तृष्णा तेषूपजायते ॥ १८ ॥

तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निरहङ्कारश्चरिष्यामि मृगैः सह ॥ १९ ॥

दृष्टं श्रुतमसद् बुद्ध्वा नानुध्यायेन्न संविशेत् ।
संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥

श्रीशुक उवाच —

इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ।
दत्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥

दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ।
प्रतीच्यां तुर्वसुं चक्रे उदीच्यामनुमीश्वरम् ॥ २२ ॥

भूमण्डलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ।
अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥

आम्रेडितं वर्षपूगान् षड्वर्गं विषयेषु सः ।
क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥

---

स्वतो विषयतृष्णा न शाम्यतीत्यत्र स्वानुभवमाह— **पूर्णमिति** ॥ १८ ॥ स्वयमित्थं विचार्य फलितमाह— **तस्मादिति** । मृगयन्ते तत्त्वमिति मृगा ज्ञानिनस्तैः सह । अरण्यचरैर्हरिणादिभिर्वा, तपश्चरिष्यामीत्यर्थः ॥ १९ ॥ दृष्टश्रुतसुखत्यागेनादृष्टाश्रुतसुखाय कः कुशलः प्रयतेत अरण्ये कायक्लेशं विद्वानिति तत्राह— **दृष्टमिति** । दृष्टं राज्यादिविभवं श्रुतं स्वर्गादिविभवमित्युभयमसत् क्षणभङ्गुरं विद्वान् तत्रानुध्यायेत् तद्विषयचिन्तां न कुर्यात्, न संविशेत् भोगलक्षणप्रवेशं न कुर्यादित्यन्वयः । कुत इति तत्राह— **संसृतिमिति** । तत्रानुध्यानसंवेशनयोः सतोः संसारम् आत्मनाशं स्वरूपज्ञानहानिं विद्वान् यः स आत्मदृगात्मज्ञानीत्युच्यत इत्यन्वयः । 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते' इत्यादेः । अनेन दृष्टश्रुतसुखस्य सदातनत्वं विद्वान् बालिशो यतोऽतोऽस्य दुःखोदर्कत्वं ज्ञानी पश्यतीति ज्ञायते ॥ २० ॥ तदीयं पूरोर्विद्यमानम् ॥ २१ ॥ दक्षिणपूर्वस्याम् आग्नेय्याम् । ईश्वरं राजानम् ॥ २२ ॥ विशां प्रजानाम् । अर्हत्तमं पूज्यतमम् । स्थाप्य स्थापयित्वा ॥ २३ ॥ शब्दादिविषयेषु आम्रेडितमभ्यस्तं षडिन्द्रियवर्गं मुमुचे विषयादाहृत्य भगवद्विषयं चकारेत्यर्थः ॥ २४ ॥

स तत्र निर्मुक्तसमस्तसङ्ग आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥

श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ।
स्त्रीपुंसोः स्नेहवैक्लव्यात् परिहासमिवोदितम् ॥ २६ ॥

सा संनिवासं सुहृदां प्रपायामिव गच्छताम् ।
विज्ञायेश्वरतन्त्राणां मायाविरचितं प्रभोः[1] ॥ २७ ॥

सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ।
कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मनः ॥ २८ ॥

नमस्तुभ्यं भगवते वासुदेवाय वेधसे ।
सर्वभूताधिवासाय शान्ताय बृहते नमः ॥ २९ ॥

इति श्रीमद्भागवते नवमस्कन्धे षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

श्रीशुक उवाच —

पूरोर्वंशं प्रवक्ष्यामि यत्र जातोऽसि भारत ।
यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥

---

आत्मानुभूत्या परमात्मापरोक्षज्ञानेन विधुतं त्रिभिः सत्वादिभिर्गुणैर्निर्मितं लिङ्गमभिमानलक्षणं यस्य स तथा । विध्वस्ताध्यात्मिकाधिभौतिकाधिदैविकलिङ्गो वा । भागवतीं भागवतधर्मलभ्यां गतिं जीवन्मुक्त्यवस्थाम् । प्रतीतः कोविदः ॥ २५ ॥ प्रस्तोभं वञ्चनम्[2] । लिङ्गं शरीरं व्यधुनोद् त् अमुञ्चत् ॥ २८ ॥ नमस्तुभ्यम्, इति जपित्वेति शेषः ॥ २९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य षोडशोऽध्यायः ।

॥ अथ सप्तदशोऽध्यायः ॥

यत्र पूरोर्वंशे ये जज्ञिरे तेषु केचन राजवंश्या राजर्षयः, केचन ब्रह्मवंश्या ब्रह्मर्षयश्चाभवन् । वंशे भवा वंश्याः ॥ १ ॥

---

[1] प्रभो—स. [2] प्रस्तोभमजापदेशेन वचनं स्त्रीपुंसोः स्त्रीपुंसयोः स्नेहवैक्लव्यात् तद्विह्वलतायाः परिहासमुदितमिव मेने ज्ञातवती —रा.

जनमेजयो ह्यभूत् पूरोः प्रचिन्वांस्तत्सुतः स्मृतः ।
प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥

तस्य सुद्युरभूत् पुत्रस्तस्माद् बहुगवस्ततः ।
शंयातिस्तस्य हंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥

ऋतेयुस्तस्य कक्षेयुः स्थण्डिलेयुः कृतेयुकः ।
जलेयुः सन्तनेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥

दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ।
घृताच्यामिन्द्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥

ऋतेयो रन्तिनारोऽभूत् त्रयस्तस्यात्मजा नृप ।
सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥

तस्य मेधातिथिस्तस्मात् प्रस्कण्वाद्या द्विजातयः ।
पुत्रोऽभूत् सुमते रैभ्यो दुष्यन्तस्तत्सुतो मतः ॥ ७ ॥

दुष्यन्तो मृगयां यातः कण्वाश्रमपदं गतः ।
तत्रासीनां स्वप्रभया मण्डयन्तीं रमामिव ॥ ८ ॥

विलोक्य मुमुहे सद्यो देवमायामिव स्त्रियम् ।
बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥

तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ।
पप्रच्छ कामसन्तप्तः प्रहसन् श्लक्ष्णया गिरा ॥ १० ॥

का त्वं कमलगर्भाभे कस्यासि हृदयङ्गमे ।
किं वा चिकीर्षितं त्वत्र भवत्या विजने वने ॥ ११ ॥

---

तस्य रौद्राश्वस्य ऋतेय्वादयो दश पुत्राः । धर्मेयुश्च सत्येयुश्च व्रतेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ अप्सरस इति षष्ठी सप्तम्यर्थे । घृताच्यामप्सरस इत्यन्वयः । जगदात्मनो जगद्व्याप्य तिष्ठतो मुख्यस्य व्याप्राणस्य वशे इन्द्रियाणि यथा वर्तन्ते तद्वदित्यर्थः ॥ ५ ॥ देवमायामिव विद्यमानां स्त्रियम् । वरारोहां सुन्दरजघनाम् ॥ ९ ॥ कमलगर्भस्याभेवाभा यस्याः सा तत्सम्बुद्धिः । कस्यासि कस्यात्मजासि । हृदयङ्गमे सुन्दरि ॥ ११ ॥

व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ।
न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥

शकुन्तलोवाच —

विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ।
वेदैतद् भगवान् कण्वो वीर किं करवाम ते ॥ १३ ॥
आस्यतामरविन्दाक्ष गृह्यतामर्हणं च नः ।
भुज्यतां सन्ति नीवारा उष्यतां यदि रोचते ॥ १४ ॥

दुष्यन्त उवाच —

उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ।
स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥

श्रीशुक उवाच —

ओमित्युक्ते यथाधर्ममुपयेमे शकुन्तलाम् ।
गान्धर्वविधिना राजा देशकालविधानवित् ॥ १६ ॥
अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ।
श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥ १७ ॥
कण्वः कुमारस्य वने चक्रे समुदिताः[1] क्रियाः ।
बध्द्वा मृगेन्द्रांस्तरसा क्रीडति स्म स बालकः ॥ १८ ॥
तं दुरत्ययविक्रान्तमादाय प्रमदोत्तमा ।
हरेरंशांशसंभूतं भर्तुरन्तिकमागमत् ॥ १९ ॥
यदा न जगृहे राजा भार्यापुत्रावनिन्दितौ ।
शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥

---

अर्हणम् अर्घ्यादिपूजाम् । नीवारा देवव्रीहयः, तैरापादितमन्नमिति शेषः ॥ १४ ॥ ब्राह्मो राक्षसो गान्धर्व इत्यादयो बहवो विवाहविधयः सन्ति, तेषु गान्धर्वविधिना स्वयंवरलक्षणेनोपयेमे ॥ १६ ॥ समुदिताः सम्यग् विधिचोदिताः ॥ १८ ॥ तं कुमारम् । हरेर्नारायणस्य अंशः पद्मनाभः तस्यांशेन सम्भूतम् । प्रमदोत्तमा शकुन्तला ॥ १९ ॥ एकान्तप्रमेयमजानन्तो लोका राजा

---

[1] समुन्निताः—शे.

माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।
भरस्व पुत्रं दौष्यन्तिं मावमंस्थाः शकुन्तलाम् ॥ २१ ॥
रेतोधाः पुत्रं नयति नरदेव यमक्षयम् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ २२ ॥

---

सौन्दर्यवशः कान्तेति कां वा जग्राहेति वदेयुरिति न जगृह इति युक्तोऽग्रह इति बोध्यम् । अशरीरिणी वाग् दैवी वाणी आह ॥ २० ॥

माता भस्त्रेति लुप्तोपमा । यथा 'कारुशालाचुल्लीस्थितामिशक्त्युद्दीपकत्वेनाग्नेराधारमात्रं भस्त्रा 'भस भक्षणदीप्त्योः' इति धातोः । तथा करचरणाद्यवयवविशिष्टदेहाकारेण परिणममानस्य भर्तुर्वीर्यस्याधारमात्रं माता इति मातुः पुत्रत्वमौपचारिकम् । तर्हि कस्य मुख्यपुत्रत्वमिति तत्राह– पितुरिति । कुत इत्यत आह—यस्मादिति । स पितैव पुत्रो जात इति यस्मात् तस्मात् स पुत्रः पितुरेवेत्यर्थः । 'आत्मा वै पुत्रनामासीत्' 'तज्जाया जाया भवति यदस्यां जायते पुनः' इत्यादिश्रुतेः । पुत्रदेहस्यापि पितृदेहैकदेशोपादानत्वद्योतनाय पितुरित्युक्तम् । अन्यथा पिता पुत्र इति प्रयोगस्यापि सम्भवात् । शुक्रान्तःस्थितजीवस्य मातुरुदरप्रवेशानन्तरं जीवावरकं तदेव शुक्रं मातृभुक्तरसान्नादिना देहाकारेण परिणतं भवति । शोणितं तु कमलस्य सरोवरपङ्किल[2] इवाधारमात्रमिति भावः । अथवा हिरण्यधान्यादिग्राहिणी पात्री भस्त्रा नाम । तद्वन्माता भर्त्राहितवीर्यधारिणी पुत्रस्य द्वारमात्रम् । पितृवीर्यात्मकत्वात् पितुरेव पुत्र इति वा योजना । प्रकृते किं कर्तव्यमिति तत्राह–भरस्वेति । अन्यपुत्रं कथं स्वीकरोमीत्यत उक्तं—दौष्यन्तिमिति । औरसं पुत्रमित्यर्थः । माऽवमंस्थाः स्वैरिणीति माऽवमानय ॥ २१ ॥

नन्वेतद्भरणकरणे मम किं प्रयोजनम् ? येन भरणं स्यादिति तत्राह—रेतोधा इति । यं यः 'सुप्तिङुपग्रहलिङ्गनराणाम्' इति महाव्याकरणसूत्राद् व्यत्ययो युक्तः । पुत्रं पुत्रः, अत्रापि व्यत्ययः । रेतोधाः रेतोधातारम् . 'सप्तसु प्रथमा' इति सूत्रात् । अक्षयम् अक्षयोऽनन्तो यो लोकस्तं वैकुण्ठादिकं नयति प्रापयति । 'यः पुत्रः स रेतोधातारमक्षयं नयति' 'यस्मात् पुत्रमनुशिष्टं लोकमाहुस्तस्मादेनमनुशासति' 'नापुत्रस्य लोकोऽस्ति' इत्यादिश्रुतेः । मयाऽनाहितं गर्भे कथं पुत्रं वदसीति तत्राह– त्वं चेति । चशब्द एवार्थकः । भो नरदेव दुष्यन्त, यं यः-पुत्रं पुत्रो-रेतोधाः-रेतोधातारं पितरमक्षयं लोकं नयति तस्यास्य गर्भस्य सर्वदमनाख्यस्य शकुन्तलागर्भस्य धाता रेतोधाता त्वमेव । तस्मात् तव पुत्रं त्वमेव भरस्वेति पूर्वेणान्वयः । अथवाऽस्वीकारेऽनर्थमाह—रेतोधा इति । रेतोधा

---

[1] कारुः शिल्पी इत्यमरः । [2] पङ्कोपेतप्रदेश इत्यर्थः । सजम्बाले तु पङ्किलः इत्यमरः ।

पितर्युपरते सोऽभूच्चक्रवर्ती महायशाः ।
महिमा गीयते तस्य हरेरंशभुवो भुवि　　॥ २३ ॥

चक्रं दक्षिणहस्तेऽस्य पद्मकोशश्च पादयोः ।
ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराट् प्रभुः　　॥ २४ ॥

पञ्चपञ्चाशतैर्मेध्यैर्गङ्गायामनु वाजिभिः ।
दीर्घतमसं पुरोधाय यमुनायामनु प्रभुः　　॥ २५ ॥

अष्टसप्तति मेध्याश्वान् बबन्ध प्रददे वसु ।
भरतस्य हि दौष्यन्तेरग्निः साचीगुणे चितः　　॥ २६ ॥

सहस्रं वद्वशो यस्मिन् ब्राह्मणा गा विभेजिरे ।
त्रयस्त्रिंशच्छतं ह्यश्वान् बध्द्वा विस्मापयन् नृपान् ।
दौष्यन्तिरत्यगान्मायां देवानां पुरुमायया　　॥ २७ ॥

---

भवान् पुत्रं यमक्षयं यमस्य मृत्योः क्षयं निवासं नयति । क्षि निवासगत्योरिति धातोः क्षयो निवासः । मृतप्रायं करोति अस्वीकारात् । तेन सत्पुत्रहत्याख्यदोषप्राप्तिस्तत्र स्यादतस्तद्भयादपि स्वीकुर्वित्यर्थः । अथवा रेतोधाः अक्षयगतिमनन्याधारं यं पुत्रं नयति स्वाश्रयं करोति स पुत्रस्तं रेतोधातारमक्षयं लोकं नयति । अनन्याधारत्वे हेतुगर्भविशेषणमाह—त्वं चेति । अस्य सर्वस्य प्रमाणं शकुन्तलावचनमित्याह —सत्यमिति । शकुन्तला सत्यं यथार्थमेवाह नानृतम् ॥ २२ ॥

पितरि दुष्यन्ते उपरते मृते सति स दुष्यन्तपुत्रो भरस्वेत्युक्तत्वाद् भरतो भरेण हरिणा ततत्वाद्-वा भूमेर्भरं भरणं तनोतीति वा । चक्रवर्ती महायशाश्चाभूदित्यन्वयः ॥ २३ ॥ नाम्ना महाभिषेकेण इन्द्रेणाभिषिक्तोऽधिराट्प्रभुः महाराज ईजे ॥ २४ ॥ गङ्गायामनु तत्तीरे वृत्रघ्नाख्यक्षेत्रे पञ्चपञ्चाशतैः पञ्चभिः पञ्चाशता च, पञ्चोत्तरपञ्चाशत्सङ्ख्याकैरित्यर्थः । मेध्यैर्वाजिभिरीजे । दीर्घतमसं पुरोधाय पुरोहितं कृत्वा । प्रभुरुत्तमकल्पेन यष्टुं समर्थः ॥ २५ ॥ पुनर्यमुनायामनु तीरे अष्टसप्तति मेध्याश्वान् बबन्ध । तदा वसु धनकनकादिदक्षिणां प्रकर्षेण ददे । भरतस्य सामर्थ्यमाह—भरतस्येति । कैकेयी-पुत्रव्यावृत्यर्थं—दौष्यन्तेरिति । भरतस्य यज्ञे अग्निरग्रभागनेतृत्वादग्निनामा साचीगुणे समीचीनदेश-विशेषे चितः चयनं कृतवानित्यर्थः ॥२६॥ यस्मिन् यज्ञे सहस्रं ब्राह्मणा वद्वशः[1] प्रातिस्विकं कोटिकोटि-

---

[1] गकोशे द्वंद्वशः इति लिपिकृत्प्रमादायत्तम् । सत्यधर्मतीर्थाश्चैवं व्याचख्यिरे । तथाहि—सहस्रं वद्वश इति सुपाठः । द्वंद्वश इति तु लेखकमहिमा । सर्वत्र श्रौतपदानुवादादत्र । अपि च अस्मद्व्याख्यानं भारतानुगुणम् । तथाहि

मृगान् शुक्लदतः कृष्णान् हिरण्येन परिष्कृतान् ।
अदात् कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २८ ॥

भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ।
नोदायुर्नैव प्राप्स्यन्ति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥

किरातहूणान् यवनानन्ध्रान् कङ्कान् कशान् शकान् ।
अब्रह्मण्यान् नृपांश्चाहन् म्लेच्छान् दिग्विजयेऽखिलान् ॥ ३० ॥

जित्वा पुराऽसुरान् देवा येन स्वौकांसि भेजिरे ।
देवस्त्रियो रसां नीताः पणिभिः पुनराहरत् ॥ ३१ ॥

---

सङ्ख्या गा विभेजिरे विभज्य स्वीकृतवन्तः । बद्धशब्दो वृन्दसङ्ख्यापर्यायः । वृन्दशब्दश्च शतकोटि-वाची । दौष्यन्तिः भरतस्तस्मिन् यज्ञे आहत्य त्रयस्त्रिंशच्छतं त्रयस्त्रिंशदुत्तरशतसङ्ख्यान् मेधार्हान् अश्वान् बद्ध्वा नृपान् विस्मापयन् विस्मितवन्तः कुर्वन् पुरुमायया महता महिम्ना देवानां मायां निज-भोगेच्छामत्यगात् यज्ञे विघ्नकरीमतिचक्रामेति ॥ २७ ॥

शुक्लदतः शुक्लदन्तान् हिरण्येन परिष्कृतान् अलंकृतान् कृष्णान् मृगान् कृष्णमृगान्, गजान् वा । 'भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः' इति हलः । मष्णारे क्षेत्रविशेषे, कर्मणि क्रतुरूपे, क्रियमाण इति शेषः । नियुतानि दशलक्षाणि ॥ २८ ॥

पूर्वे नृपा महत्कर्म बह्वश्वमहीदानादिरूपं न उदायुः प्रापुः । अपरे पश्चात्तना न प्राप्स्यन्ति । इदनीन्तना नाप्नुवन्तीति किमु वक्तव्यम् । तत्र दृष्टान्तमाह—बाहुभ्यामिति । अग्निष्टोमादिसाधन-मन्तरेण केवलं बाहुभ्यां स्वर्गं यथा न गच्छन्ति तथा । आकाशं वा । 'त्रिदिवो व्योम्नि दिव्यपि' इति यादवः ॥ २९ ॥ स किरातादीन् म्लेच्छविशेषान् अब्रह्मण्यान् ब्राह्मणविरोधिनो नृपानहन् ॥ ३० ॥ विक्रमान्तरं दर्शयति—जित्वेति । पुरा दिग्विजयकाले येन सहायभूतेन भरतेनासुरान् जित्वा देवाः स्वौकांसि स्वस्वस्थानानि भेजिरे । स भरतो नाम्ना पणिभिरसुरैः रसातलं नीता देवस्त्रियः पुनराहरद् आनीतवान् ॥ ३१ ॥

---

द्रोणपर्वणि— 'ग्रामान् गृहांश्च क्षेत्राणि विविधांश्च परिच्छदान् । यस्य यूपः शतव्यामः परिणाहेन काञ्चनः । शतकोटियुतांश्चैव ब्राह्मणेभ्यो ह्यमन्यत' इत्यादि । अतः चतुर्दशलक्षेत्यादिविवरणं तद्दुर्दशात इति विज्ञेयम् । तथाहि—चतुरशीत्यधिकैस्त्रयोदशसहस्रैः (१३०८४) एकं बद्धम् । सप्ताधिकशतबद्धानि । इमामेव सङ्ख्यां संगृह्य शुको वक्ष्यति । एवं चतुर्दशलक्षाणां सप्ताधिकशतभागो बद्धम् । [चतुर्दशानां लक्षाणां सप्ताधिकशतांशकः । बद्धं चतुरशीत्यग्रसहस्राणि त्रयोदश' इति श्रीधरप्रभृतयो व्याचक्रिरे]—स.

सर्वकामान् दुदुहतुः प्रजानां तस्य रोदसी ।
समास्त्रिनवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥

स सम्राट् लोकपालानामैश्वर्यमधिराट्श्रियम् ।
चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह ॥ ३३ ॥

तस्यासन् नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ।
जघ्नुस्त्यागभयात् पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥

तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ।
मरुत्स्तोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥

अन्तर्वत्न्या भ्रातृपत्न्या मैथुनाय बृहस्पतिः ।
प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥

---

त्रिनवसाहस्रीः समाः सप्तविंशत्सहस्रसंवत्सरान् रोदसी द्यावापृथिव्यौ तस्य राज्ये दुदुहतुर्दोहनं चक्रतुः । स भरतश्चक्रमाज्ञां सर्वदिक्ष्ववर्तयत् प्रवर्तयामास । 'चक्रमाज्ञारथाङ्गयोः' इत्यभिधानम् ॥ ३२ ॥ भरतस्य वैराग्यप्रकारमाह—स इति । सम्राट् चक्रवर्ती लोकपालानामिन्द्रादीनामैश्वर्यं स्वर्गाद्याधिपत्यम् अधिराट्श्रियमधिराजां साम्राज्यलक्ष्मीमपि, अस्खलितं केनाप्यप्रतिहतं चक्रं सैन्यं राष्ट्रं वा प्राणानिन्द्रियाणि च मृषा नाशशिरस्कमिति मत्वा उपरराम उपरतव्यापारोऽभूत् । निस्पृहोऽभूदित्यर्थः । हेत्यनेन 'आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम्' इत्यादिवाक्यप्रसिद्धिं सूचयति । 'चक्रं सैन्ये जलावर्ते राष्ट्रे' इत्यभिधानम् ॥ ३३ ॥ इदानीं तस्य सन्तानप्रकारं कथयति—तस्येति । वैदर्भ्यः विदर्भराजपुत्र्यः । ते पुत्रा नानुरूपा रूपशीलादिषु न मे योग्या इति राज्ञा ईरिते कथिते ताः पत्न्य-त्यागभयाद् एतद्दौरात्म्येनास्माकमपि त्यागो भवेदिति भयात् पुत्रांस्तान् जघ्नुरित्यन्वयः ॥ ३४ ॥

नन्वेवं चेद् भरतस्य पुत्राभावेन परलोकक्षेमाभावः प्रसक्त इत्यत आह—तस्येति । तस्य वंशे एवं वितथे उत्सन्ने सति तदर्थं स्वानुरूपपुत्रार्थं नाम्ना मरुत्स्तोमेन मरुद्विषययज्ञेन यजतस्तस्य प्रसन्नाः मरुतो नाम देवाः गुणनिमित्तेन नाम्ना भरद्वाजं सुतमुपाददुः पुत्रत्वेन दत्तवन्तः ॥ ३५ ॥

कुतोऽस्य भरद्वाजाख्यं नाम कथमस्योत्पत्तिरित्यतस्तदुत्पत्तिप्रकारमाह—अन्तर्वत्न्येति । अन्तर्वत्न्या गर्भिण्या बृहस्पतेर्भ्रातुरुचथ्यस्य पत्न्या नाम्ना ममतया गर्भिणीति वारितोऽपि मैथुनाय प्रवृत्तो बृहस्पतिः पादेन द्वारं निरुन्ध्यमानं गर्भं गर्भस्थं दीर्घतमसं क्रोधेनान्धो भवेति शप्त्वा स्ववीर्यं तस्यां ममतायामवासृजत् न्यषिञ्चदित्यन्वयः । बृहस्पतिशापाद् गर्भस्थो दीर्घतमा अन्धो बभूव । तेन च तद्वीर्यं पादप्रहारेण योनेर्बहिर्भूमौ पतितम् । तेन च सद्यः दीर्घतमसोऽन्यः कुमारोऽभवत् ॥ ३६ ॥

तं त्यक्तुकामां ममतां भर्तृत्यागविशङ्किताम् ।
नामनिर्वचनं तस्य श्लोकमेतं जगुः सुराः ॥ ३७ ॥

मूढे भर द्वाजमिमं भरद्वाजं बृहस्पतेः ।
त्राता तु दुःखात् पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥

चोद्यमाना सुरैरेवं मत्वा तं देवमात्मजम् ।
व्यसृजन्मरुतोऽबिभ्रन् दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥

इति श्रीमद्भागवते नवमस्कन्धे सप्तदशोऽध्यायः ।

---

ततः किमभूदिति तत्राह—तमिति । बृहस्पतिर्वीर्यजं कुमारं त्यक्तुकामामुचथ्याख्यभर्तृत्यागविशङ्कितां ममतां प्रति तस्य सुतस्य नाम्नो निर्वचनं येन ज्ञायते तमेतं श्लोकं सुरा जगुरित्यन्वयः ॥ ३७ ॥ भो मूढे इम द्वाजं भर पोषय । भृञ् भरणे इति धातोः । उचथ्यस्य क्षेत्रजं बृहस्पतेर्जातमिति द्वयोः उचथ्यक्षेत्रबृहस्पत्योर्जातत्वाद् द्वाजमिति, भरद्वाजनामानम् । 'सह सुपा' इति सूत्राद् भरेति तिङन्तस्य सुबन्तेन समासः । तदुक्तम् 'द्वाजमिमं भर । उचथ्यस्य क्षेत्रजो बृहस्पतेर्जात इति द्वयोर्जातत्वाद् द्वाजः' इति । द्वितीयपादं व्याचष्टे—बृहस्पतेरिति । बृहस्पतेः प्रजासन्ततिभर्तृत्वाद्-भरद्वाज इति निर्वचनान्तरम्[1] । तदुक्तम् 'बृहस्पतेर्वाज प्रजासन्ततिर्येन भृता स बृहस्पतेर्भरद्वाजः' इति । उक्तं हि 'एष उ एव बिभ्रद्वाजः, प्रजा वै वाजस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भरद्वाजस्तस्माद् भरद्वाज इत्याचक्षत एतमेव सन्तम्' इत्यैतरेये । भरद्वाज इत्यत्र भरतेः शन्विकरणत्वादभ्यासाभावः । पितरौ दुःखाद् भरद् भर्ता । बृहस्पतेर्वा जातो वाजः । वाशब्दस्य पूर्वनिपातो ज्ञातव्यः । यथा बृहस्पतेर्जातः तथोचथ्यादपीत्यर्थः । ततः पितृभर्तृत्वात्, बृहस्पतेर्वाजत्वादयं भरद्वाज इति । ॥ ३८ ॥ सा ममता सुरैरेवं चोद्यमाना भरेति प्रेर्यमाणापि तमात्मजं देवं द्योतमानमात्मजं मत्वा भर्तृत्यागशङ्कया तं व्यसृजत् । ततो मरुतो देवास्तं द्वाजं गर्भमबिभ्रन् भृतवन्तोऽपोषयन्नित्यर्थः । अनेन मरुद्भिर्भृतत्वाद् भरः, स चासौ द्वाजश्चेति निर्वचनान्तरमवगन्तव्यम् । तदुक्तं पाद्मे 'भरद्वाजो मरुद्भिश्च भृतो जातो द्वयोर्यतः' इति । भृत्वा किं कृतं तैरिति तत्राह—दत्त इति । भरतस्यान्वये वितथे सति मरुद्भिरयं भरताय दत्तः, पुत्रत्वेनेति शेषः । अस्य भरतपुत्रत्वानन्तरं वितथेति नामान्तरमपि ज्ञातव्यम् । 'वितथस्य सुतान्मन्योः' इत्युत्तरवचनाच्चेति ॥ ३९ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां नवमस्कन्धस्य सप्तदशोऽध्यायः ।

---

[1] बृहस्पतेः वाजं प्रजातन्तुं भरतीति भरद्वाजः । निरुक्तत्वात् पदविपर्ययः ।

## ॥ अथ अष्टादशोऽध्यायः ॥

श्रीशुक उवाच —

वितथस्य सुतान्मन्योर्बृहत्क्षेत्रो जयस्ततः ।
महावीर्यो नरो गर्गः सङ्कृतिस्तु नरात्मजः ॥ १ ॥

गुरुश्च रन्तिदेवश्च सङ्कृतेः पाण्डुनन्दन ।
रन्तिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥

वीतवित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ।
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ॥ ३ ॥

व्यतीयुरष्टचत्वारिंशदहान्यपिबतः[1] किल ।
घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥

कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ।
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥

तस्मै संव्यभजत् सोऽन्नमाहृत्य श्रद्धयाऽन्वितः ।
हरिं सर्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥

---

वितथसंज्ञो भरद्वाजो ब्राह्मणोऽपि भरतस्य दत्तपुत्रो जात इति तस्यान्वयः कथ्यते—**वितथस्येत्यादिना** ॥१॥ रन्तिदेवस्य माहात्म्यं भगवन्महिमोपचितत्वात् कथयति-**रन्तिदेवस्येत्यादिना**। चशब्दो दौष्यन्तिमहिम्ना समुच्चीयते ॥ २ ॥ कीदृशं यशः शत्रुविजयाल्लब्धमुतान्यस्मादिति संशयं निवारयति-**वीतवित्तस्येति** । वीतवित्तस्य वस्तुशून्यस्य दरिद्रस्य ददतो दानं कुर्वतः । धनाभावे दानं कथं घटत इति तत्राह-**लब्धमिति** । स्वस्य बुभुक्षाभावाद् ददाति न तु कर्तव्यत्वेनेति तत्राह-**बुभुक्षत इति** । भोगेच्छुश्चेत् सस्वः, अन्यथा तदसम्भवादिति तत्राह—**निष्किञ्चनस्येति** । तर्हि भिक्षुवत् कृपण इत्यतो वाह— **निष्किञ्चनस्येति**। अकृपणस्य । अकृपणत्वं कथमवगतमिति तत्राह-**धीरस्येति** । धिया सह रमते न तु स्त्रियेति धीरस्तस्य । एकाकिनः का चिन्ता इति तत्राह—**सकुटुम्बस्येति** । सीदतः शीर्णस्य ॥ ३ ॥ शीर्णत्वे निमित्तमाह—**अपिबत इति** । जलमप्यपिबत इत्यर्थः । घृतं च पायसं च संयावो गोधूमान्नं च घृतपायससंयावम् । उपस्थितं प्राप्तम् ॥४॥ जातवेपथोरुत्पन्नकम्पस्य भोक्तुकामस्य सतः काले भोजनसमये ॥ ५ ॥ आहृत्य आनीय । सर्वत्र अतिथिप्रभृतिषु ॥ ६ ॥

---

[1] दिनान्यपिबत इति पाठोऽतिसरल:—स.

अथाऽन्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः ।
विभक्तं व्यभजत् तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥

याते शूद्रे [1]तमभ्यागादतिथिः श्वभिरावृतः ।
राजन् मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥

स आतिथ्यावशिष्टं यद् बहुमानपुरस्सरम् ।
तच्च दत्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥

पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ।
पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥

तस्यातिकरुणां वाचं निशम्य विपुलश्रमाम् ।
कृपया भृशसन्तप्त इदमाहामृतं वचः ॥ ११ ॥

न कामयेऽहं गतिमीश्वराणां महर्द्धियुक्तामपुनर्भवं च ।
आर्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितां येन भवन्त्यदुःखाः ॥ १२ ॥

क्षुत्तृट्श्रमो [2]गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः ।
सर्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणेन ॥ १३ ॥

---

ब्राह्मणाय विभक्तस्यान्नस्य शेषं भोक्ष्यमाणस्य भोक्तुकामस्य महीपतेरन्यो वृषलोऽतिथिरागमत् । विभक्तं पूर्वं विभक्तमन्नम् ॥ ७ ॥ सगणाय गणसहिताय । नमश्चक्रे, हरये इति शेषः । 'शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इत्यादिस्मृतेः ॥ ९ ॥ घृतादिकं दत्वा पानीयमात्रमुच्छेषमवशिष्टम् । तदपि एकपरितर्पणमेकस्य तृप्तिकरं न बहूनाम्, तज्जलं पास्यतः पातुकामस्य । पुल्कसः चाण्डालः ॥ १० ॥ विपुलश्रमां पिपासयाऽतिश्रमोपेताम् ॥ ११ ॥

परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयमाशास्त इत्याह—न कामय इति । महर्द्धियुक्ताम् अगणितसम्पत्समृद्धिसम्पन्नां योगेश्वराणां गतिमणिमादिलक्षणां महरादिलोकम् अपुनर्भवं मोक्षं वा न कामये न वाञ्छामि । तर्हि किं काङ्क्षसीत्यत आह—अखिलदेहभाजामिति । अखिलदेहभाजां देहिनामन्तःस्थितामार्तिमहं प्रपद्ये । येन मदर्पितजलपानादिना, तद्दुःखभोक्त्रा मयेति वा देहभाजो अदुःखाः क्षुधादिनिमित्तदुःखरहिता भवन्ति तेन तेषामन्तःस्थितामार्तिमहं प्रपद्य इत्यन्वयः । तृषादिकं

---

[1] तमन्योऽगाद्—शे. [2] गात्रपरिश्रमश्च—शे.

एवं प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुल्कसायाददाद् धीरो निसर्गकरुणो नृपः ॥ १४ ॥

तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ।
आत्मानं दर्शयाञ्चक्रुर्माया विष्णुविनिर्मिताम् ॥ १५ ॥

स वै तेभ्यो नमस्कृत्य निःसङ्गो विगतस्पृहः ।
वासुदेवे भगवति भक्त्या चक्रे मनः परम् ॥ १६ ॥

ईश्वरालम्बनं चित्तं कुर्वतोऽनन्यराधसः ।
माया गुणमयी राजन् स्वप्नवत् प्रत्यलीयत ॥ १७ ॥

तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।
अभवन् योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥

---

मय्येवास्तु तन्निवृत्तिरस्तु सर्वेषामिति रन्तिदेवस्य काङ्क्षेति ॥ १२ ॥

किमर्थमेवमार्तिमर्थयस इत्यत आह—क्षुत्तृडिति । कृपणस्य जन्तोर्जीवस्य जीवजलार्पणेन जीवनप्रदजलदानेन सर्वेषां सुखं स्यात् । तदार्तिर्ममास्त्विवति जिजीविषोर्जीवितुमिच्छतः पुंसः क्षुत्तृडादयो निवृत्ता भवन्तीत्यन्वयः । अन्यदुःखनिवृत्त्यैव मे क्षुत्तृडादिसर्वदुःखनिवृत्तेरिति यावत् । अनेन क्षुधादिमतः पुंसोऽन्नजलादिदानेन दातुरपि समूलं तन्निवृत्तिः, तददाने न तन्निवृत्तिरित्यन्वयव्यतिरेकौ द्रष्टव्यौ ॥ १३ ॥ पिपासया म्रियमाणोऽत्यन्तं पीडितोऽपि निसर्गकरुणः स्वाभाविककृपो धीरो धिया हरौ रमत इति स नृपो पुल्कसायाददादित्यन्वयः ॥ १४ ॥

आत्मानं स्वं मायां ब्राह्मणादिप्रदर्शनरूपमहिमानम् । महिमाऽपि भगवदनुग्रहविजृम्भित इत्याह —विष्ण्विति । आश्रिता इति शेषः । ईश्वरेच्छया तद्धैर्यपरीक्षार्थं ब्राह्मणादिरूपेण समाजग्मुरित्यर्थः ॥ १५ ॥ अनन्यसाधारणतां मनोधारणस्याह—परमिति ॥ १६ ॥

ईश्वरालम्बनं श्रीनारायणविषयम् । अनन्यराधसो भगवत्सिद्धिमन्तरेणान्यसिद्धिशून्यस्य तदेकनिष्ठस्येत्यर्थः । अन्यस्माद् राधः सिद्धिर्मुक्तिः तया रहितस्य । भगवत एवापेक्षिताशेषपुरुषार्थवतः । माया संसाराख्या प्रत्यलीयत नष्टाऽभूत् ॥ १७ ॥

तस्य रन्तिदेवस्य प्रसङ्गः कथालक्षणः तस्यानुभावेन भावसूचकेन । 'अनुभावः प्रभावे स्यान्निश्चये भावसूचके' इति यादवः ॥ १८ ॥

गर्गाच्छिनिस्ततो गार्ग्यात् क्षत्राद् ब्रह्म ह्यवर्तत ।
दुरितक्षयो महावीर्यात् तस्य त्रय्यारुणिः कविः ।
पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ १९ ॥

बृहत्क्षेत्रस्य होत्रोऽस्माद्धस्ती यद् हस्तिनापुरम् । नृ
अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ २० ॥

अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥

अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः ।
बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ २२ ॥

तत्सुतो विशदस्तस्य श्येनजित् समजायत ।
रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥

रुचिराश्वसुतो पारः पृथुसेनस्तदात्मजः ।
पारस्तत्तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥

अणुहो नाम यस्तेषां ज्येष्ठो सत्यात्मको नृप ।
स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ २५ ॥

योगेशो गविभार्यायां विश्वक्सेनमधात् सुतम् ।
जैगीषव्योपदेशेन योगतन्त्रं चकार ह ॥ २६ ॥

उदक्सेनस्ततस्तस्माद् भल्लादो बार्हदीषवः ।
यवीनरो द्विमीढस्य कृतिमांस्तत्सुतस्ततः ॥ २७ ॥

---

ब्रह्म ब्राह्मणकुलम् । नाम्ना दुरितक्षयः, तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः ये, ते अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गताः ॥ १९ ॥ मन्योर्ज्येष्ठसुतस्य वंशमाह—बृहत्क्षेत्रस्येति । नाम्ना हस्ती । यद् येन हस्तिनापुरम्, कृतमिति शेषः । अजमीढादयस्त्रयो हस्तिनः पुत्राः ॥ २० ॥ द्विजाः स्युरभवन् ॥ २१ ॥

सत्ये पूर्णानन्दज्ञानात्मके हरावात्मा मनो यस्य सः सत्यात्मकोऽणुहः ॥ २५ ॥ योगेशो ब्रह्मदत्तो गविनाम्न्यां भार्यायाम् । जैगीषव्यो[1] रुद्रावतारस्तस्योपदेशेन योगतन्त्रं योगशास्त्रम् ॥ २६ ॥

---

[1] ' दूर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकाः ' इति—स.

नाम्ना सत्यधृतिर्यस्माद् दृढनेमिः सुपार्श्वकृत् ।
सुपार्श्वात् सुमतिस्तस्य पुत्रः सन्ततिमांस्ततः ॥ २८ ॥
कृतिर्हिरण्यनामाद् यो योगं प्राप्य जगौ द्विषट् ।
संहिताः प्राच्यसाम्नां वै नीपो ह्यौग्रायुधस्ततः ॥ २९ ॥
तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुञ्जयः ।
ततो बहुतिथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ ३० ॥
नलिन्यामजमीढस्य नीलः शान्तिस्तु तत्सुतः ।
शान्तेः सुशान्तिस्तत्पुत्रः पुराजोऽर्कस्ततोऽभवत् ॥ ३१ ॥
हर्म्याश्वस्तत्सुतस्तस्य पञ्चासन् मुद्गलादयः ।
यवीनरो बृहदिषुः काम्पिल्यः सञ्जयस्ततः ॥ ३२ ॥
हर्म्याश्वः प्राह पुत्रा मे पञ्चानां रक्षणाय हि ।
विषयाणामलमिमे इति पञ्चालसञ्ज्ञिताः ॥ ३३ ॥
मुद्गलाद् ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसञ्ज्ञितम् ।
मिथुनं मुद्गलाचार्याद् दिवोदासः पुमानभूत् ॥ ३४ ॥
अहल्या कन्यका यस्यां शतानन्दस्तु गौतमात् ।
तस्य शतधृतिः पुत्रो धनुर्वेदविशारदः ॥ ३५ ॥
शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात् किल ।
शरस्तम्बेऽपतद् रेतो मिथुनं तदभूच्छुभम् ॥ ३६ ॥
तद् दृष्ट्वा कृपयाऽगृह्णाच्छन्तनुर्मृगयां चरन् ।
कृपः कुमारः कन्या च द्रोणपत्न्यभवत् कृपी ॥ ३७ ॥

इति श्रीमद्भागवते नवमस्कन्धे षोडशोऽध्यायः ।

---

सुपार्श्वकृत् सुपार्श्वजनकः ॥ २८ ॥ योगं तच्छास्त्रं प्राप्य प्राच्यसाम्नां द्विषट् द्वादश संहिता जगौ ॥२९॥ ततः पुराजाद् अर्काख्यः ॥ ३१ ॥ इमे हि पुत्राः पञ्चानां विषयाणां शब्दादिपञ्च-विषयाणां सकाशान्मे रक्षणायाऽलं समर्था इत्युक्तेः पञ्चालसञ्ज्ञिता अभवन् ॥ ३२ ॥ ब्रह्म ब्राह्मण-कुलं निर्वृत्तं जातम् ॥६४॥ यस्माच्छरद्वतः ॥ ३६ ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य अष्टादशोऽध्यायः ।

## ॥ अथ एकोनविंशोऽध्यायः ॥

श्रीशुक उवाच —

मित्रायुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ।
सुदासः सहदेवोऽथ सोमको जन्तुजन्मकृत् ॥ १ ॥
तस्य पुत्रशतं तेषां यवीयान् पृषतस्ततः ।
द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥
धृष्टद्युम्नाद् धृष्टकेतुर्हर्म्याः[1] पाञ्चालका इमे ।
योऽजमीढसुतो ह्यन्य ऋक्षात् संवरणस्ततः ॥ ३ ॥
तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ।
परीक्षित् सुधनुर्जह्नुर्निषधाश्चः कुरोः सुताः ॥ ४ ॥
सुहोत्रोऽभूत् सुधनुषश्च्यवनस्तत्सुतः कृती ।
वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥
कुशाम्बुमत्स्यप्रत्यग्रवेदिपाद्याश्च चेदिपाः ।
बृहद्रथात् कुशाग्रोऽभूद् ऋषभस्तस्य तत्सुतः ॥ ६ ॥
जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ।
अन्यस्यामपि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥
ते मात्रा बहिरुत्सृष्टे जरया चाभिसन्धिते ।
जीव जीवेति क्रीडन्त्या जरासन्धोऽभवत् सुतः ॥ ८ ॥
ततश्च सहदेवोऽभूत् सोमापिर्यच्छ्रुतश्रवाः ।
परीक्षिदनपत्योऽभूत् सुरथो नाम जाह्नवः ॥ ९ ॥

---

॥ अथ एकोनविंशोऽध्यायः ॥

अहल्यासन्ततिं प्रोच्य तद्भ्रातृदिवोदाससन्ततिं कथयति—**मित्रायुरिति** । अथेत्यस्या वृत्तिः । तस्मात् सुदासस्तस्मात् सहदेवस्तस्मात् सोमक इति विवेकः । जन्तुजन्मकृत् सोमकस्य जन्तुर्ज्येष्ठपुत्रः ॥ १ ॥ पृषतो यवीयान् कनिष्ठः ॥ २ ॥ अजमीढसुतो योऽन्यः, बृहदिषोरिति शेषः । अन्यस्यां भार्यायां जातः नाम्ना ऋक्षः । ऋक्षाज्जातः संवरणो नाम ॥३॥ जरया तन्नाम्न्या राक्षस्या ॥८॥ जाह्नवः जह्नोः पुत्रः ॥ ९ ॥

---

[1] हर्म्या उपाधितः—स.

ततो विदूरथस्तस्मात् सार्वभौमस्ततोऽभवत् ।
जयत्सेनस्तत्तनयो राचीकोऽतो ग्रुमानभूत् ॥ १० ॥

ततश्चाऽक्रोधनस्तस्माद् देवातिथिरमुष्य च ।
ऋक्षस्तस्य दिलीपोऽभूत् प्रतीपस्तस्य चात्मजः ॥ ११ ॥

देवापिः शन्तनुस्तस्य बाह्लीक इति चात्मजाः ।
पितृराज्यं समुत्सृज्य देवापिस्तु वनं गतः ॥ १२ ॥

अभवच्छन्तनू राजा प्राङ् महाभिषसञ्ज्ञितः ।
यं यं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ।
शान्तिमाप्नोति चैवाग्र्यां कर्मणा तेन शन्तनुः ॥ १३ ॥

समा द्वादश तद्राष्ट्रे न ववर्ष यदा विभुः ॥ १४ ॥

शन्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक् ।
राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥

एवमुक्तो द्विजैर्ज्येष्ठं छन्दयामास सोऽब्रवीत् ।
तन्मन्त्रिप्रहितैर्विप्रैर्वेदाद् विभ्रंशितो गिरा ।
वेदवादातिवादान् वै ततो देवो ववर्ष ह ॥ १६ ॥

---

तुस्त्वग्दोषादिविशेषसूचकः । तदुक्तम् ‘ त्वग्दोषयुक्तो देवापिर्जगाम तपसे वनम् ’ इति ॥१२॥ शन्तनुशब्दं निर्वक्ति— यं यमिति । कराभ्यां यं यं जीर्णं जराद्युपेतं स्पृशति स स एतत्स्पृष्टो यौवनमेति । शं सुखसाधनीभूता तनुर्येन सः सुखप्रदायकत्वात् शम्, ‘ तनु विस्तारे ’ इति धातोः शरीरपुष्टिहेतुत्वात् तनुः. शं चासौ तनुश्चेति वा । शन्तं शान्तं नयति प्रापयतीति वा । ‘ द्वौ चापरौ वर्णविकारनाशौ ’ इति निरुक्ते वर्णविकारनाशयोरुक्तत्वात् । शन्तं शान्ति सुखं नयतीति शन्तनुरिति च निरुक्तिं सूचयति— शान्तिमाप्नोतीति ॥ १३ ॥

दाराग्निहोत्रसंयोगादिकं यः कुरुतेऽग्रजे स्थिते सति स परिवेत्ता । तदुक्तम् ‘ दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते । परिवेत्ता स विज्ञेयो परिवित्तिस्तु पूर्वजः ’ इति । अयं शन्तनुरग्रभुक् अग्रजस्य देवापेरग्रतो राज्यभोक्ता । त्वं परिवेत्ता, एतदधर्मादनावृष्टिः, पुरराष्ट्रविवृद्धये अग्रजाय देवापये आशु जननाशात् प्राग् राज्यं देहीति ब्राह्मणैरुक्त इत्यन्वयः ॥ १५ ॥

छन्दयामास प्रसादयामास । शन्तनोः कश्चिन्मन्त्री अश्मकशर्मकः, शन्तनोर्ज्येष्ठगमनात् पूर्वमेव

देवापिर्योगमास्थाय कलापग्राममास्थितः ।
सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ १७ ॥

बाह्लीकात् सोमदत्तोऽभूद् भूरिर्भूरिश्रवास्ततः ।
शलश्च शन्तनोरासीद् गङ्गायां भीष्म आत्मवान् ॥ १८ ॥

सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ।
वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ १९ ॥

शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः ।
विचित्रवीर्योऽवरजो नाम्ना चित्राङ्गदो हतः ॥ २० ॥

यस्यां पराशरात् साक्षादवतीर्णो हरेः कला ।
वेदगुप्त्यै मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ २१ ॥

हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः ।
मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगौ ॥ २२ ॥

विचित्रवीर्योऽथोवाह काशिराजसुते बलात् ।
स्वयंवरादुपानीते अम्बिकाम्बालिके उभे[1] ॥ २३ ॥

---

विप्रान् न्ययुङ्क्त अयं देवापिर्यथा वेदमार्गाद् विभ्रंशितो भवेत् तथा कर्तव्यमिति । तन्मन्त्रिप्रहितैर्विप्रैर्गिरा वेदवचनेन वेदाद् विभ्रंशितः सन्मार्गभ्रंशितः स देवापिः वेदवादातिवादान् वेदवादमतिक्रम्य विद्यमानान् वादानब्रवीत् । ततः देवापौ विभ्रष्टे सति इन्द्रदेवो ववर्ष ॥ १६ ॥

योगं भगवद्ध्यानम्[2] ॥ १७ ॥ रामः परशुरामः ॥ १९ ॥ दाशकन्यायां तत्पालितायां सत्यवत्याम् । समाननाम्ना निमित्तेन चित्राङ्गदेन गन्धर्वेण हतः । तदुक्तं भारते सम्भवपर्वणि 'गन्धर्व उवाच— त्वं वै सदृशनामासि युद्धं देहि नृपात्मज । नाम वान्यत् प्रगृह्णीष्व यदि युद्धं न दास्यसि ' इत्यादिपद्यैः ॥ २० ॥ यस्यां दाशकन्यायाम् । वेदगुप्त्यै तद्रक्षणाय कृष्णो व्यासो मुनिरवतीर्णः । यतः कृष्णादिदं श्रीमद्भागवतम् अध्यगामधीतवानस्मि ॥ २१ ॥ श्रीमद्भागवतं स्तौति—हित्वेति ॥ २२ ॥ काशिराजसुते ते अम्बिकाम्बालिके बलाद् भीष्मेणोपानीते ॥ २३ ॥

---

[1] उत्कृष्टा भाः ययोस्ते, ते उभे । एनेन द्विवचनादेव द्वित्वे लब्धे पुनरुभे इति व्यर्थमिति परास्तम्—स.

[2] विष्णोः प्रसादात् स कृते युगे राजा भविष्यति । [ता–निर्णये अ–११श्लो ७]

तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥

क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ।
धृतराष्ट्रं च पाण्डुं च विदुरं चाप्यजीजनत् ॥ २५ ॥

गान्धार्यां धृतराष्ट्रस्य जज्ञे सुतशतं नृप ।
तेषां दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥

शापान्मैथुनरुद्धस्य पाण्डोः कुन्त्यां महारथाः ।
जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥

नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ।
द्रौपद्यां पञ्च पञ्चभ्यः पुत्रास्ते पितरोऽभवन् ॥ २८ ॥

युधिष्ठिरात् प्रतिविन्ध्यः श्रुतसेनो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ २९ ॥

सहदेवसुतो राजन् श्रुतकीर्तिस्तथाऽपरे ।
युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥

त् भीमसेनाद् हिडिम्बायां काल्यां शर्वगतस्ततः ।
सहदेवात् सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥

करेणुमत्यां नकुलो निरमित्रं तथाऽर्जुनः ।
इरावन्तमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ ३२ ॥

मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ।
तव तातः सुभद्रायामभिमन्युरजायत ॥ ३३ ॥

---

यक्ष्मणा क्षयरोगेण ॥ २४ ॥ अप्रजस्य सन्तानरहितस्य भ्रातुर्विचित्रवीर्यस्य । विदुरं भुजिष्यायां जनयामास ॥ २५ ॥ मुनिशापान्मैथुनरुद्धस्य मैथुने मरणलक्षणविघ्नवतः ॥ २७ ॥

द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यः पञ्च पुत्रास्ते तव पितरः पितृव्या अभवन् । अपितर इति वा छेदः । ये पञ्च पुत्राः अभवन् ते अपितर इत्यन्वयः । अपुत्राः सन्त एव द्रौणिना संहृता इति भावः ॥ २८ ॥ विविच्याह — युधिष्ठिरादिति । नाकुलिः नकुलपुत्रः ॥ २९ ॥ भार्यान्तरेषु अपरे च सुता जज्ञिरे इत्याह — युधिष्ठिरादिति ॥ ३० ॥ शर्वगतः शर्वत्रातः ॥ ३१ ॥ अर्जुन उलूप्यां नागकन्यकायाम् इरावन्तं नाम्ना, मणिपूरपतेः पाण्ड्यस्य सुतायां चित्राङ्गदायां पुत्रिका-

सर्वातिरथजिद् वीर उत्तरायां ततो भवान् ।
परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ ३४ ॥
त्वं तु कृष्णानुभावेन सजीवो मोचितोऽन्तकात् ।
तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ ३५ ॥
श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ।
जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ ३६ ॥
सर्पान् वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ।
कावषेयं पुरोधाय तुरं तुरगमेधया ॥ ३७ ॥
समन्तात् पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ।
तस्य पुत्रः शतानीको याज्ञवल्क्यात् त्रयीं पठन् ॥ ३८ ॥
[1]अस्त्रज्ञानं क्रियाज्ञानं शौनकात् परमेष्यति ।
सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ ३९ ॥
विश्रम्भकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ।
गजाह्वये हृते नद्या कौशाम्ब्यां साधु वत्स्यति ॥ ४० ॥
उक्तस्ततश्चित्ररथस्तस्माच्छुचिरथः सुतः ।
तस्माच्च धृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ ४१ ॥
सुनीथस्तस्य भविता नृचक्षुर्यत् सुखीनलः ।
पारिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ ४२ ॥

---

पुत्रधर्मेण दत्तायां बभ्रुवाहनमजीजनत् । सोऽपि बभ्रुवाहनोऽपि तत्पुत्रो मणिपूरपतेः पुत्रः, अभूदिति शेषः ॥ ३३ ॥ ततोऽभिमन्योः ॥ ३४ ॥ निधनं मरणं गतं प्राप्तं त्वाम् ॥ ३६ ॥ सर्पयाग-सम्बन्धिन्यग्नौ होष्यति होमं करिष्यति । तुरं तन्नामकमुनिं पुरोधाय तुरगमेधया अश्वमेधया ॥ ३७ ॥ सर्वां पृथिवीं जित्वा समन्तात् यत्र यत्र तीर्थविशेषास्तत्र सर्वत्राध्वरैरश्वमेधादिभिर्यक्ष्यतीत्यन्वयः॥३८॥ परं हरिविषयकज्ञानम् ॥ ३९ ॥ कौशाम्ब्यां पुर्यां साधु सम्यग् वत्स्यति वासं करिष्यति ॥ ४० ॥

---

[1] कृपादस्त्राण्यवाप्यैषः इति विष्णुपुराणोक्तेः 'अस्त्रज्ञानं कृपाचार्यात्' इत्येव पाठ इति वदन्ति—स. छलारि-शेषाचार्याः श्रीधरशुकदेवप्रभृतयस्त्वेवमेवोचुः ।

नृपञ्जयस्ततो दुर्वस्तिमिस्तस्माज्जनिष्यते ।
ततो बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ ४३ ॥

शतानीकाद् दुर्दमनस्तस्यापत्यं बहीनरः ।
दण्डपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ४४ ॥

ब्रह्मक्षत्रस्य वै योनिर्वंशो देवर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ ४५ ॥

पापानि कीर्तनादेषां विलयं यान्ति कृत्स्नशः ।
अथ मागधराजानो भाविनो ये वदामि ते ॥ ४६ ॥

भविता सहदेवस्य सोमापिर्यच्छ्रुतश्रवाः[1] ।
ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४७ ॥

सुनक्षत्रः सुनक्षत्राद् बृहत्सेनोऽथ कर्मजित् ।
ततः श्रुतञ्जयो विप्रः शुचिस्तस्य भविष्यति ॥ ४८ ॥

क्षेमोऽथ सुव्रतस्तस्माद् धर्मसत्रः शमस्ततः[2] ।
दृढसेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ४९ ॥

सुनीथः सत्यजिदथ विश्वजिद् यद् रिपुञ्जयः ।
बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ५० ॥

इति श्रीमद्भागवते नवमस्कन्धे एकोनविंशोऽध्यायः ।

---

तस्माद् बृहद्रथात् सुदासजः शतानीकः ॥ ४३ ॥ ब्रह्मक्षत्रस्य योनी रक्षको देवर्षयः सत्कृता येन सः वंशः । संस्थाम् अवसानम् ॥ ४५ ॥ विप्रो नाम्ना ॥ ४८ ॥ यद् यस्माद् रिपुञ्जयो भविता ॥ ५० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य एकोनविंशोऽध्यायः ।

---

[1] यत्सुतः श्रवाः—स. [2] श्रमस्ततः—ग.

## ॥ अथ विंशोऽध्यायः ॥

श्रीशुक उवाच —

अनोः सभानरश्चक्षुः परेक्षुश्च त्रयः सुताः ।
सभानरात् कालनरः सञ्जयस्तत्सुतस्ततः ॥ १ ॥

जनमेजयस्तस्य पुत्रो महाशीलो महामनाः ।
उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥

शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ।
वृषदर्भः सुवीरश्च मद्रः कैकय आत्मजाः ॥ ३ ॥

शिबेश्चत्वार एवासन् तितिक्षोश्च वृषद्रथः ।
ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥

अङ्गवङ्गकलिङ्गाद्याः सुह्मपुण्ड्रान्ध्रसञ्ज्ञिताः ।
जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥

चक्रुः स्वनाम्ना विषयान् षडिमान् प्राच्यकानिह[1] ।
खनपानोऽङ्गतो जज्ञे तस्माद् दिविरथस्ततः ॥ ६ ॥

सुतो धर्मरथो यस्य जज्ञे मित्ररथोऽप्रजः ।
रोमपाद इति ख्यातस्तस्मै दशरथः सखा ।
शान्तां स्वकन्यां प्रायच्छद् ऋष्यशृङ्ग उवाह ताम् ॥ ७ ॥

---

ययातेः चतुर्थपुत्रस्यानोरनुसन्ततिमनुक्रामति—अनोरिति ॥१॥ चत्वारोशीनरात्मजा इत्यत्र सन्धिरार्षः । वृषदर्भादयश्चत्वारः शिबेरात्मजाः ॥ ३–४ ॥ दीर्घतमसः सकाशाद् अङ्गवङ्गकलिङ्गा एवाद्याः प्रधाना येषां ते, सुह्मपुण्ड्रान्ध्रनामानो महीक्षितः बलेः क्षेत्रे भार्यायां जज्ञिर इत्यन्वयः । महीक्षित इत्यनेन ब्राह्मणकुलं व्यावर्तयति ॥ ५ ॥ इह भुवि प्राच्यकान् प्राचीविषयान् षड् विषयान् देशान् स्वनाम्ना ख्यातिं चिक्रुः । खनपानो नाम ॥ ६ ॥

तस्मै रोमपादायाप्रजाय तस्य सखा दशरथो रामपिता स्वकन्यां शान्तानाम्नीं प्रायच्छत् । ऋष्यशृङ्गस्तामुवाह उपयेमे । ऋष्यस्य सारङ्गस्य शृङ्गमिव शृङ्गं यस्य सः ॥ ७ ॥

---

[1] प्राच्यकांश्च ते—स.शे.

देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ।
[1]नाट्यसङ्गीतवादित्रैर्विभ्रमालिङ्गनार्हणैः ॥ ८ ॥

स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्पतेः[2] ।
प्रजामदाद् दशरथो येन लेभेऽप्रजः प्रजाः ॥ ९ ॥

चतुरङ्गो रोमपादात् पृथुलाक्षस्तु तत्सुतः ।
बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुताः ॥ १० ॥

ततो बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ।
विजयस्तस्य सम्भूत्यां ततो धृतिरजायत ॥ ११ ॥

ततो धृतव्रतस्तस्य [3]सद्धर्माऽधिरथस्ततः ॥ १२ ॥

योऽसौ गङ्गातटे क्रीडन् मञ्जूषान्तर्गतं शिशुम् ।
कुन्त्याऽपविद्धं कानीनमनपत्योऽकरोत् सुतम् ॥ १३ ॥

वृषसेनः सुतस्तस्य कर्णस्य जगतीपते ॥ १४ ॥

द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ।
आरब्धस्तस्य गान्धारस्तस्य धर्मस्ततो धृतः ॥ १५ ॥

धृतस्य कर्दमस्तस्मात् प्रचेताः प्राचेतसं शतम् ।
म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ १६ ॥

तुर्वसोस्तु सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ।
त्रिभानुस्तत्सुतोऽस्यापि करन्धम उदारधीः ॥ १७ ॥

---

इन्द्रदेवे द्वादशाब्दपर्यन्तमवर्षति सति यं हरिणीसुतं ऋष्यशृङ्गं रामा वराङ्गना नाट्यादिभिर्नानोपायैरानिन्युः । उक्तं च संग्रहरामायणे 'अनावृष्टिभयोद्विग्नो वृष्टिं लब्ध्वा ततो नृपः । दास्यत्ययं मौल्यमिव शान्तां नाम निजात्मजाम्' इति ॥ ८ ॥ अनपत्यस्य सन्तानरहितस्य रोमपादस्य मरुत्पतेरिष्टिम् इन्द्रविषयामिष्टिं निरूप्य कारयित्वा । येन इष्टिविशेषेणाप्रजो दशरथः प्रजाः रामादीन् लेभे ॥ ९ ॥ ततो बृहद्रथात् ॥ ११ ॥ अपविद्धं गङ्गायां त्यक्तम् । कानीनं कन्यायां जातम् । ययातिपुत्रस्य द्रुह्योर्वंशं निरूपयति—द्रुह्योश्चेति ॥ १५ ॥ ययातिपुत्रस्य तुर्वसोर्वंशं कथयति—तुर्वसोरिति ॥ १७ ॥

---

[1] वाद्यसङ्गीत—शे. [2] ग कोशे मूले टीकायामुभयत्र 'मरुत्वतः' इति पाठः । [3] सत्कर्माऽधिरथस्ततः-स.शे.

मरुत्तस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ।
दुष्यन्तं स पुनर्भेजे स्वयं साम्राज्यकामुकः ॥ १८ ॥

ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ।
वर्णयामि महापुण्यं सर्वपापहरं नृप ॥ १९ ॥

यदोर्वंशं नरः श्रुत्वा सर्वपापैर्विमुच्यते ।
यत्रावतीर्णो भगवान् परमात्मा नराकृतिः ॥ २० ॥

यदोः सहस्रजित् क्रोष्टा नलो रिपुरिति श्रुताः ।
चत्वारः सूनवस्तस्य शतजित् प्रथमात्मजः ॥ २१ ॥

महाहयो वेणुहयो हैहयश्चेति तत्सुताः ।
धर्मस्तु हैहयसुतो नेत्रः कुन्तेः पिता ततः ।
सोहञ्जिरभवत् कुन्तेर्महिष्मान् भद्रसेनकः ॥ २२ ॥

दुर्मदो भद्रसेनस्य धनकः कृतवीर्यकः ।
कृत्याग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २३ ॥

अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ।
न्[दत्तात्रेयाद्] दत्तात्रेयाद् हरेरंशात् प्राप्तयोगमहागुणः ॥ २४ ॥

न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ।
यज्ञदानतपोयोगैः श्रुतवीर्यजयादिभिः ॥ २५ ॥

पञ्चाशीतिसहस्राणि ह्यव्याहतबलः समाः ।
अकरोदर्जुनो राज्यं हरिं चैवान्वहं स्मरन् ॥ २६ ॥

अनष्टविष्णुस्मरणो बुभुजेऽक्षय्यषड्वसु ।
तस्य पुत्रसहस्राणां पञ्चैवोर्वरिता मृधे ॥ २७ ॥

---

तत्सुतः करन्धमसुतः मरुत्तोऽपुत्रः पौरवं तद्वंशभवं दुष्यन्तमन्वभूत् स्वराज्यरक्षणाय गृहीतवान् ॥ १८ ॥ सूचीकटाहन्यायेन द्रुह्यादीनां पुत्राणां वंशं कथयित्वा बहुलत्वाद् विशेषपुण्यहेतुत्वाच्च ज्येष्ठपुत्रस्य यदोर्वंशं कथयति—ययातेरिति ॥ १९ ॥ कुन्तेः पिता नेत्रः । ततः कुन्तेः सोहञ्जिः । तत इत्यस्यावृत्तिः । ततः सोहञ्जेर्महिष्मान् । ततो महिष्मतो भद्रसेनकः ॥ २२ ॥ दुर्मदो धनकश्चेति भद्रसेनस्य पुत्रौ । कृतवीर्यप्रभृतयश्चत्वारो धनकात्मजाः ॥ २३ ॥ भोगकालेऽपि विष्णुस्मरणं न

जयध्वजः शूरसेनो ऋषभो मधुरूर्जितः ।
जयध्वजात् तालजङ्घस्तस्य पुत्रशतं त्वभूत् ॥ २८ ॥

क्षत्रं यत् तालजङ्घाख्यमौर्वतेजोपसंहृतम् ।
तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः[1] ॥ २९ ॥

तस्य पुत्रशतं त्वासीद् वृष्णिज्येष्ठं यतः कुलम्[2] ।
माधवा वृष्णयो राजन् यादवाश्चेति सञ्ज्ञितम्[3] ॥ ३० ॥

यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ।
वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः ॥ ३१ ॥

शशबिन्दुर्महायोगी महाभोजो महानभूत् ।
चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ ३२ ॥

तस्य पत्नीसहस्राणां दशासन् सुमहायशाः ।
दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ ३३ ॥

---

नष्टमित्याह—अनष्टेति । अक्षय्यं षड्वसु षडिन्द्रियभोग्यविषयजातम्, षड्भ्यो गुणेभ्यो लब्धं यद्-वसु तद् वा । मृधे[4] युद्धे ॥ २७ ॥ तेषां नामान्याह—जयध्वज इति ॥ २८ ॥ और्वमुनेः तेजो यस्य स तथा तेन सगरेणोपसंहृतं विनाशितम् ॥ २९ ॥ यदुपुत्रेषु चतुर्षु ज्येष्ठस्य सहस्रजितो वंशमुक्त्वा द्वितीयस्य वंशमाह—यदुपुत्रस्येति ॥ ३१ ॥

चतुर्दश महारत्नानि यस्य सः । तानि च मार्कण्डेयपुराणे वर्णितानि 'गजवाजिरथास्त्रेषु-निधिमालाम्बरद्रुमाः । शक्तिपाशमणिच्छत्रविमानानि चतुर्दश' इति । धर्मसंहितायां च प्रकारान्तरेणोक्तानि 'चक्रो रथो मणिः खड्गश्चर्मरत्नं च पञ्चमम् । केतुर्निधिश्च सप्तैव प्राणहीनानि चक्षते । भार्या पुरोहितश्चैव सेनानि रथकृच्च यः । पत्त्यश्वौ कलभश्चेति प्राणिनः सप्त कीर्तिताः । चतुर्दशैतानि रत्नानि सर्वेषां चक्रवर्तिनाम्' इति । एतेषां स्वस्वजातिश्रेष्ठत्वाद् रत्नसञ्ज्ञा ॥ ३२ ॥

---

[1] वृष्णिपुत्रो मधुः स्मृतः—शे । वृष्णिः पुत्रो यस्य सः—शे । वीतिहोत्रस्य मधुर्मधोः वृष्णिः सुतः स्मृतः—स.

[2] वृष्णिः शतातिरिक्तः । यतः कुलं माधवा वृष्णयो यादवाश्चेति सञ्ज्ञितम् । तत्तन्मुख्यपुरुषजन्यत्वात् । 'मधोः पुत्रशतं त्वासीत्' इत्यादिहरिवंशोक्तेः—स. [3] सञ्ज्ञिताः—शे.

[4] युद्धं युत् प्रधनं मृधम्, इति हलायुधः ।

तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ।
धर्मो नामोशनास्तस्य[1] हयमेधशतस्य राट् ॥ ३४ ॥

तत्सुतो रुचकस्तस्य पञ्चासन्नात्मजाः शृणु ।
पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसञ्ज्ञिताः ॥ ३५ ॥

ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ।
नाविन्दच्छत्रुभवनात् कन्यां भ्रष्टामहारपीत् ॥ ३६ ॥

रथस्थां तां निरीक्ष्याह शैब्या पतिममर्षिता ।
केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ ३७ ॥

स्नुषा तवेत्यभिहिता स्मयन्ती पतिमब्रवीत् ।
अहं वन्ध्याऽसपत्नी च स्नुषा युज्येत मे कथम् ॥ ३८ ॥

जनयिष्यसि यं राज्ञि तस्येयमुपपत्स्यते ।
अन्वमोदन्त तद्विश्वेदेवाः पितर एव च ॥ ३९ ॥

शैब्या गर्भमधात् काले कुमारं सुषुवे शुभम् ।
स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ४० ॥

इति श्रीमद्भागवते नवमस्कन्धे विंशोऽध्यायः ।

॥ अथ एकविंशोऽध्यायः ॥

श्रीशुक उवाच —

तस्यां विदर्भोऽजनयत् पुत्रौ नाम्ना कुशक्रथौ ।
तृतीयं रोमपादं च वैदर्भकुलनन्दनम् ॥ १ ॥

---

षट्प्रधानानां पृथुश्रवाः श्रेयान् ॥ ३४ ॥ युद्धे भ्रष्टाम् ॥ ३६ ॥ असपत्नी सपत्नीरहिता ॥ ३८ ॥ स्नुषां पूर्वं स्नुषेत्यभिहिताम् ॥ ४० ॥

इति श्रीमद्भागवतटीकायां विजयध्वजतीर्थभिक्षुकृतायां
नवमस्कन्धस्य विंशोऽध्यायः

---

[1] धर्मो नामोशना तस्य—स.

रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ।
उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो यतः ॥ २ ॥

क्रथस्य कुन्तिः पुत्रोऽभूद् घलिस्तस्याथ निर्वृतिः ।
ततो दशार्हनामाऽथ तस्य व्योमः सुतस्ततः ॥ ३ ॥

जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ।
ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥

करम्भिः शकुनेः पुत्रो देवरातस्तदात्मजः ।
देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः[1] ॥ ५ ॥

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ।
भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोऽन्धकः ॥ ६ ॥

सात्वतस्य सुताः सप्त[2] महाभोजश्च मारिष[3] ।
भजमानस्य निम्लोचिः किङ्किणो धृष्टिरेव च ।
एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ॥ ७ ॥

शताजिच्च सहस्राजिदयुताजिदिति प्रभो ।
बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठन्त्यमू ॥ ८ ॥

यथैव शृणुमो दूरात् सम्पश्यामस्तथाऽन्तिकात्[4] ।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ ९ ॥

---

॥ अथ एकविंशोऽध्यायः ॥

यतः चेदेः ॥ २ ॥ ततो दशरथात् शकुनिः । शकुनेः करम्भिः पुत्रः ॥ ४–५ ॥ तयोः पितापुत्रयोर्विषये ॥ ९ ॥

---

[1] मधुपुत्रः कुरुवशः, तस्याऽनुः । कुकुरकस्ततः इति स पाठः, तथा ग कोशे ।

[2] भजमानाद्यो महाभोजान्ताः सप्त—स. [3] आर्यस्तु मारिषः इत्यमरः ।

[4] दूराद् यथैव येन प्रकारेण शृणुमोऽन्तिकात् समीपेऽपि तथैव पश्यामः । लोके दूरतोऽधिकं श्रूयते समीपेऽल्पीयो दृश्यते । न तथात्र । अपि तु श्रवणदर्शनयोः समानमानविषयकतेति भावः—स.

पुरुषाः पञ्चषष्टिश्च षट्सहस्राणि चाष्ट च[1] ।
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ १० ॥

महाभोजोऽतिधर्मात्मा भोजा आसन् तदन्वये ॥ ११ ॥

वृष्णेः सुमित्रः पुत्रोऽभूद् युधाजिच्च परन्तप ।
शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥

सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ।
अनमित्रसुतो योऽन्यः शिनिस्तस्य च सत्यकः ॥ १३ ॥

युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ।
युगन्धरोऽनमित्रस्य पृश्निः पुत्रोऽपरस्ततः ॥ १४ ॥

श्वफल्कश्चित्ररथश्चैव गान्दिन्यां तु श्वफल्कतः ।
अक्रूरप्रमुखा आसन् पुत्रा द्वादश विश्रुताः ॥ १५ ॥

आसङ्गः सारमेयश्च मृदुरो मृदुविद्गिरिः ।
धर्मो वृद्धकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥

शत्रुघ्नो गन्धमोदाह्वः प्रतिबाहुश्च द्वादश ।
तेषां स्वसा सुचाराख्या द्वावक्रूरसुतावपि ॥ १७ ॥

देववानुपदेवश्च तथा चित्ररथात्मजाः ।
पृथुर्विपृथुनामाद्या[2] बहवो वृष्णिनन्दनाः ॥ १८ ॥

---

बभ्रुः मनुष्याणां मध्ये श्रेष्ठो देवावृधो देवैः समः । तस्माद् देवावृधो बभ्रोः सकाशाच्छ्रेष्ठ इति यावत् ॥ १० ॥ नाम्ना युयुधानः, सात्यकिरिति गुणनाम । अनमित्रस्य पृश्निरपरः पुत्रः । अनेनानमित्रस्य निम्नः शिनिः पृश्निश्चेति त्रयः पुत्रा आसन्नित्युक्तं भवति ॥ १४ ॥ अक्रूरः प्रमुखो येषां द्वादशपुत्राणामित्यतद्गुणसंविज्ञानबहुव्रीहिः ॥ १५ ॥ श्वफल्कानुजस्य चित्ररथस्य वंशमाह-तथेति ।

---

[1] बभ्रोर्देवावृधादपि पितापुत्राभ्यां ये पञ्चषष्टिस्तथाऽष्ट च षट्सहस्रोपरित्रिसप्ततिसङ्ख्याकाः पुरुषास्ते तदुभयोपदेशेनामृतत्वं मुक्तिमनुप्राप्ताः—स.

[2] चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च । अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ । अरिष्टनेमिरश्वश्च सुधर्मा धर्मभृत् तथा । सुबाहुर्बहुबाहुश्च—इति हरिवंशे ।

कुकुरो भजमानश्च शुचिः कम्बलबर्हिषः ।
कुकुरस्य सुतो धृष्णुर्विलोमा तनयस्ततः ॥ १९ ॥

कपोतरोमा तस्यानुः सखा यस्य च तुम्बुरुः ।
अनोश्च[1] दुन्दुभिस्तस्य परिद्योतः पुनर्वसुः ॥ २० ॥

तस्याहुकश्चाहुकी च कन्या द्वावाहुकात्मजौ ।
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ २१ ॥

देववानुपदेवश्च सुदेवो देववर्धनः ।
तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ २२ ॥

शान्तिदेवोपदेवा च श्रीदेवा देवरक्षिता ।
सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥

कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुभूस्तथा ।
राष्ट्रपालोऽब्दसृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥

कंसा कंसवती कङ्का सुरभू राष्ट्रपालिका ।
औग्रसेना दुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥

शूरो विदूरथादासीद् भजमानसुतात् ततः ।
शिनिस्तस्मात् स्वयम्भोजो हृदिकस्तत्सुतो मतः ॥ २६ ॥

देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ।
देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥

---

वृष्णिनन्दनाः पूर्वोक्ता एते सर्वे सात्वतपुत्रवृष्णिकुलनन्दनाः ॥ १८ ॥ अथ सात्वतपुत्रस्यान्धकस्य वंशमाह—कुकुर इति । कुकुरादयश्चत्वारोऽन्धकसुता इति बोध्यम् । तदुक्तं हरिवंशे 'अन्धकात् काश्यदुहिता चतुरोऽलभतात्मजान् । कुकुरं भजमानं च शुचिं कम्बलबर्हिषम्' इति ॥ १९ ॥

उग्रसेनवंशमाह—कंस इति । औग्रसेनयः उग्रसेनपुत्राः ॥ २४ ॥ वसुदेवानुजानां देवभागादीनां स्त्रियो भार्याः ॥ २५ ॥ भजमानसुताद् विदूरथाच्छूर आसीदित्यन्वयः[2] ॥ २६ ॥ तस्य हृदिकस्य सुताः । देवमीढोऽपि हृदिकसुतः ॥ २७ ॥

---

[1] अनोरन्धकः, अन्धकात् दुन्दुभिरिति मध्येऽन्धको ज्ञेयः—रा.

[2] भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः । राजाधिदेवः शूरस्तु विदूरथसुतोऽभवत् । इति हरिवंशे ।

तस्यां सञ्जनयामास दशपुत्रानकल्मषान् ।
वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥

सृञ्जयं श्यामकं कङ्कमनीकं वत्सकं वृकम् ।
देवदुन्दुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥

वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम् ।
पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥

राजाधिदेवी चैतेषां भगिन्यः पञ्चकन्यकाः ।
कुन्तेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥

सा च दुर्वाससो विद्यां देवहूतीं प्रतोषितात् ।
तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिः ॥ ३२ ॥

तदैवोपागतं देवं वीक्ष्य विस्मितमानसा ।
प्रत्ययार्थं प्रयुक्ता[1] मे याहि देव क्षमस्व मे ॥ ३३ ॥

अमोघं देवसंदर्शमाधास्ये त्वयि चात्मजम् ।
योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥

---

यस्य वसुदेवस्य जन्मनि जननसमये देवदुन्दुभयो देवानकाः पटहाश्च नेदुरित्यतो वसुदेवस्य नामान्तरमस्तीत्याह—वसुदेवमिति । स्थानमवतारस्य ॥ २९-३० ॥ एतेषां वसुदेवादीनाम् । पृथायाः पिता शूरो स्वसख्युरपुत्रस्य कुन्तेः कुन्तिभोजस्य पृथां पालनायादात् । पश्चात् सा कुन्तीति विख्याता ॥ ३१ ॥ देवा आहूयन्तेऽनयेति देवहूती देवाह्वानकरीत्यर्थः । तां विद्यां दुर्वाससः, अलभतेति शेषः । तस्याः विद्यायाः । शुचिः स्नानादिना ॥ ३२ ॥ भो देव प्रत्ययार्थं विश्वासार्थं मे मया प्रयुक्ता विद्या । याहि स्वलोकम् । मे मां क्षमस्व । जनापवादतो मां पाहीति ॥ ३३ ॥

कुन्तीचिन्तां शमयन् रविरेवमाह—अमोघमिति । देवसंदर्शनममोघं फलानाधायकं न भवेदिति, जानीहीति शेषः । स्वकर्तव्यमाह—आधास्य इति । लोकापवादः स्यादिति मा भैषीरिति समाधत्ते—योनिरिति । यथा न दुष्येत पुरुषसंसृष्टा न भवेत् तथाऽहं कर्तेति ॥ ३४ ॥

---

[1] प्रयुक्तायाः—स.

इति तस्यां समाधाय गर्भं सूर्यो दिवं गतः ।
सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥ ३५ ॥

तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ।
प्रपितामहस्तामुवाह पाण्डुर्वै सत्यविक्रमः ॥ ३६ ॥

श्रुतदेवां तु कारूशो वृद्धशर्मा समग्रहीत् ।
यस्यामभूद् दन्तवक्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥

केकयो धृष्टकेतुश्च श्रुतकीर्तिमविन्दत ।
सन्तर्दनादयस्तस्याः पञ्चासुः कैकयाः सुताः ॥ ३८ ॥

राजाधिदेव्यामावन्त्यौ जयत्सेनोऽजनिष्ट ह ।
दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥

शिशुपालः सुतस्तस्याः कथितस्तस्य सम्भवः[1] ।
देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥

कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ।
कङ्कायामानकाज्जातः सत्यजित् पुरुजित् तथा ॥ ४१ ॥

सृञ्जयो राष्ट्रपाल्यां तु वृषदुर्मर्षणादिकान् ।
हरिकेशहिरण्याक्षौ सुरभूम्यां तु श्यामकः ॥ ४२ ॥

मिश्रकेश्यामप्सरसि वृकादीन् वत्सकस्तथा ।
तक्षपुष्करसालादीनुर्वश्यां वृक आदधे ॥ ४३ ॥

---

तव प्रपितामहः पाण्डुः ॥ ३६ ॥ वसुदेवभगिनीनां श्रुतदेवादीनां विवाहं पुत्रांश्च कथयति—श्रुतदेवामित्यादिना । यस्यां श्रुतदेवायाम् । ऋषिशप्तः सनकादिभिः शप्तो विजयो स एव दितेः सुतो हिरण्यकशिपुर्जातः, स एवाधुना दन्तवक्र इत्यभूदिति भावः ॥ ३७ ॥

नाम्ना धृष्टकेतुः । केकयदेशाधिपतित्वात् केकय इति । चशब्दः पूर्वेण समुच्चीयते ॥ ३८ ॥ आवन्त्यौ अवन्तिदेशभवौ विन्दानुविन्दौ । अजनिष्ट जनयामास ॥ ३९ ॥ वसुदेवभ्रातॄणां वंशं कथयति—देवभागस्येत्यादिना ॥ ४० ॥ देवश्रवसो वसुदेवभ्रातुः ॥ ४१ ॥

---

[1] सप्तमस्कन्धस्य प्रथमाध्याये कथित इति यावत् ।

सुमित्रार्जुनबाणादीननीकात् तु सुदामनी ।
कङ्कश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥

पौरवी रोहिणी भद्रा मदिरा रोचना इला ।
देवकीप्रमुखा आसन् पत्न्य आनकदुन्दुभेः ॥ ४५ ॥

बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ।
वसुदेवस्तु रोहिण्यां कृतधीरुदपादयत् ॥ ४६ ॥

सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च ।
पौरव्यास्तनया ह्येते भूताद्या[1] द्वादशाभवन् ॥ ४७ ॥

नन्दोपनन्दकृतकशूराद्या मदिरात्मजाः ।
भद्राख्या[2] केशिनं त्वेकमसूत कुलनन्दनम् । ॥ ४८ ॥

रोचनायां ततो जाता हस्तहेमाङ्गदादयः ।
इलायां पुरुवल्कादीन् यदुमुख्यानजीजनत् ॥ ४९ ॥

त्रिपृष्ठो धृतदेवायां जात आनकदुन्दुभेः ।
शान्तिदेवात्मजा राजन् प्रश्रमप्रश्रितादयः ॥ ५० ॥

राजानः कल्पवर्षाद्या उपदेव्याः सुता दश ।
वसुहंससुधन्वाद्याः श्रीदेवायाश्च षट् सुताः ।
देवरक्षितया लब्धा नव चात्र [3]गदादयः ॥ ५१ ॥

वसुदेवः सुतानष्टावादधे सहदेवया ।
पुरुविश्रुतमुख्यांस्तु[4] साक्षाद्धर्मो वसूनिव ॥ ५२ ॥

वसुदेवस्तु देवक्यामष्टपुत्रानजीजनत् ।
कीर्तिमन्तं सुषेणं च भद्रसेनमुदारधीः ॥ ५३ ॥

---

कृतधीः शिक्षितबुद्धिः । उदपादयत् उत्पादयामास ॥ ४६ ॥ साक्षाद्धर्मो धर्मराजो वसुनाम्न्यामष्टौ वसूनिव वसुदेवः सहदेवया सहदेव्यामष्टौ सुतानादधे । तदुक्तं षष्ठस्कन्धे षष्ठाध्याये वा 'वसुर्मुहूर्ता सङ्कल्पा धर्मपत्न्यः सुतान् शृणु । वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ' इति ।

---

[1] भूत आदिर्येषां ते । सुभद्रादिभिश्चतुर्भिः सहिताः द्वादश इति यावत् । [2] कौसल्या—ग.शे. । कोसलराजपुत्री भद्रा—शे. [3] गदोऽग्रमन्यो रोहिणीतनयात्—स. [4] पुरुवत्समृदुमुख्यान—स.

ऋजुं संमर्दनं भद्रं सङ्कर्षणमहीश्वरम् ।
अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल ॥ ५४ ॥

सुभद्रा च महाभागा तव राजन् पितामही ॥ ५५ ॥

यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः ।
तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥

न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ।
आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥

यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ।
अनुग्रहस्तन्निवृत्तेरात्मलाभाय चेष्यते ॥ ५८ ॥

---

देहलीदीपन्यायेनोभयत्रायं दृष्टान्तः ॥५३॥ अहीश्वरं शेषांशं यो दुर्गयापवाह्य देवक्युदराद् रोहिण्युदरे प्ररोहितः स सङ्कर्षणस्तम् ॥ ५४ ॥ ननु यदि श्रीनारायणो जीववज्जन्मकर्माणि भजते तर्हि संसारनिवृत्तये तत्सेवा व्यर्थेति तत्राह—न हीति । विषमो दृष्टान्तः । तथा हि । जीवस्य जन्मादिमत्त्वे पुण्यपापे कारणं विधिनिबद्धत्वात्, तदनियतत्वाद् ईश्वरस्य न हि ते स्तः । न हि कार्यमकारणमिति न्यायात् कारणं वक्तव्यं चेत् लोकानुग्रहोद्बुद्धात्मेच्छैवेत्याशयेनाह—आत्ममायामिति । आत्मनः स्वस्य मायामिच्छां विना । स्वेच्छयैवेत्यर्थः । अनुग्रहोद्बोधस्यापि धर्मपाप्मनोः क्षयवृद्धिदर्शनं निमित्तमित्युक्तम् । अतस्तत्सेवा न व्यर्थेत्यर्थः । कथं हरेरेव स्वेच्छया प्रवृत्तिरित्युच्यत इति तत्राह—ईशस्येति । 'स ईशः' इत्यादेः ईशत्वात् । जीव एवेशः किं न स्यादिति तत्राह—परस्येति । परस्य जीवविलक्षणस्य तत्त्वात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्यादेः । ननु किं तद् वैलक्षण्यम् ? येनेशादन्यो जीवः स्यादिति तत्राह—द्रष्टुरिति । 'यः सर्वज्ञः सर्ववित्' 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इत्यादिमानैः सार्वज्ञ्यं जीवाद् भिन्नत्वे मुख्यं लक्षणम् । सार्वज्ञ्यं स्वाभाविकं न तु नैमित्तिकमित्याशयेनाह—आत्मन इति । 'आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि' इति यादवः । हरेः प्रपञ्चनिर्माणादिकं तत्तत्पदार्थविशेषज्ञानं विना न युज्यते । तद्बलादपोहितुं न पार्यते प्रामाणिकत्वात् । अतो निरुपचरितं सार्वज्ञ्यं हरेरेव अन्यत्सौपचारिकमित्यतो जीवव्यावृत्तिलक्षणसद्भावाद् युक्तमिति भावः ॥ ५७ ॥

ननु जीवव्यावर्तकं लक्षणं जगत्कर्तृत्वादिकम् । तत्प्रकृतेः । अतः सार्वज्ञ्यमात्रेण कथमीश्वरो जीवाद् व्यावर्त्यः । सार्वज्ञ्यविशेषणस्य 'सर्वज्ञस्त्रिपुरान्तकस्त्रिनयनः' इत्यादावन्यविषयत्वेन व्यभि-

अक्षौहिणीनां पतिभिरसुरैर्नृपलाञ्छनैः ।
भुव आक्रम्यमाणाया: अभावाय[1] कृतोद्यमः ॥ ५९ ॥
कर्माण्यपरिमेयानि मनसाऽपि सुरेश्वरैः ।
सहसङ्कर्षणश्चक्रे भगवान् मधुसूदनः ॥ ६० ॥
कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।
अनुग्रहाय भूतानां सुपुण्यं व्यतनोद् यशः ॥ ६१ ॥
यस्मिन् सत्कर्णपीयूषे यशस्तीर्थवरेऽसकृत् ।
श्रोत्राञ्जलिरुपस्पृश्य धुनुते कर्मवासनाः ॥ ६२ ॥
भोजवृष्ण्यन्धकमधुशूरसेनदशार्हकैः ।
श्लाघनीयेहितः शश्वत् कुरुसृञ्जयपाण्डुभिः ॥ ६३ ॥

---

त् चारित्वाद् उक्तदोषानिस्तार इति तत्राह—यन्मायेति । यस्येश्वरस्याधीनाया मायायाः प्रकृतेश्चेष्टितं परिणामलक्षणम् । पुंस इत्युपलक्षणम्, प्रपञ्चस्य स्थित्युत्पत्त्यप्ययाय स्थित्यादेर्हेतुर्भवति । तदेकविषयत्वद्योतनाय एकवचनम् । 'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः' इत्यादिस्मृतीः हिशब्देन दर्शयति । यदनुग्रहः प्रकृतिचेष्टायाः निवृत्तेर्हेतुः । निवृत्तिश्चात्मलाभाय सच्चिदानन्दस्वरूपाविर्भावाय । 'बलमानन्द ओजश्च' 'यस्य प्रसादात् परमार्तिरूपादस्मात् संसारान्मुच्यते नापरेण' इत्यादिश्रुतेः । इष्यते निरूप्यते ॥ ५८ ॥

हरेर्लोकविलक्षणमहिमानमुपपाद्य अवतारप्रयोजनमाह—अक्षौहिणीनामित्यादिना । नृपाणां लाञ्छनमिव लाञ्छनं येषां तैरक्षौहिणीनां पतिभिरसुरैः जरासंधादिरूपविप्रचित्त्याद्यसुरैः भुव आक्रम्य-माणायाः सत्याः अभावाय नाशाय । कृत उद्यम यस्य सः, भूभारभूतदितिसुतसंहननोद्यमवानित्यर्थः ॥ ५९ ॥ मनसाऽप्यपरिमेयानि आलोचयितुमशक्यानि कर्माणीत्यन्वयः ॥ ६० ॥

दुःखशोकतमांसि नुदतीति तत् तथा । सुपुण्यं तत्प्रापकं यशो व्यतनोद् विस्तारयामास ॥६१॥ यशोवितानस्य भक्तानुग्रहरूपतां दर्शयितुं यशो विशिनष्टि—यस्मिन्निति । सत्कर्णपीयूषे सज्जनकर्णानाममृतमिव विद्यमाने यशस्तीर्थवरे यशोरूपतीर्थश्रेष्ठे, श्रोत्रे एवाञ्जलिः पानपात्रं यस्य स पुरुषोऽसकृद् द्दा उपस्पृश्य श्रवणादिलक्षणस्नानपानाचमनानि कृत्वा । यद्वा माहात्म्यातिशयलाभात् सकृदेकवारमप्युपस्पृश्य कर्मवासनाः दुष्कर्मसंस्कारान् धुनुते नाशयति ॥६२॥ श्लाघनीयेहितः पूज्यमानचरितः ॥६३॥

---

[1] अभावाय—शे.

स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ।
नृलोकं रमयामास मूर्त्या सर्वाङ्गरम्यया ॥ ६४ ॥

यस्याननं मकरकुण्डलचारुकर्ण-
भ्राजत्कपोलसुभगं सविलासहासम् ।
नित्योत्सवं न ततृपुर्दृशिभिः पिबन्त्यो
नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥

जातो गतः पितृगृहाद् व्रजमेधितोऽत्र
हत्वा रिपून् सुतशतानि कृतोरुदारः ।
उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे
आत्मानमात्मनिगमं प्रथयन् जनेषु ॥ ६६ ॥

---

स्निग्धेति स्मितवीक्षितोभयान्वयि, ताभ्यामुदाराणि मनोहराणि तैर्वाक्यैर्विक्रमलीलया विक्रमविलासेन सर्वाङ्गसुन्दरया मूर्त्या च । नृलोकं मनुष्यजनम् । नृ नय इति धातोर्नयति भक्तिपूर्वकं तत्त्वं जानातीति नृलोको ज्ञानिसमूहस्तमिति वा ॥ ६४ ॥

रतिकरणप्रकारं दर्शयति—यस्येति । मकरकुण्डलाभ्यां चारू च तौ कर्णौ च ताभ्यां भ्राजन्तौ कपोलौ ताभ्यां सुभगं सुन्दरम् । विलासेन सहितो हासो यस्य तत् तथा तत् । नित्यम् उत्सवो यस्य तत् तथा तत् । तत्क्षणानन्दजनकमिति यावत् । न ततृपुः नालम्बुद्धिं प्राप्ताः । दृशिभिः नयनैः । निमेर्निमेषस्येति षष्ठी द्वितीयार्थे । निमेषं प्रति कुपिताः । निमेषमात्रव्यवधानमपि न सेहिर इति भावः ॥ ६५ ॥

विदितसंक्षेपा हि प्रपञ्चजिज्ञासवो भवन्तीति हेतोः श्रीकृष्णसुचरितं संक्षेपतो वर्णयति—जात इत्यादिना । जातः निजरूपेणावतीर्य पश्चात् पुरुषाकारः । लोकदृष्ट्यैधितः । कृतोरुदार उद्वाहितबहुभार्यस्तेषु दारेषु सुतशतानि दशलक्षसंख्याकान् गोपकन्यासु प्रद्युम्नादीन् रुक्मिण्यादिषु, तथा षोडशसहस्रस्त्रीषु दश दश पुत्रांश्चैकैकां कन्यां चोत्पादयेत्यर्थः । पुरुषः पूर्णषड्गुणः । क्रतुभिरश्वमेधादिभिः । आत्मनिगमं स्वगुणगणप्रतिपादको यज्ञादिकर्तव्यतावगाहकश्च यो निगमो वेदस्तम् , वेदोक्तसत्कर्मानुष्ठानमार्गमिति यावत् । प्रथयन् प्रख्यापयन् । जनेषु सज्जनेषु ॥ ६६ ॥

पृथ्व्याः स वै गुरुभरं क्षपयन् कुरूणा-
-मन्तःसमुत्थकलिना युधि भूपबन्धम् ।
दृष्ट्या विधूय विजये जयमुद्विघुष्य[1]
प्रोच्योद्धवाय च वरं[2] समगात् स्वधाम ॥ ६७ ॥

इति श्रीमद्भागवते नवमस्कन्धे एकविंशोऽध्यायः ।

इति नवमस्कन्धः

---

स कृष्णः स्वधाम स्वमूलरूपं समगात् प्रविवेश, एकोऽभूदित्यर्थः । 'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते' इत्याद्युपनिषदं वै इत्यनेन सूचयति । पृथ्व्या गुरुभरमसुरलक्षणम् । भूपबन्धं भूपसमूह-कृतचक्रबन्धादिकं दृष्ट्या विधूय संहृत्य । तदुक्तम् 'मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्य-साचिन्' इति । विजयेऽर्जुने जयम् अर्जुनः सर्वशत्रून् जिगायेति उद्विघुष्य डिण्डिमघोषं कारयित्वा । वरं वरणयोग्यं ज्ञानं प्रोच्य विस्तरेणोपदिश्य ॥ ६७ ॥

नाम्ना क्षत्रवसुन्धरासुरमहावंशावलीमन्दिरं
व्याख्याव्याजविनोदतोऽद्य नवमस्कन्धो मयाऽऽश्लेषितः ।
सर्वज्ञो विजयध्वजाय यतये मह्यं महाभूतिदो
हारी हारमनोहरो ह्यहरहः प्रीतोऽस्तु विश्वम्भरः ॥

पदरत्नावलिर्भूयान्नवमस्कन्ध अर्पिता ।
तुलसीव हरेः पादद्वन्द्वे द्वन्द्वापहारिणी ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थमुनीन्द्रकृतायां पदरत्नावल्यां
श्रीमद्भागवतटीकायां नवमस्कन्धस्य एकविंशोऽध्यायः ।

इति नवमस्कन्धटीका ।

श्रीमध्वेशार्पणमस्तु

---

[1] जयमुद्विघोष्य—स. [2] परं—स.